सरस्वतीभवन-ग्रन्थमाला

[ ११८ ]

श्रीनृसिंहाश्रमविरचिता

# अद्वैतदीपिका

[ द्वितीयो भागः ]

अद्वैतदीपिकाविवरणाख्यटोकया

संवलिता




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ
[ Vol. 118 ]

# ADVAITADĪPIKĀ

[ PART TWO ]

OF

## NṚSIṀHĀŚRAMA

With the Commentary

**ADVAITADĪPIKĀVIVARAṆAM**

by

**NĀRĀYAṆĀŚRAMA**

FOREWORD
BY
DR. GAURINATH SASTRI
Vice-Chancellor
Sampurnanand Sanskrit University




EDITED BY
**S. SUBRAHMAṆYA ŚĀSTRĪ**
Śāstracūdāmaṇi Professor
Sampurnanand Sanskrit University

VARANASI
1984

Published by—
**Director, Research Institute,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi

Available at—
**Sales Department,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221002 ( India )

First Edition : 1100 Copies,
Price : Rs. 65-00

Printed by :—
Ghan Shyam Upadhyaya
Sampurnanand Sanskrit Vishvavidyalaya Press
Varanasi

सरस्वतीभवन-ग्रन्थमाला

[ ११८ ]

श्रीनृसिंहाश्रमविरचिता

# अद्वैतदीपिका

[ द्वितीयो भागः ]

श्रीनारायणाश्रमविरचिताद्वैतदीपिकाविवरणाख्यटीकया

संवलिता

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयकुलपति-

श्रीगौरीनाथशास्त्रि-

विरचितप्रस्तावनया समलङ्कृता




सम्पादकः

श्रीएस्० सुब्रह्मण्यशास्त्री

शास्त्रचूडामणि-आचार्यः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्

२०४१ तमे वैक्रमाब्दे १९०६ तमे शकाब्दे १९८४ तमे ख्रैस्ताब्दे

प्रकाशकः--
अनुसन्धानसंस्थाननिदेशकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।

प्राप्तिस्थानम्—
**विक्रयविभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी-२२१००२.

प्रथमं संस्करणम्, ११०० प्रतिरूपाणि
मूल्यम्-- ६५.०० रूप्यकाणि

मुद्रकः--
**घनश्याम उपाध्यायः,**
व्यवस्थापकः,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयीयमुद्रणालयस्य

# FOREWARD

I am glad to be able to write this Foreword to the second valume of Advaita-dīpikā containing the second and the third chapters of the original text. The fourth and last chapter is already in the press awaiting release in a separate volume in near future.

Here Svāmi Nṛsiṁhāśrāma, the author, meets the challenge of neo-dualists. It was for Śrī Śaṅkarācārya, the great master to counteract the charges of the earlier exponents of dualism, viz., the Naiyāyikas and others, against the position of the monists. The dualists ask Śaṅkara: You appear to be the only one who believes in monism. But, we, the dualists, are so many. How could you venture to overpower us? Śaṅkara answers: "Yes., I admit you are many. But, I am still sure of victory. Let me present my arguments that will outwit you all." In the Bṛhadāraṇyaka-Bhāṣya Śaṅkara proclaims: The fortress of monism is impregnabie to the most ruthless attack by the advocates of Nyāya.

The second chapter of the present work adumbrates the identity of Jīva with Brahman. It examines the contention of the dualists that Jīvas are different from one another and from the Lord as well. The teachers of monism enquire of their opponents about the proof they would like to furnish

to sponsor their point of view that Jīva is different from the Lord. For obvious reasons perception cannot come to their aid. The Lord is beyond the ken of perception as He is colourless and all-pervasive. It may be quite likely that the dualists will turn to inference for support. So they state: The Lord and the Jīva are different entities as they possess divergent qualities - one is omniscient while the other is little-knowing. The monists would find flaw in this form of argument as the omniscience of the Lord can only be established on the authority of the Vedic texts which, according to them, proclaim monism. The dualists, however, refer to some scriptural texts, Dvā suparṇā etc., where we find a description of two birds sitting on the branch of a tree, one eating its fruits while the other looking on–the former obviously being the Jīva while the latter the Lord–and they continue to strengthen their point of view by saying that they are two separate entities. The monists, under the circumstances, press the point by saying that the expression 'two' in the Śruti text does not convey any idea of differnce. Madhusūdana Sarasvatī seems to be firm on this point that the knowledge of difference may be obtainable from the expression 'two' indirectly with the help of arthāpatti; but, in the case under consideration it is not possible in the face of categorical statements of identity contained in the mahāvākyas. The conclusion is irresistible that the Śruti texts do not lend support to the contention that Jīva is different from Brahman.

The Vedic text, Vācārambhaṇaṁ' etc., enunciates in clear terms the unreality of effects. The texts, Ne'ha nānā' sti

etc., state that the universe does not exist. The text, Vidvān etc., states that the universe of name and form disappears with the dawning of Brahman-consciousness. The dualists, however, are not prepared to accept the aforesaid interpretation of the text in view of the fact that perception does not corroborate the literal interpretation of these texts and as such they try to discover a secondary meaning so that compatibility of the results made available is reached. The monists however put greater weight on the authority of Śruti texts as they are not of human but divine origin.

An erroneous cognition is explained differently in the different systems of Indian philosophy. The Naiyāyikas explain it as anyathākhyāti. Silver cognised as a piece of shell is in existence elsewhere. The Sāṅkhyaites and the Prābhākaras aver that there is no illusion at all. The incorrect cognition 'this is silver', according to them, is not one single cognition; but, it is partly perception and partly recollection. The Buddhists think that it is cognition itself that appears as silver. It is for the Advaitins to adumbrate that what is cognised in error is neither sat nor asat but something that baffles our power of understanding, i.e, anirvacanīya. It serves as an example in the well-known inference of the Advaitins : 'prapañcaḥ mithyā dṛśyatvāt śuktirūpyavat' which is formulated to prove the unreality of the universe.

The author closes the third chapter by proving on the strengh of inference mentioned above as also of Śruti texts that God, be He Viṣṇu or Śiva, is not real. His qualities, his body

and his mercy on us too, are unreal, though on the empirical plane they are intended as real.

In the end, I must in the fitness of things, record my deep sense of admiration for the outstanding scholarship of the editor of this work, Paṇḍitarāj S. Subrahmanya Śāstrin, who is held in high esteem all over the academic world. The University can rightly congratulate itself to have him as one of its Cūḍāmaṇi Professors.

Gaurinath Sastri

# उपोद्घातः

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

अद्वैतदीपिकायाः प्रथमे परिच्छेदे श्रीनृसिंहाश्रमस्वामिभिः त्वंपदार्थः साक्षी निरूपितः । ''त्वंपदार्थविवेकाय सन्यासस्सर्वकर्मणाम्'' इति स्मृतिदर्शनात् । तत्र च त्वंपदार्थः शरीरेन्द्रियान्तःकरणेभ्यो भिन्नः शुद्धः इति निरधारि ।

इदानीं शुद्धस्य त्वंपदार्थस्य ब्रह्मणाऽभेदः प्रतिपाद्यते । नाहमीश्वर इति प्रत्यक्षं तावत् नाभेदविरोधि अहङ्कारविशिष्टस्य मायाविशिष्टेनोपहितेन वा भेदस्यास्माभिरङ्गीकारात् । अप्रत्यक्षप्रतियोगिकभेदोऽपि प्रत्यक्षग्राह्यः स्तम्भः पिशाचो नेति प्रत्यक्षस्य स्वीकाराद् इत्याह परः । वस्तुतस्तु नेदमङ्गीकर्तुं शक्यं प्रतियोगिनोऽप्रत्यक्षत्वात् । अपितु अनुमानमिदमिति बहवः । द्वा सुपर्णा सयुजा सखाया इति श्रुतिरपि न जीवेश्वरभेदे मानम् । द्वौ इति प्रयोगस्य औपाधिकभेदेनाप्युपपादनदर्शनात्, यथा रामपरशुरामौ अयुध्येतां इत्यादावेकविष्णोरवतारयोरपि । अपि च द्विशब्दो न भेदपर्यायः, अपि तु द्वित्वस्य भेदव्याप्यत्वात् श्रुतार्थापत्तिगम्यो भवति भेदः, सा च प्रत्यक्षश्रुतिविरोधे बाध्यते तत्त्वमसीति प्रत्यक्षश्रुत्याऽभेदबोधनात् । अपि च अभेदस्य प्रत्यक्षादिनाऽप्राप्तत्वात् अभेदनिषेधोऽप्रसक्तप्रतिषेधो भवेत् । भेदस्यापूर्वत्वाभावेन निष्प्रयोजनत्वेन च श्रुतितात्पर्यविषयत्वाभावाच्च ।

वस्तुतस्तु भेद एव दुर्निरूपः पटे यो घटभेदस्तस्य पटाद्भिन्नत्वे तद्भेदोऽपि भिन्न आपद्येतेति भेदानवस्था । भेदस्याधिकरणीभूतपटस्वरूपत्वे कुत्रापि भेदो न सिद्ध्येत् । 'भेदश्रुतेः' ''भेदव्यपदेशात्'' इत्यादिसूत्राणि तु उपासनप्रकरणे उपास्यं ब्रह्म न जीवः, भेदानुमापकानामुपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वादिधर्माणां कीर्तनान् न जीव उपास्य इति साधयितुं प्रवृत्तानि । एवमेव 'अनीशया शोचति मुह्यमानः' इति श्रुतिरपि ईश्वरत्वाभावात् ईश्वरत्वं स्वस्यैवेति ज्ञानाभावाद् इत्यर्थकम् । सर्वान् कामान् सह अश्नुते ब्रह्मणा सह'' इति च ब्रह्मरूपेण सर्वान् कामान् सह यौगपद्येनाश्नुते इत्यर्थकम् । अंशा नानाव्यपदेशात् इति सूत्रमपि नैकदेशार्थकमपितु प्रतिबिंबवत् ईश्वराभिन्न इत्यर्थे तात्पर्यकम् 'आभास एव च' इत्यादिसूत्रस्वारस्यात् इति निर्णयः कृतः ।

तृतीयपरिच्छेदे तु तत्पदार्थस्येश्वरस्य स्वरूपं विविच्यते ।

प्रथमं तावत् ईश्वरः नानुमानगम्यः किन्तु केवलमुपनिषदेकवेद्य इति निरूपयति । न्यायशास्त्रोक्तस्य क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटवदित्यनुमानस्य

नेश्वरसाधकत्वं अनुकूलतर्काभावात् कृतिसाधनेऽपि ईश्वरे ज्ञानेच्छयोरसाधनात् । शरीर-जन्यत्वाद्युपाधेरनुमाने दुर्वारत्वात् ।

वेदैकवेद्यत्वं च तत्त्वमस्यादिवाक्यात् ब्रह्मैक्यविषयकापरोक्षसाक्षात्कारजननात् 'तमसस्पारं दर्शयति' "दृश्यते त्वग्र्यया बुद्धया" "तस्मिन् दृष्टेपरावरे" इत्यादि-श्रुतिभिः ब्रह्मणः साक्षात्कारविषयत्वप्रतिपादनात् । शब्दस्य साक्षात्कारजनकत्वं च विषयस्य सन्निहितत्त्वे दशमस्त्वमसीत्यादौ प्रसिद्धम् ।

अत्र प्रसंगात् नैयायिकोक्तालौकिकसन्निकर्षो निराक्रियते मनसः साक्षात्कार-जनकता च । कार्यं वेदार्थं इति प्राभाकरमतं च निराक्रियते, अत्र चान्यथाख्यात्यख्याति-सत्ख्यातीनां निरासपूर्वकमनिर्वचनीयख्यातिव्यवस्थापनम् प्रपञ्चमिथ्यात्वस्य श्रुत्याऽनु-मानेन च व्यवस्थापनं च हृदयङ्गमम् ।

अत्र च ब्रह्मणः निर्गुणत्वस्थापने बहु पराक्रान्तं ग्रन्थकृता । तत्र च ब्रह्मगुणवद् द्रव्यत्वादिति नानुमानं युक्तं ब्रह्मणः द्रव्यत्वासिद्धेः । ब्रह्मणः आदित्यवर्णत्वं च स्व-प्रकाशत्वेन न रूपवत्त्वेन ।

ब्रह्मणो मूर्तिमत्त्वे शिवब्रह्मादिभेदेनानेकतापत्तिः नारायणवत् श्रीरुद्रोऽपि ब्रह्म-कोटिरेव । तस्य ज्ञानं स्वप्रकाशम् तदतिरिक्तगुणाः न स्वप्रकाशाः । ब्रह्मविष्णवादि-शरीराणि मिथ्याभूतान्येव तेषां सर्वज्ञत्वमपि मिथ्यैव ज्ञानस्य स्वरूपत्वेन सत्यत्वेपि सर्वस्य विषयस्य मिथ्यात्वात् । तदेवं तत्पदार्थः शुद्धः परमात्मा, तदभेदज्ञानान्मोक्ष इति निर्णयः ।

अद्वैतदीपिकाकृतां शिष्यैः श्रीनारायणाश्रमिभिः विस्तरेण मूलस्य व्याख्या-तत्वात् टिप्पणकृत्यमपि तैरेव निर्व्यूढमिति मया तत्र न व्यापार्यते ।

मूले सम्मतिप्रदर्शनाय कृता उद्धाराः सर्वे प्रसिद्धा एव प्रसिद्धोपनिषत्सु दृश्यन्त इति तेषामाकरोऽपि नात्र सूचितः ।

अत्राङ्गलमयेनामुखेनेमं ग्रन्थं भूषितवद्भ्यः सर्वदर्शनपारङ्गतेभ्यः विद्वद्बन्धुभ्यः कुलपतिश्रीगौरीनाथशास्त्रिमहाभागेभ्यः सविनयं कृतज्ञतां समर्पयामि ।



# द्वितीयः परिच्छेदः

## विषयसूचिका

| विषयः | पृष्ठे: |
|---|---|

# तृतीयपरिच्छेदः

॥ श्रीगणेशाय नमः ॥

श्रीनृसिंहाश्रमविरचिता

# अद्वैतदीपिका

## श्रीनारायणाश्रमविरचिताद्वैतदीपिकाविवरणाख्यटीकासहिता

## द्वितीयः परिच्छेदः

नरहरिवपुषा यो दारयन् दानवोरः
प्रकटयति पुमर्थोऽभेददृष्टावितीशः ॥
निजगुणमयमायामात्रमात्रादिभेदो
गुरुतरदयया मां पातु लक्ष्मीसहायः ॥ १ ॥
जगन्नाथाश्रममुनेश्चित्रं चरणरेणवः ।
वाचामगोचरेऽप्यर्थे मूकं वाचालयन्ति माम् ॥ २ ॥

---

सार्थानि वेदान्तवचांसि येन, यो
हिरण्यविद्विट् च सुदर्शनाश्रयः ॥
प्रल्हाद उत्सर्पति यस्य चिन्तया
स मे नृसिंहो यतिराट् सदा परा गतिः ॥ १ ॥

अतीतपरिच्छेदे लाघवाद्युपोद्बलितानुमानादिनाऽहमर्थातिरिक्त एकः कूटस्थो निर्विशेषश्चिद्रूपः सिद्ध आत्मेत्युक्तम् । तदयुक्तम् । जीवेश्वरयोः जीवानां च परस्परभेदग्राहकप्रत्यक्षादिप्रमाणविरोधेन लाघवानवतारादित्याद्याक्षेपनिरासाय भेदमिथ्यात्वं निरूपयितुं परिच्छेदान्तरमारभमाणस्तदर्थं प्रदर्शयन् श्रीनृसिंहं प्रार्थयते-नरहरीति ।

नरसिंहात्मकरूपमास्थाय सर्वदा स्वस्मृतिमतो हिरण्यकशिपोरनर्थहेतुशरीरबन्धमुत्पाटयन् नृसिंहपदलक्ष्यतत्त्वंपदार्थाभेददृष्टौ चाशरीरत्वाख्यमोक्षो भवतीति यः प्रकटयति स इति द्रष्टव्यम् । अभेदप्रमैव पुरुषार्थहेतुरिति मन्वानो भेदमिथ्यात्वमाह—निजेति । निजा अनादिसिद्धा गुणमयी गुणात्मिका या मायाऽनिर्वचनीयाऽज्ञानं तन्मात्रस्तदधीनसत्ताकः प्रमात्रादिभेदो यस्मिन् स तथोक्त इत्यर्थः ।

बहुवादिसम्मतभेदभञ्जनेनाद्वैतस्थापनसामर्थ्यं गुरुचरणसेवयैव प्राप्तमिति द्योतयन् गुरुं महीकरोति—जगन्नाथेति । 'यतो वाचो निवर्तन्ते' इतिश्रुतेः शब्दाऽनभिधेयेऽपि

**अथास्य परस्माद्विभागः परीक्ष्यते। तत्र जीवपरयोः स्वाभाविको भेदः पारमार्थिक इति केचित्। औपाधिकः पारमार्थिक इत्यन्ये। औपाधिकोऽनिर्वचनीय इति भगवत्पादीयमतानुसारिणः।**

जीवेशभेदे पूर्वपक्षः—प्रत्यक्षेण भेदग्रहणम्—

**ननु यद्यत्र प्रमाणतः प्रतीयते तत्तत्र सद् विपरीतं त्वसदिति स्थितिः जीवे च परस्माद्भेदः प्रत्यक्षादिभिः प्रतीयते।**

**तथाहि—तत्र नवीनः—प्रत्यक्षं तावज्जीवब्रह्मणोर्भेदे प्रमाणम्। नाहं सर्वज्ञो, नाहं निर्दुःख इत्यनुभवात्। न च ब्रह्मणोऽप्रत्यक्षत्वात्तद्भेदोऽप्यप्रत्यक्ष इति वाच्यम्। यत्र हि यत्सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः। न तु प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रम्। जलपरमाणौ पृथिवीत्वाभावस्य प्रत्यक्षत्वप्रसङ्गात्। स्तम्भः पिशाचो न भवतीति प्रत्यक्षप्रतीतेश्च। प्रतीत्यनुसारेण हि प्रयोजकं कल्प्यम्। अन्यथा जीवेश्वराभेदश्रुतेरप्रसक्तप्रतिषेधकत्वं स्यात्, तद्भेदश्रुतेश्च त्वदुक्तप्रत्यक्षप्राप्तानुवादकत्वमपि न स्यात्।**

---

वस्तुनि मूकमपि मां वाचालयन्ति पटुतरबहुभाषिणं कुर्वन्तीति यत् इदं चित्रमित्यर्थः। जीवस्वरूपनिरूपणानन्तरं तस्येश्वराद्भेदो विचार्यते इति प्रतिजानीते-अथेति। तदङ्गत्वेन वादिविप्रतिपत्तिं दर्शयति-तत्रेति। वादिनां मध्ये इत्यर्थः। स्वाभाविक इति। अनौपाधिक इत्यर्थः। भास्करादिमतमाह-औपाधिक इति। अतिरेकाद्युपाधिप्रयुक्त इत्यर्थः। सिद्धान्तमाह-औपाधिक इति। अविद्यान्तःकरणाद्युपाधिनिबन्धन इत्यर्थः।

अत्र पूर्वपक्षी जीवेश्वरभेदः सन्नेवेति वक्तुं सामान्यतः सत्त्वासत्त्वप्रयोजकमाह—ननु यदीति। ततः किम्?, तत्राह—जीवे चेति।

"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"—इत्यादिना भेददर्शनस्य बहुशो निन्दितत्वात् पूर्वपक्षत्वेनापि भेदस्थापनमनुचितमेवेति मन्वानः पूर्वपक्षं नवीनमुखत एव प्रदर्शयति—तत्रेति।

ननु प्रतियोगिप्रत्यक्षत्वमभावप्रत्यक्षत्वे तन्त्रम्। अन्यथा घटे जलपरमाण्वभावः प्रत्यक्षः स्यात्। तथा चाप्रत्यक्षब्रह्मभेदो न प्रत्यक्ष इति नेत्याह—न चेति। अभावप्रत्यक्षत्वे तावदन्यदेव प्रयोजकमित्याह—यत्र हि यत्सत्त्वमिति। तर्कितमिति शेषः। प्रतीयोगिप्रत्यक्षत्वं त्वन्वयव्यतिरेकव्यभिचारान्न प्रयोजकमित्याह—नत्विति। प्रतीत्यनुसारेणेति। तदव्यभिचारेणेत्यर्थः। तथा च जीवे ब्रह्मतादात्म्यमनुपलब्धिविरोधीति तदभावः प्रत्यक्ष इति भावः। तत्प्रत्यक्षत्वानङ्गीकारे सिद्धान्ते बाधकमाह—अन्यथेति।

**नन्वन्तःकरणविशिष्टस्य परस्माद्भेदः प्रतीयते स ममापीष्टः। यश्च नेष्टः शुद्धचैतन्यस्य परस्माद्भेदः सोऽत्र न भातीतिचेत्, न। योऽहमस्वाप्सं, यस्य ममाज्ञानं संसारश्च सोऽहं निर्दुःखाद् भिन्न इत्यज्ञानसंसारयोराश्रयस्यैव ततो भेदावगमात्। संसाराधारानाधारयोरेव हि भेदे आवयोर्विवादः नतु चैतन्यस्य चैतन्याद्भेदे ईश्वरस्यापि जीवाद्भेदे-"ममैवांशो जीवलोके"—इत्यादितद्वचनानुमितं तदीयप्रत्यक्षं प्रमाणम्।**

जोवेशभेदे-अनुमानम्—

**अनुमानमपि जीवब्रह्मभेदे प्रमाणम्। ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवद् दुःखाननुभवितृत्वात्, अभ्रान्तत्वात्, असंसारित्वाच्च घटवत्। जीवो ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवान्। असर्वज्ञत्वात्, असर्वशक्तित्वात् अस्वतन्त्रत्वाच्च। घटवत्। अत्र जीवब्रह्मशब्दाभ्यां-त्वन्मते तत्त्वमसीत्यत्र तत्त्वम्पदाभ्यां 'जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते'इत्यत्र च जीवपरमात्मशब्दाभ्यां ये विवक्षिते संसाराधारानाधारचैतन्ये, ते एवात्रापि विवक्षिते इति न सिद्धसाधनम्।**

---

भेदप्रत्यक्षमङ्गीकृत्य तच्छ्रुतिप्रतिपाद्याभेदाविरोधीत्यभिप्रेत्य शङ्कते—नन्विति। सुषुप्त्यज्ञानाश्रयस्य परस्माद्भेदः प्रतीयते। स च तव निष्कृष्टाहङ्कारचिन्मात्रमेव। तथा च कथं न प्रत्यक्षविरोध इत्याह—न योऽहमिति। ननु तथापि चिन्मात्रं चिन्मात्राद्भिन्नमित्येवमाकारा प्रतीतिर्नास्तीत्यत आह—संसारेति। एवमीश्वरस्यापि जीवाद्भेदे ईश्वरप्रत्यक्षं प्रमाणम्। न च यत्र मानाभावः। अंशांशिभावेन भेदाभिधायितद्वचनमूलत्वेन तदनुमानादित्याह—ईश्वरस्येति।

प्रत्यक्षादिभिरित्यादिशब्दोपात्तमनुमानं तावदाह—अनुमानमपीति।

जीवप्रतियोगिको यो धर्मिसत्तासमानसत्ताको भेदस्तद्वदित्यर्थः। जीवप्रतियोगिकभेदवदित्युक्ते मिथ्याभेदेनार्थान्तरता स्यात् तद्वारणाय धर्मीत्यादि। तावत्युक्ते घटादिभेदेनार्थान्तरता। तदर्थं जीवप्रतियोगिकेति। जीवप्रतियोगिकब्रह्मधर्मिकभेदस्य धर्मिसमानसत्ताकत्वं सत्यत्वं विना न सिध्यतीति भावः। असिद्धिवारणाय दुःखपदम्। दुःखानुभवो दुःख्यहमिति ज्ञानं तदभावश्च सर्वज्ञेऽपीश्वरेऽस्तीति नासिद्धिः। जीवप्रतियोगिकब्रह्मधर्मिकभेदस्य सत्यत्वं प्रसाध्य ब्रह्मप्रतियोगिकजीवधर्मिकभेदस्य तत्साधयति—जीव इति। विशेषणकृत्यं तु पूर्ववदेव। ननु जीवब्रह्मपदवाच्ययोर्धर्मिसमसत्ताकभेदाङ्गीकारात्सिद्धसाधनमित्यत आह—अत्रेति। 'जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात् परमात्मवत्' इत्याचार्यानुमानमभिप्रेत्याह—जीवा इति। विवक्षिते एवाह—संसारेति। धर्मिशब्दस्य प्रकृतधर्माश्रयपरत्वान्न शुक्तिरजतसमसत्ताकभेदेन सिद्धसाधनमित्याह—धर्मीति। ननु शुक्तिरजतादेः प्रकृतजीवप्रतियोगिकभेदं प्रत्यपि धर्मित्वात्सिद्धसाधनं

**धर्मिशब्दस्य पित्रादिशब्दवत्संबन्धिशब्दत्वान्मिथ्यात्वं प्रति धर्मिभूतशुक्तिरूप्यसमानसत्ताकभेदेन न सिद्धसाधनम् । न हि माता पूज्येत्युक्ते स्वसुतमाता भार्या पूज्यते । धर्मिपदस्थाने स्वपदं वाऽस्तु । सत्तात्रैविध्यमतेऽपि ब्रह्मणि बाधाभावरूपायाः सत्तायास्तदुपलक्षितस्वरूपाया वा सत्त्वान्न बाधः । यद्वा धर्मिसत्तासमानसत्ताकेति पदस्थाने पारमार्थिकेतिवा, यावत्स्वरूपमनुवर्त्तमानेति वा, स्वाज्ञानकार्यप्रतीत्यविषयेति वा, स्वज्ञानाबाध्येति वा विशेषणंदेयम् । स्वशब्दस्य समभिव्याहृततत्तत्परत्वस्य व्युत्पन्नत्वान्न कश्चिद्दोषः ।।**

**न चाद्ये साध्ये दृष्टान्तस्य साध्यविकलता । घटो जीवप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवान् । जीवधर्मिकधर्मिज्ञानाबाध्याभेदाप्रतियोगित्वात् । यद्यज्ज्ञाना-**

---

तदवस्थमित्यरुचेराह—धर्मीति । स्वशब्दस्य समभिव्याहृतयोग्यपरत्वान्नोक्तदोष इति भावः । नन्वद्वैतमते ब्रह्मण एव सत्तारूपत्वात्तत्समानसत्ताया ब्रह्मान्तरत्वात्तदभावाद्बाध इत्यत आह—सत्तात्रैविध्येति । तदुपलक्षितेति । ब्रह्मणोऽपि बाधाभावोपलक्षितस्वरूपोपपत्तेर्न बाध इति भावः । नन्वत्र समानशब्देन सादृश्यं किं विवक्षितमुतैक्यम् ? । नाद्यः । व्यावहारिकभेदसत्ताया अपि सद्व्यवहारानुकूलत्वेन ब्रह्मसत्तासदृशत्वात्सिद्धसाधनापत्तेः । न द्वितीयः । भेदे ब्रह्मसत्तयैव सद्व्यवहार इति सिद्धान्तेऽप्यङ्गीकारादित्यरुचेराह—यद्वेति । स्वाज्ञानकार्येति । अज्ञानकार्यप्रतीतिर्भ्रान्तिः तदविषयत्वे साधितेऽर्थात्पारमार्थिकत्वसिद्धिरिति भावः । तत्र स्वपदं घटादौ साध्याप्रसिद्धिवारणाय । स्वज्ञानाबाध्येति । भेदस्य ब्रह्मज्ञानाबाध्यत्वे सत्यत्वमेव सिध्यति । अत्रापि स्वपदकृत्यं पूर्ववदेव । स्वशब्देन घटादेरप्यभिधानात्सिद्धसाधनमित्याशङ्क्याह—स्वशब्दस्येति ।।

न च घटादौ पारमार्थिकभेदवत्त्वमसिद्धमिति शङ्क्यम् अनुमानान्तरेण सिद्धत्वादित्याह—न चाद्ये इति ।

घटे पटप्रतियोगिकभेदवत्त्वेन सिद्धसाधनतावारणाय जीवेति । घटो जीवप्रतियोगिकभेदवानित्युक्ते व्यावहारिकभेदेन सिद्धसाधनता, तन्निवृत्त्यर्थं प्रतियोगीत्यादि । जीवप्रतियोगिकभेदस्य प्रतियोगिभूतात्मज्ञानाबाध्यत्वे पारमार्थिकत्वसिद्धिरिति भावः । जीवधर्मिको धर्मिज्ञानाबाध्यो योऽयमभेदो जीवे जीवाभेदस्तदप्रतियोगित्वादिति हेत्वर्थः । घटस्य स्वज्ञानाबाध्यस्वाभेदप्रतियोगित्वादसिद्धिवारणाय जीवधर्मिकेत्युक्तम् । घटस्य जीवधर्मिकारोपिताभेदप्रतियोगित्वादसिद्धिवारणायाबाध्येत्युक्तम् । सामान्यव्याप्तौ साधनवैकल्यपरिहाराय धर्मिज्ञानेत्युक्तम् । विशेषसाध्याप्रसिद्धेः सामान्येन व्याप्तिमाह—यद्यज्ज्ञानेति । प्लक्षस्य न्यग्रोधधर्मिकारोपिताभेदप्रतियोगित्वेऽपि न्यग्रोधज्ञानाबाध्यतदीयाभेदाप्रतियोगित्वमेवेत्यभिप्रेत्य दूरस्थेत्युक्तम् ।

प्रतियोगिज्ञानाबाध्यभेदवानित्यत्र किं प्रतियोगिज्ञानं भ्रान्तिरूपं विवक्षितमुत प्रमारूपम् ? । नाद्यः । जीवविषयभ्रान्तिज्ञानाबाध्यतत्प्रतियोगिकभेदस्येष्टत्वात् । द्वितीये

**बाध्ययद्धर्मिकाभेदाप्रतियोगि तत्तज्ज्ञानाबाध्यतत्प्रतियोगिकभेदवत्। यथा दूरस्थवनस्पत्योरेक इत्याद्यनुमानेन तत्सिद्धेः।**

**यद्वा ब्रह्म तत्त्वतो जीवाभिन्नं नेति साध्यम्। एवं च न साध्यवैकल्यशङ्काऽपि। त्वन्मतेऽपि कल्पिते घटे तात्त्विकभेदवत् तात्त्विकाभेदस्याप्यभावात्। न चान्तःकरणस्यैव दुःखानुभवितृत्वात्तदननुभवितृत्वं जीवेऽनैकान्तिकमिति वाच्यम्। दुःखादेर्बन्धस्य मोक्षसामानाधिकरण्याय जीवस्थत्वात्। त्वदभिमतानर्थाभाव एव तेन विवक्षित इति न कश्चिद्दोषः।**

**न चासंसारित्वादेर्ब्रह्मण्यसिद्धिः। जीवेनानैकान्तिकत्वं वा। त्वन्मतेऽप्यौपाधिकश्यामत्वादिवत्तस्य व्यवस्थितत्वात्। एवं ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्। पदार्थत्वात्। घटवत्। जीवस्यापि जीवान्तराद्भिन्नत्वान्न व्यभि-**

---

किं यत्र यद्विद्यते तद्विषयज्ञानत्वं प्रमात्वमुताबाधितार्थकत्वम्? आद्येऽशनायादिमज्जीवज्ञानस्यापि प्रमात्वेन तदबाध्यतद्भेदवत्त्वमिष्टमेव। द्वितीये तज्ज्ञानाबाध्यतत्प्रतियोगिकभेदवदिति सामान्यव्याप्तावपि ज्ञानपदेनाबाधितार्थज्ञानमेव वक्तव्यम्। तच्चासिद्धम्। ब्रह्मव्यतिरिक्तस्य सर्वस्य बाध्यत्वादित्यरुचेराह-यद्वेति। अद्वैतमते जीवघटयोरप्यभेदात्साध्याप्रसिद्धिरत्रापीत्याशङ्क्य कल्पिताकल्पितयोस्तात्त्विकाभेदाभावस्तवापि संमत इत्याह—एवं चेति। सिद्धान्तिमतेनाऽऽद्यहेतोर्व्यभिचारशङ्कां निराकरोति—न चेति। जीवस्यैव मोक्षान्वयित्वेन दुःखादिबन्धोऽपि तत्रैव वक्तव्यः। तथा च न तत्र हेतुरित्याह—दुःखादेरिति। ननु जीवे कल्पित एव दुःखादिबन्धो न वास्तव इत्याशङ्क्य तर्हि कल्पितस्याभाव एव हेतुरित्याह--त्वदभिमतेति।

ननु जीवस्य संसारित्वे तदभिन्नब्रह्मणोऽप्यसंसारित्वं न स्यादित्यसिद्धिः। तस्यासंसारित्वे तदभिन्नजीवस्यापि तदिति व्यभिचारो वेत्यत आह--न चेति।

प्रतिबिम्बमुखश्यामत्वस्यौपाधिकत्वेऽपि बिम्बेऽभावात्। बिम्बगतावदातत्वस्य प्रतिबिम्बेऽभावाद्यथाकल्पितभेदेन तयोर्व्यवस्था। एवं संसारित्वासंसारित्वादेरिति तवाभिमतत्वादित्यर्थः। केवलान्वयिहेतुमप्याह—एवमिति। मिथ्याभेदेन सिद्धसाधनतावारणाय स्वज्ञानाबाध्येत्युक्तम्। स्वशब्दः समभिव्याहृतपरः। जीवे जीवप्रतियोगिकभेदाभावाद् व्यभिचारमाशङ्क्याह—जीवस्यापीति। अनुमानदार्ढ्याय श्रुतिं स्मृतिं च प्रमाणयति---श्रुतिश्चेति। आदिपदेन "य आत्मानमन्तरो यमयति" "ऋतं पिबन्तौ" इत्यादिः संगृहीता। श्रुत्यपेक्षितन्यायसूचकानि सूत्राण्युदाहरति—सूत्राणि चेति। यः पृथिवीमन्तरो यमयतीत्यादिवाक्येषु श्रूयमाणोऽन्तर्यामी जीव एवेति शङ्कानिरासायेदं सूत्रम्। "न च स्मार्त्तमतद्धर्माभिलापात्"इति पूर्वसूत्रान्नञनुवर्तते। तथा च शारीरश्चान्तर्यामी न भवति। तस्य पृथिव्यादिनियमने सामर्थ्याभावात्। न च समर्थेश्वराभिन्न-

जीवेश्वरभेदे श्रुतिप्रामाण्यं

**चारः । श्रुतिश्च जीवेश्वरयोर्भेदे प्रमाणं द्वा सुपर्णेत्याद्या । स्मृतिश्च—**

**यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् ।**

**सूत्राणि च 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इत्यादीनि । न च प्रत्यक्षप्राप्तानुवादोऽयम् । प्रत्यक्षस्य प्रामाण्यसिद्धौ तेनैव भेदसिद्धेः । तदसिद्धौ प्रत्यक्षस्यैक्यश्रुतिविषयापहार इव भेदश्रुतिविषयापहारेऽप्यशक्तत्वात् ।**

**प्रत्युत भेदश्रुतेरेव निगमनवत् तत्त्वमसीति नवकृत्वोऽभ्यासवत्, पिपासितस्यैकजलविषयशब्दलिङ्गप्रत्यक्षरूपप्रमाणसंप्लववत्, त्वत्पक्षे प्रत्यक्षसिद्धभावरूपाज्ञाने तम आसीदिति श्रुतिवत्, श्रुतेरैक्यतात्पर्ये षड्विधतात्पर्यलिङ्गवच्च, प्रत्यक्षानाश्वासनिरासेन दार्ढ्यार्थत्वात् । अग्न्यौष्ण्यप्रत्यक्षस्य प्रामाण्यानिश्चये "अग्निर्हिमस्य भेषजम्" इत्यनुवादो न स्यात् ।**

**किं च भेदश्रुतेर्भेदप्रत्यक्षानपेक्षत्वान्न सापेक्षानुवादत्वम् । निरपेक्षानुवादत्वं तु धारावाहिकज्ञान इव नाप्रामाण्यहेतुः । उक्तं हि नयविवेके—सापेक्षानुवादे हि न प्रतीतिर्न दंवादनुवादे धारावाहिकवदिति ।**

---

त्वात्सोऽपि समर्थ इति चाद्यम् । यत्कारणमुभयेऽपि काण्वा माध्यन्दिनाश्चैनं शारीरं परस्माद्भेदेनाधीयते । यो विज्ञानमन्तरो यमयतीत्यन्तर्यामिनियम्यत्वेनैनमामनन्ति काण्वाः, य आत्मानमन्तरो यमयतीति माध्यन्दिना इति सूत्रार्थः । आदिपदेन "गुहां प्रविष्टावात्मानौ" इत्यादि परिगृह्यते । ननु द्वासुपर्णेत्यादिश्रुतेः 'अग्निर्हिमस्य भेषजम्' इतिवदनुवादत्वान्न भेदे तात्पर्यमिति नेत्याह—न चेति । किं पूर्वभावि प्रत्यक्षं प्रमाणमुत न ? आद्ये आह—प्रत्यक्षस्येति । द्वितीये श्रुतार्थस्य मानान्तरापूर्वत्वाच्छ्रुतिस्तत्परैवेत्यभिप्रेत्याह—तदसिद्धाविति ।

श्रुतेरनुवादत्वेऽपि भेदप्रत्यक्षदार्ढ्यार्थहेतुत्वान्मदिष्टसिद्धिरिति सनिदर्शनमाह—प्रत्युतेति ।

निगमनवदिति । यथा निगमनावयवो मानान्तरबाधशङ्कानिरासेनानुमानदार्ढ्यार्थ एवमित्यर्थः । पिपासितस्येति । तृषार्तस्यानभ्यस्तजले प्रथमप्रवृत्तप्रमाणदार्ढ्याय प्रमाणान्तरप्रवृत्तिवदित्यर्थः । प्रत्यक्षसिद्धानुवादः प्रत्यक्षदार्ढ्यायेत्येतद्व्यतिरेकमुखेनोपपादयति अग्न्यौष्ण्येति ।

अपि च स्मृतिवत्सापेक्षानुवादत्वे निरपेक्षत्वलक्षणं प्रामाण्यं हीयेतापि । न चैतदस्ति ।

किं चायमनुवादो न "वायुर्वै क्षेपिष्ठा" इत्यादिवद्विधिस्तुतये, नापि "दध्ना जुहोति" इत्यत्र जुहोतिरिवान्यविधानार्थः। अन्यविधानाय प्रमाणेनानूदितस्य तात्त्विकत्वनियमात्। अनुवाद्यस्य ह्यसत्त्वे आश्रयासिद्धौ धर्मधर्मिसंसर्गरूपानुमितिवेद्य इवानुवाद्यविधेयसंसर्गरूपवाक्यार्थो बाधितः स्यात्। नापि नेह नानास्तीतिनिषेधार्थः। तत्रैव किं च नेत्यनुवादांशस्य सत्त्वात्। न हि "न सुरां पिबेत्" इति निषेधाय 'सुरां पिबेत्'इति वाक्यमपेक्षितम्।

अनश्नन्निति विधेयान्तरश्रवणाच्च। यत्तन्नेत्यादिनिषेधार्थानुवादलिङ्गाभावाच्च। तदभावेऽपि निषेधायानुवादे तत्सत्यमित्याद्यसद्वाइदमग्र आसीदिति निषेधाय ब्रह्मसत्त्वानुवादकं किं न स्यात्। सर्वप्रत्ययवेद्यत्वाद् ब्रह्मसत्त्वस्य।

किं च नान्योऽतोऽस्तीति श्रुतिरेव "भिन्नोऽचिन्त्यः परो जीवसङ्घात्" इत्याद्यभेदनिषेधायानादिवादिपरंपराप्राप्तैक्यानुवादिनी किन्न स्यात्। न चाननु-

---

अपौरुषेयश्रुतेः प्रत्यक्षानपेक्षत्वादित्यभिप्रेत्याह—किं चेति। प्रमितिः प्रतीतिशब्दार्थः।

किं च "द्वा सुपर्णे"त्यादिश्रुतेरनुवादमात्रत्वे निरर्थकानुवादायोगाद्विधिस्तुतयेऽन्यविधानाय वाऽनुवाद्यनिषेधाय वाऽनुवादो वक्तव्यः। न तावदाद्यः इत्याह—किञ्चायमिति। अर्थवादत्वस्य विध्येकवाक्यत्वस्य चाभावादित्यर्थः द्वितीयमपवदति—नापीति। अन्यविधानायानुवादत्वेऽनूद्यस्य तात्त्विकत्वं वाच्यमित्याह—अन्येति। तदेव सदृष्टान्तं विपक्षबाधकमुखेनोपपादयति अनुवाद्यस्येति। तृतीयं दूषयति—नापि नेहेति। किञ्चनेत्यनेन भेदस्याप्यनूदितत्वात्, द्वासुपर्णेत्यनुवादान्तरवैयर्थ्यादित्यर्थः। निषेधकवाक्यगतानुवादे सति पृथगनुवादानपेक्षायामुदाहरणमाह—न हीति।

किञ्च स्ववाक्ये एवाज्ञातज्ञापनलक्षणविधिशेषत्वसम्भवान्न वाक्यान्तरगतनिषेधशेषत्वमित्यभिप्रेत्याह—अनश्नन्निति।

निषेधशेषत्वे ज्ञापकमिति यत् तन्नेत्यादि, तदपि नेत्याह—यत्तदिति। अनुवाद एव निषेधशेषत्वे लिङ्गमित्याशङ्क्यातिप्रसङ्गमाह—तदभावेऽपीति। तत्सत्यमित्यस्यानुवादकत्वमेव नास्ति ब्रह्मसत्ताया अन्यतोऽसिद्धत्वादित्याशङ्क्याह —सर्वेति। तव मते घटः सन्नित्यादिसत्तावुद्धेर्ब्रह्मसत्ताविषयत्वादिति भावः। वस्तुतस्तु भेदश्रुतिगम्यनिषेधशेषाभेदानुवादाय वाऽभेदश्रुतिः। न चाभेदस्याप्राप्तेरननुवादः। अनाद्यद्वैतवादिपरम्पराप्राप्तत्वात्।

तद्धैक आहुरसदेवेदमग्र आसीदित्यसद्वादिसिद्धासदनुवादवदित्यभिप्रेत्याह—किं चेति। ननु श्रुतेर्भेदपरत्वेऽपि शब्दान्तराभ्यासादिकर्मभेदप्रमाणवद्व्यावहारिकभेदपरत्व-

वादकत्वेऽपि बाध्यव्यावहारिकभेदपरा श्रुतिः । अप्रामाण्यापातात् । न चाभेदश्रुति-विरोधात् तदिष्टम् । तस्या लक्षणयाऽखंडचिन्मात्रपरत्वेन भेदाविरोधित्वात् । वैपरीत्यस्यापि सुवचत्वात् । यदि तु भेदश्रुतिः प्रत्यक्षप्राप्तार्थत्वाद् दुर्बला, तर्ह्यैक्य श्रुतिरपि तद्विरुद्धत्वात्तथा स्यात् । यदि चैक्यश्रुतिः प्रत्यक्षाविरुद्धैक्यपरा तर्हि भेद-श्रुतिरपि तदसिद्धत्रिकालाबाध्यभेदपराऽस्तु । न च षड्विधतात्पर्यलिङ्गवत्त्वादैक्य-श्रुतिः प्रबला लिङ्गानां तात्पर्यमात्रज्ञापकत्वेनार्थतथात्वाज्ञापकत्वात् । स्वीकृतं च भेदश्रुतेरनुवादकत्वं त्यजता त्वयापि भेदपरत्वम् ।

अस्ति चात्रापि "अनश्नन्पूर्णः परो जीवसंघो ह्यपूर्ण" इत्याद्युपपत्तिरूपं "सत्यं भिदा सत्यं भिदा"इत्यभ्यासरूपं च तात्पर्यलिङ्गम् । तद्बहुत्वं च त्वत्पक्षे प्रमाणसंप्लववद् व्यर्थम् । अस्ति चात्र भेदे आथर्वणश्रुतौ उपक्रमो 'द्वासुपर्णा' इति । 'परमं साम्यमुपैति' इत्युपसंहारः । "तयोरन्य अनश्नन्नन्य" इत्याद्यभ्यासः शास्त्रैक-गम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा कालत्रयाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेर-पूर्वता । पुण्यपापे विधूयेति फलं च । "अस्य महिमानमिति वीतशोक" इतिस्तुति-

---

मेवाऽस्त्वित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या दूषयति—नाननुवादत्व इति । तत्त्वमसीत्यादि-श्रुतिविरोधाद्भेदश्रुतेरप्रामाण्यमेवेत्याशंक्य तस्याः श्रुतेर्भेदाभावाविषयत्वाद्विरोध एव नास्तीत्याह—न चेति । विरोधमङ्गीकृत्याप्याह—वैपरीत्येति । भेदश्रुतेरधिगतार्थत्वा-द्दौर्बल्यं चेदभेदश्रुतेः प्रत्यक्षविरुद्धार्थत्वात्ततुल्यत्वमित्याह—यदि त्विति । ननु व्यावहा-रिकभेदविषयप्रत्यक्षेण न पारमार्थिकाभेदविषयश्रुतेर्विरोध इति चेत्तर्हि पारमार्थिकभेद-विषयश्रुतेर्न तेनाधिगतार्थतेत्याह—यदि चेति । ननूपक्रमोपसंहारौ, अभ्यासो, ऽपूर्वता-फलम्, अर्थवादोपपत्ती चेत्येतानि तात्पर्यलिङ्गान्यभेदश्रुतेः सन्ति । ततः सा प्रबलेति चेन्न । एतैर्लिङ्गैरभेदश्रुतेस्तात्पर्यवत्त्वसिद्धावपि तदर्थस्य विधिवाक्यार्थवत्पारमार्थिकत्वा-सिद्धेरित्याह—न च षड्विधेति । तर्हि तत्परत्वमेव प्राबल्यहेतुरित्याशङ्क्याननुवाद-त्वेपि बाध्यव्यावहारिकभेदपरा श्रुतिरिति चोद्यसमये भेदश्रुतेस्तत्परत्वं त्वयाऽपि स्वी-कृतम् । वस्तुतस्तु मया वा स्वीकृतमित्याह—स्वीकृतं चेति ।

लिङ्गं विना स्वीकारमात्रेण कथं भेदे तात्पर्यसिद्धिरित्यत आह—अस्ति चेति ।

अशनानशनपूर्णत्वापूर्णत्वरूपविरुद्धधर्मव्यवस्थाया अभेदेऽसंभवाद्भेद एवोपपत्ति-रिति भावः । ननु अभेदतात्पर्ये लिङ्गषट्कं भेदतात्पर्ये तु द्वयमेवेति वैषम्यमित्यत आह—तद्बहुत्वमिति । ननु पञ्चावयवैर्विनाऽनुमेयविशेषवत्षड्विधलिङ्गैर्विना न तात्पर्यसिद्धि-रित्यत आह—अस्ति चेति । परमं साम्यमिति । सादृश्यस्य भिन्नाश्रयत्वादुपसंहारो भेद-विषय इति भावः । अपूर्वतामाह—शास्त्रैकेति । धर्म्यादिग्रहं विना भेदग्रहायोगाद्धर्मिणः प्रतियोगिनो वेश्वरस्य मानान्तरागोचरत्वाद्भेदोऽपि तथैवेत्यपूर्वतेत्यर्थः । अस्य-ईश्वरस्य

रूपार्थवादः । अस्ति अनश्नन्नन्य इत्युपपत्तिश्च । निषेधवाक्यत्वादैक्यश्रुतिः प्रबला चेद् 'असद्वा' इत्यादिवाक्यं सत्यज्ञानादिवाक्यात्प्रबलं स्यात् ।

किं च भेद एव ऐक्यनिषेधरूपः । किं च भेदश्रुतिरेव प्रबला । प्रत्यक्षादिसंवादान्निरवकाशत्वाच्च । किं चायं भेदो न व्यावहारिकः । मुक्तावपि स्मृतेः, श्रुतेश्च । न हि सा मुक्तिरवान्तरा

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" ॥

इति स्मृतौ सर्गाद्यसम्भवोक्तेः ।

'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ।
श्यामावदाताः शतपत्रलोचनाः
पिशङ्गवासाः सुरुचः सुवेशसः'
इति स्मृतौ मायानिषेधाच्च ॥

"यो वेद निहितं गुहायां सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इत्यत्र शुद्धब्रह्मज्ञानफलत्वोक्तेश्च । भूमविद्यायाः फलोक्त्यवसरे तस्य "सर्वेषु लोकेषु

---

महिमानमिति एति । इयं च स्तुतिरेव न फलं जीवस्येश्वरमहिमायोगादिति भावः । नेदं रजतमितिवन्निषेधकमानमेव बलवदित्याशङ्क्यातिप्रसङ्गमाह - निषेधेति ।

निषेधकस्यैव प्राबल्यमङ्गीकृत्याह—किं चेति । एवं साम्यमुक्त्वा भेदश्रुतेरेव प्राबल्ये हेतुमाह—किं च भेदश्रुतिरेवेति । न चापूर्वत्वाभिधानविरुद्धं प्रत्यक्षादिसंवादाभिधानमिति वाच्यम् । मतभेदेन तदुपपत्तेरिति भावः । प्रत्यक्षादिसिद्धभेदस्य व्यावहारिकत्वाभावे युक्त्यन्तरमाह—किं चेति । "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः" "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा "इत्यादिः स्मृतिश्रुतिशब्दार्थः । ततोऽवगमादिति शेषः । स्मृतेः-स्मरणात्, श्रुतेः-श्रवणादिति वाऽर्थः । कार्यब्रह्मलोके एव सादेश्यसारूप्यादिकमुच्यते, न परममुक्तावित्याशङ्क्याह—न हीति । श्रीभागवते सारूप्यं गतानां मायानिषेधाच्च सा परममुक्तिरित्याह—न यत्रेति । यत्र वैकुण्ठे, न माया । अपरे मायाकार्यभूता रागादयो नेति किमु वक्तव्यम् । यत्र हरेरनुव्रताः सन्ति तेषामेव विशेषणं सुरासुरेत्यादि । सुवेशसः-सुष्ठ्वलंकृता इत्यर्थः ॥

सोऽश्नुते सर्वान् कामानिति च परममुक्तिरेवोच्यते । ब्रह्मज्ञानसाध्यतावगमात् । कार्यब्रह्मप्राप्तेस्तूपासनासाध्यत्वादित्याह—यो वेदेति ।

छान्दोग्येऽपि मुक्तिसमये भेदः श्रूयते इत्याह—भूमेति । "स तत्र पर्येति" इति श्रुतिः परममुक्तिविषया स्वेन रूपेणेति स्वरूपाविर्भावोक्तेरित्याह—परं ज्योतिरिति ।

कामचारो भवति एकधा भवति। त्रिधा भवति" इति भेदोक्तेश्च। परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति" इतिस्वरूपाभिव्यक्त्युक्तेश्च। "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति कर्मक्षयोक्तेश्च "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादौ भेदज्ञानान्मोक्षोक्तेश्च। अभेदे च न किञ्चन मानमस्ति।

अभेदानुमानखण्डनम्

ननु जीवास्तत्त्वतः परमात्मनो न भिद्यन्ते। आत्मत्वात्, परमात्मवदित्यनुमानमस्तीति चेन्न। प्रत्यक्षाद्यपहृतविषयत्वात्। ज्ञातृत्वादिरूपात्मत्वस्य हेतोस्तवासिद्धेः, अवेद्यत्वलक्षणस्य ममासिद्धेः, जातिरूपत्वे च विरोधात्। "जीवाः परमात्मनो व्यवहारतो न भिद्यन्ते तत एव तद्वत्" इत्याभाससमानयोगक्षेमत्वाच्च। नापि श्रुतिः प्रमाणम्। तस्याः प्रत्यक्षाद्युपोद्बलितभेदश्रुतिविरोधादतत्परत्वात्। तस्मात् श्रुत्यादिप्रमाणसिद्धत्वाज्जीवेश्वरभेदः परमार्थः। अभेदे च प्रमाणाभावात्स स्वाभाविकश्चेति।

उच्यते—

"परमार्थो न जीवेशभेदो मानाप्रसिद्धितः।
द्रष्टृभेदश्रुतिश्चैनं पौनःपुन्येन बाधते"॥

न हि भेदस्य परमार्थिकत्वं गोत्वादिवज्जातिरूपः कश्चिद्धर्मः पदार्थमात्रगतजातेरभावात्। सत्तायाश्च भेदानधिष्ठानत्वात्। किं तु बाधागोचरत्वम्। तच्च

---

निरञ्जनः परमं साम्यमित्यनेनापि परममुक्तिरेवोच्यते, पुण्यपापक्षयश्रवणादित्याह— तदा विद्वानिति। भेदस्य तत्त्वज्ञानविषयत्वात्ऽपि परमार्थत्वमित्याह—जुष्टमिति। एवं स्वपक्षं प्रसाध्य परपक्षं दूषयति—अभेदे चेति।

अभेदेऽनुमानं मानमुत श्रुतिरिति विकल्पमभिप्रेत्याद्यमनूद्य दूषयति—नन्वित्यादिना। किं च हेतूक्तमात्मत्वमपि जातिरुपाधिर्वा?। द्वितीयेऽपि ज्ञातृताद्याश्रयत्वं तत्, अवेद्यत्वं वा?। न सर्वथाऽपीत्याह-ज्ञातृत्वादीति। आभाससाम्यमप्याह-जीवा इति। द्वितीयमपवदति—नापीति। तर्ह्यभेदश्रुतेः का गतिरित्यत आह—अतत्परत्वादिति। उपासनादिपरत्वादित्यर्थः। अत्यन्तभेदवादिमतमुपसंहरति—तस्मादिति॥

सिद्धान्तोपक्रमः

सिद्धान्तमुपक्रमते—उच्यते इति।

तत्र तावत्पूर्वपक्षे दोषं श्लोकेन संगृह्णाति— परमार्थ इति। मानाप्रसिद्धित इति। मानशून्यत्वादित्यर्थः। बाधितत्वाच्च न तस्य पारमार्थिकत्वमित्याह— द्रष्टृभेदेति।

**न जीवेश्वरभेदेऽस्ति, "नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति विज्ञाता" इति द्रष्टृभेदस्य निषिद्धत्वात्। अथ प्रत्यक्षबाधागोचरत्वं तत्। तच्च भेदेऽप्यस्तीति चेन्न। लाघवेन बाधागोचरत्वस्य परमार्थशब्दार्थत्वात्। चन्द्रप्रादेशिकत्वादावतिव्याप्तेश्च।**

**ननु अन्यपरमिदं वचनम्। "भिन्नोऽचिन्त्यः परमो जीवसंघात्"इत्यभेदनिषेधशेषानुवादत्वादिति चेन्न। एतस्य श्रुतित्वे एव विप्रतिपत्तेः। अस्तु वा, तथापि न तावदिदं वाक्यमभेदनिषेधकम्। निषेधबोधिनञादेरश्रवणात्। नन्वभेदाभावो भेदः, अभावबोधकं च निषेधकमिति चेत्। तथात्वे सर्वमेव प्रमाणं निषेधकं स्यात्। तत्प्रमेयस्य स्वाभावाभावरूपत्वात्।**

अभेदनिषेधकत्वशंका

**नन्वभावत्वेन तद्बोधकमानं निषेधकमिति चेन्न, तथात्वे सर्वमेव प्रमाणं निषेधकं स्यात् प्रकृते तदभावात्। किं च--**

---

नान्योऽतोऽस्ति श्रोतेत्यादिश्रुतिरित्यर्थः। बाधितत्वेऽपि पारमार्थिकत्वं किं न स्यादित्याशङ्क्य किं पारमार्थिकत्वमखण्डधर्म उत सखण्डः?। नाद्य इत्याह—न हीति। स किं सत्तातिरिक्तः, उत सत्तैव?। नाद्य इत्याह—पदार्थेति। सामान्यादौ जात्यङ्गीकारेऽनवस्थाद्यापत्तेः। सत्तातिरिक्तजातेः सत्ताव्याप्यत्वनियमाच्चेति भावः। द्वितीयं दूषयति—सत्ताया इति। पराभिमतसत्ताजातेर्द्रव्यादित्रितयमात्रवृत्तित्वान्न भेदे सेत्यर्थः। भेदस्य पारमार्थिकत्वं सखण्डधर्म इति पक्षे स किं प्रामाणिकं बाधागोचरत्वं तद्भिन्नं वा?। नाद्यः। तस्य निरसिष्यमाणत्वात्। शुक्तिरजतादेरपि यत्किंचित्प्रमाणगम्यत्वाच्चेत्यभिप्रेत्य द्वितीयं परिशिनष्टि—किं त्विति। श्लोकस्योत्तरार्द्धं विवृण्वन्नेव दूषयति—तच्चेति। अतः—अन्तर्यामिण इत्यर्थः। ननु प्रत्यक्षाबाधितत्वमेव यथार्थत्वं तच्च श्रुत्या बाधितेऽप्यविरुद्धमिति शङ्कते—अथेति। व्यर्थविशेषणत्वेन दूषयति—न च लाघवेति। चन्द्रे दृश्यमानपरिमाणस्य मिथ्यात्वेऽपि प्रत्यक्षबाधाभावादतिव्याप्तिश्चेत्याह—चन्द्रेति। आदिपदेन गगननीलिमादि गृह्यते।

यदुक्तं पूर्वपक्षिणा—नान्योऽतोऽस्तीति श्रुतिरेवाभेदानुवादेन तन्निषेधकभेदश्रुतिशेषभूतेति। तदनुवदति—नन्विति। भिन्नो ऽचिन्त्य इत्यस्य प्रसिद्धशाखास्वपाठाच्छ्रुतित्वमेवासंमतमिति दूषयति—न एतस्येति। श्रुतित्वेऽप्यस्य यद्यभेदनिषेधकत्वं स्यात्तर्ह्यभेदश्रुतेर्निषेध्यानुवादेनैतच्छेषता भवेत्। नत्वेतदस्ति निषेधबोधिपदाश्रवणादित्याह—अस्तु वेति। शब्दतो निषेधानवगमेऽपि अर्थपर्यालोचनया निषेधकत्वमेवेति प्रतिवादी चोदयति—नन्विति। एवं च विधिनिषेधव्यवस्था न स्यादिति दूषयति—तथात्व इति॥

अभावविषयत्वे समानेऽपि प्रतियोगिविरहात्मत्वेन तद्बोधकत्वं निषेधकत्वमिति विशेषं शङ्कते—नन्विति।

"अप्रतीतेर्विरोधाच्च नाभेदः प्रातिभासिकः ।
व्यावहारिकसत्ताको नापि तस्मादबाधितः" ॥

असतो निषेधायोगाद्भेदवाक्येनाभेदोऽपोद्यते इति वदतः किमभेदः प्रातिभासिकः, किं वा व्यावहारिकः ? । नाद्यः । अहं ब्रह्मास्मीत्यपरोक्षमभेदाप्रतीतेः । नाहं ब्रह्मास्मीति भेदप्रत्ययविरोधाच्च । अत एव च न द्वितीयः । न हि तत्त्वावेदकभेदप्रमायां व्यावहारिकाभेदप्रमायां वा सत्यां व्यावहारिको भेदः संभवति । अतो नाभेदवाक्यं भेदवाक्यशेषः । तदर्थानुपयोगात् । न च व्यधिकरणधर्मावच्छिन्नाभेदानुवादः । अनुवादस्यासद्विषयत्वप्रसङ्गात् । तेन विना तत्प्रकरणे ऽनुपपत्त्यभावाच्च ।

एतेन भेदवाक्येन जीवतादात्म्यं ब्रह्मणि निषिध्यते इति प्रत्युक्तम् । तद्धर्मिकतत्प्रतियोगिकतादात्म्यनिषेधेऽपि ब्रह्मप्रतियोगिकजीवधर्मिकाभेदस्य 'नान्योऽतोऽस्ति' इतिवाक्यार्थस्यानिषिद्धत्वेन तस्य तदशेषत्वात् । न हि जीवस्यावच्छिन्नस्य यद्रूपं तदेवेश्वरस्वरूपमिति वेदान्तिभिरिष्यते । तस्मात् 'नान्योऽतोऽस्ति' इति वाक्यार्थः परमार्थ एवाभेदः ।

---

तर्हि "भिन्नोऽचिन्त्य" इति वाक्यस्याभेदविरहात्मतया भेदाबोधकत्वान्न निषेधकता इत्याह—न प्रकृत इति । किं च किं प्रातीतिकस्याभेदस्य निषेधः, उत व्यावहारिकस्य, किं वा पारमार्थिकस्य ? । नाद्यः शुक्तिरजतादिवदपरोक्षप्रतीत्यभावाद्भेदप्रमाविरोधाच्च तस्यासंभवात् । न द्वितीयः । समानसत्ताकयोर्भेदाभेदयोरेकत्र विरोधात् । भेदस्य पारमार्थिकत्वेऽपि तत्प्रमितिदशायां तदभावस्य व्यावहारिकत्वायोगात् । तृतीय एव परिशिष्यते । तथा च न निषेधसंभव इत्याह श्लोकेन—अप्रतीतेरिति । असत इत्यादिश्लोकविवरणं स्पष्टार्थम् । तदर्थानुपयोगादिति-अभेदवाक्यार्थस्य भेदवाक्यार्थज्ञानेऽनुपयोगादित्यर्थः । ननु जीवधर्मिकाभेदो जीवे प्रसिद्धो व्यधिकरणेन ब्रह्मप्रतियोगिकत्वेनावच्छेद्यनिषेधायानूद्यत इति चेन्न । परमते जीवधर्मिकेश्वरप्रतियोगिकाभेदस्य क्वाप्यभावादसदनुवादित्वं स्यात् । तथा चानुवाद्यस्येतरपदार्थसंसर्गेऽप्यसति भेदवाक्यमप्रमाणं स्यादिति त्वदुक्तोपालम्भस्त्वय्येव निपततीत्यभिप्रेत्याह—न च व्यधिकरणेति । व्यधिकरणधर्मावच्छिन्नघटाद्यभेदनिषेधस्येव तादृशजीवाभेदनिषेधस्यापि प्रकरणेनाऽनाकाङ्क्षितत्वान्न तत्परतेत्याह—तेन विनेति ।

ननु न भेदवाक्ये जीवेश्वराभेदस्य निषेधः : येन निषेध्यस्यासत्त्वं स्यात् । किन्तु जीवतादात्म्यस्य जीवे सत एव ब्रह्मणि निषेध इत्यत आह—एतेनेति ।

एतच्छब्दार्थमाह—तद्धर्मिकेति । जीवस्तच्छब्दार्थः । निषेध्यस्य जीवधर्मिप्रतियोगिकाभेदस्य नान्योऽतोऽस्तीत्यनेनाप्रतीतेस्तत्प्रतीतस्य जीवधर्मिकब्रह्मप्रतियोगिकाभेदस्यानिषेधान्नोक्तशेषशेषिभाव इति भावः । ननु तव मते जीवधर्मिप्रतियोगिकाभेद एव ब्रह्म-

किं च 'भिन्नोऽचिन्त्य' इति भेदो ऽनूद्य निषिध्यते। चिन्त्यत्वनिषेधस्य भेदनिषेधे पर्यवसानात्। स्वरूपाख्यानमात्रस्य वैयर्थ्यात्। नापि द्रष्ट्रभेदनिषेधश्रुतिरनुवादः। द्रष्ट्रभेदाभावस्यान्यतोऽप्राप्तेः। न चाभेदवादिसिद्धं भेदाभावमनुवदतीति वाच्यम्। न ह्यभेदवादीकस्यचित् ज्ञानस्य स्वयमेव करणम्। किंतु करणान्तरजन्यज्ञानाश्रयः तत्प्रसिद्धेः किं चित्करणं निरूप्यताम्। न हि प्रमैव हेतुमपेक्षते न भ्रान्तिः। सर्वदा सर्वेषां भ्रान्तिप्रसङ्गात्।

न तावत्प्रत्यक्षमभेदप्रसिद्धौ हेतुः। जीवपराभेदस्याननुभवात्। प्रत्यक्षभेदप्रमायां सत्यामभेदभ्रान्त्यनुपपत्तेश्च। नापि लिङ्गं, स्फुटतरभेदप्रत्यक्षविरोधेन वन्ह्यनौष्ण्यानुमानवत्तदनुदयात्। भेदलिङ्गानामनेकेषां सत्त्वाच्च। न च प्रत्यक्षस्य भ्रमत्वाभिमानान्न तस्यानुमानबाधकत्वमिति वाच्यम्। प्रत्यक्षसिद्धभेदस्य बाधकप्रमितिं विना भ्रमत्वाभिमानानुपपत्तेः। अनुमानस्यैव बाधकत्वेऽन्योन्याश्रयात्। नाप्यनादिपौरुषेयवाक्यमद्वैतवादिनोऽभेदभ्रमहेतुः। स्फुटतरभेदयोरयोग्यत्वनिश्चयेन शाब्दबुद्ध्यनुदयात्। शाब्दज्ञानमात्रस्यैव योग्यताज्ञानजन्यत्वात्। पौरुषेयवाक्यस्य प्रत्यक्षादिविलक्षणप्रामाण्यस्याद्वैतवादिभिरनभ्युपगमान्न तस्य भेदनिषेधश्रुतितुल्ययोगक्षेमता।

---

प्रतियोगिक इति तन्निषेध एव तन्निषेध इति चेन्न। कर्तृभोक्तृजीवाभेदस्य तद्विपरीतब्रह्मप्रतियोगिकत्वानङ्गीकारात्। तदतिरिक्तजीवाभेदस्याप्रसिद्धत्वेनानुवादायोगादित्यभिप्रेत्याह—न हीति। अभेदश्रुतेरन्यपरत्वायोगेन स्वार्थे पर्यवसानात् तदर्थभेदः परमार्थ एवेत्युपसंहरति—तस्मादिति।

आस्तां तावद् बृहदारण्यकश्रुतिः त्वदुदाहृतश्रुतिरेव भेदनिषेधपरेत्याह—किं चेति। परमो जीवसङ्घाद्भिन्नो न चिन्त्य इति भेद एव निषिध्यते। यथा चैत्रो दुष्टो न चिन्त्य इति दोषो निषिध्यते। भेदचिन्तानिषेधेऽपि विशेषनिषेधस्येतरानुज्ञापकत्वादभिन्नश्चिन्त्य इति स्यात्। तथा चास्मदिष्टसिद्धिरिति भावः। नन्वचिन्त्यः परमो जीवसङ्घाद्भिन्न इत्यर्थः किं न स्यादिति चेन्न। परमस्य मुमुक्षुचिन्त्यत्वेनाचिन्त्यत्वायोगात्प्राकृताचिन्त्यत्वज्ञानस्यापुरुषार्थत्वेन भेदस्य च सिद्धतया तदभिधानवैयर्थ्यादित्यभिप्रेत्याह—स्वरूपेति। एवं भेदश्रुतेरभेदनिषेधकत्वं निराकृत्याभेदश्रुतेरनुवादकत्वमपि नेत्याह—नापीति। वादिपरम्पराप्राप्तस्यानुवाद इत्युक्तमपवदति—न चाभेदेति। अभेदवादिसिद्धमित्यनेनाभेदवादिनस्तत्प्रसिद्धौ करणत्वं विवक्षितं कर्तृत्वं वा?। नाद्यः। ज्ञातुरन्यस्याभावादात्मनस्त्वयापि करणत्वानङ्गीकाराच्चेत्याह—न ह्यभेदेति। द्वितीयं परिशिनष्टि—किं त्विति। किमित्यत आह—तत्प्रसिद्धेरिति॥

तत्र नान्योऽतोऽस्तीति श्रुतेरेव तत्प्रसिद्धिमूलत्वान्नानुवादकतेति वक्तुं करणान्तरं परिसंचष्टे—न तावदिति।

अभेदप्रसक्तिविचारः

**न च प्रत्यक्षेण भेदाप्रतीतिदशायामनुमानात्पौरुषेयवाक्याद्वाऽभेदभ्रम इति वाच्यम् । जीवपरपदार्थद्वयज्ञाने सति तद्भेदज्ञानस्यावश्यकत्वात् । पदार्थद्वयज्ञानाभावे ऽभेदानुमित्यादेरनुदयात् । ऐक्यस्याभेदवादिभिः स्वतन्त्रानुमानपौरुषेयवाक्यगम्यतयाऽनङ्गीकृतत्वाच्च । सर्गप्रलययोरङ्गीकारेण पौरुषेयवाक्यानुमानप्रवाहस्योच्छिन्नत्वात्सर्गाद्यकालीनभ्रमासंभवात् ।**

**न च तदेश्वर एव व्यामोहकारीति वाच्यम् । सर्वज्ञत्वपरमात्मत्वादिविरोधात् । न च सर्गाद्यकाले कस्य चित्पूर्वभ्रमसंस्काराद् भ्रमः संभवति । वेदमूलत्वे बाधकाभावात् । तत्कल्पने चोदनावाक्यस्याप्यनुवादकतापत्तेः ।**

---

तव मते भेदज्ञानस्य प्रमात्वादभेदज्ञानस्य च भ्रमत्वाद्विरोधिप्रमाकाले भ्रमस्यसंभवश्चेत्याह—प्रत्यक्षेति । परोक्षप्रमायाः प्रत्यक्षभ्रमाविरोधित्वात्, प्रत्यक्षेत्युक्तम् । भेदप्रत्यक्षस्यानुमितिप्रतिबन्धकत्वान्नानुमानमप्यभेदभ्रमहेतुरित्याह—नापीति । भेदसाधकविरुद्धधर्माध्यासाद्यनेकलिङ्गपराहतत्वाच्च नाभेदानुमितिरित्याह—भेदलिङ्गानामिति । अग्न्यौष्ण्यप्रत्यक्षस्य प्रमात्वनिश्चयादनौष्ण्यानुमानबाधकत्वं, भेदप्रत्यक्षस्य तु भ्रमत्वारोपान्न प्रतिबन्धकत्वमिति विशेष इत्याशङ्क्य बाधकज्ञानं विना भ्रमत्वारोप एव न संभवतीत्याह—न च प्रत्यक्षस्येति । अनुमानस्य बाधकत्वभ्रमात् त्वत्पक्षे भ्रमत्वारोप इत्याशङ्क्याह—अनुमानस्येति । प्रत्यक्षस्य भ्रमत्वारोपेऽनुमित्युदयः । तदुदये सति तत्र बाधकत्वारोपपुरः सरं प्रत्यक्षभ्रमत्वारोप इत्यन्योन्याश्रयादित्यर्थः । ननु त्वद्गुरुवाक्यात्तवाभेदभ्रमः । त्वद्गुरोश्च स्वगुरुवाक्यात् । तस्यापि स्वगुरुवाक्यादित्यनादिकालप्राप्तोऽभेदभ्रम इति चेन्न । पौरुषेयवाक्यमात्रेण बाधाभावलक्षणयोग्यतारहितेन 'वह्निना सिञ्चेत्' इति वाक्येनेव कस्यापि बोधानुदयादित्याह—नाप्यनादीति । शाब्दप्रमायामेव योग्यताज्ञानं हेतुर्न तद्भ्रम इत्याशङ्क्य लाघवाच्छाब्दज्ञानमात्रे हेतुरित्याह—शाब्दज्ञानेति । ननु प्रत्यक्षविरोधेऽप्यपौरुषेयवाक्यादद्वैतवादिनामभेदप्रतीतिवत् पौरुषेयवाक्यादपि तत्प्रतीतिः किन्न स्यादित्याशङ्क्य वैषम्यमाह—पौरुषेयेति । पौरुषेयवाक्यस्य प्रत्यक्षादिमानमूलतया तत्तुल्यमेव प्रामाण्यमिति न तद्बाधेन स्वार्थबोधकत्वम् । अपौरुषेयवाक्यस्य तु त्रिकालाबाध्यवस्तुप्रतिपादनलक्षण-तत्त्वावेदनप्रामाण्याङ्गीकारात्प्रबलतया प्रत्यक्षादिकमाभासीकृत्य स्वार्थबोधकतोपपत्तिरिति भावः ।

तर्हि बाधानवतारदशायामनुमानादितो ऽभेदभ्रम इत्यत आह—न च प्रत्यक्षेणेति ।

किं जीवपरयोर्ज्ञातयोरनुमानादिप्रवृत्तिरज्ञातयोर्वा ? आद्ये धर्मिप्रतियोगिनोर्ज्ञातत्वादपेक्षणीयान्तराभावाद्भेदज्ञानं भवेदेव । द्वितीये पक्षादिज्ञानाभावान्नानुमानोदयः । पदार्थज्ञानाभावाच्च न शाब्दबोधोदय इत्याह—जीवपरेति । किं च जीवपराभेदः श्रुत्यन-

**न च भेदनिषेधश्रुतितात्पर्य्यभ्रमादद्वैतवादिनोऽद्वैतप्रसिद्धिः। अनुपस्थिते जीवपरभेदाभावे तत्र श्रुतितात्पर्य्यभ्रमस्यैव दुःसंपादत्वात्। न च तर्कादिनोपस्थिते अभेदे श्रुतितात्पर्यविभ्रमः। तर्कितस्य जीवपराभेदस्यान्यत्राभावात्। अत्राप्यसत्त्वे भेदश्रुत्या तन्निषेधायोगात्। अभेदश्रुतितात्पर्यज्ञानस्य यथार्थत्वात्। तस्माद‌द्वैतवादिनोऽद्वैतप्रसिद्धेर्मूलान्तराभावादियमेव श्रुतिः साक्षाद्भेदनिषेध्री मूलमिति नाद्वैतश्रुतिरनुवादः।**

**किं च प्रमाणसिद्धस्यैवानुवाद इति वदतः कथमद्वैतमप्रमाणम्। तत्र व्यावहारिकप्रमाणाप्रसरात्। तत्त्वावेदकप्रमाणस्यैव तद्विषयत्वात्। न च निषेधार्थ-**

---

पेक्षानुमानाद्यगोचर इत्येव सर्वाद्वैतवादिभिर्निश्चितत्वान्न ततस्तेषां तत्प्रतीतिरित्याह—ऐक्यस्येति। किं चेश्वरवादिभिः सर्गप्रलयाङ्गीकारात्सर्गाद्यकालीनाभेदभ्रमनिमित्ततया पौरुषेयोपदेशानुमानायोगात् तदा तद्भ्रमाभावे तन्निमित्तोपदेशस्योपदेशनिमित्तपुरुषान्तरभ्रमस्य चाभाव इत्येवं पूर्वपूर्वाभावे उत्तरोत्तराभाव इति अस्मदादिभ्रमस्याप्यसंभवेनेदानीमप्यनुवादो न स्यादित्यभिप्रेत्याह—सर्गप्रलयेति।

सर्गाद्यकाले कंचन पुरुषमीश्वर एव स्ववाक्येन भ्रामयतीति नोक्तदोष इत्याशङ्क्याह—न च तदेति। किमीश्वरः संतं भेदमज्ञात्वैवाभेदं बोधयति, ज्ञात्वाऽपि प्रतारयति वा ?। आद्ये सर्वज्ञत्वक्षतिः। द्वितीये परमात्मत्वपरमदयालुत्वादिविरोध इत्याह—सर्वज्ञत्वेति। न चेश्वरस्य बुद्धागमप्रणयनेन केषांचिद् व्यामोहकत्ववदद्वैतवादिमोहनायाऽऽगमान्तरप्रणयनोपपत्तिरिति वाच्यम्। तादृशागमस्य बुद्धागमवदितिहासपुराणादिष्वश्रवणात्, महाजनपरिगृहीतानेकश्रुतिस्मृतीतिहासपुराणसंवादाच्चेति भावः। सर्गाद्यकाले उपदेशाभावेऽपि पूर्वकल्पभ्रमजन्यसंस्कारात्स्मृतिरूपभ्रमसंभवान्न संप्रदायविच्छेद इत्याशङ्क्य तदा पौरुषेयवाक्यस्य दृष्टस्य तत्प्रतिपत्तिहेतोः संभवाददृष्टसंस्कारकल्पनाया अन्याय्यत्वान्मैवमित्याह—न च सर्गाद्येति। सर्गाद्यकालीनवैदिकव्यवहारस्य संस्कारमूलकत्वकल्पने तदा विधिनिषेधवाक्यार्थस्मरणस्यापि कस्य चित्संभवात् तन्मूलकल्पसूत्रादिस्मृतिपरम्पराप्राप्तार्थानुवादित्वं चोदनाभागस्यापि स्यादित्याह—तत्कल्पन इति।

ननु "नान्योऽतोऽस्ति द्रष्टा" इति श्रुतिरेव भेदनिषेधपरतया विपर्य्यस्ततामवबोधयति। सैव पश्चाद्भेदपरतया प्रमिता सती भेदाभावमनुवदतीति। नेत्याह—न च भेदेति।

किं जीवपराभेदेऽनुपस्थिते तत्र तात्पर्यभ्रमः उपस्थिते वा ? आद्ये विषयं निरूप्य तात्पर्यस्य विषयोपस्थितिं विना प्रतीत्ययोग इत्याह—अनुपस्थिते इति। द्वितीयेऽपि किं प्रत्यक्षादिना तदुपस्थितिः, उताभेदश्रुत्या, लाघवतर्कादिना वा। नाद्यः। निरस्तत्वात्। द्वितीयेऽन्योन्याश्रय इत्यभिप्रेत्य तृतीयं दूषयति—न च तर्कादिनेति। भेदविषयप्रत्यक्षश्रुतिभ्यां विरोधेन लाघवादेरनवतारादिति भावः। किं च तर्कावतारेऽपि तर्कितो जीव-

**त्वात्प्रमाणापेक्षा नेति वाच्यम् । भेदिनां मते क्वचित्प्रमितस्यैवान्यत्र निषेधात् । जीवधर्मिकेश्वराभेदस्यान्यत्राप्रमितत्वात् ।**

अतिप्रसक्तेर्नाद्वैतश्रुत्यनुवादकता--

**नन्वेवम् "असदेवेदमग्र आसीत्" इति असदनुवादोऽपि न स्यात् । प्रपञ्चसत्ताग्राहिप्रत्यक्षविरोधेन तद्भ्रमानुपपत्तेः । अतस्तत्प्रसिद्धिरपि श्रुतिमूलैव स्यादिति चेन्न । असद्वादिनः श्रुतिप्रामाण्यानभ्युपगमात् । उत्पत्तेः पूर्वं कार्यमसत् । अन्यथोत्पत्त्ययोगादित्यादितर्काभासप्रसिद्धस्यासतोऽनुवादसंभवात् । न च प्रत्यक्षविरोधोऽपि तस्येदानीन्तनप्रपञ्चसत्ताविषयतया भिन्नविषयत्वात् । असत्पदस्य शक्तिग्रहाभावेनानुमानात्पूर्वं श्रुतितस्तदवगमासंभवात् । तस्माद् द्रष्टृभेदनिषेधश्रुतिर्न भेदश्रुतिशेषार्था । नापि "नान्योऽतोऽस्ति" इति श्रुतिर्द्रष्टृभेदोपासनार्था । अन्तर्याम्यक्षरब्राह्मणयो "रुपासीत" इत्यादिलिङाद्यश्रवणात् । कल्पकाप्रतीतेश्च । वाक्यस्यानुभूयमानस्वप्रमेयपरत्वे संभवति श्रुतविरुद्धाश्रुतकार्यकल्पनायोगाच्च ।**

---

पराभेदस्ततोऽन्यत्र सन्न वा ? । नाद्यः । तद्भिन्नस्य तदभेदायोगादित्याह---तर्कितस्येति । द्वितीयेऽनुवाद्यस्य कुत्राप्यसत्त्वात् तस्य निषेधसंसर्गोऽप्यसन्निति तन्निष्ठभेदश्रुतिरप्रमाणं स्यादित्यभिप्रेत्याह--अत्रापीति । अभेदतात्पर्यज्ञानस्य वक्ष्यमाणविधया बाधकाभावेन भ्रमत्वमेवासिद्धमित्याह—अभेदेति । नान्योऽतोऽस्तीत्यादिश्रुतेरनुवादकत्वनिराकरणमुपसंहरति---तस्मादिति ।

अभेदश्रुतेरनुवादकत्वमङ्गीकृत्यापि परमते तस्य प्रामाणिकत्वमावश्यकमित्यभिप्रेत्याह--किञ्चेति । भेदवदभेदस्यापि व्यावहारिकप्रमाणसिद्धत्वादनुवाद इत्याशङ्क्य तस्य व्यवहाराननुगततया तदयोग इत्याह--तत्रेति । भेदस्य अप्रामाणिकत्वे परिशेषात्तत्त्वावेदकमानगम्यत्वमेवेत्याह---तत्त्वावेदक इति । ननु विध्यर्थानुवादस्यैव प्रामाणिकविषयत्वनियमो न निषेधार्थानुवादस्येति । इदमपि त्वत्समयविरुद्धमित्याह---न च निषेधेति । अस्तु तर्हीश्वरे प्रमितस्य तदभेदस्य जीवे निषेध इत्याशङ्क्य एवमप्यभेदश्रुत्यर्थस्यान्यत्राप्रमितत्वान्न तस्य निषेध इत्याह--जीवधर्मिकेति ।

अभेदश्रुत्यनुवादकत्वनिरासकयुक्तीनामतिप्रसङ्गपराहतिं शङ्कते--नन्वेवमिति ।

तत्र तावदसत्प्रसिद्धिः श्रुतिमूलैव स्यादित्येतद्दूषयति—न, असद्वादिन इति । केन तर्हि तस्यासत्प्रसिद्धिः, भिन्नतत्प्रसिद्धिं विना वा कथमनुवाद, इत्यत आह—उत्पत्तेरिति । सृष्टिपूर्वकालीनासत्त्वविषयतर्कस्य सृष्ट्यनन्तरकालीनसत्ताग्राहिप्रत्यक्षेण न विरोधः । भिन्नविषयत्वादित्याह— न चेति । असद्वादिनः श्रुतितः प्रथममसत्प्रतीत्यभावे हेत्वन्तरमाह—असत्पदस्येति । अनुमानात्पूर्वमिति । उक्ततर्काभासात्पूर्वमित्यर्थः । नान्योऽतोऽस्तीतिश्रुतेरभेदानुवादकत्वाभावान्न तद्द्वारा भेदश्रुतिशेषत्वमित्युपसंहरति---तस्मादिति ।

**अस्तु तर्हि इदं वाक्यमीश्वरान्तरनिषेधपरमिति चेन्न। तद्भेदस्याप्रसक्तत्वादनिषेध्यत्वात्। नन्वीश्वर ईश्वरप्रतियोगिकभेदवान् आत्मत्वात् जीववदिति भ्रमे भेदं निषेधतीति चेन्न। अनुमानस्य धर्मिग्राहकमानेन बाधितस्यानुदयात्। अथ "एष ते आत्माऽन्तर्य्याम्यमृत" इति प्रसिद्धे धर्मिणि तद्भेदाशङ्कायामियं श्रुतिरिति चेन्न। एष इत्याद्येकवचनेन लाघवानुगृहीतेनैव तद्भेदस्यापि निषिद्धत्वात्। न चान्तर्यामिण एव प्रतिपर्यायं भेदाशङ्कायामियं श्रुतिः। नान्योऽतोऽस्तीत्यतःशब्देनान्तर्यामिमात्रस्यैव भेदावधित्वेनोपस्थितेः। अनन्तर्यामिण एवान्तर्याम्यवधिकभेदाश्रयत्वात्। नाप्यन्तर्यामिवाक्यसामर्थ्यसिद्धाभेदानुवादः। अज्ञातार्थपरत्वे संभवति निरर्थकानुवादकल्पनायोगात्।**

---

ननु अभेदश्रुतेरननुवादकत्वेऽपि नाभेदपरत्वं भेदश्रुत्यविरुद्धोपासनापरत्वे संभवति तद्विरुद्धार्थपरत्वायोगात्, अभेदोपासनायाश्चारोपिताभेदेनाप्युपपत्तेरिति नेत्याह—नापीति। बृहदारण्यकेऽन्तर्यामिब्राह्मणे "नान्योऽतोऽस्ति द्रष्टा" इत्यादि पठ्यते। अक्षरब्राह्मणे तु "नान्यदतोऽस्ति द्रष्टृ" इत्यादि। उभयत्राप्युपास्तिविधेरश्रवणान्न तत्परतेत्यर्थः। कल्प्यतां तर्हि "पूषा प्रपिष्टभाग" इत्यादाविव विधिरित्याशङ्क्य तत्र विधिविषयाविनाभूतद्रव्यदेवतासंबन्धादेस्तत्कल्पकस्य श्रवणात्, इह तु विध्यविनाभूतस्य कस्यचिदश्रवणान्मैवमित्याह—कल्पकेति। न च भेदश्रुतिविरोध एव तत्कल्पकः। तस्या निषिध्यमानभेदानुवादेन तदनुकूलत्वाद् विरोधाभावादिति भावः। उपासनाविधिपरत्वे साधकाभावमुक्त्वा बाधकमप्याह—वाक्यस्येति। श्रुतविरुद्धेति। अभेदश्रुतेर्विधिपरत्वे श्रुताभेदे मानान्तरविरुद्धे तात्पर्याभावेन प्रामाण्यायोगात्, विधेश्चान्यथाऽप्युपपन्नत्वाच्छ्रुताभेदो नास्तीत्येवं तदपलापनिमित्तत्वात्कल्पितविधेः श्रुतविरुद्धत्वमिति द्रष्टव्यम्। अश्रुतकार्यकल्पनायोगादिति। अतिप्रसङ्गादिति भावः।

नान्योऽतोऽस्तीत्यादिश्रुतेर्भेदनिषेधपरत्वेऽपि ईश्वरनानात्वस्यैव ततो निषेधान्न जीवेश्वरभेदनिषेध इति चोदयति—अस्तु तर्हीति।

किमीश्वरानेकत्वस्य प्रत्यक्षतः प्रसक्तिः, उतानुमानात्, श्रुत्या वा? नाद्यः। तस्य प्रत्यक्षायोग्यत्वादित्यभिप्रेत्याह—न तद्भेदस्येति। द्वितीयं शङ्कते—नन्विति। किमत्राऽऽनुमानिक ईश्वरः पक्षः श्रुतिसिद्धो वा। आद्ये धर्मिग्राहकानुमानस्य लाघवादिना तदेकत्वगोचरतया तद्विरोधान्न भेदानुमित्युदय इत्याह—अनुमानस्येति। द्वितीयं शङ्कते—अथेति। अत्रापि धर्मिग्राहकविरोध एव। एष अन्तर्यामीत्याद्येकवचनान्तपदैर्लाघवानुगृहीतैः 'एको देव' इत्यादिवाक्याच्च तदैक्यस्यापि सिद्धत्वादिति दूषयति—न एष इति। तृतीयं दूषयति—न चान्तर्यामिण इति। प्रतिपर्यायमिति। "यः पृथिवीमन्तरो यमयति, योऽपोऽन्तरो यमयति" इत्येवमादिरूपेण प्रतिनियम्यं पृथगुपदेशात् तत्तदन्तर्यामिभेदाशङ्कायामित्यर्थः। नान्योऽतोऽस्तीत्यतःशब्देन प्रकृतपरामर्शकेनान्तर्यामित्वमेव निषिध्यमानभेद-

अनुमानादीश्वरभेदप्रसक्तिनिरास.—

नापि क्षित्यादिकं द्विकर्तृकम् कार्यत्वात् घटवदित्यनुमानात् क्षितिकर्तरीश्वरस्य भेदप्रसक्तौ तन्निषेधतीति वाच्यम् । ईश्वरप्रसिद्धेः पूर्वं द्विकर्तृकत्वव्याप्तिग्रहायोगात् । घटमात्रस्य जीवद्वयाजन्यत्वात् । तत्प्रसिद्धौ तु धर्मिग्राहकमानविरोधात् । कर्तृजन्यत्वेनैव कार्यत्वस्य व्याप्त्या तथाव्याप्त्यभावाच्च ।

न च क्षित्यादिकमनेककर्तृकम् । विचित्रकार्यत्वात् प्रासादादिवदितीश्वरभेदप्रसक्तिः । क्षित्यादेरनेककर्तृकत्वे तत्कर्तुः सर्वज्ञत्वाद्ययोगेनानीश्वरत्वात् । अस्तु क्षितिकर्त्तृभेदनिषेधपरेति चेन्न । अन्तर्यामिण एवातःशब्देन परामर्शात् । क्षित्यादिकर्त्रैक्यस्य सृष्टिवाक्यगतैकवचनेनैव सिद्धत्वाच्च । द्रष्टृश्रुत्याअविशेषेणातःशब्दपरामृष्टान्तर्याम्यतिरिक्ते द्रष्टृमात्रे बुद्धिस्थे तदुपरक्तनञा तन्मात्राभावप्रमितेश्च ।

---

प्रतियोगितावच्छेदकं प्रतीयते । अन्तर्यामिधर्मिकनिषेधे तु नैतदुपपद्यते । भेदधर्मिनिष्ठधर्मस्य तत्प्रतियोगितानवच्छेदकत्वात् । अतोऽनन्तर्यामिण एव द्रष्टुरन्तर्यामिप्रतियोगिकभेदोऽत्र निषिध्यत इत्याह– नान्योऽत इति । ननु त्वदुक्तविधया लाघवाद्यनुगृहीतैकवचनान्तशब्दसामर्थ्यसिद्धमन्तर्यामिण्यभेदं नान्योऽतोऽस्तीति श्रुतिरनुवदतीति । तत्राह्— नाप्यन्तर्य्यामीति ।

पुनरप्यनुमानान्तरेणेश्वरभेदप्रसक्तिमाशङ्क्यापवदति —नापीति ।

ईश्वरपक्षकानुमानवन्नात्र धर्मिग्राहकमानविरोध इति शङ्कितुरभिमानः । अत्रापीश्वरे सिद्धे घटादौ द्विकर्तृकत्वव्याप्तिग्रहः, उतासिद्धे । चरमं दूषयति—ईश्वरेति । कुलालद्वयजन्यस्य कस्य चिद् घटस्य संभवात् तत्र व्याप्तिग्रह इत्याशङ्क्यैककुलालजन्ये व्यभिचारदर्शनान्न व्याप्तिग्रह इत्यभिप्रेत्याह—घटमात्रेति । आद्ये कल्पे एकेश्वरकर्तृकक्षित्यादिपक्षीकारेण द्विकर्तृकत्वसाधने धर्मिग्राहकमानबाध एवेत्याह—तत्प्रसिद्धाविति । नन्वेककर्तृकघटादेः पक्षतुल्यत्वेन तत्र व्यभिचाराभावाज्जीवद्वयकर्तृकघटादौ व्याप्तिग्रहे सति क्षित्यादावीश्वरप्रसिद्धिं विनापि द्विकर्तृकत्वानुमानसिद्धिरिति नेत्याह— कर्तृजन्यत्वेनैवेति । तथेति । गौरवेण द्विकर्तृकत्वस्य कार्यत्वाव्यापकत्वादित्यर्थः ।

ननु धूममात्रस्य वह्निमात्रेण व्याप्तावपि सुरभिधूमस्य चन्दनादिवह्निना व्याप्तिवत् कार्यत्वमात्रस्य कर्तृजन्यत्वमात्रेण व्याप्तावपि विचित्रकार्यत्वस्यानेककर्तृकेनैव व्याप्तिरिति तत्राह—न च क्षित्यादिकमिति । तत्र हेतुमाह—क्षित्यादेरिति । प्रासादादावेकैकांशमेव ह्येकैको जानाति । अतस्तमेव करोति । न तु सर्वस्यैकः परिज्ञाता, कर्ता वा । एवं क्षित्यादावपि तत्तत्कर्तॄणामेकैकांशे एव ज्ञानक्रियासामर्थ्यमिति नैकैकस्य सर्वज्ञत्वादिसिद्धिः । तथा चानीश्वरत्वात्तेषां न तद्भेदानुमानेनेश्वरभेदसिद्धिरिति भावः । नन्वत्रेश्वरभेदो न निषिध्यते । किन्तूक्तानुमानप्राप्तक्षितिकर्तृभेद एवेति शङ्कते—अस्त्विति ।

ननु प्रत्यक्षविरोधात्सामान्यश्रुतिर्द्रष्टृविशेषविषया नियम्यत इति चेन्न। प्रत्यक्षस्य कल्पितभेदविषयत्वेन वास्तवभेदनिषेधश्रुत्यसमानविषयत्वस्यानुपदमेव वक्ष्यमाणत्वात्। किं चास्य परमात्मभेदनिषेधकत्वे नान्योऽतोऽस्ति द्रष्टेत्येतावदेव स्यात्। नान्योऽतोऽस्ति श्रोता मन्ता विज्ञातेति च निरर्थकमसङ्गतं च। परमात्मनो नित्यसर्वज्ञानाश्रयस्य तद्रूपस्य वाऽशरीरिणः श्रोत्रादिजन्यज्ञानाश्रयत्वलक्षणश्रोतृत्वायोगात्।

"तस्मादनवकाशेयं नान्योऽतोऽस्तीत्यभेदधीः।
भ्रान्तिप्रतीतजीवेशभेदमेवावबाधते"॥

ननु भेदोऽपि प्रमाणसिद्धः "सत्य आत्मा, सत्यो जीवः, सत्यं भिदा सत्यं भिदा" इतिश्रुतेरिति चेन्न। प्रसिद्धशाखास्वनवगमात्। अनवकाशभेदापवादश्रुतिविरोधेन तस्याः श्रुतेः स्वार्थपरत्वायोगात्। तच्छेषानुवादत्वात्—सत्य इति प्रतीतस्य भेदस्य तथैवानुवादात्।

---

निषिध्यमानभेदप्रतियोग्युपस्थापकेनातःशब्देन प्रकृतान्तर्यामिण एव परामर्शात् नात्र क्षितिकर्तृतद्भेदोपस्थितिः। अनुपस्थितस्य च निषेधो न प्रत्येतुं शक्य इत्यभिप्रेत्याह—नान्तर्यामिण इति। किं च आत्मैवेदमग्र आसीदेक एवेत्येकशब्दादेव क्षित्यादिकर्त्रैक्यसिद्धेः पुनस्तदभिधानमनर्थकमित्याह—क्षित्यादीति। किं च निषिध्यमानभेदधर्म्युपस्थापकद्रष्टृपदेन सङ्कोचकाभावेन चेतनमात्रोपस्थितत्वात् तन्मात्रस्यान्तर्यामिणो भेदो नञा निषिध्यते, न क्षितिकर्त्तुरेवेत्याह—द्रष्टृश्रुत्येति।

सङ्कोचकाभावोऽसिद्ध इति शङ्कते—नन्विति।

द्रष्टृविशेषविषयेति। क्षितिकर्तृविषयेत्यर्थः। व्यावहारिकभेदविषयप्रत्यक्षस्य वास्तवतदभावश्रुत्या विरोध एव नास्तीत्याह—न प्रत्यक्षस्येति। पराभिमतार्थे वाक्यशेषस्य वैयर्थ्यमसमवेतार्थत्वं चेत्याह—किं चास्येति। असाङ्गत्यमेवाह—परमात्मन इति। तद्रूपस्य वेति स्वमतेनोक्तम्। सिद्धान्ते तु न वैयर्थ्यम्। जीवधर्मिकभेदस्यैव निषेध इति प्रकटनार्थत्वादिति भावः। पराभिमतान्यथासिद्धिनिराकरणफलमाह—श्लोकेन, तस्मादिति।

श्रुत्यैव क्रियासमभिहारेण द्वैतसत्यताभिधानात्कथं तन्निषेध इति चोदयति—नन्विति। अस्य श्रुतित्वमेव विप्रतिपन्नमित्याह—नेति। श्रुतित्वेऽप्यस्य प्रबलश्रुतिविरोधान्न भेदे प्रामाण्यमित्याह—अनवकाशेति। अस्य भेदपरत्वाभावेऽर्थान्तरस्यानवगमादानर्थक्यापात इत्याशङ्क्य भेदानुवादेनाभेदपरत्वमेवैतस्येत्यत आह—तच्छेषेति। निषेधाय भेदानुवादे सत्यपदं किमर्थमित्यत आह—सत्य इतीति। प्रत्यक्षादिनर्थ सत्यत्वेन प्रतीत एव भेदः श्रुत्या निषिध्यते। न तु तद्बाधितश्चन्द्रादिभेदोऽपीति द्योतयितुं निषेध्योपस्थापकवाक्ये सत्यपदप्रयोग इति भावः॥

**त्रिकालाबाध्यभेदो न प्रसिद्ध इति चेन्न। प्रत्यक्षस्य भेदविषयस्य श्रुतिसमानप्रामाण्यवादिनस्तव भेदश्रुतेः प्रत्यक्षासिद्धभेदसत्ताऽविषयत्वात्। अन्यथा तव वास्तवभेदप्रत्यक्षाद्युपन्यासव्याघातात्। श्रुतिद्वयविरोधस्यापरिहार्यत्वाच्च। अभेदश्रुतेर्व्यावहारिकाभेदाविषयत्वस्योक्तत्वात्।**

**मास्तु वाऽस्य वाक्यान्तरशेषत्वम्। एतदेव वाक्यमभेदपरमस्तु। तथा हि। सत्य आत्मेत्यादिश्रुतिर्न केवलमात्मनस्त्रिकालाबाध्यत्वं सत्यत्वमाह। किं तर्हि जीवत्वमपि वास्तवं नेत्याह-असत्यो जीवः। जीवत्वमिति यावत्। विशिष्टनिषेधस्य विशेष्यबाधेन विशेषणोपसंक्रमात् द्विविधे पदविभागे संभवति बह्वभेदश्रुत्यनुरोधेन च वर्णितन्यायेन चासत्य इतिच्छेद एवोचितः। अनेन सजातीयो भेदो निराकृतः।**

---

ननु सत्यं भिदेति त्रिकालाबाध्यभेद उच्यते। न चायं प्रत्यक्षगोचर इति कथं तत्सिद्धानुवादकत्वमिति शङ्कते—त्रिकालेति।

अस्मन्मतवच्छ्रुतेः प्रत्यक्षविलक्षणप्रामाण्यस्य त्वयाऽनङ्गीकाराद्भेदश्रुतेः प्रत्यक्षासिद्धविषयत्वं तव मते ऽनुपपन्नमित्याह—न प्रत्यक्षेति। अविषयत्वादिति च्छेदः। वास्तवभेदस्य श्रुत्येकगम्यत्वं वदतस्तव पूर्वापरवाक्यविरोधश्चेत्याह—अन्यथेति। त्वदीयश्रुतेर्वास्तवभेदपरत्वेऽभेदश्रुत्या कलहो दुर्वारः स्यादित्याह—श्रुतिद्वयेति। नन्वभेदश्रुतेरेव व्यावहारिकाभेदविषयत्वेनाविरोधः किन्न स्यादिति, नेत्याह—अभेदेति। एवं तावत्सत्यं भिदेति वाक्यस्य भेदानुवादद्वारा वाक्यान्तरगम्याभेदपरत्वमित्युक्तम्।

इदानीमभेदश्रुत्यविरोधायेदमेव वाक्यं साक्षादभेदपरतया नेतुं शक्यमित्याह—मास्तु वेति। आकाङ्क्षापूर्वकमुत्तरोत्तरपदान्यवतारयन्नभेदपरत्वमस्य दर्शयति—तथा हीति-आत्मन इति। जीवात्मन इत्यर्थः। असत्य इतिच्छेदमभिप्रेत्योत्तरपदमवतारयति—किं तर्हीति। ननु धर्मिवाचकजीवपदस्य कथं धर्ममात्रपरत्वमित्याशङ्क्य जीवस्वरूपस्यासत्यत्वे सत्य आत्मेत्येतद्विरोधान्मोक्षशास्त्रानर्थक्यप्रसङ्गाच्च जीवत्वस्यैव सत्यत्वनिषेध इत्याह—विशिष्टेति। ननु सत्यो जीव इति पदविभागेन जीवत्वमपि सत्यमित्येवार्थः किन्न स्यादिति तत्राह—द्विविध इति। वर्णितन्यायेनेति। साक्षिविवेकोक्तत्वंपदार्थशोधकन्यायेनेत्यर्थः। सत्यं भिदेत्याद्यवतारयितुं पूर्वभागस्याभिप्रायमाह—अनेनेति। जीवत्वस्यासत्यत्वे जीवस्य ब्रह्मणो भेदकाभावात्तद्भेदाभावसिद्धिरिति भावः।

जडप्रपञ्चस्तद्धर्मिप्रतियोगिकभेदश्चासत्य इति वक्तुमुत्तरसंदर्भ इत्याह—विजातीयेति।

उक्तार्थाभिधाने सामर्थ्यं दर्शयति—पञ्चेति। मूर्तामूर्तब्राह्मणे पृथिव्यादित्रयं सद् वाय्वाकाशौ त्यदिति निर्णीतत्वात्सत्यशब्देन पञ्चभूतात्मकं जगदुच्यत इति भावः। तत्र

भेदनिरासः

**विजातीयभेदं निराकरोति "सत्यं भिदासत्यम्"इति । "पञ्चभूतात्मकं जगत्सत्यं सच्चासच्चाभवत्"इति श्रुतेः "सत्यस्य सत्यम्"इत्यादेश्च, तदेव भिद्यते इति भिदा । असत्यमनिर्वचनीयम् । तस्यैव दार्ढ्याय पुनरुक्तिः । भिदाऽसत्यं भिदेति । काकाक्षिन्यायेनासत्यमित्यस्योभयत्रानुकर्षः । एवं स्मृतिरपि भेदमपवदिति—**

**विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति"इति ॥**

**"आत्मेति ह्युपगच्छन्ति ग्राहयन्ति च" इत्यादिसूत्राण्यपि भेदमपवदन्ति ।**

---

श्रुत्यन्तरसम्वादमाह—सच्चेति । भिदाशब्दः कर्मसाधन इत्याह-तदेवेति । भेद एव भिदेत्युपगमेऽपि सत्यं भिदा चाऽसत्यमित्यर्थो द्रष्टव्यः । उत्तरपदत्रयस्थासत्यपदस्य पूर्वोत्तरभिदापदाभ्यामन्वयेनोक्तासत्यत्वमेवाभ्यस्यते इत्याह—तस्यैवेति । एवं परोक्तस्मृतिसूत्रयोरपि व्यावहारिकभेदविषयत्वमेवेत्यप्रेत्य जीवपरभेदस्याविद्यकत्वे विष्णुपुराणवचनमुदाहरति—एवं स्मृतिरिति । विभेदजनकाज्ञाने तत्त्वज्ञानेन निरवशेषं नाशं प्रापिते सति जीवस्य ब्रह्मणः सकाशाद्भेदमत्यन्तमसन्तं पुनः को वा जनयिष्यति । न कोऽपीति स्मृत्यर्थः ।

ननु विरुद्धो भेदो यस्य स विभेद इत्यभेद उच्यते । तज्जनकेऽज्ञाने नष्टे पुनरात्मब्रह्मणोरसन्तमभेदं कः करिष्यत्यभेदस्यैवाविद्यकत्वं तदर्थः किन्न स्यादिति चेन्न ।

"तद्भावभावमापन्नस्तदाऽसौ परमात्मना ।
भवत्यभेदीभेदश्च तस्याज्ञानकृतो भवेत्" ॥

इत्यव्यवहितपूर्वश्लोके स्पष्टमेव भेदस्याज्ञानकृतत्वस्य स्वाभेदस्य च तत्त्वज्ञानकालीनत्वस्य श्रवणविरोधात् । एवं "क्षेत्रज्ञं चापि मां विद्धि" "अविभक्तं च भूतेषु विभक्तमिव च स्थितम्" "ज्ञानी त्वात्मैव मे मतम्" "बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः" इत्यादिस्मृतिसहस्रविरोधाच्चेति भावः । श्रुतेरभेदपरत्वनिर्णायकसूत्राण्युदाहरति—आत्मेति । जगज्जन्मादिकारणं ब्रह्म किं पराक्त्वेन प्रतिपत्तव्यमुत प्रत्यक्त्वेनेति विशये विरुद्धधर्माध्यासेन प्रत्यक्त्वायोगाद्भेदेनैव प्रतिपत्तव्यमिति पूर्वपक्षं तुशब्देन निरस्याऽऽत्मेत्येव प्रतिपत्तव्यमिति प्रतिज्ञातेऽर्थे हेतुवचनमुपगच्छन्तीत्यादि । उद्दालकादयः श्वेतकेतुप्रभृतीन् तत्त्वमसीत्यादिना प्रत्यगात्मतया ब्रह्म ग्राहयन्ति स्वयमपि त्वं वा अहमस्मीत्यादिना तथाऽनुभवन्ति । यत इति सूत्रार्थः । आदिपदेन अवस्थितेरिति काशकृत्स्नः, अन्यथा चापिदाशकितवादित्वमधीयत एके इत्यादीनि गृह्यन्ते ॥

अभेदश्रुतेः तत्परत्वात् प्राबल्यम्—

एवं तत्परत्वादप्यभेदश्रुतिर्बलवती । अभेदस्य मानान्तरागोचरत्वात् । "तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात् तत्सर्वमभवदि"ति ब्रह्मात्मैक्यज्ञानात्सर्वात्मतालक्षणमोक्षफलश्रवणाच्चाभेदश्रुतिः स्वार्थपरा । न च भेदे तात्पर्यमस्ति ।

ननूक्तं द्वासुपर्णेत्यस्याभेदपरत्वमिति चेन्न । तस्याभेदानुवादतन्निषेधमुखेनासङ्गोदासीनशोधितत्वंपदार्थपरत्वात् । तथा हि । "ब्रह्मैवेदममृतं पुरस्तात्" इति वाक्ये ब्रह्मणः सर्वात्मत्वे निर्दिष्टे तर्हि भोक्त्रभेदाद् ब्रह्मापि भोक्तृ स्यात् । तच्चायुक्तम् । अतो न सर्वात्मत्वमिति शङ्कायामयं मन्त्रः पठ्यते । "यौ द्वौ बिम्बप्रतिबिम्बभूतौ जीवेश्वरावस्मिञ्छरीरे वर्तेते । तयोर्मध्ये अन्यो बुद्धिप्रतिबिम्बभूतस्तदभेदाध्यासात्तद्धर्माभिमानी अत्ति कर्मफलं भुङ्क्ते अन्यः सन् स एवान्यः सन् बुद्धितादात्म्यरहितः स्वरूपभूतचैतन्यात्मना अनश्नन्नभिचाकशीति । भोगरहितः प्रकाशते । औदासीन्यबोधाभ्यां साक्षिमात्रमित्यर्थः ।

अनश्नन्निति च भोक्तृत्वस्य निषेधः । तत्र च जीवस्य स्वरूपेण भोगनिषेधेऽ

---

अभेदश्रुतेर्निरवकाशत्वेन प्राबल्यमुक्त्वा तत्परत्वेनापि तदाह—एवमिति ।

अभेदश्रुतेः स्वार्थपरत्वगमकं लिङ्गमाह—अभेदस्येति । एतच्च लिङ्गद्वयमात्मैवेदमग्र आसीत् सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् । 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म' इत्युपक्रमोपसंहारयोः ब्रह्मेदमग्र आसीदेकमेव आत्मैवेदमग्र आसीदेक एवेत्याद्यभ्यासस्य । तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत् । अथ योऽन्यां देवतामुपास्ते ऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरि"त्यादिस्तुतिनिन्दार्थवादस्य । एष इह प्रविष्ट इत्याद्युपपत्तेश्चोपलक्षणमिति द्रष्टव्यम् । भेदश्रुतेःदौर्बल्ये हेतुमाह—न च भेद इति ।

भेदेऽप्युपक्रमादेरुक्तत्वात्तात्पर्याभावोऽसिद्ध इति शङ्कते—नन्विति । पैंगिरहस्यब्राह्मणेनास्याभेदपरतया व्याख्यातत्वान्न भेदे तात्पर्यमित्यभिप्रेत्याह—न तस्या इति । स्वप्रकरणपर्यालोचनयाप्यभेदपरत्वमेवावगम्यत इत्याह—तथा हीति । वाक्य इति । ब्रह्मैवेदं विश्वमिदं वरिष्ठमित्यनेनेति शेषः । मन्त्रस्य प्रथमार्द्धेन मायोपाधिकभेदोऽनूद्यत इत्यभिप्रेत्याह—यौ द्वाविति । तयोरन्य इति । बुद्ध्युपाधिको भेदोऽनूद्यते इत्याह—तयोर्मध्ये इति । अनश्नन्नन्य इत्यत्रानुपहितात्मनि भेदानुवादेन भोगो निषिध्यते इत्याह—अन्य इति ।

एवं सार्वात्म्यश्रुत्यपेक्षितभोगनिषेधार्थं भेदस्यानूद्यमानत्वात्तदनुवादवैयर्थ्यं चोद्यमप्यपास्तमित्यभिप्रेत्याह—अनश्नन्निति ।

हमनुभवविरोधपरिहाराय स एवान्तःकरणेन कल्पिततादात्म्यात् भुङ्क्त इति न भोक्तृत्वस्य चैतन्यसामानाधिकरण्यधीविरोध इति भेदानुवादपूर्वकं तस्य तद्दर्शयतीति अन्यशेषोऽयमनुवादः। अथ वा जीवानुवादपूर्वकं केवलचैतन्यात्मनो भोक्तृत्वाभावे दर्शिते अभोक्तृजीवस्येश्वरभेदे प्रमाणाभावान्नास्ति जीवेशभेद इति तन्निषेधायैव चायमनुवादः तथा चाहमनुभवसिद्धं जीवस्य न स्वरूपं, किं त्वाविद्यकम्। जीवस्वरूपं तु तद्विलक्षणमशनायादिधर्मरहितं चैतन्यमात्रमिति न ब्रह्मणः सर्वात्मत्वविरोध इति तात्पर्यम्।

एतेन संसारानाधारचैतन्यस्य ब्रह्माभेदे न विवादः। आत्मनो ऽभोक्तृत्वे बन्धमोक्षयोर्वैयधिकरण्यं चेति परास्तम्। ब्रह्मस्वरूपेण नित्यमुक्तस्यात्मन एव बुद्धितादात्म्येन संसारित्वात्। न चात्र निषेधायानुवादे लिङ्गाभावः। तयोरिति तच्छब्दस्योपस्थितपरामर्शित्वात्। तेन यच्छब्दस्याप्यनुमातुं शक्यत्वात्। अनश्नन्निति निषेधाच्च।

एतेनास्य निषेधशेषानुवादत्वे सत्त्वादिवाक्यमप्यसद्वा इदमग्र आसीदिति निषेधशेषानुवादः स्यादिति परास्तम्। ब्रह्मविषयसत्त्वादिवाक्यस्य प्रपंचासत्त्वविषयवाक्यस्य च भिन्नविषयतया शेषशेषिभावायोगात्। सत्यादिवाक्यप्रमेयस्य त्रिविधपरिच्छेदरहितत्रिकालाबाध्यसत्त्वस्यान्यतोऽप्रसिद्धेश्च॥

---

एवमपि तयोरन्यः पिप्पलं स्वाद्वत्तीत्येतद् व्यर्थमित्याशङ्क्याहंकारानात्मवादे चोक्तं तदुपयोगं पुनः स्मारयति—तत्र च जीवस्येति। तस्य वस्तुतो भोगरहितजीवस्योपहितरूपेण भोगं दर्शयतीति भेदानुवादो भोगनिषेधशेष एवेत्यर्थः। भेदनिषेधायैव भेदानुवाद इति पक्षान्तरमाह—अथ वेति। अस्मिन्नपि पक्षे उपक्रान्तब्रह्मसर्वात्मत्वेनापेक्षितमेव तेन समर्थ्यत इत्याह—तथा चेति।

जीवस्याभोक्तृत्वे यद्बाधकमुक्तं तदप्यपास्तमित्याह—एतेनेति। एतच्छब्दार्थमाह—ब्रह्मेति। आरोपितसंसाराश्रयस्यैव वस्तुतोऽशनायाद्यतीतस्वरूपेण ब्रह्माभेदाभिधानात् तस्यैव मुक्त्यन्वयित्वाच्च नोक्तदोष इति भावः। यत्तन्नेत्यादिनिषेधज्ञापकं नास्तीति तत्राह—न चात्रेति। नञोऽपि श्रवणमस्तीत्याह—अनश्नन्निति।

परोक्तप्रतिबन्दीमपि वक्ष्यमाणहेतुना दूषयति—एतेनेति। असद्वा इति वाक्येन पूर्वसृष्टिपूर्वकाले प्रपञ्चसत्ताया निषिध्यमानत्वात्सत्यादिवाक्यस्य च ब्रह्मसत्ताभिधायकस्य तदनुवादकत्वाभावेन तन्निषेधशेषत्वायोगादित्याह—ब्रह्मविषयेति। यदप्युक्तम् सर्वप्रत्ययवेद्यत्वाद् ब्रह्मसत्तायाः सत्यादिवाक्यमनुवादकमिति तदप्ययुक्तमित्याह—सत्यादीति।

असद्वा इदमिति वाक्यस्य सत्तानिषेधकत्वमभ्युपेत्येदमुक्तम्। इदानीं तदेव नेत्याह—असदिति।

असद्वा इदमित्यस्यापि सृष्टिपूर्वं जगदनभिव्यक्तनामरूपमव्याकृतब्रह्मात्मकमित्यर्थपरत्वाच्च। अन्यथा 'ततो वै सदजायत'' इत्युत्तरवाक्यविरोधात्। असतः सदुत्पत्त्यनुपपत्तेः कथमसतः सज्जायेतेति श्रुत्यन्तरे तस्य निषिद्धत्वाच्च। त्वन्मते च तयोर्मध्य एकोऽश्नातीत्युक्ते देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्त्या तदितरेण दर्शननिषेधवदर्थादीश्वरे तन्निषेधसिद्धेस्तदुक्तिवैयर्थ्यात्। अनुवादस्य च सत्यां गतावन्याय्यत्वात्। तद्वैयर्थ्याच्च।

न च प्रत्यक्षादिप्रामाण्यनिश्चयार्थं तदिति वाच्यम्। तस्यापि वेदवत्स्वत एव तत्सिद्धेः। परतः प्रामाण्येऽपि घटादिप्रत्यक्षवद् व्यवहारकाले बाधाभावादेव तत्सिद्धेः। न च प्रत्यक्षस्य वेदबोधितार्थविषयतया तात्त्विकप्रामाण्यनिश्चयानुवाद इति वाच्यम्। भेदस्य स्वार्थपरानेकश्रुतिनिषेधात्। अतत्पराभिः श्रुतिभिरनुवादेऽपि रुद्ररोदनाद्यनुमानस्येव प्रत्यक्षस्यापि तदसंभवात्। तस्मान्न भेदश्रुतिर्भेदपरा।

---

असच्छब्दस्य शून्यपरत्वे दोषमाह—अन्यथेति। विरोधमुपपादयति—असत इति। निःस्वरूपस्य शक्तत्वलक्षणस्य नियतपूर्ववर्तित्वलक्षणस्य वा कारणत्वस्यासंभवादित्यर्थः। एतामेवानुपपत्तिमभिप्रेत्य छान्दोग्यश्रुत्याऽप्यसतः सदुत्पत्तिर्निषिद्धेत्याह—कथमसत इति। स्वमते भेदानुवादस्य भोगनिषेधशेषत्वेन वा आर्थिकाभेदशेषत्वेन वा अर्थवत्त्वमुक्त्वा परमते "तयोरन्य" इतिवाक्यसामर्थ्यादिवेश्वरे ऽनशनसिद्धेरनश्नन्नितिवाक्यवैयर्थ्यमिति सदृष्टान्तमाह—त्वन्मत इति। अर्थसिद्धमेवानूद्यत इत्याशङ्क्याह—अनुवादस्येति। अस्यानुवादस्य निषेधाद्यशेषत्वाद्वैयर्थ्यं चेत्याह—तद्वैयर्थ्याच्चेति।

अशनानशनलक्षणविरुद्धधर्मानुवादो भेदप्रत्यक्षदार्ढ्यायेति न वैयर्थ्यमित्याशङ्क्य स्वतःप्रामाण्यमते स्वत एव दृढत्वान्नान्यापेक्षेति दूषयति—न चेति। परतस्त्वपक्षेऽपि समर्थप्रवृत्तिलिङ्गेनैव भेदप्रत्यक्षदार्ढ्यसिद्धेर्न श्रुत्यपेक्षेत्याह—परत इति। अर्थक्रियादिलिङ्गेन व्यवहारसमर्थार्थविषयकत्वलक्षणप्रामाण्यसिद्धावपि त्रैकालिकबाधरहितार्थकत्वलक्षणप्रामाण्यं प्रत्यक्षादेः श्रुतिसंवादादेव सिद्ध्यतीत्याशङ्क्य तादृशभेदस्य प्रत्यक्षाद्यगोचरत्वाच्छ्रुतौ तद्वाचकपदाभावाच्च, तत्संवादकत्वायोगात्प्रबलश्रुतिविसंवादाच्च मैवमित्याह—न च प्रत्यक्षस्येति। भेदश्रुतेरनुवादकत्वमङ्गीकृत्यापि प्रत्यक्षादिदार्ढ्यहेतुत्वं न संभवतीति सदृष्टान्तमाह—अतत्पराभिरिति। रुद्रो रोदनवान् चेतनत्वात् चैत्रवदित्यनुमानसिद्धरोदनानुवादकत्वेऽपि 'सोऽरोदीत्' इति वाक्यस्य बर्हिषिरजतदाननिषेधपरस्य यथा न तदनुमानप्रामाण्यदार्ढ्यहेतुता। एवं न भोगनिषेधादिपरया भेदप्रत्यक्षादिदार्ढ्यसिद्धिरित्यर्थः। भेदश्रुतेर्भेदे उपक्रमादितात्पर्यलिङ्गाभावान्न भेदपरतेत्युपसंहरति—तस्मादिति।

श्रुतेः भेदतात्पर्ये प्रयोजनाभावः—

**किं चानुवादश्रुतेरनुवाद्यभेदसिद्धये तत्र तात्पर्यं कल्प्यते किं वा तस्य वेदार्थत्वाय? नाद्यः। प्रत्यक्षादित एव तत्सिद्धेः। अतत्परादप्रतीत्युपपत्तेश्च। न द्वितीयः। तस्य वेदार्थत्वाभावात्। न ह्यदृष्टार्थं तस्य वेदार्थत्वं कल्पनीयम्। असत्त्वनिवृत्तेस्तु प्रत्यक्षादिप्रमाणैरेव सिद्धत्वात्।**

**ननु न कल्प्यते तस्य वेदार्थत्वं, किं तु वेदजन्यज्ञानविषयत्वमनुभूयत इति चेन्न। न हि वेदजन्यज्ञानविषयत्वमात्रं वेदार्थत्वम्। रुद्ररोदनादेरपि तत्प्रसङ्गात्। प्रयोजनवद्वेदजन्यज्ञानविषयार्थो वेदार्थ इति चेत् किं प्रयोजनवान्वेदजन्यज्ञानविषयश्च योऽर्थः स वेदार्थः, किं वा प्रयोजनवद्वेदजन्यं यज्ज्ञानं तद्विषय इति? नाद्यः। वायुक्षेपिष्ठत्वादेरपि प्रयोजनवत्त्वाद् वेदजन्यज्ञानविषयत्वाच्च। द्वितीये च न भेदो वेदार्थः। भेदज्ञानाधीनप्रयोजनस्य प्रत्यक्षादिभिरेव सिद्धेः। तद्विषयशाब्दज्ञानस्य निष्प्रयोजनत्वात्।**

---

भेदश्रुतेर्भेदतात्पर्यकत्वकल्पनेऽपि तव न किञ्चित्फलमस्तीति मन्वानो विकल्पयति—किं चेति।

आद्येऽपि किं तत्प्रमितिसिद्धये, उत प्रतीतिमात्रसिद्धये? प्रथमं दूषयति—नाद्य इति। द्वितीये तात्पर्याभावेऽपि रुद्ररोदनादिप्रतीतिवत्तत्प्रतीतिः सिद्ध्यतीत्याह—अतत्परादिति। प्रथमद्वितीयस्त्वसंभवीत्याह—न द्वितीय इति। प्रमाणाभावप्रयुक्तासत्त्वशङ्कानिवृत्तये हि वेदार्थत्वं कल्पनीयम्। न च प्रत्यक्षादिनिश्चिते भेदेऽसत्त्वशङ्काऽस्तीत्याह—न ह्यदृष्टार्थमिति।

ननु वेदजन्यज्ञानविषयत्वमेव वेदार्थत्वम्। तस्य च भेदेऽनुभूयमानत्वान्न प्रयोजनाभावेनाक्षेपो युक्त इति शङ्कते—नन्विति। तत्र यथाश्रुतमतिप्रसङ्गेन निराकरोति—न, न हीति। अतिप्रसङ्गपरिहाराय विशेषणान्तरं शङ्कते—प्रयोजनेति। प्रयोजनवत्त्वं किं विषयस्य विशेषणमुत ज्ञानस्येति विकल्पयति—किमिति। आद्यमर्थवादार्थेऽतिव्याप्त्या दूषयति—नाद्य इति। प्रयोजनवत्त्वादिति। वायोः क्षिप्रगामित्वस्य वृष्ट्यादिद्वाराऽस्मत्प्रयोजनहेतुत्वादित्यर्थः। द्वितीये निष्पादितक्रिये कर्म्मणीत्यादिन्यायेन वेदजन्यज्ञानस्य प्रयोजनवत्त्वमेव नेत्याह—द्वितीय इति।

अनुवादस्यान्यपरत्वाभावे "य एवं विद्वान् पौर्णमासीं यजते" इत्यादिवाक्यमपि त्रिकविधायकं स्यादित्याह—अनुवादस्येति।

**अनुवादस्यापि तत्र तात्पर्ये विद्वद्वाक्यमपि विधायकं स्यात् । अनधिगतार्थबोधकस्यैव प्रमाणत्वाच्च । तात्पर्यद्वयकल्पनागौरवाच्च । ततो नानुवादः स्वार्थपरः ।**

**एतेन प्रत्यक्षस्याप्रामाण्येन वेदस्यानुवादकताप्रामाण्ये च तेनैव भेदसिद्धिः । अनुवाद्यस्या सत्त्वे च नानुवाद्यविधेयसंसर्गसिद्धिरिति परास्तम् । असदनुवादस्यापि दर्शनात् । व्यावहारिकप्रमाणसिद्धत्वमात्रेणानुवादोपपत्तेश्च । तत्त्वावेदकप्रमाणसिद्धस्यैवानुवाद इत्यत्र निदर्शनाभावात् । अनुवाद्यस्य चासत्त्वं यदि तुच्छत्वम् ? तदसत् । प्रपञ्चस्य तुच्छत्वानभ्युपगमात् । यदि सद्विलक्षणत्वं ?, तर्हि तद् भूषणमेव विधेयसंसर्गस्यापि तथात्वात् । अन्यथा प्रकृते निषेधाऽनन्वयप्रङ्गात् । तस्माद् द्वासुपर्णेति वाक्यं शुद्धजीवस्वरूपपरं न भेदपरमिति ।।**

---

शब्दस्य जिज्ञासितार्थबोधकत्वेन प्रामाण्यं वक्तव्यम् । अन्यथा तद्वैयर्थ्यात् । जिज्ञासा च न निर्ज्ञात इति नानुवादस्य प्रामाण्यमित्याह—अनधिगतेति । किं च तव मते जीवेशभेदे जीवभोगे ईश्वराभोगे चानेकतात्पर्यकल्पनागौरवं वाक्यभेदश्चेत्यभिप्रेत्याह—तात्पर्येति । तत इत्युपसंहारः ।

एवं परमतं दूषयित्वा स्वमते उक्तदोषं परिहरति—एतेनेति । तत्र भेदप्रत्यक्षस्याप्रामाण्ये वेदस्य नानुवादकतेत्येतत्तावद् दूषयति—असदनुवादस्येति । सद्विलक्षणस्य भ्रान्तिप्रतिपन्नशुक्तिरजतादेरपि यद्रजतमित्याद्यनुवाददर्शनादित्यर्थः । किं च वेदस्यानुवादकत्वानुपपत्त्या प्रत्यक्षस्य प्रामाण्यमात्रं साध्यते उत तत्त्वावेदकप्रामाण्यम् ? । आद्यमिष्टमित्यप्रेत्याह—व्यावहारिकेति । द्वितीयं दूषयति—तत्त्वावेदकेति । अनुवाद्यस्यासत्त्वे चेत्यत्रासत्त्वपदेन किं तुच्छत्वं विवक्षितमुत सद्विलक्षणत्वम् ? । आद्यमनङ्गीकारपराहतमित्याह—अनुवाद्यस्येति । द्वितीये तत्संसर्गस्य पारमार्थिकस्यासंभवेऽपि तत्समानस्वभावस्य संभवात्तस्यैवाद्वैतानुकूलस्य द्वैतव्यवहारसमर्थस्य तद्वाक्यार्थत्वं युक्तमित्यभिप्रेत्याह—यदीति । किं चात्र निषेधायैवानुवादः । निषेधश्च सत्यस्यानुपपन्न इति तस्मिन्मिथ्यात्वमावश्यकमित्याह—अन्यथेति । स्वमतस्य निरवद्यतामुपसंहरति—तस्मादिति ।

समाने वृक्षे पुरुषो निमग्नो
ऽनीशया शोचति मुह्यमानः ।।
जुष्टं यदा पश्यत्यन्यमीश—
मस्य महिमानमिति वीतशोकः ।।

इत्युत्तरमन्त्रस्यास्मन्मत एवोक्तार्थोपपादकतया पूर्वमन्त्रेणैकवाक्यत्वं न परमत इत्यभिप्रेत्य तद्व्यावर्त्याशङ्कामाह—तदनन्तरमिति ।

**तदनन्तरं च कथं भोक्तुर्जीवस्याशनादिराहित्यं स्वरूपम् । आगन्तुकस्य स्वरूपत्वायोगात् । न च तत्स्वाभाविकं जीवस्येदानीं भोगविशिष्टत्वात् । न हि दण्डविशिष्टस्तदानीमेव तदभावविशिष्टो भवतीत्याशङ्क्य भोगस्य कल्पितत्वादधिष्ठानस्य कालत्रयेऽप्यारोप्यशून्यत्वाद् दण्डिवैषम्यम् । न हि सर्पबुद्धिगृहीता रज्जुस्तदानीमपि सर्परहिता न भवतीत्यभिप्रेत्याह-समाने वृक्षे पुरुषो निमग्न इति । समाने बिम्बप्रतिबिम्बरूपजीवेश्वराश्रये शरीरे पुरुषो बुद्ध्युपहितो निमग्नः कर्तृत्वाद्यभिमानवान् । स्वरूपेणाप्रकाशान्निमग्नः । अत एव तत्कारणमोहावृतोऽनीशया स्वस्यानन्दरूपेश्वरभावाप्रतीत्या शोचति । विषयागमापायनिमित्तं दुःखमनुभवति ।**

अनीशा पदार्थ निरूपणम्—

**न चानीशशा ईश्वरत्वाभावस्तृतीयया शोकहेतुत्वेन निर्दिष्टो, न तु तदप्रतिपत्तिरिति वाच्यम् । तथा सति तव मते तस्य मुक्तावपि सत्त्वेन तदापि तन्निमित्तशोकप्रसङ्गादस्मन्मत इदानीमपि तदभावादज्ञानमेवानीशा । अत एव जीवे-**

---

अनश्नन्नित्युक्तमशनादिराहित्यं किं जीवस्यागन्तुकमुत स्वभाविकम् ?। आद्येऽपि तत्तस्य स्वरूपं धर्मो वा ? नाद्यः। आगन्तुकस्य नित्यस्वरूपत्वायोगात्। न द्वितीयः। अनशनस्यागन्तुकधर्मत्वेऽशनस्य स्वाभाविकत्वप्रसङ्गात्। द्वितीये तत्किं स्वरूपं धर्मो वा ?। उभयथापि तस्याशनायादिमत्त्वानुभवविरोध इति शङ्कार्थः। अनशनस्य स्वाभाविकत्वमेवाङ्गीकृत्योक्तशङ्कापरिहारायोत्तरमन्त्र इत्यभिप्रेत्य परिहारप्रकारमाह—भोगस्येति। आरोपितविपरीताकारः स्वभाविक एवेत्यत्रोदाहरणमाह—नहीति। मन्त्रं व्याचष्टे—समान इति। जीवेश्वराश्रय इति। तदभिव्यक्तिस्थानत्वात्तदाश्रय इत्यर्थः। निमग्नः सर्वगतस्य वस्तुतो निमज्जनासंभवादित्यभिप्रेत्य निमग्नसादृश्यमाह—स्वरूपेणेति। तत्र हेतुमाह—कर्तृत्वेति। अत एवेत्यस्य शोचतीत्यनेनान्वयः। निमग्नस्यापि ब्रह्मरूपत्वात्कथं शोक इत्याशङ्क्य विस्मृतकण्ठचामीकरवत्सतोऽपि ब्रह्मभावस्याननुभवाच्छोक इत्याह—अनीशयेति। तस्य स्वप्रकाशत्वादननुभवो वा कथमित्याशङ्क्याविद्यायाऽऽवृतत्वादित्याह—तत्कारणेति। कर्तृत्वादिस्तच्छब्दार्थः।

नन्वनीशयेत्यत्रेश्वरत्वाभाव एव शोकहेतुतया प्रतीयते। स च जीवेश्वराभेदमतेऽनुपपन्न इत्याशङ्क्य भेदिमतेऽपि तस्य शोकहेतुत्वमनुपपन्नमतिप्रसङ्गात्। तस्मादभेदश्रुत्यनुरोधाय तदप्रतीतिरेवानीशेत्याह—न चानीशेति।

यत एवाज्ञानमेव शोकहेतुरत एव तद्विरोधिज्ञानाच्छोकनिवृत्तिरुत्तरार्द्धे श्रूयत इत्याह—अत एवेति। जुष्टमितिपदं त्वं पदार्थविषयतया व्याख्याय तत्पदार्थविषयतयाऽपि

श्वराभेदसाक्षात्कारात्तन्निवृतिमाह-जुष्टं कार्यकारणसंघातैः सेवितम् अविवेकिभिस्तदात्मतया गृहीतम् । यदाऽधिकारी अन्यं विवेचनात् शरीरत्रयात्पृथग्भूतं शरीरत्रयसाक्षितयाऽवगतं शोधितत्वंपदार्थ ईशमीशं सन्तं पश्यति । ईश्वर इति स्वात्मानं पश्यति । साक्षात्करोतीति यावत् । तदाऽस्यात्मत्वेनावगतस्य महिमानमपरिच्छिन्नानन्दात्मतामेति इति नान्तरीयकतयाऽनर्थनिवृत्तिं च दर्शयति वीतशोक इति ।

अथवा जुष्टं विवेकवैराग्यादिभिः प्रक्षालिताशयमलैः सनकादिभिर्नैरन्तर्येणात्मत्वेन सेव्यमानमन्यं कार्यकरणसंघाताद्विलक्षणमीशं यदा पश्यतीत्यर्थः । न तु पदातीतादन्यं पश्यति । तदा तस्य महिमानमाप्नोतीत्यर्थः तथा सति जीवेश्वरतदुभयभेदानां ज्ञानं मुक्तौ हेतुः स्यात् । तथा च "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिज्ञानज्ञेयनियमश्रुतिविरोधः स्यात् ।

किं च भेदे 'तस्य महिमानम्' इत्येतद्विरुद्धम् । अन्यस्यानदीयमहिमप्राप्त्ययोगात् । तत्सदृशमहिमानमितिकल्पनायां लक्षणाप्रसङ्गात् । अत एव न स्तुतिमात्रपरतयाऽपि व्याख्येयम् । सम्भवति मुख्यार्थेऽत्यन्तपरोक्षार्थताया अन्याय्यत्वात् ।

---

व्याकरोति—अथ वेति । एवं स्वमतेन मन्त्रार्थमभिधाय पराभिमतमर्थं दूषयति—नत्विति । जीवप्रतियोगिकभेदवानीश्वर इति ज्ञानस्य मुक्तिहेतुत्वे तस्य भेदतद्धर्मिप्रतियोगितत्त्वावच्छेदकरूपानेकपदार्थविषयत्वं वक्तव्यम् । तथा च "तमेव विदित्वाऽतिमृत्युमेति" "एकधैवानुद्रष्टव्यम्" "तमेवैकं जानथआत्मानम्" "तमेव धीरो विज्ञाय" इत्यादिश्रुतिष्वात्ममात्रज्ञानस्यैव मुक्तिहेतुत्वावधारणधीविरोध इत्याह—तथा सतीति ।

किं च पराभिमतार्थे मन्त्रशेषस्येश्वरस्य महिमानमेतीति यथाश्रुत एवार्थः, उत तत्समानमहिमानमिति ? । आद्यस्त्वसम्भवीत्याह—किं चेति ।

द्वितीयं दूषयति । तत्सदृशेति । ननु नेदं फलवचनं, किं तु भेदज्ञानस्तुतिपरमित्याशङ्क्य स्तुतेरपि लक्ष्यत्वादुक्तदोषतादवस्थ्यमित्याह—अत एवेति । लक्षणायाः क्वचित् क्वचिन्मतद्वयेऽप्यङ्गीकारान्न दोषतेत्याशङ्क्याह—सम्भवतीति । "स यो ह वै तत्परमं ब्रह्म वेद. ब्रह्मैव भवति" इति तृतीयमुण्डकसमाप्तौ ब्रह्मभावस्यैव ज्ञानफलत्वेनोपसंहृतत्वादस्य महिमानमिति न स्तुतिमात्रमिण्याह—ब्रह्म वेदेति ।

यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यनुपैति ॥

इति तृतीयमन्त्रमप्याकाङ्क्षितसमर्पणेनोक्तार्थपरतया व्याकरोति—अत्र चेति । पश्यः—द्रष्टा अधिकारी, कर्तारं पुरुषं-जीवं, रुक्मवर्ण-स्वप्रकाशं, ब्रह्मयोनिं-वेदयोनिम्,

**"ब्रह्म वेद ब्रह्मैव भवति" इतिवाक्यशेषविरोधात । अत्र च ज्ञानाच्छोकनिवृत्तिर्न सुप्त्यादाविव सावशेषा । किं तु तत्कारणपुण्यपापयोस्तत्कारणाज्ञानस्य च निवृत्तत्वादात्यन्तिकी, इत्याह "यदा पश्यः पश्यते रुक्मवर्णम्" इति । निरञ्जन इत्यविद्याराहित्योक्तिः । परमं साम्यमित्यैक्यमाह । अत्यन्तसादृश्यस्य एकत्वे एव पर्यवसानात् । भेदगर्भसादृश्यस्य "न तत्समश्चाभ्यधिकश्च दृश्यते, न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य" इत्यादिश्रुतिस्मृतिभिर्निषिद्धत्वात् ।**

परमसाम्यपदार्थविचारः—

**"तथा विद्वान् नामरूपाद्विमुक्तः" इत्यादिना मुक्तौ नामरूपराहित्यप्रतिपादनात्, सादृश्यायोगाच्च, साम्यं समत्वं सर्वात्मत्वमिति वा । "तस्मात्तत्सर्वमभवत् ।**

---

ईशं सन्तं, यदा पश्यतीति योजना । नन्वत्राज्ञाननिवृत्तिर्न श्रूयते इत्यत्राह—निरञ्जन इति । परमं साम्यमुपैतीतीश्वरसादृश्यमत्र ज्ञानफलतया श्रूयते । तच्च मुक्तावपि भेदमन्तरेणानुपपन्नमित्यत आह—परममिति । वैलक्षण्यस्याल्पत्वापेक्षया साम्ये परमत्वनिर्देशो न त्वैक्यापेक्षयेत्याशङ्क्याह—भेदगर्भेति ।

किं चात्रैव तृतीयमुण्डके—

यथा नद्यः स्यन्दमानाः समुद्रे
ऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति नित्यम् ॥

इति विदुषो नामरूपविलयश्रवणात् त्वदभिमतसारूप्यायोग इत्याह—तथा विद्वानिति ।

नन्वत्र प्राकृतनामरूपयोरेव विलयः श्रूयते, न त्वप्राकृतयोरिति चेन्न । सङ्कोचे कारणाभावात् । समुद्रप्रविष्टनदीदृष्टान्तेन कृत्स्ननामरूपविलयस्यैव प्रतीतेः । अन्यथा दृष्टान्तवैषम्यापत्तेः । नामरूपमात्रस्य प्रकृतिकार्यत्वेनाप्राकृतयोस्तयोरभावाच्च । अन्यथा विदुषः प्राकृतशोकविलय एव वीतशोक इति श्रुत्यर्थ इति अप्राकृतनित्यशोकस्तस्य स्यात् । न च तत्र मानाभावः । "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति सशरीरस्य प्रियाप्रियसंसर्गनियमोक्तेः । त्वदभिमतमुक्तानाञ्च सशरीरत्वादिति भावः । साम्यशब्दस्य सादृश्यवाचकत्वेऽपि परममितिविशेषणादभेदे पर्यवसानमित्युक्तम् । संप्रति तस्यार्थान्तरमाह-साम्यमिति । श्रुत्यन्तरे सर्वात्मभावस्यैव ज्ञानफलत्वेनोक्तत्वादत्रापि साम्यपदेन तदेवोच्यते इत्याह—तस्मादिति । अहं ब्रह्मास्मीति ज्ञानादित्यर्थः ।

**अत्र ह्येते सर्व एकीभवन्ति । आत्मा ह्येषां स भवति" इत्यादिश्रुतिभिर्विदुषः सर्वात्मत्वप्रतिपादनात् । एतेन द्वासुपर्णेत्यादेर्भेद उपक्रमादिभिर्निराकृतः । प्रत्यक्षादिसिद्धस्य भेदस्य श्रुत्योपक्रमादिभिरप्रतिपाद्यत्वाच्च । प्रत्यक्षाद्यसिद्धभेदाभावाच्च ।।**

पृथगात्मानमिति श्रुत्यर्थस्याद्वैतानुकूलता—

**यत्तु "पृथगात्मानं प्रेरितारं च मत्वा" इत्यादिवाक्याद्भेदज्ञानान्मुक्तिरिति । तदसत् । आत्मानं कार्यकारणसंघातात् पृथग्विलक्षणं मत्वा न पदार्थज्ञानमात्रान्मुक्तिरिति वाक्यार्थमीश्वरतादात्म्यमप्याह--प्रेरितारं च मत्वेति । पृथक्तयाऽवगतमेवात्मानं प्रेरितारं मत्वा ईश्वर इति ज्ञात्वेत्यर्थः । तेनामृतत्वं प्राप्नोतीत्यभेदज्ञानादेव । तत्रापि मोक्षस्य दर्शितावात् । प्रकारान्तरेण तदर्थकथने कथितनियमश्रुतिविरोधात् । "उदरमन्तरं कुरुते, अथ तस्य भयं भवति । मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति । नात्र काचन भिदास्ति । नैवात्र काचन भिदास्त्यत्र भिदा-**

---

आत्मा ह्येषामिति । स विद्वान् एषां देवानामात्मा भवतीत्यर्थः । आदिपदेन 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं, सूर्यश्च'इत्यादिश्रुतिः संगृहीता । एवमाथर्वणश्रुतेरद्वितीय एवोपक्रमादेरुपपादनात् परोक्तभेदविषयोपक्रमादिरयुक्त इत्याह—एतेनेति । मानान्तरानधिगतस्यैव सर्वत्रोपक्रमादिभिः प्रतिपाद्यत्वाद्भेदस्य चातथात्वान्न श्रुतिगम्यतेत्याह—प्रत्यक्षादीति । अस्तु तर्ह्यपूर्वभेद एव श्रुतिप्रतिपाद्य इत्याशङ्क्याह— प्रत्यक्षेति ।

"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"इति श्रुतौ भेदज्ञानादेवामृतत्वश्रवणाद् अन्यत्रापि तथेत्युक्तं चोद्यमनुवदति—यत्त्विति ।

आत्मानं प्रेरितारं च पृथङ् मत्वाऽमृतत्वमेतीति नैतच्छ्रुत्यर्थः । पामराणामपि तादृशमननसत्त्वेनामृतत्वप्राप्तिप्रसङ्गात् । किं तु शरीराद्यभेदेन गृहीतमात्मानं ततः पृथङ् मत्वा पृथक्कृतमात्मानं प्रेरितारं च मत्वा ईश्वरत्वेन च निश्चित्यामृतत्वमेतीत्येवमर्थपरेयं श्रुतिरित्याह—तदसदिति । आत्मानं प्रेरितारं च पृथङ् मत्वेत्यर्थकथने "तमेव विदित्वा"इत्यादिश्रुतिविरोधश्चेत्याह—प्रकारान्तरेणेति । भेदज्ञानस्यानर्थहेतुत्वाच्छ्रुतिबाधितविषयकत्वेन भ्रान्तित्वाच्च न मोक्षहेतुतेत्याह—उदरमिति । उद्-अपि । अरम्-अल्पम् । अन्तरं-भेदम् । अल्पमपि भेदं यः साधयतीत्यर्थः । नानेवेति इवशब्देन नानात्वस्य मिथ्यात्वमुच्यते । तथा च मिथ्याभूतं नानात्वं पुरुषार्थतया यः पश्यति, स मृत्योरनन्तरमपि पुनर्मृत्युमाप्नोतीत्यर्थः—तत्स्वरूपेति । 'नात्र काचन भिदा'इत्यादिना भेदस्वरूपस्यापि निषिद्धत्वादित्यर्थः । उक्तश्रुतिमूलकस्मृतितोऽपि द्वैतबुद्धेर्भयहेतुत्वमा-

**मेव मन्यमानः शतधा सहस्रधा भिन्नो, मृत्योः समृत्युमाप्नोति" इति श्रुत्या भेदज्ञानस्यानर्थहेतुत्वप्रतिपत्तेः। तत्स्वरूपनिषेधाच्च। 'भयं द्वितीयाभिनिवेशतः स्यात्' इति स्मृतेश्च। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः। यन्मदन्यन्नास्ति, कस्मान्नु बिभेमि। तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" इत्यभेदज्ञानात् भयनिवृत्तिश्श्रेयःप्राप्त्योर्दर्शितत्वाच्च। तस्मान्न भेदज्ञानान्मोक्षः ॥**

मुक्तौ भेदसद्भावनिरासः—

**यत्तु मुक्तावपि सत्त्वाद्भेदः परमार्थ इति तदसत्। विदुषः सर्वात्मत्वप्रतिपादकोदाहृतश्रुतिविरोधात्। "मम साधर्म्यमागता" इति वैधर्म्यनिषेधद्वारा ऽभेदपरम्। "ज्ञानी त्वात्मैव मे मतम्। क्षेत्रज्ञं चापि मां विद्धि" इत्यादिना भगवतैवाभेदस्योक्तत्वात्।**

---

स्थेयमित्याह—भयंद्वितीयेति। अभेदज्ञानस्य त्वनर्थनिवर्त्तकत्वपुरुषार्थहेतुत्वश्रवणात् स एव श्रुत्यर्थ इत्याह—तत्र को मोह इति। 'सहायमीक्षाञ्चक्रे' इतिपूर्ववाक्योक्तहिरण्यगर्भेक्षणस्वरूपमाह—यन्मदन्यन्नास्तीति। मत्तोऽन्यन्नास्ति यतः, अतः कस्माद् हेतोरहं बिभेमीत्यर्थः। यस्माद्देवादयो ब्रह्मात्मतया ज्ञात्वा तदेवाभवन्। तत्-तस्मात्। एतर्हि इदानीमपि। अहं ब्रह्मास्मीति यो वेद स सर्वात्मकं ब्रह्मैव भवतीत्यर्थः। पराभिमतश्रुत्यर्थनिराकरणमुपसंहरति-तस्मादिति।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।

इतिस्मृतौ, '-सोऽश्नुते सर्वान्कामान्''इत्यादिश्रुतौ च मोक्षेऽपि भेदश्रवणात्स परमार्थ इत्युक्तं चोद्यमनुवदति—यत्त्विति।

तत्र स्मृतिवाक्यं तावदभेदपरानेकश्रुतिविरोधात् तदा नामरूपविलयश्रुतेः सादृश्यासंभवाच्च तदानुगुण्येनैव व्याख्येयमित्याह—तदसदित्यादिना। भेदपरत्वाभिधानं पूर्वापरवचनविरुद्धं चेत्याह—ज्ञानीति। "सर्वभूतेषु येनैकं भावमव्ययमीक्षते" इत्यादिकमादिपदार्थः। भगवद्वचनमपि—

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥
अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्।
एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥

इत्यादिपूर्वापरवचनसहस्रविरोधादुदाहृतानेकश्रुतिविरोधत्च्चावान्तरमुक्तिपरम्।

कथं तर्हि तत्र मायानिषेध इत्याशङ्क्य तदभिप्रायमाह— यत्त्वित्यादिना।

यत्तु न तत्रमायेत्यादिवचनम्। तदपि रजस्तमसोः कार्यमात्रनिषेधपरम्। भेदावस्थायां स्वरूपेण मायानिषेधानुपपत्तेः। वैकुण्ठवासिनां मायावशित्वाद्वा मायानिषेधवचनम्। यदपि 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा' इति वचनमुदाहृतम्। तत्र न तावत्सहश्रुतिर्ब्रह्मणा सहत्वं दर्शयन्ती भेदं दर्शयति। ब्रह्मणः सहत्वायोगात्॥

सहपदार्थं विचारः—

सहत्वं हि ब्रह्मणः–पुत्रेण सहागतः पितेत्यत्रेव प्रधानक्रियानुकूलतज्जातीयक्रियाकर्तृत्वेन, किं वा पत्न्या इवानुज्ञामात्रेण?। नाद्यः। ब्रह्मणोऽपि भोगप्रसङ्गात्। न द्वितीयः। ईश्वरस्य प्राणिमात्रभोगे अनुज्ञादातृत्वान्मुक्तौ तस्य विशिष्यनिर्देशवैयर्थ्यात्। ब्रह्मणः सहत्वे भृत्येन सह भुङ्क्ते राजेत्यत्र भृत्यस्येवाप्राधान्यमावश्यकमिति तस्य सर्वशेषित्वमपि भज्येत। न च गर्भदासन्यायेन शेषस्यापि प्राधान्यम्। स्वामिनि भाविभृत्योपकारवत्, ईश्वरे ह्यकामे मुक्तकृतोपकाराभावात्। तस्माद् ब्रह्मणः सहत्वायोगान्न सहयोगे तृतीया, नापि सर्वान् कामानिति सर्वशब्दबहुवचनाभ्यां मुक्तावनात्मभेदसिद्धिः। तयोरल्पत्वनिवृत्तिमात्रपरत्वात्।

---

रजस्तमसोरिति। सत्त्वकार्यज्ञानसुखादेस्तदा सत्त्वेन तन्निषेधायोगादिति भावः। मायाशब्देन तत्कार्यलक्षणायां हेतुमाह—भेदेति। 'मायां तु प्रकृतिं विद्यात्'इति मायायाः सर्वकार्यप्रकृतित्वश्रवणान्मायाऽभावे वैकुण्ठवासिनां शरीराद्यभावापत्तेरिति भावः। वैकुण्ठवासिनामिच्छामनुसरति मायेत्येतावता वा न तत्र माया, इत्युक्तमित्याह—वैकुण्ठेति। परोदाहृतश्रुतिवाक्यमपि स्वमतानुरोधेन व्याख्यातुमनुवदति-यदपीति। किमत्र सह ब्रह्मणेति सहश्रुतिबलाज्जीवब्रह्मभेदः प्रतीयते इत्युच्यते, किं वा सर्वान्कामानिति सर्वशब्दबहुवचनबलाद्विजातीयभेद इति?। नाद्य इत्याह—न तावदिति।

अयोगमेवोपपादयितुं कामभोगे ब्रह्मणः केन प्रकारेण सहत्वमिति पृच्छति—सहत्वं हीति।

पुत्रे पितृगमनानुकूलगमनवत् ब्रह्मण्यपि विद्वद्भोगानुकूलभोगः स्यात्। तथा च तस्य नित्यतृप्तत्वादिविरोध इत्यभिप्रेत्याह—नाद्य इति। द्वितीये किमीश्वरस्य मुक्तभोग एवानुज्ञातृत्वमुत सर्वप्राणिभोगे? नाद्यः। सर्वकर्मफलदातुरीश्वरस्य संसारिभोगेऽप्यनुज्ञातृत्वादित्याह—ईश्वरस्येति। द्वितीये दोषमाह—मुक्ताविति। पक्षद्वयेऽपि ब्रह्मणः पुत्रवत्पत्नीवच्च गुणत्वमपि स्यात्। "सहयुक्तेऽप्रधाने"इति स्मरणादित्याह—ब्रह्मण इति। ननु यथा स्वामिनो दासीबालकपोषकत्वेऽपि न तच्छेषत्वमेवमीश्वरस्य मुक्तभोगानुकूलस्यापि न तच्छेषत्वमित्याशङ्क्य वैषम्यमाह—न चेत्यादिना। गुणत्वादिप्रसङ्गेन ब्रह्मणः सहत्वायोगान्न सहयोगे तृतीयेत्याह—तस्मादिति। सर्वशब्दबहुवचनयोः मुक्तौ भोगतारतम्याभावमात्रपरत्वान्न विजातीयभेदसिद्धिरित्यभिप्रेत्याह—तयोरिति।

यथाश्रुतपरित्यागे हेतुमाह— तव मते इति।

तव मतेऽपि सर्वशब्दस्यासंकुचद्वृत्तेरयोगात् । जगत्सर्जन-लक्ष्मीविहरणादिकामानां जीवेषु बाधितत्वात् । पृथग्जनानां तत्र तत्र क्रमेण सर्वैः काम्यैरमरवधूपरिरम्भणादिभिरभिव्यङ्ग्यं यत्सुखं ब्रह्मात्मकं तदभिप्रायेण वा सर्वान्कामानिति । तृतीया चेत्थम्भावे । ब्रह्मरूपेण मुक्तः सह युगपत् परमानन्दमनुभवतीत्यर्थः । तथा च स्मृतिः—

सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः ।
विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ।।

इति । सर्वेष्वित्यादिभूमप्रकरणस्थं वाक्यं निर्गुणविद्यास्तुतिपरमिति न भेदे प्रमाणम् । सर्वज्ञतापरं वा । गत्यर्थस्य ज्ञानार्थत्वात् । "अथ यदल्पं भिन्नं तन्मर्त्यम्" इति तद्भेदस्य तत्रैव निन्दितत्वात् । तस्मान्न श्रुतिर्भेदे प्रमाणम् । नापि प्रत्यक्षम् । तद्धि भेदसत्तामात्रं विषयीकरोति । सा चाधिष्ठानात्मैव न ततोऽतिरिच्यते । भेदसत्ताया आत्मस्वरूपातिरेके प्रत्यक्षस्योदासीनत्वात् । अन्यस्य च तत्र प्रमाणस्याभावात् ।।

---

असम्भवमेवाह-जगत्सर्जनेति । सर्वशब्दस्याशेषवाचकत्वादशेषसुखात्मकब्रह्माभिव्यक्तिपरमेवेदं फलवचनमित्याह—पृथग्जनानामिति । एवं पराभिमतमर्थं दूषयित्वा स्वाभिमतमर्थमाह—तृतीया चेति । उक्तार्थे एतच्छ्रुतिमूलकब्रह्मगीतावचनसंमतिमाह—तथा चेति । यदप्युक्तं सर्वेषु लोकेषु कामचारो भवतीति भूमविद्याफलत्वेन भेदः श्रूयते' इति, तदन्यथयति-सर्वेष्विति । विषयसप्तमीं चरतेर्गत्यर्थत्वं चाङ्गीकृत्यार्थान्तरमाह—सर्वज्ञतेति । स्तुतिपरत्वमेव न भेदपरत्वमित्यत्र हेतुमाह—अथ यदल्पमिति । मानाप्रसिद्धित इतिप्रतिज्ञाविषयः श्रुतिप्रामाण्याभावस्तावत्सिद्ध इत्याह—तस्मादिति । इतरप्रमाणेष्वपि प्रत्यक्षं तावद् भेदे न मानमित्याह—नापीति । सन् भेद इति प्रत्यक्षे भेदस्य सत्त्वमनुभूयते । तथा च कथं तत् तत्र न मानमित्याशङ्क्याह—तद्धीति । यथा मृद्घट इति प्रत्यक्षे मृदिति घटोपादानमेवानुभूयते, एवं सन् भेद इत्यत्र सद्बुद्धेरधिष्ठानविषयत्वान्न भेदस्य सत्त्वमित्यर्थः ।

ननु आत्मातिरिक्तसत्ताजातिरेव सद्बुद्धेर्विषयो न त्वात्मेत्याशङ्क्य सत्ताया आत्मातिरेके किं प्रत्यक्षमेव मानमुतानुमानादि ?। नाद्य इत्याह-भेदसत्ताया इति । सद्रूपात्मन एव सर्वजडाधिष्ठानतया सदाकारानुगतबुद्ध्यालम्बनत्वोपपत्तेर्नैतत्प्रत्यक्षमतिरिक्तसत्तामपेक्षते इति भावः । उभयवादिसंप्रतिपन्नसद्रूपात्मतादात्म्यादेव सर्वत्र सद्व्यवहारोपपत्तेरतिरिक्तसत्ताकल्पने गौरवान्न तत्रानुमानादेरपि प्रवृत्तिरित्याह—अन्यस्येति ।

ननु सत्ताया आत्मधर्मत्वे तदन्यस्य घटादेः कथं सत्त्वेन प्रतिपत्तिः ?, न हि प्रासादधवलिम्ना काकोऽपि धवलः प्रतीयते, इति शङ्कते—नन्विति ।

जगति आत्मसत्ताभनम् —

**ननु भेदनिष्ठतया प्रतीयमाना सत्ता कथमात्मसत्ता ?, अन्यधर्मस्यान्यनिष्ठत्वेन प्रतीत्ययोगादिति चेत् । न, अनिदमपि रजते ऽधिष्ठानेदन्तासंसर्गानुभववत्सत्तासंसर्गानुभवस्याप्यविरोधात् ।**

**ननु यद् यन्निष्ठतया प्रतीयते, तत् तस्यैवेत्युत्सर्गस्य क्वचिद्बाधादपवादः । न चात्रास्ति बाधः । ततः सन् घट इति बुद्धिर्घटस्यात्मातिरिक्तसत्ताविषयेति चेत् । न, "तदात्मानं स्वयमकुरुत" इतिप्रतिपन्नब्रह्मविवर्त्तत्वस्य जगतः सर्पादेरिवाधिष्ठानात्मसत्तातिरिक्तसत्ताऽभावस्यैवात्र बाधकत्वात् । सद्रूपात्माऽभेदात् स्वतः सत्ताशून्यस्यापि घटादेः सद्बुद्धिविषयत्वे संभवति सत्तान्तरकल्पनागौरवाच्च ।।**

**ननु प्रपञ्चस्य पृथक् सत्ताऽनभ्युपगमे कथं तस्य स्वकार्यं प्रति हेतुत्वं नियतपूर्वक्षणे सत एव हेतुत्वादितिचेत् । न, हेतुत्वे पूर्वक्षणे विद्यमानत्वमात्रमपेक्ष्यते, न तु सत्त्वम् । तस्याप्रयोजकत्वात् । तत्र विद्यमानत्वं च तत्सम्बन्धाश्रयत्वम् । तच्च**

---

अत्र कल्पितभेदेन सत्ताया आत्मधर्मत्वोक्तिरिति द्रष्टव्यम् । किमन्यसत्तयाऽन्यस्य सत्त्वेन प्रमितिराक्षिप्यते उत भ्रान्तिः । नाद्यः । इष्टापत्तेः । द्वितीये नानुपपत्तिरिति सदृष्टान्तमाह—न, अनिदमिति ।

मिथ्यारजते इदन्तासंसर्गस्य बाधितत्वात्तदनुभवो भ्रमः, अनात्मनि तु सत्तासंसर्गस्याबाधितत्वान्न तदनुभवो भ्रम इति वैषम्यं शङ्कते— नन्विति । बाधकाभावोऽसिद्ध इति दूषयति—नेति । "तदात्मानं स्वयमकुरुत बहुस्यां प्रजायेय, सच्च त्यच्चाभवत्" इत्यादिश्रुतिभिः कारणस्यैव कार्यात्मतापत्तेरभिधानात् । पूर्वरूपे स्थिते नष्टे वा वस्तुतोऽन्यस्यान्यात्मकतानुपपत्तेर्मायया ह्यन्यदिव"यत्र वा अन्यदिव स्यादि"तीवशब्देन भिन्नप्रपञ्चस्य मिथ्यात्वोक्तेश्च रज्जुसर्पवद् ब्रह्मणोऽतत्त्वतोऽन्यथाभावत्वात् जगतस्तद्विवर्त्तत्वं वाच्यम् । विवर्तस्य चाधिष्ठानसत्तयैव सद्वद्भानमिति न स्वतः सत्ताऽस्तीत्यर्थः । प्रपञ्चसत्ताग्राहिप्रत्यक्षस्य युक्तिबाधमप्याह—सद्रूपेति । प्रपञ्चस्य स्वतःसत्ताभावे कार्यकारणभावायोगाद् व्यवहाराभावः स्यादिति शङ्कते—नन्विति ।

नियतस्य पूर्वक्षणे सत्तासंबन्धित्वापेक्षया लाघवान्नियतपूर्वक्षणसंबन्धित्वमेव हेतुताप्रयोजकमिति न सत्त्वं विना तदनुपपत्तिरिति दूषयति—न हेतुत्वे इति । विद्यमानत्वमेव सत्त्वमन्तरेणानुपपन्नमित्याशङ्क्य मायारजतवदसद्वैलक्षण्यमात्रेण तदुपपत्तिरित्याह—विद्यमानत्वं चेति । घटादेः स्वतःसत्त्वाभावे शुक्तिरजतादिवैलक्षण्यानुपपत्तिरिति शङ्कते—तर्हीति । घटादेः किं सत्त्वमेव, ततो वैलक्षण्यं, यदनुपपन्नं स्याद्, उतार्थक्रिया, किं वा चिरस्थायित्वम् ? । नाद्यः, घटादेरपि सत्त्वाभावादित्याह—न सदिलक्षणत्व इति । द्वितीये

**स्वतःसत्ताशून्यस्याप्यसद्विलक्षणस्य सम्भवति, शुक्तौ रजतवत्। तर्ह्येतद्वैलक्षण्यं प्रपञ्चस्य किंनिमित्तमिति चेत्। न, सद्विलक्षणत्वांशे तयोरविशेषात्। अर्थक्रियाविशेषस्तु प्रपञ्चस्याविद्यातिरिक्तदोषाजन्यत्वात्। परमते सत्यत्वाविशेषेऽपि दोषाजन्यज्ञानस्य सत्यप्रवृत्तिहेतुत्ववन्मिथ्याभूतप्रपञ्चस्यापि कारणविशेषकृतस्वरूपविशेषात्तदुपपत्तिरिति वक्ष्यते।**

वियदादेः प्रातिभासिकवैलक्षण्यम्

**ननु वियदादिशुक्तिरजतयोः सत्त्वविशेषाभावे किमिति रजतादिरपि वियदादिवत् स्थायी न भवेदिति चेत्। न, तव मतेऽपि सुखादेरिव तस्य स्वरूपविशेषात्स्वविषयप्रतिभाससमयनियतस्वाश्रयसंबन्धित्वाविरोधात्। शुक्तिरजतमुत्तरज्ञानादिना वा स्वजनकसामान्यज्ञानविनाशेन वा निवर्तते। तथैवान्वयव्यतिरेकात्। वियदादिकं तु न तथा। अननुभवात्। अन्वयव्यतिरेकयोर्मिथ्यात्वपरमार्थयोस्तुल्य-**

---

निमित्तमाह—अर्थक्रियेति। शुक्तिरजतादेरविद्यातिरिक्तकाचादिदोषजन्यस्वरूपविशेषत्वान्नार्थक्रियायोग्यत्वं, वियदादेस्तु तदजन्यत्वाद्वैपरीत्यमित्यर्थः। सर्वस्य मिथ्यात्वाविशेषे कथं कस्यचिद्धेतुविशेषाधीनस्वरूपविशेषादर्थक्रियाविशेषः, कस्यचिन्नेत्येतद्वैषम्यमित्याशङ्क्य परमते सर्वस्य सत्यत्वाविशेषेऽप्येतद्वैषम्यवत्सदन्यत्वेऽपि तदुपपत्तिरित्याह—परमते इति।

इदानीं तृतीयं शङ्कते—नन्विति।

सर्वसत्यत्वमते यथा स्वरूपविशेषादेव घटादेश्चिरस्थायित्वं, सुखदुःखादेश्च नियमेनाशुतरविनाशित्वम्, एवं मिथ्यात्वमतेऽपि स्वरूपविशेषादेव कस्यचिच्चिरस्थायित्वं, शुक्तिरजतादेश्च स्वप्रतिभासकाल एव विद्यमानत्वमिति परिहरति—न, तवेति। ननु सत्यत्वमते स्वविनाशहेतुसमवधानावधिकसत्त्वं सर्वस्यानित्यस्य तुल्यं सुखादेरपि द्वितीयक्षण एव विनाशहेतोः स्वविषयज्ञानादेः सन्निधानान्नियमेन तृतीयक्षणे विनाश इत्याशङ्क्य सदन्यत्वमतेऽपीदं तुल्यं शुक्तिरजतादेरपि विनाशहेतुसमवधानपर्यन्तं विद्यमानत्वाङ्गीकारादित्यभिप्रेत्य तद्विनाशहेतुमाह—शुक्तिरजतमिति। अनिर्वचनीयरजताकाराद्युत्पत्तिरादिपदार्थः। सुषुप्तिपूर्वक्षणे कस्यचिद्रजतभ्रमसंभवात्तस्य चोत्तरज्ञानादेरभावात्कथं विनाश इत्याशङ्क्याह—स्वजनकेति। वियदादिकं तु नोक्तकारणविनाश्यं, तद्विनाशे तस्यान्वयाद्यननुभवादित्याह—वियदादीति। ननु मिथ्यापदार्थानामन्वयव्यतिरेकावेवानुपपन्नौ। न हि खपुष्पादेः कुत्रचिदन्वयाद्यस्तीत्याशङ्क्य प्रपञ्चस्यासद्वैलक्षण्याभ्युपगमात्तत्समानस्वभावावन्वयव्यतिरेकावुपपद्येते, इतरथा सत्यस्याप्यन्वयव्यतिरेकौ कुत्रापि ममासंप्रतिपन्नाविति तव मतेऽपि तदनुपपत्तिस्तुल्या, इत्यभिप्रेत्याह—अन्वयेति। अन्यसत्तयैव 'भेदः सन्' इति प्रतीयते न स्वसत्तयेति सदृष्टान्तमुपसंहरति—तस्मादिति।

**त्वात् । तस्माद्भेदसत्ताग्राहि प्रत्यक्षं जलादौ गन्धप्रत्यक्षवदन्यविषयम् । अन्यश्चात्राऽऽत्मेति । "नान्योऽतोऽस्ति" इति श्रुत्या बाधितत्वाच्च न प्रत्यक्षविषयो भेदः परमार्थः ।**

प्रत्यक्षापेक्षया श्रुतेः प्राबल्यम्

**श्रुतिरेव प्रत्यक्षेण बाध्यतामिति चेत् । न, अनवकाशश्रुतेः प्रत्यक्षेण बाधेऽप्रामाण्यप्रसङ्गात् । प्रत्यक्षाप्रामाण्यमप्यनुपपन्नमिति चेत् । किमनुपपन्नम् ? । न हि श्रुत्येकदेशाप्रामाण्येऽध्ययनविधेरिव भेदसत्ताग्राहिप्रत्यक्षस्य सत्तावैशिष्ट्यांशेऽप्रामाण्ये किंचिद् बाधकमस्ति । भेदांशमात्रे तु विद्यमानार्थग्राहित्वाद्यथार्थानुभवत्वलक्षणप्रामाण्यं न हीयते । विद्यमानार्थज्ञानस्यैव यथार्थज्ञानत्वात् । भेदस्य सत्तानिषेध एव तन्मिथ्यात्वमिति न मिथ्येति नाममात्रम् । एतेनेदं परास्तं 'यथा भेदसत्ताऽधिष्ठानात्मसत्तैव, एवमभेदसत्तैव किं न स्यात्' इति । भेदप्रत्यक्षविरोधेनाऽऽरोपिताभेदाभावात् । अनारोपिताभेदस्य सद्रूपात्ममात्रत्वात् ।**

---

किं च भेदस्य सद्बुद्धिविषयत्वेऽपि न पारमार्थिकत्वम् । अबाधितस्यैव परमार्थत्वात् । भेदस्य च "नान्योऽतोऽस्ति द्रष्टा" "नेह नानास्ति किं च न" "नात्र काचन भिदास्ति" इत्यादिश्रुतिशतबाधितत्वादित्याह—नान्योऽतोऽस्तीति । वैपरीत्यमेव किन्न स्यादिति शङ्कते—श्रुतिरेवेति ।

अभेदश्रुतेरन्यपरत्वासम्भवात् स्वार्थस्यापि बाधेऽत्यन्ताप्रामाण्यं स्यात् । तथा चाध्ययनविधिव्याकोप इत्यभिप्रेत्य दूषयति—न, अनवकाशेति । तर्हि प्रत्यक्षस्याप्यनवकाशत्वादप्रामाण्यमयुक्तमिति शङ्कते—प्रत्यक्षेति । शुक्तिरजतप्रत्यक्षस्य बाधितार्थत्वेनाप्रामाण्यदर्शनाद् भेदप्रत्यक्षस्यापि सत्तावैशिष्ट्यांशेऽप्रामाण्येऽपि न किञ्चिद्बाधकमस्ति, श्रुतावक्षरमात्राप्रामाण्येऽपि अध्ययनविधिविरोधात्सा सर्वत्र प्रमाणमेवेति वैषम्यमाह—किमनुपपन्नमिति । प्रत्यक्षस्यापि धर्म्यंशे न कुत्राप्यप्रामाण्यं दृष्टमित्याशङ्क्य भेदप्रत्यक्षस्यापि भेदांशे यथार्थानुभवत्वलक्षणं प्रामाण्यं न निवार्यते, सद्विलक्षणस्यापि भेदस्य प्रतिभासदशायां विद्यमानत्वादित्याह—भेदांशेति । भेदस्य विद्यमानत्वे तन्मिथ्यात्वं पारिभाषिकमित्याशङ्क्याबाध्यत्वलक्षणसत्यत्वनिषेधाद्विद्यमानस्यापि बाध्यत्वलक्षणं मिथ्यात्वं त्वदनभिमतं सिद्धमित्यभिप्रेत्याह—भेदस्येति । जीवेश्वरभेदस्यान्यसत्तया सद्भाने तदभेदस्यापि तथात्वापत्त्या मिथ्यात्वं स्यादिति चोद्यं वक्ष्यमाणविधया निरस्तमित्याह—एतेनेति । किमारोपिताभेदसत्ताया अधिष्ठानात्मत्वमुच्यते, अनारोपिताभेदसत्ताया वा ? । नाद्य इत्याह—भेदेति । द्वितीयं दूषयति—अनारोपितेति । शास्त्रप्रतिपाद्याभेदस्य सर्वाधिष्ठानात्ममात्रतया तदधिष्ठानस्यैवाभावादिति भावः । ननु भेदप्रत्यक्षविरोधात् "तत्त्वमसि" इत्यादेस्तद्वत् त्वमपि ज्ञानादिगुणवानसीत्येवंगुणपरत्वान्नाभेदप्रतिपादकत्वमित्यत आह—अत एवेति ।

**अत एव प्रत्यक्षविरोधादभेदश्रुतिः "आदित्यो यूपः" इति श्रुतिरिव गुणवाद इति प्रत्युक्तम् । प्रत्यक्षस्य सद्विलक्षणभेदविषयत्वेनाप्युपपत्तेः । भेदनिषेधवचनस्य तात्पर्यलिङ्गानुगृहीतत्वात् । प्रत्यक्षश्रुत्योर्यथार्थत्वे संभवति श्रुतेर्बाधायोगाच्च ।**

**एतेन प्रत्यक्षस्योपजीव्यत्वेन बलवत्त्वात्तेन श्रुतेर्बाध इति निरस्तम् । उपजीव्यांशस्य श्रुत्याअबाधितत्वात् । भेदसत्तांशे प्रामाण्यस्यानुपजीव्यत्वात् । तथा चाहुः "उत्पादकाप्रतिद्वन्द्वित्वादि"ति । प्रत्यक्षस्य ज्येष्ठत्वेऽपि प्रत्यक्षश्रुत्योर्भिन्नविषयत्वान्न श्रुतिबाधः ।**

**तस्मादद्वैतसिद्धान्तविजये दुन्दुभिश्रुतिः ।**
**नान्येऽतोऽस्तीति जयति भेदवादिशुगावहा ॥**

---

अतः शब्दपरामृष्टमेवाह—प्रत्यक्षस्येति । वर्त्तमानमात्रविषयस्य प्रत्यक्षस्य त्रैकालिकबाधाभावलक्षणसत्त्वागोचरत्वात् भेदवर्त्तमानत्वस्य च वास्तवाभेदाविरोधादभेदश्रुतेर्जघन्यवृत्त्या न गुणपरता युक्तेत्यर्थः । किं च "आदित्यो यूपः" इत्याद्यर्थवादस्य प्रत्यक्षविरोधेन स्वार्थपरित्यागेऽपि विध्यपेक्षितस्तुतिसमर्पणेन विध्येकवाक्यतया प्रामाण्यमुपपद्यते । अभेदश्रुतेस्त्वनन्यशेषत्वात्स्वार्थपरित्यागेऽत्यन्ताप्रामाण्यमेव स्यादित्याह—भेदनिषेधेति । किं च शास्त्रगम्याभेदसत्त्वेपि भेदप्रत्यक्षस्य तद्वति तत्प्रकारकत्वलक्षणप्रामाण्यस्य संभवान्न श्रुतिबाधकतेत्याह—प्रत्यक्षेति ।

ननु लोके गृहीतसंगतिकानामेव पदानां वेदे बोधकत्वात्संगतिग्रहणस्य च भेदग्राहिपदपदार्थविषयप्रत्यक्षसापेक्षत्वादुपजीव्यप्रत्यक्षविरोधेन श्रुतेरेव बाधो युक्त इत्यत आह—एतेनेति । संगतिग्रहणाय पद पदार्थभेदमात्रमपेक्ष्यते, न तु तत्सत्त्वमपि । मायाविपरिकल्पितहस्त्यश्वादावपि संगतिग्रहदर्शनात् तथा च यदुपजीव्यं भेदमात्रप्रत्यक्षं, न तच्छ्रुत्या बाध्यते । यच्च बाध्यते सत्तावैशिष्ट्यांशविषयं, न तदुपजीव्यमित्यर्थः । उपजीव्यांशं श्रुतिर्न बाधते इत्यत्राभियुक्तसंमतिमाह—तथा चाहुरिति । तथापि ज्येष्ठप्रत्यक्षविरोधे श्रुतेरेव बाधो युक्त इत्याशङ्क्य ज्येष्ठस्यापि प्रत्यक्षस्यानुपजीव्यत्वान्न श्रुतिबाधकत्वं प्रत्युत "पौर्वापर्ये पूर्वदौर्बल्यम्" इतिन्यायाज्ज्येष्ठत्वं बाध्यत्वे हेतुरित्यभिप्रेत्याह—प्रत्यक्षस्येति । अभेदश्रुतेः स्वार्थपरत्वमुपसंहरति श्लोकेन—तस्मादिति । यस्मात् "नान्योऽतोऽस्ति" इत्यादिश्रुतिर्नान्यपरा तस्माद्द्वैतसिद्धान्तविजयसूचकदुन्दुभिघोषरूपं पराजितभेदवादिनां शोकं कुर्वन्ती सर्वदेशेष्वप्रतिहता प्रवर्तत इत्यर्थः ॥

इदानीं प्रकारान्तरेण श्रुतिप्रत्यक्षयोरविरोधमाह—किञ्चेति ।

प्रत्यक्षस्य जीवे ईश्वरभेदाग्राहकत्वम्

**किं च प्रत्यक्षेऽन्तःकरणावच्छिन्नात्मनो भेदोऽनुभूयते, न तु केवलस्य अहमनुभवस्य भेदविषयस्यान्तःकरणतादात्म्यवेष्टितात्मविषयत्वस्योक्तत्वात्। न च संसाराज्ञानाद्याश्रयस्य सुषुप्तिसंबन्धिन एवाहमनुभवे भेदोऽनुभूयत इति कथमन्तःकरणावच्छिन्नस्यैव भेदोऽहमनुभवविषय इति वाच्यम्। अहमनुभवगोचरादतिरिक्तचिदात्माज्ञानदशायां तस्यैवाज्ञानाद्याश्रयाभेदारोपेण तथाऽनुभवात्। तज्ज्ञानदशायां तु नेश्वरभेदोऽनुभूयते न ह्यहमनुभवगोचरातिरिक्त आत्मा ईश्वराद्भिन्न इति कश्चिदनुभवति। अन्तःकरणाधिष्ठानचैतन्यस्य सुषुप्त्यादिधर्मित्वेन तस्यैव कल्पितभेदाश्रयतया योऽहमज्ञोऽस्वाप्सं, सोऽहमीश्वराद्भिन्न इत्यनुभवसंभवाच्च।**

**किञ्च सर्वगतात्मवादे निर्दुःखादहं भिन्न इत्यनुभवो नेश्वरभेदविषयतया नियन्तुं शक्यते। शरीरानवच्छिन्नजीवप्रदेशस्यापि निर्दुःखत्वात्। किञ्च नात्र**

---

अहं निर्दुःखो नेति प्रत्यक्षेऽहमनुभवविषयधर्मिको ब्रह्मभेदः प्रतीयते। अहमनुभवविषयश्चान्तःकरणतादात्म्यापन्न एव चिदात्मेत्यकर्त्रात्मवादे निरूपितम्। तथा च यस्य शबलितस्येश्वरभेदः प्रत्यक्षेण प्रतीयते, न तस्येश्वराभेदः शास्त्रेण प्रतिपाद्यते। यस्य तु केवलस्येश्वराभेदः प्रतिपाद्यते न तस्य भेदः प्रत्यक्षेण प्रतीयत इति न श्रुतिप्रत्यक्षयोर्विरोध इत्यर्थः। यदुक्तं पूर्ववादिना योऽहं सुप्तो, यस्य ममाज्ञानं संसारश्च, सोऽहमीश्वरो नेत्यन्तःकरणानुपहित एवात्मनिईश्वरभेदः प्रतीयत इति तदपवदति—न चेति। किमहमनुभवगोचराच्चिदात्मनोऽविवेकदशायामयमनुभवः, विवेकदशायां वा?। आद्ये भेदवता विशिष्टेन तद्रहितस्य केवलस्याभेदारोपादुक्तप्रत्यभिज्ञेत्यभिप्रेत्याह—अहमनुभवेति। द्वितीयेऽहमर्थातिरिक्तात्मन ईश्वराभेदेनैव सिद्धत्वान्न तत्र तद्भेदानुभवोऽस्तीत्याह—तज्ज्ञानेति। अज्ञानोपहितचैतन्यस्यैवान्तःकरणोपहितत्वात्तस्याहमर्थाभेदेऽपि शुक्लस्यैव पटस्य रक्तद्रव्योपरागे रक्तोऽयं पटो न शुक्ल इति प्रतीतेरिव योऽहमज्ञोऽस्वाप्सं सोऽनीश्वर इति प्रतीतेरौपाधिकभेद एव विषय इति न स्वाभाविकाभेदविरोध इत्याह—अन्तःकरणेति।

किञ्च निर्दुःखादहं भिन्न इति दुःखाभावावच्छिन्नप्रतियोगिको भेदोऽनुभूयते विभ्वात्मवादिमते च शरीरानवच्छिन्नजीवात्मनोऽपि दुःखाभाववत्त्वात् तत्प्रतियोगिकभेदस्य स्वाभाविकस्य तस्मिन्नसंभवादौपाधिकभेद एवैतदनुभवविषय इत्यभिप्रायेणाऽऽह—किञ्च सर्वेति।

अपि चान्योन्याभावरूपभेदस्य योग्यानुपलब्धिरूपसहकार्यभावात् न प्रत्यक्षमानगम्यत्वमित्याह—किं चेति। अनुपलब्धेस्तर्कितप्रतियोगिसत्त्वविरोधित्वमेव योग्यता।

**योग्यानुपलब्धिरप्यस्ति पित्तोपहतनयनस्य सत्यपि शङ्खे श्वेताभेदे तदनुपलब्धिवत् सतोऽपि जीवे ब्रह्माभेदस्याविद्यादोषेणानुपलम्भसंभवात्। "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव" "एतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढाः" "अविद्यायामन्तरे वर्त्तमानाः" "अज्ञानेनावृतंज्ञानमि"त्यादिश्रुतिस्मृतिभ्यामज्ञानावरणस्य सिद्धत्वात्। श्रुतिसिद्धाभेदस्य श्रुतिसिद्धावरणेनैवानवभासोपपत्तौ तदभावकल्पनायोगाच्च। प्रतिबद्धप्रतिभासस्याप्यभावकल्पनायामतिप्रसङ्गात्।**

**अपि च यथा ब्राह्मणत्वाद्याश्रयाभेदे सत्यपि मनुष्यशरीरे तदुपदेशासहकृतप्रत्यक्षेण स नानुभूयते, विपरीततया च गृह्यते। एवं जीवे ब्रह्माभेदे सत्यपि,**

---

तदत्र नास्तीति सदृष्टान्तमाह—पित्तोपहतेति। पित्तस्य शङ्खश्वैत्यावभासप्रतिबन्धकत्वेऽन्वयव्यतिरेकवदविद्याया ब्रह्माभेदप्रतिभासप्रतिबन्धकत्वे न किञ्चिन्मानमित्याशङ्कमाह—न तं विदाथेति। तमीश्वरं न विदाथ। यूयं तमीश्वरं न विजानीथ। नन्वीश्वरस्याभावादेव न विजानीमो, न त्वस्मदपराधादित्यत आह—य ईश्वर इमाः प्रसिद्धा जरायुजाण्डजादिरूपाः प्रजा जजान उत्पादितवान्। तथा च जगत्कर्तृत्वेनेश्वरस्य सिद्धत्वान्न तदभाव इत्यर्थः। तथापि तस्य भिन्नत्वाद्विप्रकृष्टत्वाच्च न जानीम इत्यत आह—अन्यल्लौकिककारणविलक्षणं। नित्यप्राप्तस्याप्याच्छादकत्वाद्युष्माकमन्तरं तत्स्वरूपाच्छादनेन ततो भेदकमज्ञानं बभूव। अतो भवन्तस्तमात्मतया न जानन्तीत्यर्थः। यथा मार्गपतितं मलिनं सुवर्णपिण्डमुपर्युपरि गच्छन्तः स्खलन्तोऽपि सुवर्णत्वाज्ञानान्न प्राप्नुवन्ति। एवमेव सर्वे जीवा अहरहः सुषुप्तौ ब्रह्म गच्छन्तोऽपि एतं ब्रह्मलोकं ब्रह्मैव लोको ब्रह्मलोकः तं न विदन्ति न प्राप्नुवन्ति। तत्र श्रुत्यन्तरादिप्रसिद्धं हेतुमाह—अनृतेनेति। अनृतमनिर्वचनीयमज्ञानं तेन मोहिता यत इत्यर्थः। नन्वननुभूयमानमभेदं कल्पयित्वा तदनवभासप्रयोजकतया प्रतिबन्धकस्यापि कल्पनाद्वरमभेदस्यैवाभावकल्पनमित्यत आह—श्रुतिसिद्धेति। अयोगमेवोपपादयति—प्रतिबद्धेति। प्रतिबद्धइति बहुव्रीहिः॥

किञ्च यथा व्याधपरिगृहीते ब्राह्मणपुत्रे राजपुत्रे वा विद्यमानोऽपि ब्राह्मणादिशरीराभेदस्तन्निश्चायकोपदेशाभावान्नोपलभ्यते। अत एव व्याधभावेन विपर्यस्यते च। एवं जीवेश्वराभेदस्याप्युपदेशमात्रगम्यत्वात्तदभावदशायां सतोऽप्यभेदस्योपलम्भकाभावादेवानुपलम्भाद्युपपत्तेर्योग्यानुपलब्ध्यभावान्नाभेदाभावरूपभेदः प्रत्यक्षयोग्य इत्याह—अपि चेति।

स नानुभूयते इति। संशयादिनिवर्त्तकानुभवविषयो नेत्यर्थः। तदभावश्चेति। अभेदाभावरूपभेदो भ्रान्त्या गृह्यते इत्यर्थः। ब्रह्माभेदस्योपदेशमात्रगम्यत्वे हेतुमाह—नावेदविदिति। वेदान्तानामिति। अधीतमात्रवेदान्तानामापातबोधहेतुत्वं आचार्योक्तिन्यायोपोद्बलितानां तेषां संशयादिनिवर्त्तकसत्तानिश्चयहेतुत्वमिति भावः।

यथावद्वेदान्तोपदेशार्थावगमात्पूर्वं स नानुभूयते, तदभावश्च ज्ञायते । "नावेद-विन्मनुते तं बृहन्तमि"ति तत्र वेदान्तातिरिक्तमानाप्रवेशस्य "तं त्वौपनिषदं" सर्वे वेदा यत्पदमामनन्ति "आचार्यवान् पुरुषो वेदे"ति वेदान्तानामाचार्यस्य चात्माव-बोधसाधनत्वस्य श्रुतिसिद्धत्वात । सहकारिविरहादनुभूयमानस्याप्यभावे सर्वत्र तथा प्रसङ्गात् ।

जीवाणुत्ववादेपि ईश्वरभेदो न प्रत्यक्षः

**किञ्च न तावदण्वात्मनीश्वरभेदः प्रत्यक्षग्राह्यः । अणोर्जीवस्यातीन्द्रियत्वेन तत्र तर्कितेश्वरभेदस्य जीवाभेदवदतीन्द्रियत्वात् । नाप्यनुमानम् । अनुकूल-तर्काभावेनोक्तहेतूनामप्रयोजकत्वात् । सर्वज्ञत्वकिञ्चिज्ज्ञत्वादेरौपाधिकश्यामत्वा-वदातत्ववद् व्यवस्थितत्वात् । भेदनिषेधश्रुतिप्रामाण्यभङ्गप्रसङ्गलक्षणप्रतिकूलतर्क-पराहतत्वाच्च ।**

जीवेशभेदे अनुमाननिरासः

**ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवदित्यनुमानं च सिद्धसाधनं-बुद्ध्युपहितजीवात् संसारिणस्त्वंपदवाच्यात् तत्पदवाच्यस्यासंसारिणो ब्रह्मणः सर्व-**

---

किञ्च जीवस्य ब्रह्मातिरिक्तस्वरूपेण सर्वगतत्वे मानाभावान्मध्यमपरिमाणत्वे चानित्यत्वादिप्रसङ्गाद्वस्तुतोभेदेऽणुत्वमेव वाच्यम् । तथा च परमाणाविव जीवेऽपि नेश्वरभेदः प्रत्यक्षेण शक्यते ग्रहीतुम् । योग्यानुपलब्ध्यभावादित्यप्रेत्याह—किञ्चेति । ब्रह्म जीवप्रतियोगिकधर्मिसमसत्ताकभेदवद् अभ्रान्तत्वादित्याद्यनुमानान्यपि न भेदे मान-मित्याह—नापीति । ईश्वरस्य भ्रान्तजीवाभेदेऽभ्रान्तत्वसर्वज्ञत्वाद्यनुपपत्तिरेवानुकूलतर्क इत्याशङ्क्य तत्त्वतोऽभेदेप्यौपाधिकभेदेन बिम्बप्रतिबिम्बमुखयोरवदातत्वश्यामत्ववदीश्व-रस्य सर्वज्ञत्वादिकमेव, जीवस्य तु भ्रान्तत्वादिकमेवेति व्यवस्थोपपत्तेर्मैवमित्याह—सर्वज्ञेति । किञ्च भेदनिषेधश्रुतीनामन्यपरताया निरस्तत्वादभेदाभावे तदप्रामाण्यापत्ति-लक्षणप्रतिकूलतर्कपराहतिश्चेत्याह—भेदेति ।

किञ्च आद्यानुमाने किं जीवब्रह्मपदवाच्ययोर्भेदः साध्यते, उत जीवास्तत्त्वतो ब्रह्मणो न भिद्यन्त इत्यभेदानुमाने यौ जीवब्रह्मपदार्थौ तयोर्वा किं वा जीवब्रह्मपदोप-लक्षितयोः ? । आद्ये सिद्धसाधनं ब्रह्मशब्दवाच्यस्य विशिष्टरूपस्य स्वसमानसत्ताकानिर्व-चनीयजीवभेदवत्त्वाभ्युपगमादित्याह—ब्रह्म जीवेति ।

द्वितीयेऽपि सिद्धसाधनमेव स्यात् । अनुमाने तु तत्त्वत इति विशेषणान्न बाध इत्यभिप्रेत्याह— अभेदानुमानेपीति । ननु त्वपदवाच्यस्य ब्रह्मभिन्नस्य संसारित्वं तल्ल-

**ज्ञत्वादिविशिष्टस्याद्वैतवादिभिरपि भेदस्याभ्युपगतत्वात् । अभेदानुमानेऽपि तयोरेव जीवब्रह्मशब्दाभ्यामभिहितत्वात् । विशुद्धचिदात्मन एवाऽऽविद्यकबुद्ध्युपहिततया संसारः, स्वरूपेण नित्यमुक्तत्वमिति बन्धमोक्षयोरेकाधिकरणत्वाच्च । न च सर्वज्ञत्वाद्युपलक्षितस्य पक्षत्वम् । तस्यैव दुःखाद्यनुभवितृत्वेन ममासिद्धेः । न च तदुपहितं पक्षः । उपहितत्वस्य विशेषणोपलक्षणत्वयोः उक्तदोषापरिहारात् । मिथ्यात्वधर्मिशुक्तिरजतादिसमानसत्ताकभेदवत्तयाऽर्थान्तरञ्च ॥**

**न च धर्मिशब्दस्य सम्बन्धिशब्दत्वात् न रजतपरामर्शित्वमिति वाच्यम् । किं तर्हि ब्रह्मणो धर्मित्वं किं वा भेदस्य ? । नाद्यः । ब्रह्मणस्तदभावात् । द्वितीये हि ब्रह्म भेदधर्मिसमानसत्ताकजीवप्रतियोगिकभेदवदिति स्यात् । तथा च शुक्तिरजतादेरपि जीवप्रतियोगिकभेदधर्मित्वात्सिद्धसाधनम् । न च धर्मिपदं ब्रह्मण एव वाचकम् । घटादौ साध्यवैकल्यात् । न च धर्मिपदस्थाने स्वपदप्रक्षेपान्न दोष इति**

---

क्षयस्य ब्रह्माभिन्नस्य मुक्तिरिति बन्धमोक्षयोर्वैयधिकरण्यं स्यादित्याशङ्क्याह—विशुद्धेति । परमते यथा शरीरोपहितात्मनिष्ठेन सुखदुःखानुभवरूपबन्धेन तदनुपहितात्मनिष्ठमोक्षस्य सामानाधिकरण्यम् एवमहंकारोपहितचिदात्मधर्मबन्धेन केवलात्मान्वयिमोक्षस्यापि तदुपपत्तिः । उपहितात्मधर्मोऽपि बन्धः परमार्थ इति परेषामभिमानः । अस्माकं तूपहितेऽपि कूटस्थचिदात्मन्याध्यासिकः स इत्येतावदेव वैषम्यमिति भावः । तृतीयेऽपि किं ब्रह्मपदलक्ष्यं सर्वज्ञत्वाद्युपलक्षितं तदुपहितं वा ? । आद्ये चिन्मात्रस्य तदुपलक्षितत्वेन जीवचैतन्यस्यापि पक्षता स्यात् । तथा च हेतुरन्यतरासिद्ध इति दूषयति—न च सर्वज्ञत्वेति । द्वितीये उपहितत्वं विशेषणमुपलक्षणं वा ? आद्ये सिद्धसाधनम् । द्वितीये पूर्ववदसिद्धिरिति दूषयति—न च तदिति । एवं पक्षं दूषयित्वा साध्यमपि दूषयति—मिथ्यात्वेति ।

यच्चोक्तं धर्मिशब्दस्य सम्बन्धिवाचकत्वान्मात्रादिशब्दवत् प्रकृतपदार्थधर्म्मिवाचकत्वमेवेति तदपवदति—न चेति ॥

अत्र हि प्रतिज्ञावाक्ये ब्रह्मपदार्थो भेदपदार्थश्च प्रकृतः । तत्र धर्मिपदेन ब्रह्मणो धर्मित्वं विवक्षितम्, भेदस्य वेति विकल्पयति—किं तर्हीति । आद्ये साध्याप्रसिद्धिरित्यभिप्रेत्याह—नाद्य इति । द्वितीये शुक्तिरजतादेरपि जीवप्रतियोगिकभेदं प्रति धर्मित्वात् तत्समसत्ताकजीवभेदो ब्रह्मण्यभेदाविरोधीष्ट एवेत्याह—द्वितीय इति । ननु ब्रह्मनिष्ठभेदस्य प्रकृतत्वात् तद्धर्मि ब्रह्मैव धर्म्मिपदार्थ इत्यत आह—न चेति । घटादाविति । तत्र ब्रह्मसमसत्ताकभेदस्य ममासिद्धेरिति भावः। यदपि चोक्तं धर्मिपदस्थाने स्वपदं वाऽस्त्विति तदाभाससाम्येन दूषयति—न च धर्मीति । तादृशदुःखवदित्यत्र हेतुः ज्ञातृत्वादिति । तत्रैव दृष्टान्तो जीववदिति । ननु धर्मिग्राहकमानेन ब्रह्मण एकत्वेन चिद्रूपत्वेन निर्दुःखत्वेनैव च सिद्धत्वादुक्तहेतूनां धर्मिग्राहकमानबाध इति चेत् तर्हि जीवभेदानुमानेऽपि ब्रह्मसाधक-

**वाच्यम् । ब्रह्म ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवत्, स्वसमानसत्ताकजडत्ववत्, तादृशदुःखवत् दुःखाननुभवितृत्वात्; असंसारित्वात्, अभ्रान्तत्वात्; ज्ञातृत्वात् घटवत्, जीववच्च इत्याभाससमानयोगक्षेमत्वात् । न च पारमार्थिकभेदः साध्यः । श्रुतिनिषिद्धस्य पारमार्थकत्वानुपपत्तेः, दृष्टान्ते साध्याभावाच्च ॥**

**न च घटो जीवप्रतियोगिकप्रतियोगिज्ञानाबाध्यभेदवान् जीवधर्मिकधर्मिज्ञानाबाध्याभेदाप्रतियोगित्वात् इत्यनुमानात्तत्सिद्धिः । घटस्य स्वरूपेणानिर्वचनीयस्य विनापि पारमार्थिकभेदं जीवज्ञानाबाध्याभेदाप्रतियोगित्वात् । सति हि धर्मिणि सत्प्रतियोगिकाभेदाभावे सन् भेदः सिध्यति । भेदस्य जीवज्ञानाबाध्यत्वेऽपि न सत्यता । तस्य ब्रह्मविषयाज्ञानादेव जीवत्वादेरिव सिद्धत्वात् । न च जीवप्रतियोगिकब्रह्मज्ञानाबाध्यभेदवानिति वा साध्यम् । आत्मातिरिक्तस्य सर्वस्यापि ब्रह्मज्ञानेन बाधात् । उक्तरीत्या अप्रयोजकत्वाच्च ॥**

---

मानेन श्रुत्या जीवाभेदेनैव तस्य सिद्धत्वाद्धर्मिग्राहकमानबाधस्तुल्य इति भावः । यदपि चोक्तं धर्मिसमानसत्ताकेतिपदस्थाने पारमार्थिकेत्यादिविशेषणं देयमिति, तद् दूषयति—न चेति । पारमार्थिकत्वानुपपत्तिरित्युपलक्षणं श्रुतिनिषिद्धत्वादेव यावद्ब्रह्मस्वरूपमनुवर्तमानत्वादिकमपि भेदस्यानुपपन्नमित्यर्थः । पारमार्थिकभेदवदिति साध्ये दोषान्तरमाह—दृष्टान्त इति ॥

यत्तु सामान्यानुमानेन घटे जीवप्रतियोगिकपारमार्थिकभेदसिद्धिरित्युक्तं, तद् दूषयति—न चेति ।

घटे सद्रूपजीवाभेदाप्रतियोगित्वस्य सत्त्वाभावेनापि संभवादुक्तसाध्ये हेतुरप्रयोजक इत्याह—घटस्येति । कुत्र तर्ह्यभेदाभावात्सन् भेदः सिद्धयतीति वीक्षायामाह - सति हीति । भेदस्य धर्मिप्रतियोगिपरतन्त्रत्वात्तत्सत्यत्वं भेदसत्यत्वे प्रयोजकम् । न हि–धर्मी सन्न भवति, धर्मः सन्निति युज्यते । अतः सद्विलक्षणे घटे जोवाभेदाभावेन भेदमात्रसिद्धावपि न तस्य सत्यत्वसिद्धिरिति भावः । किं च प्रतियोगिज्ञानाबाध्येति घटनिष्ठजीवभेदस्य किं कर्तृत्वादिविशिष्टजीवज्ञानाबाध्यत्वं साध्यते, उत तदुपलक्षितब्रह्मज्ञानाबाध्यत्वम् ? । आद्ये सिद्धसाधनं ब्रह्माज्ञानकार्यस्य तस्य तदज्ञानानिवर्तकजीवज्ञानाबाध्यत्वादित्याह—भेदस्येति । द्वितीयं दूषयति—न चेति । अस्मिन् पक्षे यद्यज्ज्ञानाबाध्ययद्धर्मिकाभेदाप्रतियोगि तत् ब्रह्मज्ञानाबाध्यतत्प्रतियोगिकभेदवदित्येवं सामान्यव्याप्तिर्वक्तव्या । अत्र न किञ्चिदुदाहरणमस्ति दूरस्थवृक्षभेदस्यापि ब्रह्मज्ञानबाध्यत्वादित्यभिप्रेत्याह—आत्मातिरिक्तस्येति । अनिर्वचनीयघटस्य ब्रह्मज्ञानेन बाध्यजीवभेदवत्त्वेऽपि तदभेदाप्रतियोगित्वोपपत्तेरत्रापि हेतुरप्रयोजक इत्याह—उक्तरीत्येति । एतेन यावत्स्वरूपमनुवर्तमानभेदवदित्यादिसाध्येष्वपि हेतोरप्रयोजकत्वमिति सूचितम् । भ्रान्त्यादेराविद्यकत्वेन तदभावरूपाभ्रान्तत्वं घटादाविव जीवप्रतियोगिकाविद्यकभेदेनैव ब्रह्मण्युपपत्तेः ।

एवं सामान्यतः सर्वहेतूनां पक्षादिदूषणमुक्त्वा प्रत्येकमपि दूषयति—प्रथमेति ।

उक्तभेदहेतूनां प्रत्येकं दूषणम्

**प्रथमहेतौ च दुःखपदं व्यर्थम् । घटादौ तेन विनाऽपि व्याप्तिग्रहसंभवात् । व्याप्तिग्रहोपयुक्तस्यैव हेतुविशेषणत्वात् । केवलाभावस्य व्याप्यत्वे विशिष्टाभावस्य गौरवेणाव्याप्यत्वात् । अननुभवितृत्वमात्रस्य ब्रह्मण्यसिद्धेः । विशिष्टोऽपि हेतुरसिद्ध एव । सर्वज्ञे ब्रह्मणि दुःखाननुभवासंभवात् । स्वसमवेतदुःखाननुभवितृत्वं हेतुरिति चेत् । न, ब्रह्मणि दुःखाभावेन प्रतियोग्यप्रसिद्ध्या हेतोरसिद्धेः । न च दुःखगोचरलौकिकसाक्षात्कारानाश्रयत्वं हेतुः । अस्मन्मते जीवे व्यभिचारात्, तदीयदुःखसाक्षात्कारस्याप्यलौकिकसाक्षित्वात्, अप्रसिद्धेश्च । अभ्रान्तत्वादित्यपि हेतुरसिद्धः । मिथ्यावस्तुविषयज्ञानस्य भ्रान्तेः कल्पितप्रपञ्चसाक्षिणि ब्रह्मण्यपि सत्त्वात् ॥**

**असद्विषयं ज्ञानं भ्रम इति चेत् । न, 'असन्न भासते' इति मते जीवेन व्यभि-**

---

दुःखपदं विना घटादावननुभवितृत्वस्यैवोक्तसाध्यव्याप्यत्वेऽप्यसिद्धिनिवारणेन तदर्थवदित्याशङ्क्याह--व्याप्तिग्रहेति । असिद्धिनिवारणमात्रेण हेतुविशेषणत्वे क्षित्यादिकमकर्तृकं शरीरजन्यत्वादित्यादिप्रयोगोऽपि साधीयान् स्यादिति भावः । विशिष्टाभावस्यान्यत्वान्न वैयर्थ्यमित्याशङ्क्याह—केवलेति । अभावरूपहेतौ स्वगतस्य व्याप्यतावच्छेदकधर्मस्याभावात् प्रतियोग्येव तदवच्छेदको वाच्यः । तथा चानुभवितृत्वमात्रस्य प्रतियोगितया व्याप्यतावच्छेदकत्वे लाघवम् । दुःखविशेषितस्यावच्छेदकत्वे तु गौरवमिति भावः। तर्ह्यननुभवितृत्वमेव हेतुरस्त्वित्यत आह—अननुभवितृत्वमिति । किञ्च विशिष्टहेतावपि किं दुःखविषयानुभवाभावमात्रं विवक्षितमुत स्वसमवेतदुःखाननुभवितृत्वं, दुःखगोचरलौकिकसाक्षात्कारानाश्रयत्वं वा ?। आद्ये सर्वज्ञब्रह्मणो जीवगतदुःखानुभववत्त्वात्तदभावोऽसिद्ध इत्याह—विशिष्टोऽपीति । द्वितीयं शङ्कते—स्वसमवेतेति। स्वशब्दस्य समभिव्याहृतब्रह्मपरत्वात्तदीयदुःखाप्रसिद्ध्या तदनुभवोऽप्यप्रसिद्धः। तदप्रसिध्या च तदभावरूपहेतुरर्थासिद्ध इत्याह—न ब्रह्मणीति। तृतीयं दूषयति—न चेति। वस्तुतस्त्वस्मन्मते दुःखगोचरलौकिकसाक्षात्काराभावेन तदनाश्रयत्वस्याप्रसिद्धेरत्राप्यप्रसिद्धिरित्याह—अप्रसिद्धेश्चेति । अभ्रान्तत्वादित्यत्रापि किं मिथ्यावस्तुज्ञानं भ्रान्तिस्तदभाववत्त्वं हेतुत्वेन विवक्षितमुतासज्ज्ञानं भ्रान्तिस्तदभाववत्त्वं वा ?। आद्ये ब्रह्मज्ञानस्यापि मिथ्याभूतप्रपञ्चविषयत्वेन भ्रान्तित्वात्तदभावो ब्रह्मण्यसिद्ध इत्याह--अभ्रान्तत्वादित्यपीति ।

द्वितीयं शङ्कते--असदिति ॥

एवं सति वैशेषिकादिमते जीवेऽप्यसज्ज्ञानाभावात् तत्रापि हेतुः स्यात् । तथा च व्यभिचार इत्याह—न असदिति । ननु त्वन्मतेऽपि जीवे जीवान्तरप्रतियोगिकभेदसत्त्वान्न

**चारात्। लाघवेन ज्ञानाभावस्यैव व्याप्यत्वादसिद्धेश्च। असंसारित्वमपि यदि संसारध्वंसवत्त्वं तर्हि ब्रह्मण्यप्यसिद्धिः, त्वदभिमतमुक्तजीवेषु व्यभिचारश्च। अथ संसारात्यन्ताभाववत्त्वं, तर्हि अस्मदभिमतजीवस्यारोपितसंसारात्यन्ताभाववत्त्वाद्**

---

व्यभिचार इति चेन्न। तथापि जीवत्वावच्छिन्नप्रतियोगिकजीवभेदस्य जीवेऽभावात्। न च यत्किंचिज्जीवप्रतियोगिकजीवभेद एव साध्य इति वाच्यम्। यत्किञ्चिज्जीवत्वस्यापि सर्वजीवानुगतत्वेन तदवच्छिन्नप्रतियोगिकजीवभेदस्य जीवेऽभावात्, भेदस्य प्रतियोगितावच्छेदकाधिकरणजीवेऽसंभवादिति भावः। ज्ञानाभावस्यैव घटादावुक्तसाध्यव्याप्तत्वाद्-सद्विशेषणं व्यर्थं चेत्याह—लाघवेनेति। अस्तु तर्हि ज्ञानाभाव एव हेतुरित्यतआह—असिद्धेश्चेति। असंसारित्वादित्यत्रापि किं संसारध्वंसवत्त्वं हेतुत्वेन विवक्षितं, तदत्यन्ताभाववत्त्वं वा ?। आद्ये ब्रह्मणि संसाराभावेन प्रतियोगिसमानाधिकरणस्तद्ध्वंसोऽपि तत्रासिद्ध इत्याह—असंसारित्वमपीति। किं च पराभिमतमुक्तजीवेषु, संसारध्वंससत्त्वेऽपि पूर्वोक्तविधया जीवप्रतियोगिकभेदाभावाद्व्यभिचारश्चेत्याह—त्वदभिमतेति। द्वितीयमनूद्य दूषयति—अथेति। यदपि चोक्तं जीवो ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदवान् असर्वज्ञत्वात्, असर्वशक्तित्वात्, अस्वतन्त्रत्वाच्च घटवदिति तत्राप्युक्तदूषणजातमतिदिशति—एवमिति। अत्रापि जीवब्रह्मपदाभ्यां विशिष्टविवक्षायां सिद्धसाधनं, कर्तृत्वाद्युपलक्षितविवक्षायां ब्रह्मणोऽपि पक्षत्वेन बाधः, तदुपहितविवक्षायां चोपहितत्वस्यापि विशेषणत्वोपलक्षणत्वयोरुक्तदोषापातात्। धर्मिपदस्थाने स्वपदप्रक्षेपे च जीवो जीवप्रतियोगिकस्वसमानसत्ताकयावद्भेदवान् स्वसमानसत्ताकज्ञानाद्यत्यन्ताभाववान् वा असर्वज्ञत्वादिभ्यः घटवदित्याभाससाम्यम्। असर्वज्ञत्वं च किञ्चिज्ज्ञत्वं सर्वविषयज्ञानाभावो वा सर्वविषयसाक्षात्काराभावो वा सर्वविषयलौकिकसाक्षात्काराभावो वा ?। आद्ये घटादौ साधनवैकल्यम्। न द्वितीयतृतीयौ। जीवेऽपि तव मते सामान्यलक्षणादिप्रत्यासत्तिजन्यसर्वविषयज्ञानस्य तत्साक्षात्कारस्य च सत्त्वात्। तुरीये ब्रह्मणि व्यभिचारः। संयोगादिषट्कान्यतमप्रत्यासत्तिजन्यस्य लौकिकसाक्षात्कारस्य ब्रह्मण्यभावेन तत्रोक्तहेतोः सत्त्वात्, घटादौ ज्ञानाभावस्यैवोक्तसाध्यव्याप्यत्वाद्विशेषणवैयर्थ्यं च।

असर्वशक्तित्वमपि किं सर्वासां शक्तीनां राहित्यं सर्वकार्यविषयशक्तिराहित्यं वा ?। आद्ये ब्रह्मणि व्यभिचारः वह्न्यादिगतदाहादिशक्तेर्ब्रह्मण्यभावात्। द्वितीयेऽप्यस्मन्मते ब्रह्मणि तादृशशक्तेरारोपितत्वेन तदभावस्यापि ब्रह्मणि सत्त्वेन व्यभिचारात्। परमतेऽपि ब्रह्मप्रतियोगिकघटनिष्ठभेदे व्यभिचारः। तत्र ब्रह्मप्रतियोगिकभेदान्तराभावात्।

अस्वतन्त्रत्वमपि किमकर्तृत्वम् अन्येच्छाधीनव्यापारवत्त्वं वा आश्रितत्वं वा कार्यत्वं वा?। नाद्यः। जीवस्य पुण्यपापादिकर्तृत्वेनाकर्तृत्वासिद्धेः। अस्मन्मते ब्रह्मणोऽपि वस्तुतो-

**व्यभिचारः। एवं जीवपक्षकभेदानुमानेष्वपि व्यर्थविशेषणात्वादय ऊह्याः साध्य-वैकल्यं च घटस्य ब्रह्मप्रतियोगिकभेदे सत्त्वाभावात्।**

ब्रह्मपक्षकानुमानान्तरदूषणम्

**यत्तु ब्रह्म तत्त्वतो जीवाभिन्नं नेत्यनुमानं, तन्न। ब्रह्मस्वरूपातिरिक्तस्य जीवाभेदस्य वास्तवत्वानुपपत्तेः, शास्त्रप्रतिपाद्यतत्स्वरूपाभेदस्य तवासिद्धेः। एतेन जीवपराभेदे वास्तवत्वं निषिध्यत इति प्रत्युक्तम्। तस्यासिद्धावाश्रयासिद्धेः। सिद्धौ वा परमार्थत्वाद्धर्मिग्राहकमानबाधात्। सर्वेषां हेतूनामुक्तश्रुतिविरोधाच्च।**

**अत एव कर्मज्ञानोपदेशानुपपत्तिर्जीवस्य ब्रह्मभेदे मानम्। अन्यथा ब्रह्मण**

---

ऽकर्तृत्वेन तत्र व्यभिचाराच्च। द्वितीये व्यापारपदेन किं कृतिरुच्यते परिस्पन्दो वा कार्य्यमात्रं वा ?। आद्ये घटे साधनवैकल्यम्। द्वितीये जीवेऽसिद्धिः। तस्य मध्यमपरिमाणत्वेऽणुत्वे वाऽनित्यत्वाप्रत्यक्षत्वाद्यापत्तेः। सर्वगतत्वेन वा परिस्पन्दायोगात्। आरोपितपरिस्पन्दस्य घटादिषु तवाभावात्। तृतीयेऽपि जीवेच्छाधीनजीवशरीरसंयोगादिकार्यवत्त्वात् सर्वगतेश्वरस्य तत्र व्यभिचारः। तृतीयचतुर्थयोश्च जीवेऽसिद्धिः। सर्वगतस्य नित्यस्य तस्याश्रितत्वकार्यत्वयोरभावादित्यादि दूषणं जीवपक्षकानुमानेषूह्यमिति भावः। अत्रापि धर्मिसत्तासमानसत्ताकपदस्थाने पारमार्थिकेत्यादिपदप्रक्षेपे दोषमाह—साध्येति। कार्य-कारणयोरारम्भणाधिकरणन्यायेन वास्तवभेदायोगात् घटादेश्च ब्रह्मकार्यत्वात् तत्र ब्रह्म-प्रतियोगिकवास्तवभेदोऽसिद्ध इत्यर्थः।

ब्रह्मपक्षकानुमानान्तरमप्यनूद्य दूषयति—यत्त्वित्यादिना।

किमत्र ब्रह्मस्वरूपातिरिक्तस्य तात्त्विकजीवाभेदस्य निषेधः उत तत्त्वमस्यादि-शास्त्रगम्यब्रह्मस्वरूपाभेदस्य ? नाद्यः। ब्रह्मातिरिक्तस्य तात्त्विकस्याप्रसिद्धत्वेन तदभाव-स्यापि घटादावप्रसिद्धेः साध्यवैकल्यादित्यभिप्रेत्याह—ब्रह्मेति। द्वितीये निखिलभेदा भावात्मकस्य सत्यज्ञानादिरूपस्य शास्त्रगम्याभेदस्य तवासिद्धेरुक्तदोषस्तदवस्थ इत्यभि-प्रेत्याह—शास्त्रेति। नन्वस्मिन्प्रयोगे न तात्त्विकजीवाभेदो निषिध्यते येनोक्तविकल्पः स्यात्, किं तु जीवपराभेदे ब्रह्मणि प्रसिद्धं तात्त्विकत्वमेवेत्याशङ्कामपवदति—एतेनेति। एतच्छब्दार्थमेवाह—तस्येति। जीवब्रह्मपक्षकसर्वानुमानेष्वपि "नान्योऽतोऽस्ति"इत्यादि-श्रुतिबाधश्चेत्याह—सर्वेषामिति।

जीवपरभेदे श्रुतिप्रत्यक्षानुमानानि निराकृत्यार्थापत्तिमपि निराकरोति—अत एवेति। कर्मज्ञानयोरुपदेशः कर्मज्ञानोपदेशः तदनुपपत्तिरित्यर्थः। अनुपपत्तिमेवाह—अन्यथेति। कर्माद्युपदेशस्य कर्तृत्वादिमात्रापेक्षत्वात्तस्य चानिर्वचनीयभेदादपि प्रति-

**इव जीवस्यापि तदुपदेशवैयर्थ्यादिति प्रत्युक्तम् । आत्मस्वरूपसत्तया लब्धात्माऽनिर्वचनीयभेदेनैव तदुपपत्तेः ।**

भेदस्वरूपखण्डनम् ।

**किं च न तावदन्योन्याभावो भेदः । तत्प्रतियोगिनोऽनिरूपणात् । तथा हि– न तावद् घटादिः प्रतियोगी । संसर्गाभावसाङ्कर्यप्रसङ्गात् । ननु तादात्म्यं तदवच्छिन्नो घटादिर्वा प्रतियोगीति चेत् । न, घटपटतादात्म्यस्याप्रमितत्वात् । असत्प्रतियोगिकाभावस्याभावात् । अथ घटे घटतादात्म्यं प्रमितं पटे निषिध्यते, घटतादात्म्याभावश्च पटाधिकरणस्तस्य ततो भेद इति चेत् । न, तादात्म्यस्य घटस्वरूपत्वे घटेऽपि घटभेदप्रसङ्गात् । अतिरिक्तमपि घटत्वं न तादात्म्यमिति वक्ष्यते । तदन्यत्तु दुर्निरूपमेव । किं च तादात्म्याभावो रूपाद्यभाववन्न भेदः । योऽभावो यस्य येन तादात्म्यविरोधी स खलु तस्य भेदः ॥**

---

बिम्बगतश्यामत्वादिवज्जीवे व्यवस्थितत्वाद्वस्तुतो ब्रह्माभेदेऽपि नोक्तानुपपत्तिरित्याह— आत्मेति ॥

भेदस्वरूपस्यैव निर्वक्तुमशक्यत्वादनिर्वाच्यभेदेनैव सर्वत्र विरुद्धधर्मव्यवस्थेत्यभिप्रेत्य भेदस्वरूपं खण्डयति—किं चेति ।

भेदः किं पदार्थधर्मस्तत्स्वरूपं वा ? । आद्येऽपि किमन्योन्याभावः सः उक्तवैलक्षण्यम् वा ? । नाद्य इत्याह—न तावदिति । किमन्योन्याभावस्य घटादिरेव प्रतियोगी तादात्म्यं वा तदवच्छिन्नो घटादिर्वा ? । आद्ये प्रतियोगितदवच्छेदकभेदाभावात् संसर्गाभावादस्य भेदो न स्यादित्याह—न तावदिति । किं चास्य प्रतियोगिविरहस्वभावत्वेन तत्प्रतियोगिकाले तत्सामानाधिकरण्यानुपपत्तिः, तद्विरहात्मत्वाभावेऽभावत्वमेव न स्यादिति द्रष्टव्यम् । द्वितीयतृतीयौ शङ्कते – नन्विति । किमत्र पटधर्मिकघटतादात्म्यं तत्प्रतियोगि उत घटधर्मिकघटप्रतियोगिकमेव ? । आद्यं दूषयति—न घटेति । ततः किमित्यत आह— असदिति । द्वितीयं शङ्कते—अथेति । किं घटतादात्म्यं घटस्वरूपं, तदतिरिक्तं वा ? नाद्यः । घटधर्मिकघटप्रतियोगिकाभावस्य परमते घटेऽपि सत्त्वात् सोऽपि स्वस्मादेव भिद्येतेति दूषयति—न तादात्म्यस्येति । द्वितीयेऽपि तत्किं घटत्वमेव ततोऽन्यद्वा ? । नोभयथापीत्याह—अतिरिक्तमपीति । दुर्निरूपमेवेति । घटघटत्वातिरिक्ततादात्म्यस्य द्रव्याद्यन्यतमत्वेन निरूपणायोगादित्यर्थः । तादात्म्यस्यानिरूपणादेव तदवच्छिन्नप्रतियोगिकाभावो भेद इत्येतदपि निरस्तमिति द्रष्टव्यम् । घटधर्मिकघटप्रतियोगिकतादात्म्यमङ्गीकृत्यापि तदभावस्य भेदत्वं दूषयति—किं चेति । तस्याभेदत्वं दर्शयितुं भेदशब्दार्थमाह— योऽभाव इति । अभाव इति च्छेदः ।

तर्हि घटधर्मिकघटप्रतियोगिकतादात्म्याभाव एव पटतादात्म्यविरोधीति स एव तस्माद्भेद इत्यत आह—न चेति ॥

**न च घटप्रतियोगिकघटधर्मिकतादात्म्याभावः पटस्य घटप्रतियोगिकतादात्म्यविरोधी। धर्मभेदेन तादात्म्यभेदात्। जीवस्य ब्रह्माभेदाविरोधितद्भेदस्यास्माभिरनिवार्य्यत्वात्। जीवस्य ब्रह्मतादात्म्यस्य प्रामाणिकत्वात्। अत एव संयोगावच्छिन्नबृक्षतादात्म्याभावस्य तस्मिन्नेव तदभावावच्छिन्ने सत्त्वेपि न वृक्षभेदः ॥**

---

तत्र हेतुमाह—धर्मभेदेनेति। यथैकस्मिन् वृक्षे अग्रत्वावच्छिन्नवृक्षप्रतियोगिकमेकं कपिसंयोगावच्छिन्नप्रतियोगिकमपरं वृक्षत्वावच्छिन्नप्रतियोगिकमन्यदित्यनेकानि तादात्म्यानि धर्मभेदाद्भिद्यन्ते। तथा च मूलावच्छिन्ने वृक्षेऽग्रत्वावच्छिन्नप्रतियोगिकस्य संयोगावच्छिन्नप्रतियोगिकस्य वा तादात्म्यस्याभावेऽपि वृक्षत्वावच्छिन्नप्रतियोगिकतादात्म्यमस्त्येव। एवं मृदवच्छिन्नघटप्रतियोगिकस्य देशविशेषसंयोगावच्छिन्नघटप्रतियोगिकस्य वा तादात्म्यस्य पटत्वावच्छिन्नेऽभावेऽपि घटत्वावच्छिन्नप्रतियोगिकतादात्म्यस्य पटेऽपि सत्त्वाविरोधान्न घटधर्मिकघटप्रतियोगिकतादात्म्याभावमात्रात्पटे तद्भेदसिद्धिरित्यर्थः।

ननु यत्र यदवच्छिन्नप्रतियोगिकतादात्म्याभावस्तस्य तदवच्छिन्नात्स एव भेदः। मूलावच्छिन्नवृक्षस्यापि अग्रावच्छिन्नवृक्षाद्भेद एवेत्याशङ्क्य वृक्षवदेव जीवस्य स्वरूपेण ब्रह्माभेदेऽपि सर्वज्ञत्वादिविशिष्टरूपेण तद्भेदो ऽविरुद्धत्वादिष्ट एवेत्याह—जीवस्येति।

ननु मूलाग्रयोर्वृक्षाभेदस्य प्रत्यभिज्ञासिद्धत्वात् सोऽप्यभ्युपेयः, न तथा जीवब्रह्मणोः स्वरूपाभेदे प्रत्यभिज्ञाऽस्तीत्याशङ्क्य तदभावेऽपि तत्त्वमस्यादिश्रुतिसिद्धत्वात् सोऽप्यभ्युपेय इत्यभिप्रेत्याह—जीवस्येति। ननु मूले वृक्षः कपिसंयोगवान्न भवतीति प्रतीतेर्न संयोगावच्छिन्नवृक्षतादात्म्याभावो विषयः किं तु संयोगात्यन्ताभाव एव। तथा च वृक्षतादात्म्याभाववति वृक्षाद्भेद एव न त्वभेदोऽपि। एवं ब्रह्मतादात्म्याभावे जीवस्य ब्रह्मभेद एव न त्वभेदोऽपीत्यत आह—अत एवेति। विशिष्टभेदस्य स्वरूपाभेदेनाविरोधादेवेत्यर्थः।

अयमभिसंधिः—इदमिदं न भवतीति ज्ञानस्य घटादौ भेदविषयत्वाद् वृक्षेऽपि तद्विषयत्वमेव तस्य वक्तव्यम्। इतरथा कपिसंयोगतदभावयोरधिकरणभेदाभावादन्यत्रापि भावाभावयोर्विरोधो दत्तजलाञ्जलिः स्यात्। तदभिन्ने तद्भेदोऽपि विरुद्ध इति चेत्। न, तत एव भेदस्यानिर्वचनीयत्वाङ्गीकारात्, भेदाभेदयोः प्रतियोगितावच्छेदकभेदेनाविरोधोपपत्तेश्च। अन्यथा 'नाहं सर्वज्ञ' इति प्रतीतेरपि सर्वज्ञत्वादेरेवाभावो विषय इति न जीवेश्वरभेदसिद्धिरिति ॥

ननु यद्धर्मिकतादात्म्ये यत्प्रतियोगिकत्वाभावः स एव तस्य ततो भेद इति शङ्कते—अथेति।

**अथ पटधर्मिकतादात्म्ये घटप्रतियोगिकत्वाभाव एव तस्य ततो भेद इति चेत् तथाप्यभेदातिरिक्ततादात्म्याभावात् । अभेदश्च भेदाभाव इत्यन्योन्याधीनतया दुर्निरूपो भेदः । शास्त्रप्रतिपाद्याभेदश्च न स्वरूपादतिरिच्यते ।**

**अथ न तादात्म्यमन्योन्याभावप्रतियोगि प्रतियोगितावच्छेदकं वा, किं तु घटादिरेव तत्प्रतियोगी । न चैवं संसर्गाभावान्योन्याभावयोरभेदप्रसङ्गः । अधिकरणविषयप्रतियोग्यारोपजन्यज्ञानविषयाभावत्वं संसर्गाभावत्वम् । अधिकरणविषयप्रतियोगितावच्छेदकारोपजन्यज्ञानविषयाभावत्वमन्योन्याभावत्वमिति तद्भेद इति चेत् ।**

---

किं पटधर्मिकतादात्म्यं पटस्वरूपमेव पटत्वं वा भेदाभावो वा ? । नाद्यः । धर्मधर्मिभावानुपपत्तेः । न द्वितीयः । पटत्वस्याखण्डधर्मत्वेन तस्मिन्पटप्रतियोगिकत्वस्याप्यभावेन पटस्य स्वस्मादपिभेदापत्तेः पटत्वस्य स्वाभावप्रतियोगित्वेन पटस्य पटत्वाभावाद्भेदोऽपि न स्यात्, पटत्वरूपतादात्म्ये घटप्रतियोगिकत्वाभावेऽपि घटभेदस्य पटधर्मिकत्वासिद्धेश्च । तादात्म्यस्यासाधारणधर्मरूपत्वे धर्मान्तराभावात्तस्येतरभेदो न स्यात् तत्रापि धर्मान्तराङ्गीकारे ऽनवस्थापत्तेः । तस्मात् तृतीय एव परिशिष्यते इत्यभिप्रेत्याह—तथापीति । तथापि दोषमाह—अभेदश्चेति । पटाभेदज्ञाने तत्र घटप्रतियोगिकत्वाभावरूपभेदज्ञानं, तज्ज्ञाने च तदभावरूपाभेदज्ञानमिति परस्पराश्रयान्न भेदः प्रामाणिक इत्यर्थः ।

ननु भेदस्य दुर्निरूपत्वे तदभावरूपाभेदस्यापि तथात्वापत्त्या तस्य शास्त्रप्रतिपाद्यत्वानुपपत्तिरित्यत आह—शास्त्रेति । अनिर्वचनीयभेदाधिष्ठानस्य सच्चिदानन्दात्मनः स्वरूपतो निष्प्रतियोगिकस्यैव भेदसत्ताविरोध्यभेदात्मना शास्त्रे प्रतिपाद्यमानत्वान्न तस्य दुर्निरूपत्वादिकमित्यर्थः । तादात्म्यस्य भेदप्रतियोगित्वादेरनङ्गीकारान्नोक्तदोषावकाश इति कश्चित्तार्किकंमन्यः शङ्कते—अथेति । तर्हि निष्प्रतियोगिको भेदोऽनुपपन्न इत्यत आह—किं त्विति । संसर्गाभावेऽपि घटादेरेव प्रतियोगित्वादन्योन्याभावरूपभेदस्यापि तत्प्रतियोगिकत्वे तस्य संसर्गाभावाद्भेदो न स्यादित्युक्तमपवदति—न चैवमिति । एकप्रतियोगिकत्वेऽपि लक्षणभेदाद्भेद इत्यभिप्रेत्य तयोर्लक्षणभेदमाह—अधिकरणेति । अप्रसक्तप्रतिषेधायोगात् प्रसक्तिपूर्वकप्रतिषेधो वाच्यः तथा चाभावाधिकरणविषयको यः प्रतियोग्यारोपः, तज्जन्यं यज्ज्ञानं तद्विषयाभावत्वं संसर्गाभावस्य लक्षणम् । अभावाधिकरणविषयको यः प्रतियोगितावच्छेदकारोपः तज्जन्यं यज्ज्ञानं तद्विषयाभावत्वमन्योन्याभावस्य लक्षणमिति लक्षणभेदादभावभेद इत्यर्थः ।

एकस्यैव घटस्य चक्षुः स्पर्शन जन्यज्ञानद्वयविषयत्ववत् त्वदुक्तारोपद्वयजन्यज्ञानद्वयविषयत्वस्यैकाभावेऽपि संभवान्न ततोऽभावभेदसिद्धिरिति दूषयति—न ग्राहकेति ।

**न, ग्राहकभेदेऽपि प्रतियोगितदवच्छेदकभेदाभावेन ग्राह्यभेदाभावात्। अभावप्रतीतेस्त्वदभिमतारोपाजन्यत्वात्। तत्पूर्वं तत्सत्त्वे प्रमाणाभावाच्च। न चाभावप्रतीतिवैलक्षण्यमेव पूर्वं तत्सत्त्वे प्रमाणम्। विषयवैलक्षण्यादेव ज्ञानवैलक्षण्योपपत्तेः। अन्यथा तत्र विलक्षणारोपजन्यत्वस्यैव दुर्ग्रहत्वात्।**

अभावग्रहसामग्रीवैलक्षण्यादभावभेदशंकानिरासौ

**ननु प्रतियोगिज्ञानादेरविशेषात्कदाचिद् इदमिदं न, इदमिह न इति प्रतीतिर्विचित्रारोपहेतुं कल्पयति, तदन्यस्य प्रतीतिव्यवस्थापककारणस्याभावादिति चेत्। न, प्रतियोगितावच्छेदकारोपाभ्युपगमे तदभावस्यैव ग्रहणप्रसङ्गेनान्योन्याभावधियोऽभावप्रसङ्गात्।**

---

उक्तारोपस्याभावग्राहकत्वमभ्युपेत्यैतदुक्तं, तदेव नास्तीत्याह—अभावेति। अभावप्रतीतेः प्रतियोगिस्मरणसहकृततदनुपलम्भविशेषमात्रजन्यत्वान्न तदारोपापेक्षेत्यर्थः। नन्वप्रसक्तप्रतिषेधोऽनुपपन्न इत्युक्तं, तत्राह—तत्पूर्वमिति। शाब्दस्यैव प्रतिषेधप्रत्ययस्य श्रोतृविपर्यासादेर्निवृत्तिफलकस्य प्रसक्तिपूर्वकत्वनियमो, न त्वभावज्ञानमात्रस्येति भावः। ननु 'इदमिह न' 'इदमिदं न' इति ज्ञानवैलक्षण्यं विलक्षणकारणमन्तरेणानुपपद्यमानं तदुपपादकत्वेनोक्तारोपभेदमेव कारणत्वेन कल्पयति, कारणान्तरस्योभयत्रापि साधारणत्वादित्याशङ्क्यान्यथैवोपपत्त्या दूषयति—न चाभावेति। विषयवैलक्षण्यादेवेति। दुर्निरूपविषयवैलक्षण्यादेवेत्यर्थः। आरोपभेदजन्यज्ञानविषयत्वमेव विषयवैलक्षण्यं, न त्वन्यदित्यत आह—अन्यथेति। आरोपभेदजन्यत्वस्य विलक्षणजन्यतावच्छेदकग्रहं विना दुर्ग्रहत्वात्। ज्ञाने च स्वतो वैलक्षण्याभावाद्विषयवैलक्षण्यप्रयुक्तमेव तद्वैलक्षण्यं वक्तव्यमित्यर्थः।

ननूक्तज्ञानवैलक्षण्यस्य विषयवैलक्षण्याधीनत्वेऽपि भूतलादौ विषयद्वयेसत्यपि इदमिह नेति ज्ञानकाले इदमिदं नेति ज्ञानाभावः सिद्धः। एवमिदमिदं नेतिज्ञानकाले इदमिह नेति ज्ञानाभावः। स च नियमेन कारणाभावप्रयुक्तो वक्तव्यः। तत्र च कारणान्तरस्योभयत्रापि सत्त्वादुक्तारोपाभाव एव तत्प्रयोजक इति तस्याभावधीकारणत्वसिद्धिरिति चोदयति—नन्विति।

प्रतियोगितावच्छेदकारोपेऽपि संसर्गाभावधीहेतुः प्रतियोग्यारोपोऽस्त्येव। अवच्छेदकस्य स्वात्यन्ताभावप्रतियोगित्वात्। तथा च तदत्यन्ताभावप्रतीतिरेव स्यान्न घटाद्यन्योन्याभावप्रतीतिरिति दूषयति—न प्रतियोगितेति।

ननु घटत्वात्यन्ताभावस्यैव घटान्योन्याभावत्वात् तत्प्रतीतिरेव घटान्योन्याभावप्रतीतिरित्यत आह—न चेति। वैलक्षण्यमेवाह—भिन्नप्रतियोगितयेति। घटत्वमिह नेति घटत्वतावच्छिन्नघटत्वप्रतियोगिको ऽत्यन्ताभावोऽनुभूयते। इदं घटो नेति घटत्वावच्छिन्न-

न च घटत्वात्यन्ताभाव एव घटभेदः। घटत्वमिह नास्ति, इदं घटो नेति विलक्षणतया भिन्नप्रतियोगितया चानुभूयमानयोरेकत्वानुपपत्तेः। संयोगात्यन्ताभाववदेकस्मिन्नपि तदत्यन्ताभावोपपत्तेश्च। अन्योन्याभावधीसामग्र्या अपि सत्त्वात् कथं तदेकनियम इति चेत्। न, तदा घटत्वविशिष्टघटस्मरणाभावात्। सत्त्वे वा कथं कदाचिदयं घटो न, कदाचिन्नात्र घटत्वमिति प्रतीतिः॥

ननु यत्र घटत्वविशिष्टघटस्मरणानन्तरं घटत्वारोपस्तत्रान्योन्याभावधीसामग्री बलवती। यत्र तु घटत्वस्मरणात् तदारोपः, तत्र तदभाव एव प्रतीयते इति चेत्। न, घटत्वविशिष्टस्मरणेऽपि घटत्वारोपे एकदैव घटघटत्वयोरारोपप्रसङ्गात्।

एतेन घटघटत्वे इति स्मरणानन्तरं यत्र घटत्वारोपस्तत्रान्योन्याभावग्रह इति प्रत्युक्तम्।

---

घटप्रतियोगिकोऽन्योन्याभावोऽनुभूयते। तथा च प्रतियोगिभेदात्तदवच्छेदकभेदाच्च नानयोरैक्यमित्यर्थः। किंच घटत्वपटत्वाधिकरणाभेदेऽपि मूलावच्छिन्नवृक्षे कपिसंयोगाभाववत् पटत्वावच्छिन्ने घटत्वाभावसंभवान्नासौ भेदोऽभेदविरोधीत्याह—संयोगेति। नन्वधिकरणे प्रतियोगितावच्छेदकारोपस्यान्योन्याभावधियं प्रत्यपि हेतुत्वात्कथं घटत्वात्यन्ताभाव एव गृह्यते न घटान्योन्याभाव इत्युक्तमिति शङ्कते—अन्योन्याभावेति। प्रतियोगितावच्छेदकारोपेऽपि प्रतियोगिस्मरणलक्षणकारणाभावान्नान्योन्याभावधीरिति परिहरति—न तदेति। ननु घटघटत्वयोरेकानुभवगोचरत्वाद् घटत्वस्मरणे घटस्मरणमप्यावश्यकमित्याशङ्क्य तथात्वे सामग्रीद्वयसाहित्यनियमान्नियमेनोभयज्ञानं स्यात् न कदाचित्किंचिज्ज्ञानमिति दूषयति—सत्त्वे वेति।

ननु घटविशेषणतया स्मृतघटत्वारोपोऽन्योन्याभावधीहेतुः, तद्विशेष्यतया स्मृतघटत्वारोपस्तु घटत्वात्यन्ताभावधीहेतुरिति नोक्तदोष इति चोदयति—ननु यत्रेति।

अन्योन्याभावधीहेतुघटत्वारोपनिमित्तस्मरणे घटस्यापि विषयत्वात् तस्याप्यारोपः स्यात्। तथा च प्रतियोग्यारोपस्यात्यन्ताभावधीहेतुत्वाद् घटान्योन्याभावप्रतीतिसमये (घटत्वात्यन्ताभावधीसामग्र्यभावेन तदभावेऽपि नियमेन) घटात्यन्ताभावधीः स्यादित्यभिप्रेत्यदूषयति—न घटत्वेति।

ननु घटविशेषणकघटत्वविशेष्यकस्मरणं घटत्वारोप एव हेतुः। तेन च घटान्योन्याभावधीरित्याशङ्क्य तदा घटस्मरणस्यापि घटारोपद्वारा तत्संसर्गाभावधीहेतोर्घटत्वाभावधीहेतोस्तदारोपस्य च सत्त्वान्नान्योन्याभावधीव्यवस्थेत्याह—एतेनेति। अस्तु

अन्योन्याभावग्रहस्थले संसर्गाभावग्रहसामग्र्याः समारोपघटिताया अपि सुलभत्वात् तदुभयाभावस्य नियमेन युगपद् ग्राह्यत्वे च त्वदुक्तसमारोपे न किञ्चिन्मानमस्ति।

अत एवादृष्टादिप्रयुक्तं कदाचिद् घटत्वाभावज्ञानं कदाचिद् घटभेदज्ञानं चेति प्रत्युक्तम्। त्वदुक्तारोपं विनाऽपि ततस्तदुपपत्तेः।

भेदनिरासकश्लोकाः

किं चास्य घटभेदस्य स्थानं भेदिभिरीर्यताम्।
यत्र सत्तां भिदा लब्ध्वाऽसंकीर्णं कुरुते जगत्॥
यत्र प्रतीयते भेदस्तदेवास्याऽऽस्पदं यदि।
अप्रतीतौ सुषुप्त्यादौ विश्वमेकं भवेत्तदा॥
यदा कदाचिद्धिषणा तस्य स्थाननियामिका।
इति चेत् पुरुषेऽपि स्यात्तद्भेदस्तत्प्रतीतितः॥
यथार्थानुभवो यत्र भेदस्यास्पदमेव तत्।
इति चेत् नूनमायातो दुष्टात्माऽन्योन्यसंश्रयः॥

---

तर्ह्यभावद्वयस्यापि नियमेन युगपद् ग्रहस्तत्राह—तदुभयेति। एकैकाभावस्यैव प्रतीत्यन्यथानुपपत्त्यैव ह्यारोपभेदस्त्वया कल्प्यः। प्रतीतियौगपद्ये च स एव न सिद्ध्यति। तदसिद्धौ च तद्धेतुकज्ञानविषयत्वलक्षणाभाववैलक्षण्यमपि न सिद्ध्यतीत्यर्थः। उभयज्ञानकारणारोपे सत्यप्यदृष्टेश्वरादिवशात्कदाचित्किंचित् ज्ञानमित्याशङ्क्याह—अतएवेति। अतः शब्दार्थमेवाह—त्वदुक्तेति।

भेदाश्रयस्यापि दुर्निरूपत्वाद् भेदो मिथ्येत्यभिप्रेत्य पाठसौकर्याय श्लोकैराश्रयदूषणानि संगृह्णाति—किञ्चेत्यादिना।

भेदिभिः—भेदसत्यत्ववादिभिः। आश्रयानिरूपणेऽपि भेदसत्तायाः किमायातमित्यत आह—यत्रेति। स्वाश्रये स्वप्रतियोग्यभेदविरोधिस्वभावस्तत्तद्धर्मव्यवस्थापको जगत्यसंकीर्णव्यवहारहेतुश्च भेदस्तवाभिमतः, स चाश्रयाभावे न सिद्ध्यतीति भावः। यो भेदो यत्र प्रतीयते स एव तस्याश्रय इति शङ्कते—यत्रेति। किं भेदवत्तया प्रतीयमानत्वविशिष्टो भेदाश्रयः, तदुपलक्षितो वा? आद्यं दूषयति—अप्रतीताविति। द्वितीयं शङ्कते—यदेति। धिषणा भेदवत्तया ज्ञानम्। अत्रापि किं भेदवत्ताज्ञानमाश्रयत्वनियामकमुत तत्प्रमा? आद्ये चैत्रे एव चैत्रभेदभ्रमस्य कदाचित्संभवात्सोऽपि स्वप्रतियोगिकभेदाश्रयः स्यादिति दूषयति—पुरुषेऽपीति। द्वितीयमनूद्य दूषयति—यथार्थेत्यादिना। अन्योन्याश्रयमेव विशदयति—यत्रेति। घटे पटभेदसत्त्वे तद्विषयज्ञानस्य प्रमात्वसिद्धिः,

यत्र यस्यास्ति सत्ता तज्ज्ञानं तस्य भवेत्प्रमा ।
प्रमाधीनार्थसत्तायां नान्योन्याश्रयता कथम् ॥
नन्वेवं कुम्भकुड्यादि कुत्र वर्तत इत्यपि ।
चोद्यं नावतरीर्तति मायावादे कथंचन ॥
स्थाणौ स्थाणुभिदाज्ञानं प्रमा वा न भवेत्कथम् ।
भेदप्रमाया विषयो धर्मीभेदश्च नाधिकः ॥
सम्बन्धोऽप्यधिको भाति प्रमायामिति चेत्स कः ।
संयोगादेरयुक्तत्वात्ततोऽन्यस्याप्रसिद्धितः ॥
स्वरूपयोगोऽभावेन भावस्यास्तीति चेन्मतम् ।
न, तद्रूपात् पृथक्कि वा नान्त्ये भ्रान्तिरपि प्रमा ॥

---

तत्सिद्धौ च तद्विषयघटे पटभेदसत्त्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः । उक्तन्यायेन घटाद्याश्रयस्यापि दुर्निरूपत्वाद्घटादेरपि सत्त्वं न स्यादिति चोद्यमिष्टापत्त्या परिहरति—नन्वेवमित्यादिना । मायावादे घटादिकं यत्र प्रतीयते स एव तस्याश्रयः, घटभ्रान्तिविषयस्याप्यनिर्वचनीयघटाश्रयत्वाङ्गीकारादिति भावः ।

किं च भेदप्रमायाः स्थाननियामकत्वे स्थाणौ स्थाणुभेदज्ञानस्यापि प्रमात्वसंभवात् तत्रापि तद्भेदः स्यादित्यभिप्रेत्याह—स्थाणाविति ।

पुरुषे स्थाणुभेदप्रमाया यो विषयः तस्यात्राभावात्कथं प्रमात्वमित्याशङ्क्याह — भेदेति । तथा च स्थाणौ स्थाणुभिदाज्ञानस्यापि स्थाणुरूपो धर्मी तद्भेदश्च विषयः, तयोश्च सत्त्वात्तज्ज्ञानमपि प्रमैवेत्यर्थः । पुरुषे स्थाणुभेदस्य संबन्धोऽपि तद्विषयः, स च तत्रास्ति । स्थाणौ तु स नास्तीति कथं तज्ज्ञानं प्रमेति शङ्कते—संबन्धोऽपीति । स्थाणुभेदस्य पुरुषेण किं संयोगः संबन्धः, समवायो वा, अन्यो वेति विकल्पयति—स क इति । आद्यौ दूषयति—संयोगादेरिति । द्रव्ययोरेव संयोगाद् भावयोरेव समवायाच्चेत्यर्थः । तृतीयं दूषयति—ततोऽन्यस्येति ।

ननु ज्ञानेच्छादौ स्वविषयेण संयोगाद्यतिरिक्तः स्वरूपसंबन्धः प्रसिद्धः, स एव भदभेदिनोरिति शङ्कते—स्वरूपेति । उक्तशङ्कां निषेधति—नेति । तत्र हेतुं वक्तुं स्वरूपसंबन्धः किं संबन्धिभ्यां भिन्नोऽभिन्नो वेति विकल्पयति—तद्रूपादिति । द्वितीये स्थाणुतद्भेदसंबन्धस्यापि तद्रूपस्य सत्त्वात् स्थाणौ तद्भेदधीः प्रमा स्यादित्याह—अन्त्य इति । आद्येऽपि दोषं वक्तुं विकल्पयति—प्रथमेऽपीति । प्रथमं दूषयति—नाग्रिम इति । तत्र हेतुमाह—तस्येति । भावस्याभावेन सम्बन्धाभावेन तदाश्रितत्वायोगात् तत्संबन्धत्वमप्यनुपपन्नमित्यर्थः । द्वितीये प्रतियोगिनो दुर्निरूपत्वात्तादृशाभावोऽपि दुर्निरूप इत्याह—नान्त्य इति ।

**प्रथमेऽपि स किं भावोऽभावो वा नाग्रिमो भवेत् ।**
**तस्याभावेन संबन्धाभावान्नान्त्योऽनिरूपणात् ॥**
**विशिष्टज्ञानहेतुत्वं संबन्धान्तरमन्तरा ।**
**स्वरूपसंबन्ध इति ब्रूषे दोषं तदा शृणु ॥**
**अतीन्द्रियेष्वभावस्य संबन्धो न भवेत् तदा ।**
**विषयत्वविवक्षायामप्रमाऽपि प्रमा भवेत् ॥**
**विशिष्टधीगोचरत्वसत्त्वात्पुरुषभेदयोः ।**

स्वरूपसंबन्धानिरूपणम्

**अथ संबन्धान्तरमन्तरा विशिष्टप्रमागोचरत्वं स्वरूपसंबन्ध इति चेत् । न, घटे घटभेदबुद्धेरपि तव मते प्रमात्वप्रसङ्गात् । न ह्यसंबद्धभावाभावस्वरूपद्वयविषयविज्ञानं किञ्चित्प्रमा किञ्चिन्नेति व्यवस्था युक्ता । विशिष्टबुद्धेः स्वविषयत्वायोगाच्च ।**

---

एवं भेदादिविकल्पेन स्वरूपसंबन्धं दूषयित्वा तल्लक्षणमप्यनूद्य दूषयति—विशिष्टेति ।

संयोगसमवाययोरतिव्याप्तिवारणाय संबन्धान्तरेत्युक्तम् । परमाण्वादावभावज्ञानस्य परोक्षत्वेन तस्य विषयाजन्यत्वात् परमाण्वादेस्तद्गताभावस्य च विशिष्टधीजनकत्वाभावात्संबन्धो न स्यादित्याह—अतीन्द्रियेष्विति । ननु हेतुत्वपदस्थाने विषयत्वपदं प्रक्षिप्यते । तथा च परमाण्वादेरपि विशिष्टधीविषयत्वान्नोक्तदोष इत्याशङ्कामनुवदति—विषयत्वेति । किमत्र विशिष्टज्ञानमात्रविषयत्वं विवक्षितमुत विशिष्टप्रमाविषयत्वम् । आद्ये चैत्रे चैत्रभेदज्ञानमपि प्रमा स्यात् विशिष्टधीगोचरत्वरूपतद्भेदसंबन्धस्य तत्रापि सत्त्वादित्याह—अप्रमाऽपीति । द्वितीयं शङ्कते—अथेति । भेदज्ञानस्य प्रमात्वे सिद्धे तद्विषयत्वरूपसंबन्धसिद्धिः, तत्सिद्धौ च भेदविशिष्टज्ञानस्य प्रमात्वसिद्धिरिति अन्योन्याश्रयः स्पष्ट इत्यभिप्रेत्य दूषणान्तरमाह—न घट इति । भेदज्ञानोत्पत्तेः पूर्वं घटभेदस्य घटे पटे च संबन्धविशेषाभावादुभयत्रापि तज्ज्ञानं प्रमा स्यादप्रमा वा स्यादित्याह—न ह्यसंबद्धेति । किं च विशेषण-विशेष्य-तत्संबन्ध-विषयज्ञानस्यैव विशिष्टज्ञानत्वात्तद्विषयभूतसंबन्धस्य विशिष्टप्रमाविषयत्वरूपत्वे स्वस्यैव स्वविषयत्वप्रसङ्गः । वेद्यज्ञानवादे च तदनुपपन्नमित्यभिप्रेत्याह—विशिष्टबुद्धेरिति ।

यस्य भेदस्य यत् प्रतियोगितावच्छेदकं तदत्यन्ताभावस्तदाश्रयतावच्छेदक इति शङ्कते—नन्विति ।

**ननु प्रतियोगितावच्छेदकधर्मात्यन्ताभाववति भेदस्तिष्ठतीति चेत् तर्हि तदत्यन्ताभाव एव क्व वर्तते इति निरूप्यताम् । न हि धर्मिनिरूपणमन्तरेण धर्माणां प्रामाणिकत्वं संभवति । यत्र प्रमीयते तत्रेत्युक्तौ दत्तो दोषः । प्रतियोगिदेशान्यदेशेऽत्यन्ताभावो वर्तते इति चेत् । न, तथा सति तयोरन्योन्यज्ञानाधीनज्ञानत्वेनान्यतरस्याप्यसिद्ध्यापातात् । अत एव प्रतियोगिव्यतिरिक्ते तदन्योन्याभाव इति प्रत्युक्तम् । व्यतिरेकस्यैवान्योन्याभावत्वाद् आत्माश्रयाद्यापत्तेः ।**

अन्योन्याश्रयपरिहारेण पूर्वपक्षः तन्निरासश्च

**ननु नान्योन्याश्रयादिदोषः । न हि भेदो भेदेन जन्यते, न वा ज्ञायते । न वा तदाश्रयत्वे धर्मिणस्तदपेक्षा । अनादिभेदाश्रयत्वस्याप्यनपेक्षत्वात् । न च भेदा-**

---

भेदाश्रयवदत्यन्ताभावाश्रयस्याप्यसंप्रतिपन्नत्वात्सोऽपि वक्तव्य इत्याह—तर्हीति । अत्यन्ताभावस्य प्रामाणिकत्वादाश्रयनिरूपणं विना किं हीयत इत्याशङ्क्याह—न हीति । तद्वत्तया प्रमीयमाणत्वं तदाश्रयत्वप्रयोजकमित्यङ्गीकारे सुषुप्त्यादौ तदाश्रयो न स्यादित्यादिदोषापत्तिरित्याह—तत्रेति । नन्वत्यन्ताभावस्य यः प्रतियोगी तदधिकरणप्रतियोगिकभेदवत्त्वं तदाश्रयतावच्छेदकमिति शङ्कते—प्रतीयोगीति । एवं सति घटभेदे सिद्धे तदवच्छेदेन घटत्वात्यन्ताभावसिद्धिः, तत्सिद्धौ च तदवच्छेदेन घटभेदसिद्धिरिति परस्पराश्रयः स्यादित्याह—न तथा सतीति । किं च परमते आकाशाद्यत्यन्ताभावस्य प्रतियोगिदेशाप्रसिद्ध्या तदन्यदेशस्याप्रसिद्धत्वेनाऽनाश्रितत्वं स्यादिति द्रष्टव्यम् । ननु घटव्यतिरिक्त एव घटान्योन्याभावाश्रयः । तथा च न घटत्वात्यन्ताभावापेक्षेत्यत आह—अत एवेति । अतः शब्दार्थमेवाह—व्यतिरेकस्येति । यो घटभेदः पटाश्रितः तद्विशिष्टस्यैव पटस्य तदाश्रयत्वे आत्माश्रयः । भेदान्तरविशिष्टे स चेत्सोऽपि भेद एतद्भेदविशिष्टे वर्तते चेदन्योन्याश्रयः । भेदान्तरविशिष्टे चेच्चक्रकापत्तिः । तस्यापि भेदान्तरविशिष्टाश्रयत्वेऽनवस्था स्यादित्यर्थः ॥

ननूक्तान्योन्याश्रयादिर्न दोषः । भेदस्याजन्यतया तदुत्पत्तिप्रतिबन्धकत्वाभावात् प्रतियोगिस्मरणसहकृतानुपलब्ध्यादिनैव तत्तज्ज्ञानसंभवाद् भेदज्ञाने भेदज्ञानानपेक्षणात्, ज्ञप्तिप्रतिबन्धकत्वाभावाच्च । उत्पत्त्यादिप्रतिबन्धक एव हि परस्पराश्रयत्वादिदोषः, अन्यथा प्रमेयत्वाभिधेयादीनां परस्पराश्रयता न स्यादित्यभिप्रेत्य शङ्कते—नन्विति ।

ननु घटेतरस्य घटभेदाश्रयत्वे तदपेक्षाऽस्तीति भेदाश्रयत्वे परस्परापेक्षेति शङ्कां निराकरोति—न वेति । आकाशादौ घटभेदाश्रयत्वस्यानादित्वान्न तत्र घटभेदापेक्षा, पटादिकार्यस्यापि स्वसत्तामात्रेण तदाश्रयत्वात्तत्रापि न तदपेक्षेति भावः । ननु घटभिन्नस्य घटभेदाश्रयत्वाभिधाने भिन्नत्वज्ञानं विना भेदाश्रयत्वज्ञानायोगात्तदाश्रयत्वज्ञप्तौ परस्पराश्रयादिर्दोष इत्यत आह—न चेति । घटादेर्भेदाश्रयत्वाज्ञानेऽपि तज्ज्ञाननिरपेक्ष-

**श्रयत्वज्ञाने पूर्वभेदाश्रयत्वज्ञानमपेक्ष्यते इत्यन्योन्याश्रयादिरिति वाच्यम् । पटादेर्भेदाश्रयत्वज्ञानाभावेऽपि तन्निष्ठभेदस्य प्रमितत्वात् । न हि भेदज्ञानेपटनिष्ठतदाश्रयत्वज्ञानं हेतुरिति चेत् । न, भेदर्धर्मित्वस्यानिरूपणे इदमस्माद् भिन्नमिदं नेति वा व्यवस्थाया आकस्मिकत्वप्रसङ्गात् ।**

**एतेन माभूद्भेदस्य केन चिदाश्रयेण सम्बन्धः, नैतावता तदभावः । अनाश्रितानामपि पदार्थानां भूयसां दर्शनादिति प्रत्युक्तम् । अनाश्रितभेदस्याप्रतीतेः, इदमिदं नेति प्रतीतेश्च । अनाश्रितभेदसिद्धावपि जीवब्रह्मधर्मिकभेदस्यानात्मधर्मिकभेदस्य चासिद्धेश्च । तस्मादसौ स्वतन्त्रो नाभेदविरोधीति न भेदः । आकाशादौ द्रव्यपरिभाषेव तस्यापि भेदपरिभाषायां वा नास्माकमनिष्टम् ।**

---

भेदज्ञानसंभवात्तस्य प्रामाणिकत्वसिद्धिरित्याह—पटादेरिति । भेदज्ञाने तदाश्रयत्वज्ञानानपेक्षामेव दर्शयति—न हीति । भेदज्ञानस्य प्रतियोगिस्मरणसहकृतानुपलब्धिसहितप्रत्यक्षमात्रजन्यत्वादित्यर्थः । भेदाश्रयानिरूपणप्रयुक्तभेदज्ञानप्रमात्वविप्रतिपत्तिर्भेदाश्रयनिरूपणेन निरसनीया । तदनिरासे इदमस्माद् भिन्नमिदं नेतिव्यवस्थाऽयोगात् । तथा च प्रतियोग्यतिरिक्तः प्रतियोगितावच्छेदकात्यन्ताभावाश्रयो वा भेदाश्रयः प्रतियोगितावच्छेदकात्यन्ताभावश्च प्रतियोग्यतिरिक्ते एव वर्तत इत्युक्तौ भेदाश्रयस्य प्रतियोग्यतिरिक्तत्वनिश्चये सत्याश्रयानिरूपणाभावाद् भेदज्ञानस्य प्रमात्वनिश्चयः तन्निश्चये च भेदाश्रयतया प्रतीतस्य प्रतियोग्यतिरिक्तत्वनिश्चय इति परस्पराश्रयादिप्रसङ्गान्न भेदस्य प्रामाणिकत्वसिद्धिरित्यभिप्रेत्य दूषयति—न भेदेति ।

ननु भेदाश्रयानिरूपणेऽपि तस्य न पारमार्थिकत्वक्षतिः । आत्मवत्स्वतन्त्रस्यापि तस्य सत्यतोपपत्तेरित्यत आह—एतेनेति ।

आत्मवत्स्वतन्त्रभेदे किं श्रुतिर्मानमुत प्रत्यक्षादिः ? । नाद्यः । श्रुतौ कुत्रापि स्वतन्त्रभेदाश्रवणादित्याह—अनाश्रितेति । प्रत्यक्षादिना साश्रयस्यैव भेदस्य प्रतीतेर्न स्वतन्त्रभेदस्तद्विषय इत्याह—इदमिति । ननु सत्तावत् प्रत्यक्षादिसिद्धभेदस्याश्रयानिरूपणादेव स्वातन्त्र्यसिद्धिरितिचेत् । न, तस्याश्रितत्ववत् स्वरूपस्याप्यपारमार्थिकत्वेऽपि प्रत्यक्षादितः प्रतीत्युपपत्तिः तत्सत्यत्वमङ्गीकृत्याप्याह—अनाश्रितेति। साश्रयस्यैव भेदस्य स्वाश्रये स्वप्रतियोग्यभेदविरुद्धत्वात्स्वतन्त्रासिद्धित्वात्स्वतन्त्रभेदेऽपि तादृशभेदस्य जीवब्रह्मणोरसिद्धेर्न तदभेदानुपपत्तिरित्यर्थः। किं चाभेदविरोधिन एव भेदव्यवहारविषयत्वात् अस्य चातथात्वान्न भेदत्वमपीत्याह—तस्मादिति। तत्र लौकिकानां भेदव्यवहाराभावेऽपि परीक्षकाणां सोऽस्तीत्याशङ्क्य तस्य परिभाषामात्रत्वात्तावता न तस्य भेदव्यवहारविषयत्वमित्याह—आकाशादाविति । भेदज्ञानस्वरूपपर्यालोचनयाऽपि भेदप्रमा न संभवतीत्याह—किं चेति ।

भेदज्ञानासंभवेन दूषणम्

**किं च भेदज्ञानमपि न संभवति। किमेतौ परस्परभिन्नाविति भेदधीः, अयमिदं न भवति अयमस्माद् भिन्न इति वा ?। सर्वथाऽप्यन्योन्याश्रयः।**

**प्रथमे द्वित्वज्ञानस्य भेदज्ञानाधीनत्वात्, परस्पराभावस्यापि भेदरूपत्वात्। द्वितीये भेदज्ञानं विना परस्य तद्विशिष्टज्ञानायोगात्। एवं भेदत्वज्ञानं विना तद्विशिष्टज्ञानानुपपत्तेः। न च भेदत्वमनुपस्थितमेव प्रकारः। परमते पूर्वोपस्थितस्यैव प्रकारत्वात्। अन्यथा विशेषणज्ञानमन्यत्रापि हेतुर्न स्यात्। ततश्च त्वदभिमतं निर्विकल्पकं न स्यात्।**

---

तदसंभवमेवोपपादयितुं भेदसाधकज्ञानं विकल्पयति—किमेताविति। त्रिविधज्ञानसापेक्षत्वादसंभव इत्याह—सर्वथेति।

एतौ भिन्नावित्यत्र धर्मिविशेषणतया द्वित्वानुभवात्प्रथमं तज्ज्ञानं वक्तव्यं द्वित्वाश्रयभेदे ज्ञात एव द्वित्वज्ञानमिति परस्पराश्रयादित्याह—प्रथम इति।

न च द्वित्वोत्पत्तिमात्रेण तज्ज्ञानसंभवान्न तस्य भेदज्ञानापेक्षेति वाच्यम्। भिन्नाश्रितत्वेनैकत्वद्वयज्ञानमन्तरेण द्वित्वोत्पत्तेरेवायोगात्। अन्यथा दूरस्थवनस्पत्योरपि स्वरूपेणैकत्वद्वयज्ञानात् द्वित्वोत्पत्तिप्रसङ्गात्। तत्राभेदभ्रमो द्वित्वोत्पत्तिप्रतिबन्धक इति चेत्तर्हि यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति न्यायेन भेदनिश्चयस्य द्वित्वोत्पत्तिहेतुत्वात्तदभावे तदुत्पत्तिरेवायुक्ता। द्वित्वस्य यावद्द्रव्यभावित्वमते तु तज्ज्ञानमेवाश्रयभेदज्ञानं विनाऽनुपपन्नम्। अन्यथा दूरस्थवनस्पत्योरपि तज्ज्ञान प्रसङ्गादिति भावः। किं च परस्परं भिन्नाविति परस्परनिरूप्यो भेदः प्रतीयते। परस्परशब्दश्चान्योन्यशब्दपर्यायः, अन्यशब्दार्थश्च भेदविशिष्ट एवेति भेदज्ञाने भेदज्ञानमित्याह—परस्पराभावस्येति। द्वितीये भेदस्य विशेषणतया भानात् परमते विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियमाद् भेदनिर्विकल्पकायोगात्तद्विषयविशिष्टज्ञानान्तरमेव विशेषणज्ञानतया कारणं वाच्यम्। एवं तस्य तस्य विशेषणज्ञानतया भेदविशिष्टज्ञानान्तरापेक्षणादनवस्था इत्यभिप्रेत्याह— द्वितीय इति। एतद् दूषणं पक्षत्रयेऽपि तुल्यम्। किं च पक्षत्रयेऽपिभेदत्वविशिष्टतया भेदस्य भानात्तत्पूर्वंभेदत्वज्ञानं विशेषणज्ञानतया वक्तव्यम्। सप्रतियोगिकभेदत्वेनिर्विकल्पायोगाद्विशिष्टज्ञानान्तरमास्थेयम्। ततश्च पूर्ववदनवस्था, इत्यभिप्रेत्याह—एवमिति। नन्वत एव भेदत्वं पूर्वमज्ञातमेव विशेषणतया भातीत्यङ्गीक्रियत इति चेत् न। तव मते विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वनियमेन तथाङ्गीकारायोगादित्याह—न चेति। तर्हि भेदज्ञाननिर्वाहायोक्तनियम एव त्यज्यत इत्याशङ्क्य तथा सत्येकं संधित्सतोऽपरं प्रच्यवते इत्याह—अन्यथेति।

तृतीयेऽस्मादितिपञ्चम्यर्थः प्रतियोगित्वं किं भेदनिरूप्यो घटादिधर्मस्तत्स्वरूपं वा ?। आद्ये भेदप्रतीतौतन्निरूपितप्रतियोगित्वधीः, ततश्च तद्विशेषितभेदधीरिति परस्पराश्रय एवेत्याह—तृतीय इति।

**तृतीये प्रतियोगित्वग्रहस्य भेदग्रहाधीनत्वात्। न च प्रतियोगित्वं घटादिस्वरूपमेव 'भेदस्य घटः प्रतियोगी'इति भेदेनानुभवात्। पञ्चम्यादिव्यतिरेकेण घटादिपदात्तत्प्रतीतेश्च। किं च यदि घटः पटः स्यात् तद्वदेवोपलभ्येतेति तर्कं विनाऽनुपलब्धेरनन्यथासिद्धत्वाज्ञानान्नाभावरूपभेदनिश्चय इति कथं नान्योन्याश्रयः ?। तस्मान्न प्रत्यक्षेण भेदग्रहः संभवति। अत एव नानुमानादिकमपि तत्र प्रमाणम्। तस्माद्धर्मिप्रतियोगिनोस्तज्ज्ञानयोश्च दुर्निरूपत्वात् स्वरूपतः प्रतीतेश्च विचारासह एवायमन्योन्याभावः कल्पितो भेदव्यवहारविषय इति।**

भेदस्य दुर्निरूपत्वेऽभेदस्यापि तथात्वमित्याक्षेपः

**नन्वेवं भवदभिमतशास्त्रार्थभेदो दुर्निरूपः स्यात्। भेदाभावेन तत्प्रतियोगिकाभावस्यासंभवात्। अभेदेन प्रतिपन्नयोर्धर्मिप्रतियोगित्वज्ञानं ततश्चाभेदज्ञानमिति परस्पराश्रयत्वाच्चेति चेत् न। ब्रह्मस्वरूपातिरिक्तभेदाभावस्याशास्त्रार्थत्वाद् दुर्निरूपताया इष्टत्वात्। अखण्डचिदानन्दस्य भेदाभावस्वरूपस्य ब्रह्मण एव शास्त्रतात्पर्यभूमित्वात्।**

---

द्वितीयं दूषयति न चेति। किञ्च प्रतियोगित्वस्य घटादिमात्रत्वे घटादिवदेव प्रथमादिविभक्त्यन्तघटादिपदैरपि तत्प्रतीतिः स्यात्, न च साऽस्तीत्याह—पञ्चमीति। अपि च घटे पटाभेदानुपलब्धेरनन्यथासिद्धत्वनिश्चयं विना तदभावरूपभेदनिश्चयायोगः, अनुपलब्धेरनन्यथासिद्धत्वनिश्चयश्च यदि घटः पटः स्यात् पटवदेवोपलभ्येतेतितर्कावतारे सत्येवेति। तथा च तत्पूर्वं घटे पटभेदाग्रहे पटवदिति पटसादृश्यग्रहायोगेन तद्घटिततर्कावताराद्यभावापातात् तद्भेदग्रहस्यापि भेदग्रहपुरस्सरतर्कसहकृतानुपलम्भपुरः सरत्वेऽन्योन्याश्रयादिदोषो दुर्निवार इत्याह—किं चेति। प्रत्यक्षसहकारिणो योग्यानुपलम्भादेर्विशेषणज्ञानादेश्चाभावान्न तत्प्रमाणको भेद इत्युपसंहरति—तस्मादिति। उपजीव्यभेदप्रत्यक्षस्य प्रमाणत्वासिद्धेरेव तदुपजीवकानुमानादिकमपि न तत्र मानमित्याह—अत एवेति। भेदस्याप्रामाणिकत्वे कथं साधनादिभेदव्यवहार इत्याशङ्क्य स्वाप्नव्यवहारवदनिर्वचनीयभेदविषय एवेत्याह—तस्मादिति।

भेदस्य दुर्निरूपत्वे तन्निरूप्याभेदस्यापि दुर्निरूपत्वाच्छून्यमेव तत्त्वं परिशिष्येतेति चोदयति—नन्वेवमिति।

किं च किं भिन्नयोरभेदं प्रति धर्मित्वप्रतियोगित्वेऽभिन्नयोर्वा? नाद्यः। व्याघातादित्यभिप्रेत्य द्वितीयं दूषयति—अभेदेनेति। किं ब्रह्मातिरिक्तस्य भेदविरहात्ममात्रस्वभावस्याभेदस्य दुर्निरूप्यत्वमुच्यते उत सच्चिदानन्दमात्रब्रह्मस्वभावाभेदस्य ?, आद्ये इष्टापत्तिरित्याह—न ब्रह्मेति। द्वितीये सच्चिदात्मकस्य स्वतो निष्प्रतियोगिकत्वात्सति भेदभ्रमे भेदाधिष्ठानरूपतदभावतयाऽपि शास्त्रेण स प्रतिपाद्यते। तदभावे तु सदादिरूपेणैवेति नोक्तदोषावकाश इत्यभिप्रेत्याह—अखण्डेति।

**अत एवातिरिक्तभेदाभावानभ्युपगमे वेदान्तानामात्ममात्रप्रमेयतया न प्रत्यक्षादिबाधकता तद्विषयभेदस्य वेदान्तप्रमेयाविरोधात् । न हि भेदप्रपञ्च आत्मना विरुद्ध्यते । न चाद्वितीयात्मा भेदप्रपञ्चविरोधीति वाच्यम् । अद्वितीयशब्दस्यापि तव मते आत्ममात्रार्थत्वादिति निरस्तम् । किं वेदान्तजन्यज्ञानात् प्रत्यक्षादेस्तद्गोचरभेदस्य च निवृत्तिर्न स्यादित्युच्यते किं वा वेदान्तात्तद्गोचरमिथ्यात्वनिश्चयो न स्यादिति ? ।**

**नाद्यः । अविद्याकार्यतया प्रपञ्चस्य ब्रह्मसाक्षात्कारेणाविद्यानिवृत्तौ निवृत्तेः । न द्वितीयः वाचारम्भणादिवाक्यतात्पर्यात्तत्सिद्धेः सत्यादिवाक्यपर्यालोचनयापि त्रिविधपरिच्छेदशून्यं ब्रह्मेति सिद्धौ ब्रह्मैव प्रपञ्चसत्ताविरोद्ध्यभावात्मकं सिद्ध्यतीति तत्रप्रतीयमानस्यापि मृषात्वसिद्धिः ।**

ब्रह्म अभिन्नमितिप्रयोगोपपत्तिः

**नन्वेवं ब्रह्माभिन्नमिति प्रयोगो न स्यात् । एकस्य विशेषणविशेष्यभावानुपपत्तेरिति चेत् न । स्वरूपभूताभेदस्यैव प्रतियोगिघटिततया कल्पितभेदवत्त्वेन**

---

सदादिस्वभावस्यैवात्मनो भेदसत्ताविरोधितदभावात्मनापि शास्त्रेण प्रतिपाद्यमानत्वादेव चोद्यान्तरमपि निरस्तमित्याह—अत एवेति । ननु "एकमेवाद्वितीयम्" इत्यादिश्रुतेः सजातीयादिभेदरहितात्मपरत्वाद्वेदप्रत्यक्षादिबाधकतेत्याशङ्क्य तस्याप्यात्मातिरिक्तभेदाभावागोचरत्वादात्ममात्रस्य भेदाविरोधित्वात् मैवमित्याह—न चाद्वितीयेति । वेदान्तानामात्मतत्त्वमात्रपरत्वे किं सविलासाविद्यानिवृत्तिरूपबाधहेतुज्ञानजनकत्वं न स्यादित्युच्यते, किं वा प्रपञ्चगोचरमिथ्यात्वनिश्चयरूपबाधजनकत्वं न स्यादिति विकल्पयति—किं वेदान्तेति ।

वियदादिप्रपञ्चस्यात्मविषयाज्ञानकार्यत्वाद्वेदान्तजात्मतत्त्वसाक्षात्कारात् तदज्ञाननिवृत्तौ तत्कार्यनिवृत्तेरपि संभवान्न प्रथमः कल्प इत्याह—नाद्य इति ।

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिवाक्यैर्घटशरावोदञ्चनादिविकारजातं वाचा व्यवह्रियते केवलं तत्तन्नामधेयव्यतिरेकेण तदेव नास्ति । मृदात्मककारणमेव सत्यं, न कार्यरूपमित्युक्त्वा "एवं सौम्य स आदेशो भवति" इति दार्ष्टान्तिकश्रुत्या जगत्कारणसदात्मैव सत्यः, तत्कार्यं जगदसत्यमित्यवान्तरतात्पर्येणाभिधानाद्वेदान्तानां प्रपञ्चमिथ्यात्वनिश्चायकत्वरूपमपि बाधकत्वमस्तीत्याह—न द्वितीय इति । अनन्तपदयुक्तसत्यादिवाक्यादपि सद्रूपब्रह्मणस्त्रिविधपरिच्छेदराहित्यप्रतिपत्तेर्जडाजडयोर्वास्तवतादात्म्यायोगात् प्रपञ्चमिथ्यात्वनिश्चयपुरस्सरमेव तदानन्त्यसिद्धिरित्याह—सत्यादीति ।

अभेदब्रह्मणोर्भेदाभावे तयोर्विशेषणविशेष्यभावायोगाद्ब्रह्माभिन्नमिति प्रयोगानुप-

**तदुपपत्तेः। एतेनास्तु तर्ह्यभेदवद्भेदोऽपि स्वरूपमिति नवीनोक्तं प्रत्युक्तम्। स्वरूपं व्यक्तिः, असाधारणो धर्मो वा ?। नाद्यः। शुक्त्यादौ रजताद्यनारोपप्रसङ्गात्। इदमिति ज्ञानस्य शुक्तिविषयत्वेन भ्रमविरोधिभेदस्य गृहीतत्वात्। ब्रह्मणि तु स्वरूपप्रकाशाविरुद्धानादिभावरूपाज्ञानाख्यविवेकाग्रहाद् भेदादिभ्रमः।**

**न द्वितीयः। स्वर्णत्वेन स्वर्णं जानतां तस्य पृथिव्याद्यभेदसंशयाद्यभावप्रसङ्गात् भेदाऽग्रहाभावात्। घटत्वाद्याश्रयः पटादिभ्यो भिन्न इति प्रयोगाद्यनुपपत्तेश्च। घटत्वस्यैव तद्भेदत्वात्। भेदस्य स्वरूपत्वे द्रव्यगुणादिषु घटादिभेदानु-**

---

पत्तिरित्याशङ्क्य परमते भेदो भिन्न इतिवत् कल्पितभेदेनापि तदुपपत्तिरित्याह--नन्वेवमित्यादिना। अभेदस्य निष्प्रतियोगिकभावस्वरूपत्वे भेदस्यापि तथात्वान्नोक्तान्योन्याश्रयादिदोष इति चोद्यं वक्ष्यमाणविधया निरस्तमित्याह--एतेनेति। भेदोऽपि स्वरूपमित्यत्र स्वयं च तद्रूपं चेति वस्तुमात्रं विवक्षितं, स्वस्य रूपं स्वरूपमित्यसाधारणधर्मो वा ? इत्यभिप्रेत्य विकल्पयति--स्वरूपमिति। वस्तुमात्रस्यैव तदितरभेदत्वे तद्ग्रहस्यैव भेदाग्रहविरोधित्वात् तस्य च भेदभ्रमविरोधित्वात् कुत्रापि भ्रमो न स्यादित्याह--नाद्य इति। सिद्धान्तेऽपि ब्रह्मस्वरूपाभेदे स्वतः प्रकाशमाने कथं भेदभ्रम इत्याशङ्क्य तत्प्रकाशस्य तद्विषयभावरूपाज्ञानाविरुद्धत्वात्तन्मूलभ्रमोपपत्तिरित्याह--ब्रह्मणीति।

द्वितीयेऽप्यसाधारणधर्मग्रहस्यैव भेदग्रहत्वात्स्वर्णे स्वर्णत्वग्रहस्य पृथिव्यादिभेदग्रहत्वाद्भेदाग्रहरूपकारणाभावात् तत्र पृथिव्याद्यभेदसंशयो न स्यादित्याह--न द्वितीय इति।

ननु स्वर्णे तेजस्त्वमेवेतरभेदः तदज्ञानादेव पृथिव्याद्यभेदसंशयादिरिति चेत् तर्हि घटादिभ्योऽपि भेदाग्रहाग्रहात्तदभेदसंशयोऽपि स्यात्। ननु स्वर्णे घटादिभ्यो भेदः स्वर्णत्वमेव तस्य तत्र ज्ञातत्वान्न घटाद्यभेदसंशयः पृथिवीत्वाद्यवच्छिन्नप्रतियोगिकभेदस्तु स्वर्णे तेजस्त्वं तस्य तत्राज्ञानात्तदभेदसंशयादिरिति चेत् न। स्वर्णत्वतेजस्त्वयोः स्वतो निष्प्रतियोगिकत्वेनैवं व्यवस्थायां मानाभावात्। अन्यथा पृथिवीत्वादेरपि तेजस्त्वावच्छिन्नप्रतियोगिकत्वापातेन तेजस्त्वज्ञाने तदवच्छिन्नप्रतियोगिकपृथिवीत्वज्ञानं, तज्ज्ञाने च तदवच्छिन्नप्रतियोगिकतेजस्त्वज्ञानमिति परस्पराश्रयः स्यात्। किं चैवमपि स्वर्णस्य स्वर्णान्तराद्भेदो न स्यात्। तत्रापि तत्स्वर्णत्वधर्म एवेतरस्वर्णाद्भेद इति चेत् किं तद्धर्मेऽपि कश्चिदसाधारणधर्मोऽस्ति, न वा ?। अन्त्ये तस्येतरभेदो न स्यात्। आद्ये तस्याप्यसाधारणधर्मान्तरमित्यनन्ताप्रामाणिकधर्मकल्पनागौरवमिति भावः। असाधारणधर्मस्यैवेतरभेदत्वे तदनुवादेनेतरभेदविधायकशब्दप्रयोगस्तत इतरभेदानुमानं च न स्यादित्याह--घटत्वादीति। किं च पटादिद्रव्येषु गुणादिपदार्थेषु च घटभेदो घटभेद इत्येकाकारधीर्दृश्यते। वस्तुनस्तदसाधारणधर्मस्य वा भेदत्वे तेषामन्योन्यविलक्षणत्वेनैकाकारबुद्ध्यनुपपत्तिरित्याह--भेदस्येति। अन्योन्याभावो भेद इति कल्पं अभेदप्रसङ्गागत-

**गतप्रतीत्यनुपपत्तेश्च । नापि वैलक्षण्यं भेदः । असाधारणधर्मनिरासेनैव निरस्तत्वात् । एकस्याप्यात्मनः परमते बुद्धयाद्यनेकलक्षणवत्वाच्च ।**

**विरुद्धलक्षणयोगित्वं वैलक्षण्यमिति चेत् । यदि परस्परात्यन्ताभावसमानाधिकरणत्वं विरोधः, तर्हि सुखादावपि समानम् । अथ परस्परात्यन्ताभावेनैव समानाधिकरणत्वं, तन्न । घटादौ वैलक्षण्यज्ञानं विनाऽत्यन्ताभावप्रतियोगित्वस्य दुर्निरूपत्वात् । अथ परस्पराश्रयभेदसमानाधिकारणत्वं, न, परस्पराश्रयात् ।**

**तस्माद् जीवेशभेदे प्रमाणाभावात् तस्य स्वरूपतोऽपि दुर्निरूपत्वाच्चन्द्रादिभेदवद् भ्रान्तिमात्रशरीरो जीवब्रह्मभेद इति । अभेदे च श्रुतिः प्रमाणमुक्तम् ।**

---

स्वरूपभेदं च निराकृत्य वैलक्षण्यं भेद इति कल्पं निराकरोति—नापीति । विविधलक्षणवत्त्वं हि वैलक्षण्यम् । लक्षणं चसाधारणधर्म्म एव । तस्य च भेदत्वनिरासादेवेदमपि निरस्तमित्यर्थः । किं विविधलक्ष योगित्वमेव वैलक्षण्यं विरुद्धलक्षणयोगित्वं वा ? । आद्ये परमते एकस्याप्यात्मनोऽनेकत्वप्रसङ्ग इत्याह—एकस्येति । द्वितीयं शङ्कते—विरुद्धेति ।

घटत्वपटत्वादिलक्षणस्य किं परस्परात्यन्ताभावेन सामानाधिकरण्यं विरोध उत तेनैव सामानाधिकरण्यं, किं वा परस्पराश्रयभेदसामानाधिकरण्यम् ? । आद्ये बुद्धिसुखदुःखादीनामव्याप्यवृत्तित्वेन परस्परात्यन्ताभावसमानाधिकरणानां विरुद्धलक्षणत्वेन तदधिकरणभेदप्रसङ्ग इत्यभिप्रेत्याह—यदीति । द्वितीयं शङ्कते—अथेति । अत्र परस्परासमानाधिकरणत्वमेवकारार्थ इति वक्तव्यम् । असमानाधिकरणत्वं च भिन्नाधिकरणत्वम् । तथा च घटत्वस्य स्वाश्रयभिन्नाधिकरणकपटत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं पटत्वेन विरोध इति सिद्धयति । एवं च घटपटयोर्भेदसिद्धौ घटत्वस्य स्वाश्रयभिन्नाधिकरणकपटत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपविरोधसिद्धिः, तत्सिद्धौ च विरुद्धलक्षणरूपभेदसिद्धिरित्यन्योन्याश्रय इत्याह—न घटादाविति । तृतीयं शङ्कते—अथेति । अत्र परस्पराश्रयः स्पष्ट एवेति दूषयति—नेति । भेदे प्रमाणादिनिराकरणफलमाह—तस्मादिति । अभेदेऽपि मानाभावात्सोऽप्यपरमार्थ इत्याशङ्क्य "नान्योऽतोऽस्ति" इत्यादिश्रुतेस्तत्परताया निरूपितत्वात्सा तावत्तत्र मानमित्याह—अभेद इति ।

अनुमानमप्यभेदे मानमित्याह—अनुमानमिति । अत्र चान्तःकरणातिरिक्तोऽहमनुभवे प्रकाशमानः पक्षः । तथा च मुक्तिरूपस्यात्मनो मुक्त्यन्वयित्वाभावात् पक्षासिद्धिरिति न शङ्कनीयम्—ब्रह्माभिन्नमिति । ब्रह्मभेदरहितमित्यर्थः । तथा च परमते भेदप्रतियोगिकाभावे तदभावान्तराभावेऽपि तत्स्वरूपविशेष एव यथा प्रतियोगिरूपभेदरहित इत्युच्यते, एवं ब्रह्मभेदाभावस्वरूप एवात्मा स्वातिरिक्तभेदाभावाभावेऽपि ब्रह्मभेदरहित इति संभवान्न बाध इति द्रष्टव्यम् ।

ननु चेतनत्वं जातिरुपाधिर्वा ? । नाद्यः । ऐकात्म्ये तदयोगात् । न द्वितीयः । तदनिरूपणादित्यत आह—चेतनत्वं चेति ।

जीवब्रह्माभेदे अनुमानानि

**अनुमानमपि—मुक्त्यन्वयिजीवस्वरूपं ब्रह्माभिन्नं चेतनत्वाद् ब्रह्मवत् ।**

**चेतनत्वं च ज्ञातृत्वम् । तच्च सर्वज्ञे ब्रह्मणि जीवे च नासिद्धम् । अथवा प्रकाशत्वादिति हेतुः । न चासिद्धिः । साधितत्वात् । न च पक्षदृष्टान्तयोर्भेदे बाधः, अभेदे च दृष्टान्तासिद्धिरिति वाच्यम् । कल्पितभेदेन दृष्टान्तोपपत्तेः, तस्य स्वाभावाविरुद्धत्वेन बाधाभावाच्च । न चाप्रयोजकत्वम् । अबाधितचेतननानात्वाभ्युपगमे गौरवात्, श्रुतिविरोधाच्च ।**

जीवब्रह्माभेदे मानान्तराणि

**जीवो ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगिभेदप्रतियोगी, ब्रह्माति-**

---

ज्ञातृत्वं नाम ज्ञानाश्रयत्वम् । तच्च ज्ञानरूपे जीवे ब्रह्मणि चासंभवीत्याशङ्क्य वस्तुतस्तस्यासंभवेऽपि कल्पितभेदाधीनस्य व्यवहारसमर्थस्य ज्ञातृत्वस्योभयत्रापि संभवान्नोक्तदोष इत्यभिप्रेत्याह—तच्चेति । ज्ञातृत्वापेक्षया ज्ञानत्वस्य लघुत्वात्स एव वा हेतुरित्याह–अथ वेति । न च परमते जीवस्य ज्ञानाश्रयत्वात्तत्र ज्ञानत्वमसिद्धमिति वाच्यम् । ज्ञानात्मनोरभेदस्य साक्षिविवेके साधितत्वादित्याह—न चेति ।

नन्वत्र पक्षदृष्टान्तयोर्भेदोऽस्ति न वा ? । आद्ये भिन्नयोरभेदसाधने बाधः । द्वितीयेऽपि किं पक्षस्य दृष्टान्तेऽन्तर्भावो, दृष्टान्तस्य वा पक्षे ? । आद्ये दृष्टान्तस्य निश्चितसाध्यवत्त्वात् पक्षत्वाभावः, द्वितीये पक्षस्य संदिग्धसाध्यवत्त्वाद् दृष्टान्तत्वाभाव इति चेत्; न । "सागरः सागरोपम" इत्यादिवत्कल्पितभेदेनापि पक्षदृष्टान्तभावोपपत्तेः, इत्याह—न चेत्यादिना । ननु भिन्नयोरभेदस्य विरुद्धत्वात् तत्साधने बाध इत्याशङ्क्य भेदस्याभेदसमसत्ताकत्वाभावान्न तेन विरोधोऽतो न बाध इत्याह—तस्येति । हेतुद्वयस्याप्रयोजकत्वं निराकरोति—न चेति । गौरवादिति । चेतननानात्वस्याप्रामाणिकत्वादेरुक्तत्वादप्रामाणिकं गौरवमेव विपक्षे बाधकमिति भावः । भेदस्य वास्तवत्वे तन्निषेधश्रुतिप्रामाण्यभङ्गश्च स्यादित्यभिप्रेत्याह—श्रुतीति ।

जीवब्रह्माभेदे प्रपञ्चसाध्यकानुमानमप्याह—जीव इत्यादिना ।

ब्रह्मणि स्वसत्ताविरोधीति । स्वस्य भेदस्य ब्रह्मण्यबाध्यत्वरूपसत्त्वविरोधी योऽत्यन्ताभावस्तत्प्रतियोगी यो भेदस्तत्प्रतियोगीत्यर्थः । जीवप्रतियोगिकभेदस्य जीवे स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगित्वेन सिद्धसाधनतावारणाय ब्रह्मणीत्युक्तम् । ब्रह्मण्यारोपिताभावप्रतियोगिभेदप्रतियोगित्वेनार्थान्तरतावारणाय, भेदाभावस्य ब्रह्मरूपत्वमते बाधवारवारणाय वा स्वसत्ताविरोधीत्युक्तम् । भेदात्यन्ताभावः प्रतियोगितादात्म्यं, प्रतियोगितावच्छेदकधर्मो वेति मतेन साध्यान्तरमाह—ब्रह्मातिरिक्तेति । तथा च ब्रह्मातिरिक्तानधिकरणकजीवरूपात्यन्ताभावप्रतियोगिभेदप्रतियोगित्वं जीवे परमतेऽप्यस्तीति सिद्धसाधन-

**रिक्तानधिकरणकात्यन्ताभावप्रतियोगिभेदप्रतियोगी, ब्रह्मनिष्ठात्यन्ताभावप्रतियोगिभेदप्रतियोगी, स्वस्यासंसार्यभेदाविरोधिभेदप्रतियोगी, ब्रह्मनिष्ठभेदप्रतियोगी न भवतीति वा, पदार्थत्वात् चैतन्याभाववन्मात्रवृत्तिधर्मानधिकरणत्वाद्वा ब्रह्मवत् ।**

---

मिति न शङ्कनीयम् । अत्र जीवप्रतियोगिकभेदात्यन्ताभावस्य जीवतादात्म्यादिरूपस्य जीवब्रह्मणोर्वास्तवभेदे ब्रह्मातिरिक्तानधिकरणकत्वायोगात्तदभेदसिद्धिः । आरोपिताभावोऽधिष्ठानातिरिक्तस्तदाश्रित इति मतेन साध्यान्तरमाह--ब्रह्मनिष्ठेति । न चात्र जीवप्रतियोगिकभेदस्य ब्रह्मण्यरोपितात्यन्ताभावप्रतियोगित्वेनार्थान्तरतेति वाच्यम् भेदप्रमाविरोधेन ब्रह्मणि तदभावारोपायोगादित्युक्तत्वात् । परमते आरोपस्यासद्विषयत्वेनाऽऽरोपितस्यापि भेदाभावस्य ब्रह्मनिष्ठत्वायोगादिति भावः । मतद्वयसाधारणं साध्यान्तरमाह--स्वस्येति । स्वशब्दः समभिव्याहृतपरः स्वस्यासंसारिणो योऽभेदः तस्याऽविरधिनी या भेदप्रतियोगिता तद्वानित्यर्थः । अत्राप्यारोपिताभेदेनार्थान्तरता पूर्ववन्निरसनीया । घटादेरप्यसंसारिस्वाभेदप्रतियोगित्वात् न तत्र व्यभिचारः ।

एवं स्वाभिमताभेदं प्रसाध्य पराभिमतभेदनिषेधाय साध्यान्तरमाह--ब्रह्मनिष्ठेति । ब्रह्मनिष्ठसत्यभेदप्रतियोगी नेत्यर्थः । न च सिद्धान्ते निषेध्याप्रसिद्धिर्दोषः । परप्रसिद्धिमात्रेण निषेधोपपत्तेः ।

अथ वा यथाश्रुतमेव साध्यमस्तु । न च जीवस्य ब्रह्मण्यारोपितभेदप्रतियोगित्वाङ्गीकारात्तदभावसाधने बाध इति वाच्यम् । जीवे तादृशभेदप्रतियोगित्वस्यारोपितत्वेन तदभावाविरोधात् ।

ननु घटादौ ब्रह्मनिष्ठभेदप्रतियोगित्वं नारोपितं किंतु रूपादिवत्तदवच्छिन्नचैतन्ये एव । इतरथा घटज्ञानादेव तन्निवृत्तिप्रसङ्गात् । तथा च घटे तदभावाभावाद् व्यभिचार इति चेत्, न । द्वितीयहेतोरेवैतत्साधकत्वेन विवक्षितत्वादिति भावः ।--चैतन्याभाववदिति । चैतन्याभाववद्घटादि तन्मात्रवृत्ति घटत्वादि तदनधिकरणत्वादित्यर्थः । धर्मानधिकरणत्वस्य परमतेऽसिद्धत्वाच्चैतन्येत्यादि विशेषणम् । न चासिद्धिवारकस्यैतस्य हेतुविशेषणत्वमयुक्तमिति वाच्यम् । विशेष्यमात्रस्य कुत्राप्यसिद्धत्वेन तेन विना व्याप्तिग्रहस्याप्यसंभवात्, तद्ग्रहेऽपि तस्योपयुक्तत्वात् ।

ननु सिद्धान्ते चिद्रूपात्मनश्चैतन्याभाववत्त्वं वाच्यम् । अत्यन्ताभावस्य प्रतियोगिवृत्तित्वनियमात् । इतरथा घटेऽपि घटः स्यात् । तथा चात्मधर्मस्य चैतन्याभाववद्वृत्तित्वात्तदनधिकरणत्वमात्मन्यसिद्धमिति चेन्न । अभावस्य स्वाभावानधिकरणत्ववद्भावस्यापि स्वाभावानधिकरणत्वात् । न चाभावानधिकरणस्य प्रतियोग्यधिकरणत्वनियमः । घटाभावे व्यभिचारात् । चिद्रूपात्मनश्चैतन्याभाववत्त्वेऽपि तद्वृत्तिधर्माणां तत्रारोपितत्वेन तदनधिकरणत्वस्यापि संभवादिति भावः । "ब्रह्म जीवे स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगिभेदप्रतियोगि, जीवातिरिक्तानधिकरणकात्यन्ताभावप्रतियोगिभेदप्रतियोगि,

**एवं ब्रह्मपक्षकानुमानम् । जीवप्रतियोगिको भेदः ब्रह्मणि स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगी भेदत्वाद् ब्रह्मभेदवत् । एवं ब्रह्मभेदपक्षकानुमानम् ।**

ब्रह्मणो घटभेदे व्यभिचारपरिहारः

**न च घटादिभेदे व्यभिचारः तस्य पक्षसमत्वात् । तत एव तत्रापि साध्यसिद्धेः । यद्वा जीवो जीवत्वे सति ब्रह्मप्रतियोगिकभेदवान्न भवति पदार्थत्वात्, घटादिवत् तर्कसद्भावे विशिष्टव्यतिरेकिणोऽपीतरानुमानवत् स्वसाध्यसाधकत्वात्, तर्काभावेऽन्यस्याप्यनुमानस्य स्वसाध्यासाधकत्वात् । तर्कश्चात्रोक्त एव ।**

**अत एव प्रपञ्चो जडत्वे सति ब्रह्मप्रतियोगिकभेदवान्न भवति पदार्थत्वात्**

---

जीवनिष्ठात्यन्ताभावप्रतियोगिभेदप्रतियोगि, स्वस्यासर्वज्ञाभेदाविरोधिभेदप्रतियोगिताकं, जीवनिष्ठभेदप्रतियोगि न भवतीति वा । तत एव, जीववत्" इत्यपि प्रयोक्तव्यमित्याह—एवमिति । भेदपक्षकानुमानमप्याह—जीवेति । ब्रह्मप्रतियोगिकभेदे सिद्धसाधनतावारणाय जीवप्रतियोगिक इत्युक्तम् । अत्र जीवपक्षकाद्यसाध्यवत् साध्यविशेषणकृत्यं द्रष्टव्यम् । ब्रह्मप्रतियोगिकभेदो जीवे स्वसत्ताविरोध्यत्यन्ताभावप्रतियोगी भेदत्वात् जीवभेदवदित्यपि प्रयोक्तव्यमित्याह—एवमिति ।

ननु ब्रह्मणो जीवेनेव घटादिनाऽभेदाभावात्तत्र घटभेदः सत्य एव । तथा च तत्र व्यभिचार इति । नेत्याह—न चेति ।

घटादिवत्तत्प्रतियोगिकभेदस्याप्यनिर्वचनीयत्वात् पक्षसमत्वं, तथा च न तत्र व्यभिचार इत्यर्थः । घटादिभेदस्य पक्षसमत्वे तत्र केन हेतुना साध्यसिद्धिरित्याशङ्क्यास्मादेव हेतोरित्याह—तत एवेति । अनेन न्यायेन पदार्थत्वादिति हेतोरपि घटादौ व्यभिचारशङ्का निरसनीयेति भावः । विशिष्टव्यतिरेकिणापि जीवे ब्रह्माभेदाभावं साधयति—यद्वेति । घटादौ साध्यवैकल्यपरिहाराय जीवत्वे सतीत्युक्तम् । जीवत्वविशिष्टब्रह्मप्रतियोगिकभेदवत्त्वस्याभावो जीवत्वाभावाद् ब्रह्मप्रतियोगिकभेदवत्त्वाभावादुभयाभावाद्वा सिध्यति । घटादौ जीवत्वरूपविशेषणाभावाद्विशिष्टाभावसिद्धिः । जीवे तु विशेष्याभावमादाय विशिष्टाभावसिद्धावर्थाज्जीवत्वस्याप्यभावसिद्धिः । विशिष्टव्यतिरेकिणः सर्वत्रापि प्रसरादतिप्रसङ्गेन न प्रामाण्यमित्याशङ्क्य सर्वत्र तर्काभावान्नातिप्रसङ्ग इत्यभिप्रेत्याह—तर्केति । तर्हि प्रकृतसाध्येपि तर्काभावादप्रयोजको हेतुरित्याशङ्क्य लाघवाद्यनेकतर्कानुगतत्वान्मैवमित्याह—तर्कश्चेति ।

प्रकृतसाध्यस्य तर्कसध्रीचीनत्वादेव तद्रहिताभाससाम्यमपि नेत्याह—अत एवेति । नन्वत्रापि लाघवतर्कोऽनुकूलोऽस्तीत्याशङ्क्य किं प्रपञ्चे ब्रह्मप्रतियोगिकः पारमार्थिको भेदो निषिध्यते उत कल्पितः ? । आद्येऽद्वैतवादिमते सिद्धसाधनमित्याह—वास्तवेति । द्वितीये प्रत्यक्षप्रतीतलौकिकवैदिकव्यवहारविरोधाल्लाघवतर्क एव नावतरति । तथा

**जीववदित्याभाससाम्यं प्रत्युक्तम्। वास्तवभेदनिषेधे सिद्धसाधनात्, कल्पितभेदनिषेधे प्रत्यक्षादिबाधात्, बाधितेऽर्थे लाघवानवतारात्। न चात्रापि प्रत्यक्षबाधः। तस्याबाधिताभेदाविरोधात्।**

**एतेन जीव एव विशिष्टप्रसिद्धिरिति तत्रैव कथं तदभावसाधनमिति प्रयुक्तम्। रजतवत्यपि शुक्तिस्थले तन्निषेधवदुपपत्तेः। जीवे ब्रह्मप्रतियोगिककल्पितभेदाभावानुमानमपि प्रत्यक्षादिविरोधेन प्रत्याख्येयम्। एतेन जीवानामप्यन्योन्यं भेदो निरस्तः।**

नवीनशङ्कानिरासः

**यत्त्वत्र नवीनोक्तं "चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् मैत्राननुसंहितदुःखाननुसंधातृत्वाद् घटवत्" इति, तदसत्। सिद्धसाधनत्वात्। न हि चैत्रशब्दाभिधेयशरीरविशिष्टात्मज्ञानबाध्यं मैत्रभेदमाचक्षते वेदान्तिनः। ननु**

---

चैतत्साध्ये हेतुरप्रयोजक एव इत्यभिप्रेत्याह--कल्पितेति। जीवेऽपि ब्रह्मभेदनिषेधे प्रत्यक्षबाधादितुल्यमित्याशङ्क्य तस्य व्यावहारिकभेदविषयस्य न पारमार्थिकाभेदेन विरोध इत्याह--न चात्रापीति।

ननु जीवत्वे सति ब्रह्मप्रतियोगिकभेदवत्त्वस्यान्यत्राभावाद् जीवे एव प्रसिद्धिर्वक्तव्या, तथा च तत्र तस्य प्रामाणिकत्वेऽप्रामाणिकत्वे वा निषेधानुपपत्तिरिति चोद्यमयुक्तमित्याह--एतेनेति।

एतेनेत्येतद्विवृणोति—रजतवत्यपीति। न च शुक्तौ देशान्तरीयरजतमेव निषिध्यत इति वाच्यम्। तत्र तस्य प्रसक्त्यसंभवेन निषेधायोगात्, अन्यथाख्यातेर्निरसिष्यमाणत्वात्। न चाभासप्रसक्त्यैव तत्प्रसक्तिरिति वाच्यम्। अन्यप्रसक्तेरन्यविषयत्वेऽतिप्रसङ्गात्, अनिर्वचनीयरजतस्य स्वाधिष्ठाने पारमार्थिकस्वात्यन्ताभावाविरोधेन तत्र त्रैकालिकनिषेधस्य तद्विषयत्वोपपत्तौ देशान्तरीयरजतविषयत्वकल्पनायोगाच्चेति भावः। जीवाः परमात्मनो व्यवहारतोऽपि न भिद्यन्ते आत्मत्वात् परमात्मवदितिनवीनोक्ताभाससाम्यमपि निरस्तमित्याह--जीव इति। अहमर्थातिरिक्तजीवस्याद्वितीयब्रह्माभिन्नत्वात्प्रतिशरीरं भेदे प्रमाणाभावाच्च जीवनानात्वमपि निरस्तमित्याह—एतेनेति।

जीवभेदे परोक्तप्रमाणं दूषयितुमनुवदति—यत्त्वत्रेति। किं चैत्रपदेन शरीरविशेषविशिष्ट आत्मा विवक्षितस्तदुपहितस्तदुपलक्षितो वा?। आद्यं दूषयति—तदसदिति। द्वितीयं शङ्कते—नन्विति। धर्मिशब्देन प्रकृतपरामर्शित्वस्य त्वयैवोक्तत्वाच्छरीरोपहितात्मैव धर्मिशब्दार्थो वक्तव्यः। तथा च तन्निष्ठभेदस्य मिथ्यात्वेऽपि उपहितात्मज्ञानबाध्यत्वानभ्युपगमात्सिद्धसाधनमित्याह— न धर्मीति।

चैत्रशब्देन तत्संबन्ध्यात्मैव परामृश्यत इति चेत्, न। धर्मिपदेनापि शरीरोपहितात्मन एव परामर्शे चैत्रनिष्ठभेदस्य तज्ज्ञानानिवर्त्यत्वाभ्युपगमेन सिद्धसाधनत्वात्।

भेदहेत्वज्ञानविरोधिब्रह्मज्ञानस्यैव भेदनिवर्तकत्वात्। अथ चैत्रस्य यत्स्वरूपं शुद्धचिदात्मरूपं तदेव धर्मीति चेत्, न।

यथा नद्यः स्पन्दमानाः समुद्रे—
ऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम्॥

इति निखिलस्यापि भेदस्य ब्रह्मज्ञानबाध्यत्वश्रुतिविरोधात्, चैत्रस्य मैत्रानुसंहितदुःखाननुसंधानस्यौपाधिकभेदेनोपपत्तेरप्रयोजकत्वाच्च।

उपाधिभेदेऽप्यनुसन्धानपूर्वपक्षः

ननु हस्तपादाद्युपाधिभेदेऽप्यनुसंधानं दृश्यते 'पादे मे वेदना' 'शिरसि मे सुखम्' इति। न चावयवभेदेऽप्यनुसंधानप्रयोजकशरीरस्यैकत्वात्तत्रानुसंधानम्। अत एव गर्भस्थस्य न मातृसुखाद्यनुसंधानमिति चैत्रादिशरीरभेदान्नान्यानुभूताद्यनुसंधानप्रसक्तिरिति वाच्यम्। जातिस्मृतिमतो जन्मान्तरीयस्याप्यनुसंधानदर्शनादिति चेत्।

---

नन्वात्माज्ञानप्रयुक्तभेदस्यात्मज्ञानबाध्यत्वादुपहितस्यात्मत्वात्कथं तज्ज्ञानेन न
तद्बाध इत्यत आह—भेदेति।
भेदहेतुत्वम्-भेदप्रयोजकत्वम्। उपहितस्य वस्तुतोऽनुपहितादभेदेऽपि तेन रूपेण
जीवेश्वरभेदप्रयोजकाज्ञानाविषयत्वादुपहितज्ञानस्य भेदप्रयोजकाज्ञानानिवर्तकत्वेन भेद-
बाधकत्वायोगात्। अज्ञानविषयप्रत्यग्ब्रह्मैक्यज्ञानस्यैव भेदप्रयोजकाज्ञाननिवर्तनेन भेद-
बाधकतेत्यर्थः। तृतीयं शङ्कते-अथेति। चैत्रशरीरोपलक्षितचिदात्मन एव मैत्रशरीरेऽपि
दुःखानुसंधातृत्वादसिद्धो हेतुरित्यभिप्रेत्य दूषयति—नेति।
आत्मतत्त्वज्ञानादभिधानाभिधेयमात्रविलयश्रवणाज्जीवभेदस्यात्मज्ञानाबाध्यत्व-
साधनं बाधितविषयं चेत्याह—यथा नद्य इति। पक्षत्रयेऽपि साधारणं दोषमाह—चैत्रस्येति।
ननु चैत्रस्य मैत्रप्रतियोगिकौपाधिकभेदमात्रान्नतदीयदुःखाननुसंधातृत्वमुपपद्यते सत्यप्यौ-
पाधिकभेदे यस्य मे पादे वेदना तस्य मे शिरसि सुखमित्येकस्यैवोभयानुसंधानदर्शनात्।
तथा च नाप्रयोजकत्वमिति शङ्कते--ननु हस्तेति। शरीररूपोपाधिभेद एवाननुसंधान-
प्रयोजकः। शिरआदौ तु शरीरैक्यादनुसंधानम्। गर्भस्थजन्तोरपि शरीरभेदादेव
न मातृभोगानुसंधानम्। ततश्च चैत्रस्यापि शरीरभेदादेव न मैत्रभोगानुसंधानं, न
त्वात्मभेदादिति न शङ्कनीयम्। शरीरभेदेऽपि कस्यचिज्जन्मान्तरीयभोगानुसन्धान-
दर्शनादित्याह—न चेत्यादिना।

न, सुखदुःखादयो ह्यन्तःकरणधर्माः, तदवच्छिन्नात्मधर्मा वा। अहं सुखीत्यनुभवात्, "कामः संकल्पः" इत्यादिश्रुतेः, परिशेषाच्च। अन्तःकरणोपहितात्मा च प्रतिशरीरं भिन्न इति नान्यानुभूतेऽन्यस्य स्मृतिः। जातिस्मरणेऽप्यन्तःकरणमेकमिति तदनुसंधानं युज्यते।

न च कायव्यूहे योगिनामेवं सत्यनेकदेहे भोगानुसन्धानं न स्याद् अन्तःकरणभेदादिति वाच्यम्। तेषामुपासनामहिम्ना ईश्वरकल्पानां वशीकृतोपाधीनां परकीयसुखदुःखसाक्षात्कारवत्सर्वशरीरवर्तिभोगानुसंधानसम्भवात्। असर्वज्ञानामेवात्रानुसन्धानाननुसन्धानव्यवस्थाहेतोश्चिन्त्यत्वात्।

---

चैत्रमैत्रदेहयोरात्मन एकत्वेऽपि भोक्तृभेदान्न परस्परभोगानुसंधानमित्यभिप्रेत्य सुखादिभोगस्यान्तःकरणपरिणामत्वं तदवच्छिन्नात्मन्यध्यस्तत्वं चाह—न सुखेति।

तत्समाधानम्

तत्राहंकारावच्छिन्नात्मधर्मत्वे मानमाह – अहं सुखीति। अहमनुभवस्यान्तःकरणविशिष्टात्मविषयताया उक्तत्वात्तद्विषय एव च सुखादेरनुभवाच्छबलात्मधर्मत्वमित्यर्थः। अन्तःकरणपरिणामत्वे मानमाह—काम इति। एतत्सर्वं 'मन एव' इति कामादेर्मनस्तादात्म्याभिधानात्प्रकृतिविकारयोरेव च तादात्म्यसम्भवादिति भावः। दुःखादिकं सोपादानं भावकार्यत्वात् पटवदित्यनुमानात्पृथिव्यादेरहंत्वसमानाधिकरणतया प्रतीयमानदुःखाद्युपादानत्वायोगात् कूटस्थासङ्गचिदात्मनो हेतूपरागाभावेन दुःखादिपरिणामायोगात्परिशेषादपि दुःखादिरन्तःकरणधर्म एवेत्याह—परिशेषाच्चेति। दुःखादिधर्मिणः प्रतिशरीरं भेदे फलितमाह—अन्तःकरणेति। एकान्तःकरणावच्छिन्नस्यान्तःकरणान्तरवर्तिदुःखाद्यननुभवितृत्वान्न तस्य तदनुसन्धानं दुःखादिधर्म्यहंकारतादात्म्याभिमानरहितस्य सर्वसाक्षिणो ब्रह्मणः सर्वानुसन्धानमिष्टमिति भावः।

शरीरभेदोऽननुसन्धानप्रयोजक इत्यत्रोक्तदोषस्य नात्र प्रसङ्ग इत्याह—जातीति। ननु सौभर्य्यादीनां युगपदनेकशरीरेषु भोगस्मरणादेककालीनानेकशरीरेष्वन्तःकरणैक्यायोगात्कथं तेषां सर्वशरीरभाविभोगानुसन्धानमिति चेत् न। तेषां योगमहिम्नेश्वरवद्वशीकृतमायत्वात् सर्वज्ञानां परकीयदुःखाद्यनुसंधानवदन्तःकरणभेदेऽपि स्वकीयसर्वभोगानुसन्धानोपपत्तेरित्याह—न च कायेति। कथं तर्ह्यन्तःकरणैक्यमनुसंधाने प्रयोजकं, तद्भेदस्त्वननुसंधाने इत्युक्तम्? तत्राह—असर्वज्ञानामिति।

ज्ञानविशेषविषयत्वप्रयोजकचिन्ताअस्मदादिज्ञानविषयैवेत्यत्रोदाहरणमाह—न हीति।

**न ह्यस्मदादयो महत्त्वं विना द्रव्यं न पश्यन्तीति योगिनोऽपि न पश्यन्ति। योगिनामप्यन्तःकरणं योगप्रभावाद्वैपुल्यं प्राप्तं निखिलशरीरावच्छिन्नभोगहेतुरिति केचित्।**

**एवं च संप्रतिपन्नान्तःकरणभेदस्यैवाननुसंधानप्रयोजकत्वे संभवति तदर्थं श्रुतिविरुद्धान्यभेदोऽपि न कल्पनीयः। एतेनेदं प्रत्युक्तम्-अन्तकरणभेदादननुसंधानस्य ममासिद्धेः शरीरभेद इव तद्भेदोऽप्यप्रयोजक इति। लाघवगौरवन्यायस्य त्वयाऽप्यभ्युपगन्तव्यत्वात्। अन्यथा प्रतिवादिसिद्धमेव वादिनाऽपि साधनीयमिति नियमे गतं कथासङ्कथया।**

**न चान्तःकरणस्य सुषुप्तौ विनाशात्दिनाऽन्तरानुभूतं नानुसंदध्यादिति वाच्यम्। सुषुप्तावन्तःकरणस्यैव विलीनघृतवद्वर्त्तमानत्वात्। अन्यथा तदाश्रित-**

---

द्रव्यस्यचाक्षुषज्ञानविषयत्वे महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकमित्येतद्यथाऽस्मदादिज्ञानविषयमेव तद्रहितपरमाण्वादेरपि योगिचाक्षुषज्ञानविषयत्वात्। एवमन्तःकरणैक्यादनुसंधानमित्यादिकमस्मदादिविषयमित्यर्थः। एवं परमतानुसारेण कायव्यूहेऽन्तःकरणनानात्वमभ्युपेत्य परिहार उक्तः, सिद्धान्ते त्वेकस्यैवान्तःकरणस्य संकोचविकासशीलस्य युगपदनेकशरीरव्याप्तिसम्भवाद्योगिनामनेकशरीरवर्तिभोगानुसन्धानमित्याह—योगिनामपीति।

ननु चैत्रस्य मैत्रभोगाननुसन्धानमन्तःकरणभेदादात्मभेदाद्वा इत्यत्र नियामकाभावादुभयभेदोऽप्यननुसन्धानप्रयोजक इत्यत्राह—एवं चेति। अन्तःकरणभेदो नाननुसन्धानप्रयोजकः तत्त्वेन ममासम्प्रतिपन्नत्वात् शरीरभेदवदित्यनुमानविरोधादन्तःकरणभेदोऽपि न प्रयोजक इत्याशङ्क्याह—एतेनेति। एतच्छब्दार्थमाह—लाघवेति। अन्तःकरणभेदस्यैव प्रयोजकत्वे प्रतिशरीरमात्मभेदे मानाभावात्तदैक्यमिति लाघवम्। इतरथाऽऽत्मानन्त्यम्, आत्मत्वजातिः, इत्यनेकं कल्पनीयमिति गौरवम्। तथा च लाघवे संभवति गौरवस्यान्याय्यत्वादुक्तानुमानमप्रयोजकमित्यर्थः। विपक्षे बाधकान्तरमाह—अन्यथेति। सर्वत्र पक्षे साध्यस्य प्रतिवाद्यसम्मतत्वाद्विपक्षदृष्टान्तेन तत्र तदभावस्य साधयितुं शक्यत्वात्किमपि न सिध्येदिति कथाप्रवृत्तिरेव न स्यादित्यर्थः।

ननु ह्यस्तनान्तःकरणस्य सुषुप्तौ लीनत्वादद्यतनान्तःकरणं ततो भिन्नमिति वक्तव्यम्। तथा चाद्य ह्यस्तनदुःखाद्यनुसंधानं न स्यादिति चेत् न। सुषुप्तावन्तःकरणस्य स्थूलाकारनाशेऽपि तदाप्यनिर्वचनीयसूक्ष्मरूपेण तस्य विद्यमानत्वाद् दिनान्तरे तस्यैव स्थूलरूपेणानुवर्त्तमानत्वेन भेदाभावादित्याह—न चान्तःकरणेति।

सुषुप्तावन्तःकरणस्य सर्वात्मना नाशे बाधकमाह—अन्यथेति। "विज्ञानं यज्ञं तनुते" "कामः संकल्प" इत्यादिश्रुत्याऽन्तःकरणस्यैव कर्मकर्तृत्वाभिधानात् सुषुप्तावन्तः-

धर्मादेरप्यभावात् पुनरुत्थानाभावप्रसङ्गाद् । पिण्डीभूतान्तःकरणस्यैवाहमनुभवविषयत्वाद् द्रवीभूतान्तःकरणसत्त्वेऽपि विशेषविज्ञानाभावात्सुषुप्तिसंभवाच्च । अन्यथाऽविद्यावृत्त्यापि तद्भङ्गप्रसङ्गात् ।

न चान्तःकरणस्य सुखानुभवहेतुत्वे मुक्तौ तदभावात् स न स्यादिति नवीनोक्तं युक्तम् । अन्तःकरणं ह्यावृतसुखव्यञ्जकतया जीवानां तद्व्यवस्थापकं न तु स्वयं सुखविषयसाक्षात्काराश्रयः । स्वरूपानुभवस्यैव तत्त्वात् । मुक्तौ तु सुखमनावृतमिति किमन्तःकरणविरहेण हीयते । न च बुद्धिकल्पितात्मनो दुःखाद्याश्रयत्वे

---

करणस्य निरवशेषनाशे तत्कार्यधर्म्मादेरपि नाशात्पुनरुत्थानं न स्यादित्यर्थः । सुषुप्तावन्तःकरणस्याविनाशे जाग्रतीव तदनुभवः स्यादित्याशङ्क्याह—पिण्डीभूतेति । स्थूलरूपेणाभिव्यक्तान्तःकरणस्येत्यर्थः । "सुषुप्तिकाले सकले विलीन" इति सुषुप्तौ सर्वकार्य्यविलयश्रवणादन्तःकरणाविनाशे सुषुप्तिरेव न स्यादित्याशङ्क्याज्ञानातिरिक्तद्धेतुकलापस्य सूक्ष्मरूपतापत्तिरूपत्वात्, अन्यथा सुषुप्तौ धर्मादेरप्यभावप्रसङ्गादन्तःकरणस्यापि तादृशलयाङ्गीकारान्न सर्वलयश्रुतिविरोधः शब्दादिविषयसकलवृत्तिज्ञानाभावाच्च सुषुप्तित्वोपपत्तिरित्यभिप्रेत्याह—द्रवीभूतेति ।

सर्वकार्याभाव एव सुषुप्तिरिति वदन्तं स्वयूथ्यं प्रत्याह—अन्यथेति । 'सुखमहमस्वाप्सम्, इतिपरामर्शहेतुसंस्कारजनकतया सुखाद्याकाराविद्यावृत्तेस्तदानीमावश्यकतया सर्वकार्याभावरूपासुषुप्तिर्न स्यादित्यर्थः । अन्तः करणभेदस्य परकीयभोगाननुसन्धानप्रयोजकत्वं वदतस्तस्यैव सुखादिभोक्तृत्वमभिप्रेतमिति भ्रान्तस्य चोद्यमपवदति—न चेति । स्रक्चन्दनादिविषयसंपर्कात्स्वरूपसुखाकारवृत्तिरूपेण परिणतमन्तःकरणं रवावच्छिन्नात्मानं प्रत्येव तत्सुखमभिव्यञ्जयत्तस्यैव 'अहं सुखी' इत्यादिप्रतिसंधानहेतुः न तु स्वयं सुखानुभवाश्रयतया तद्धेतुरित्याह—अन्तःकरणंहीति । नन्वेवमपि मुक्तौ सुखाभिव्यञ्जकान्तःकरणाभावात् कथं सुखानुभव इत्याशंक्य ब्रह्मसाक्षात्कारेण सर्वावरणमूलाज्ञानस्य नष्टत्वात् तदा व्यंजकापेक्षैव नास्तीत्याह—मुक्ताविति— ननु बुद्धितादात्म्याध्यासापन्नस्यात्मनः केवलचिदात्मभिन्नत्वेनाचित्त्वात् दुःखादेः तद्धर्मत्वे जडधर्मता स्यात् । तथा च बन्धमोक्षयोर्वैयधिकरण्यं इत्याशंक्य वस्तुतः चिद्रूपात्मन्येव बुद्धितादात्म्यस्य तदुपाधिकस्य चिद्भेदस्य दुःखादेश्च कल्पितत्वेन चिदात्मन एवाध्यासिकबन्धाश्रयत्वान्नोक्तदोष इत्याह—न च बुद्धीति ।

चित्प्रतियोगिककल्पितभेदवत्त्वमात्रेणाचित्त्वे चन्द्रे चन्द्रप्रतियोगिककल्पितभेदाश्रये चन्द्रत्वं न स्यात् । तच्चायुक्तम् । भेद इव चन्द्रत्वांशे बाधकाभावादित्यभिप्रेत्याह—अन्यथेति ।

चिद्भिन्नस्याचित्वाद् दुःखादेर्जडधर्मत्वापत्तिरिति वाच्यम्। चित्येव भेदमात्रकल्पनया द्वितीयस्यापि चित्त्वात् अन्यथा द्वितीयश्चन्द्रो न स्यात्।

न चैवं चैतन्यस्यैवानर्थयोगित्वात् तदात्मकब्रह्मावाप्तिर्मोक्षोऽपुरुषार्थः स्यादिति वाच्यम्। औपाधिकश्यामत्वादिवद् व्यवस्थितत्वात् तस्यावास्तवत्वाच्च।

यत्तु ब्रह्मात्मकचैतन्यस्य दुःखाद्याश्रयत्वे तस्य नित्यमुक्तत्वश्रुतिविरोध इति, तन्न। कुसुमोपाधिनिमित्तारुणिम्ना स्फटिकस्वाभाविकस्वाच्छ्यानपायवत् कल्पितदुःखादिना स्वाभाविकमुक्त्यनपायात्।

अविद्याभेदात्तदुपाधिकभेदजीवेष्वनुसंधानादिव्यवस्थेत्यन्ये।

किंचादृष्टविशेषशून्यस्य शरीराभेद एवानुसन्धानप्रयोजकः।

---

ननूक्तप्रकारेण चिन्मात्रस्यैव सर्वानर्थान्वयित्वात्तद्रूपब्रह्मावाप्तिरपुरुषार्थः स्यादिति चेत् न। बुद्ध्याद्युपहितचैतन्यस्यानुपहितब्रह्मचैतन्यादौपाधिकभेदवत्त्वादौपाधिकदुःखादेरपि स्वसमानसत्ताकभेदेन तत्रैव व्यवस्थितत्वात्तद्भिन्नब्रह्मचैतन्यस्यानतिशयानन्दात्मकस्य नापुरुषार्थत्वप्रसङ्ग इति सदृष्टान्तमाह--न चैवमिति।

किं चात्मन्यध्यस्तसर्वानर्थस्यात्मतत्त्वसाक्षात्कारेण बाधितत्वान्न मुक्तावनर्थप्रसक्तिरित्यभिप्रेत्याह—तस्येति।

ननु ब्रह्मस्वरूपचैतन्यस्य बुद्ध्याद्युपाधिनिबन्धनदुःखाद्याश्रयत्वे "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" "अन्यत्र धर्मादन्यत्राधर्म्मात्" इत्यादिश्रुतिविरोध इति चोद्यमनुवदति—यत्त्विति। आत्मनि वस्तुतोऽशनायादिराहित्यपरश्रुतेः औपाधिकावास्तवाशनायादिमत्त्वेन न विरोध इति सदृष्टान्तमाह—तन्नेति। एवमेकजीववादे भोक्तुरुपाध्यन्तःकरणभेदात् परकीयभोगाननुसन्धानमित्युक्तम्। अनेकजीववादे तु जीवोपाध्यविद्याभेदादेव तदननुसन्धानमित्याह—अविद्येति।

इदानीं मतद्वयेऽपि शरीराभेदोऽनुसन्धाने प्रयोजकः, तद्भेदश्चाननुसन्धान इति पक्षान्तरमाह—किं चेति। न चैवं शरीरभेदेऽपि कथं जातिस्मृतिमतो जन्मान्तरीयभोगानुसन्धानमिति वाच्यम्। तस्यादृष्टविशेषमहिम्ना योगितुल्यत्वात्तद्व्यतिरिक्तविषयैवेयं चिन्तेत्यभिप्रेत्योक्तमदृष्टविशेषशून्यस्येति। नन्वेवं बालस्थविरदेहयोर्भिन्नत्वात्कथं स्थविरस्य बालदेहभोगानुसन्धानमित्याशङ्क्य योऽसौ तदा बालः स एवेदानीं स्थविर इति प्रत्यभिज्ञया देहैक्यसिद्धेर्न देहभेदप्रयुक्तदोष इत्याह--न चैवमिति।

**नचैवं बालशरीरादिभेदेऽननुसन्धानप्रसङ्गः तस्याप्येकत्वात्। किं चाननुसन्धाने ह्यात्मभेदो न प्रयोजकः। अभेदेऽपि जन्मान्तरीयसुखाद्यननुसन्धानदर्शनात्। न च तत्र संस्कारविनाशादननुसन्धानम्। तस्यैव जन्मान्तरे जातिस्मरणेऽनुसन्धानात्।**

**किं चाश्रयाभेदेऽनुभूयमानेऽनुसन्धीयमाने एव च सुखादेरनुभवानुसन्धानदर्शनात् तदाश्रयाभेदाज्ञानमेव तत्र प्रयोजकम्। जातिस्मृतिमतो योगिनां च कालान्तरीयदेशान्तरीयसुखाद्याश्रयाभेदाज्ञानाभावादनुसन्धानम्। देवदत्तस्य यज्ञदत्तात्माभेदाज्ञानान्न तदीयसुखाद्यनुभवस्तदनुसन्धानं वा।**

---

न च बालस्थविरदेहयोः परिमाणभेदाद्गुरुत्वभेदाच्च भेदस्यावश्यकत्वादभेदप्रत्यभिज्ञानं भ्रम इति वाच्यम्। जलूकादिषु परिमाणभेदेऽपि द्रव्यभेदाभावात्। इतरथोपविष्टाच्चैत्रादुत्थितस्य तस्य भेदः स्यात्। एकस्मिन्नपि गुरुत्वभेदस्य कालभेदेनावयवोपचयापचयाभ्यामेवोपपत्तेरित्युपादानवादे वक्ष्यते।

नन्वेवमपि स्वप्ने देवादिशरीरेण भुक्तभोगस्य कथं जाग्रति मनुष्यशरीरेऽनुसन्धानमिति चेत् न। "प्राणेन रक्षन्नवरम् कुलायम्" इति श्रुतेः स्वप्नेऽपि जाग्रच्छरीरस्यानुवर्तमानत्वात् तदा तदभिमानाभावेऽपि वस्तुतस्तदुपहितस्यैव शरीरान्तराभिमानेन भोक्तृत्वात्तदेकत्वनिबन्धनानुसन्धानोपपत्तिरिति भावः। आत्मभेदस्य व्यतिरेकव्यभिचारेणाननुसन्धानप्रयोजकत्वायोगाच्छरीरादिभेद एव तत्प्रयोजक इत्यभिप्रेत्याह—किं चेति। ननु जन्मान्तरीयभोगानुसन्धानप्रयोजकात्माभेदे सत्यपि संस्काररूपसहकारिविरहादेव तदननुसन्धानं न शरीरभेदादित्याशङ्क्य तज्जन्मनि जन्मान्तरीयानुसन्धानाभावेऽपि पुनर्जन्मान्तरेऽदृष्टविशेषवतस्तदनुसन्धानदर्शनात् संस्काराभावायोगादित्यभिप्रेत्याह—न च तत्रेति।

इदानीं योग्ययोगिसाधारणमनुसन्धानप्रयोजकमाह —किंचाश्रयेति।

दुःखाद्याश्रयस्य स्वस्य चाभेदानुभवः स्वकीयत्वेन दुःखाद्यनुभवे प्रयोजकः, दुःखाद्याश्रयाभेदप्रतिसन्धानं च तथा तदनुसन्धाने प्रयोजकम्। तदभेदमात्रे सत्यपि जन्मान्तरीयदुःखानुसन्धानाद्यभावादित्यर्थः। एवं दुःखाद्यनुसन्धानादौ प्रयोजकमुक्त्वा तदभावे प्रयोजकमाह—तदाश्रयेति। उक्तानुसन्धानप्रयोजकस्य सार्वत्रिकत्वमाह—जातिस्मृतिमत इति। स्वान्यदुःखाद्याश्रयाभेदानुसन्धानादेव जाग्रति स्वान्यदुःखाद्यनुसन्धानमिति चार्थः। आश्रयाभेदेऽप्युक्तप्रयोजकाभावान्न परस्य परकीयदुःखाद्यनुभवानुसन्धाने इत्याह—देवदत्तस्येति।

ननु यथा शिरःपादादिष्वात्मैक्यमनुभूयते, एवमनेकशरीरेष्वात्मैक्यमस्ति चेदनुभूयेत। तथा च परकीयदुःखानुभवादिकमपि स्यादिति शङ्कते—नन्विति। तस्य प्रमातु-

शरीरभेदेऽप्यात्माभेदे पूर्वपक्षः

**नन्वात्माभेदे यज्ञदत्तस्य देवदत्तात्माभेदानुभव एव किन्न स्यादिति चेत् न। स्वस्य सर्वात्मतावारकाज्ञानादुपदेशादिसहकारिविरहाद्वा तद्विरहस्योक्तत्वात् अवच्छिन्नयोर्भिन्नत्वाच्च।**

**यस्य देहान्तरीयात्माभेदो लिङ्गेन श्रुत्या वा निश्चितस्तेन तत्सुखादिकमप्यनुमानेन स्वीयत्वेन प्रतिसंधीयत एव। एवं देवदत्तस्य 'नाहं यज्ञदत्त' इति भेदभ्रमोऽपि तस्य स्वकीयत्वेन यज्ञदत्तीयसुखाद्यननुसन्धानप्रतिबन्धकः। न चैवं सुषुप्त्यादावनुसन्धानप्रसङ्गः। तदानीमनुसंधातुरहङ्कारोपहितस्य साक्षिणोऽभावात्। तस्मादद्वैतवादे एकः अनेको वा जीवः उभयथाऽपि शरीरान्तरावच्छिन्नस्य न परशरीरावच्छिन्नात्मसुखाद्यनुसंधानमिति।**

एकजीववादे अनुपपत्तीनां परिहारः

**यदपि नवीनोक्तं बन्धमोक्षपण्डितमूर्खव्यवस्था चैत्रप्रमया चैत्रभ्रमनिवृत्तिरित्यादिव्यवस्था च न स्यादिति। तत्र न तावत् बन्धमोक्षव्यवस्थानुपपत्तिः। एक-**

---

स्तत्तच्छरीरावच्छिन्नात्माभेदस्यानावृतत्वात्तदनुभवः तस्यैव शरीरोपहितात्माभेदस्य मूलाज्ञानेनावृतत्वात्तद्बोधकोपदेशाभावाच्च तदननुभव इति योग्यानुपलब्धिनिरासमय एवोक्तमित्याह—न स्वस्येति। किं च सर्वशरीरेष्वात्मनोऽभेदे किं देवदत्तस्य यज्ञदत्तशरीरोपलक्षितात्माभेदानुभव आपाद्यते उत तद्विशिष्टात्माभेदानुभवः?। आद्ये इष्टापत्तिः। देवदत्तशरीरेऽनुभूयमानात्मनो यज्ञदत्तशरीरोपलक्षितत्वात्। न द्वितीयः। विशिष्टात्माभेदाभावादेव तदननुभव इत्यभिप्रेत्याह—अवच्छिन्नयोरिति।

ननु विप्रतिपन्नं शरीरमेकस्यैव भोगायतनं शरीरत्वाच्चैत्रशरीरवदित्यादिलिङ्गात् "एको देवः सर्वभूतेषु गूढ" इत्यादिश्रुतेर्वा सर्वशरीरेष्वात्मैक्यज्ञानानन्तरं स्वकीयत्वेन सर्वशरीरवर्तिदुःखानुसन्धानं स्यादित्याशङ्क्यास्याभेदज्ञानस्य परोक्षत्वात् परोक्षतस्तदनुसंधानमिष्टमित्याह—यस्येति।

एवमनुसन्धानप्रयोजकाभेदप्रतीत्यभावान्न देहान्तरीयसुखाद्यनुसंधानमित्युक्तम्, इदानीं भेदभ्रमेण प्रतिबद्धत्वादपि न तदनुसन्धानमित्याह–एवमिति। तर्हि सुप्तौ भेदभ्रमाभावेन प्रतिबन्धकाभावात्परकीयदुःखाद्यनुसंधानं स्यादित्याशङ्क्य किमात्ममात्रस्य तदाऽनुसंधानमापाद्यते उताहंकारविशेषोपहितस्य?। आद्ये इष्टापत्तिः। द्वितीये उपाधिभूताहंकारस्य तदा सूक्ष्मरूपेण स्थितत्वान्न तदुपहितस्य तदनुसंधानमित्यभिप्रेत्याह—न चैवमिति। मैत्रानुसंहितदुःखाननुसंधातृत्वादित्यस्यान्यथोपपत्तिमुपसंहरति–तस्मादिति।

ऐकात्म्ये परोक्तं बाधकान्तरमनुवदति दूषयितुं—यदपीति। किमेकजीववादे बन्धमोक्षव्यवस्था न स्यादित्युच्यते अनेकजीववादे वा?। आद्यं निरस्यति—तत्र न ताव-

**जीववादे व्यवस्थाया एवाभावात् । केषांचिन्मुक्त्यादिश्रवणस्य श्रवणादिशेषार्थवादत्वात् ।**

**न चैवमनादौ संसारे कस्यापि मुक्त्यभावे स्वस्य मुक्तावनाश्वासः । वेदप्रामाण्यादेतावत्कालममुक्तस्य स्वस्य भविष्यन्मुक्तावाश्वासवदेकजीववादेऽप्युपपत्तेः । न च ज्ञानार्थमेकस्मिन् प्रवृत्तेऽपरस्याप्रवृत्तिप्रसङ्ग इति वाच्यम् । एकस्येवापरस्याप्यज्ञत्वाद् रागप्राप्तप्रवृत्तेर्बाधकाभावाद् भेदभ्रमात्प्रवृत्त्युपपत्तेः । अभेदे तु निश्चिते न कश्चित्प्रवर्तते । न चाप्तवाक्याज्जीवैकत्वनिश्चयानन्तरमनेकेषां प्रवृत्तिर्न स्यादिति वाच्यम् । गुरावविद्यानिवर्त्तकसाक्षात्कारं स्वस्मिंश्चाविद्यां पश्यतो जीवैकत्वनिश्चयासंभवात् ।**

---

दिति । नन्वस्मदादेरिदानीमपि बद्धत्वाद्वामदेवादेश्च मुक्तत्वश्रवणात्कथं व्यवस्थाभाव इत्याशङ्क्य श्रुतिन्यायाभ्यां जीवविभागप्रयोजकाज्ञानैक्ये सिद्धे इदानीं संसारानुभवविरोधात्तेषां मुक्तिश्रुतिरर्थवाद इत्याह—केषांचिदिति । इतः पूर्वं कस्यापि मुक्तिफलकज्ञानानुदये स्वस्यापि तदनुदयशङ्कया ज्ञानाभ्यासे कस्यापि निष्कम्पप्रवृत्तिर्न स्यादित्याशङ्क्याह—न चैवमिति ।

तत्र हेतुः वेदेति । यथा जीवनानात्वमते स्वस्यानादिसंसारे मुक्तिपर्यन्तज्ञानानुदयेऽपि "ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्" इत्यादिवेदप्रामाण्यादेव भविष्यन्मुक्त्यपेक्षया प्रवृत्तिः, एवमेकजीवपक्षेऽपि वेदप्रामाण्यादेव निःशङ्कं मुक्त्यर्थिनस्तत्साधनज्ञानाभ्यासे प्रवृत्त्युपपत्तिरित्यर्थः । नन्वेकस्य मुक्त्यर्थे ज्ञानाभ्यासे प्रवृत्तेरेवान्येषामपि मुमुक्षूणां तज्ज्ञानादेवापेक्षितसिद्धेस्तदर्थं प्रवृत्तिर्न स्यादिति चेत् न । एकस्य यथा स्वस्मिन्नज्ञानतत्कार्यरूपानर्थदर्शनात्तन्निवृत्तये प्रवृत्तिः, एवमन्येषामपि स्वस्वात्मन्यनुभूयमानाज्ञानाद्यनर्थनिवृत्तिकामित्वाद्यागे शूद्रवच्छास्त्रेणापर्युदस्तत्वाच्च तदर्थंप्रवृत्तिरनिवार्येत्याह—न च ज्ञानार्थमिति ।

किमैकात्म्ये निश्चिते प्रवृत्तिर्न स्यादित्युच्यते अनिश्चिते वा ? नान्त्यः स्वस्याधिकार्यन्तराभेदानिश्चयदशायां स्वस्य ततो भेदभ्रमात् स्वप्रयोजनाय पृथक् प्रवृत्त्युपपत्तेरित्याह—भेदभ्रमादिति । आद्येऽपि तन्निश्चयः किमप्रतिबद्धसाक्षात्कारात्मकः परोक्षज्ञानात्मको वा ? आद्ये इष्टापत्तिः । ततः सर्वानर्थमूलाज्ञाननाशेन तदनन्तरं कस्यापि संसारिणोऽभावादित्यभिप्रेत्याह—अभेदे त्विति । द्वितीयमनूद्य दूषयति—न चेति । किं गुरावपरोक्षज्ञाननिश्चयवतस्तद्वाक्याज् जीवैक्यनिश्चयः परोक्षज्ञाननिश्चयवतो वा ? । नाद्यः । अपरोक्षज्ञानिनो गुरोरज्ञानिनश्च स्वस्य विरुद्धधर्मवत्त्वेनाभेदज्ञानासम्भवेन जीवैकत्वनिश्चयायोगादित्याह – गुराविति ॥

द्वितीये परोक्षज्ञाने सत्यप्यज्ञानस्यानुवर्तमानत्वादपरोक्षज्ञानेनैव तन्निवर्त्यमिति मत्वा तदर्थं स्वयमपि प्रवर्तत इत्याह—गुराविति ।

गुरौ परोक्षज्ञाननिश्चयवांस्त्वविद्यानिवृत्तेर्यत्नान्तरसाध्यत्वनिश्चयेन स्वयमपि प्रवर्त्तते। अन्यत्र विघ्नशङ्कयापि स्वयं प्रवर्त्तते। स्वर्गनरकादिव्यवस्था च जीवस्यैकस्यैवाविद्याप्रतिबिम्बस्यानेकान्तःकरणावच्छेदभेदेन संगच्छते। नानाजीववादे च यस्य ब्रह्मसाक्षात्कारः तस्योपाधिनिवृत्तिर्नेतरस्य उपाधिश्चानादिजीवनिष्ठो ब्रह्मनिष्ठो वा। यो यस्य ब्रह्मभावप्रतिबन्धकः स तस्य ब्रह्मसाक्षात्कारेण निवर्तते, अतो नातिप्रसङ्गः। पाण्डित्यादेस्तु प्रमातुरन्तःकरणावच्छिन्नस्यैव धर्मत्वात्तद्भेदादेव व्यवस्था।

न च गुरुशिष्यभावव्यवस्थाऽसम्भवो जीवद्वयाभावादिति वाच्यम्। परोक्षज्ञानिन एवोपदेशकर्तृत्वमितिमतेऽन्तःकरणभेदेन तदुपपत्तेः। ब्रह्मनिष्ठत्वं च

---

ननु गुरुप्रवृत्त्यैवापरोक्षज्ञानसंभवात्स्वेन किमर्थं प्रवर्तितव्यमित्यत आह—अन्यत्रेति। नन्वेकजीववादे कथं स्वर्गनरकयोस्तद्धेतुधर्माधर्मयोश्च व्यवस्थेत्याशङ्क्य कर्तृत्वोपाधेरन्तःकरणस्यानेकत्वाद्यदन्तःकरणोपहितेन यत्कर्म कृतं तदुपहितेनैव तत्फलं भोक्तव्यमिति व्यवस्थोपपत्तिरित्याह—स्वर्गेति। इदानीमनेकजीववादे बन्धमोक्षव्यवस्थामभ्युपेत्य तदुपपत्तिमाह—नानेति। तस्योपाधिनिवृत्तिरिति। तस्य ब्रह्मणः सकाशाद्भेदप्रयोजकाज्ञानरूपोपाधितद्धर्मादेर्निवृत्तिरित्यर्थः। ननु च उपाधिः किं जीवनिष्ठो ब्रह्मनिष्ठो वा?। नाद्यः। जीवेश्वरविभागस्याज्ञानप्रयुक्तत्वेन परस्पराश्रयात्। न द्वितीयः। ब्रह्मणोऽज्ञत्वभ्रान्तत्वादिप्रसङ्गादित्याशङ्क्योभयथाऽपि न दोष इत्याह—उपाधिश्चेति। अज्ञानजीवत्वयोरनादित्वात् साक्षिमात्रभास्यत्वाच्चोत्पत्तौ ज्ञप्तौ वा न परस्पराश्रयः, स्थितौ च परस्पराश्रयप्रयोजकत्वं द्रव्यत्वगुणवत्त्वयोरिवाविरुद्धम्। अज्ञानरूपोपाधेश्चिन्मात्रब्रह्मनिष्ठत्वेऽपि स यं प्रति ब्रह्मरूपमावृणोति तस्यैवाज्ञत्वादिप्रयोजक इति न ब्रह्मणोऽज्ञत्वादिदोषप्रसङ्ग इति भावः। एकजीवमते पाण्डित्यमौर्ख्यव्यवस्थाऽपि स्वर्गनरकादिव्यवस्थावदेवेत्याह—पाण्डित्यादेस्त्विति।

नन्वेकजीवमते गुरुशिष्यभावो न सम्भवति गुरोर्ज्ञानित्वात् शिष्यस्य चाज्ञानित्वात् ज्ञानाज्ञानयोरेकदैकत्र विरोधादिति चेत् परोक्षज्ञानस्याज्ञानाविरोधित्वात् प्रमातृभेदेन गुरुशिष्यभावोपपत्तेरित्याह—न चेत्यादिना।

"ननु समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेर्ब्रह्मनिष्ठस्यैवोपदेष्टृत्वात् कथं परोक्षज्ञानिनो गुरुत्वमित्यत आह—ब्रह्मनिष्ठत्वं चेति। अपरोक्षज्ञानिन एवोपदेष्टृत्वेऽपि गुरुशिष्यभावोपपत्तिरित्यभिप्रेत्य मतान्तरमाह—केचित्त्विति। भगवानेव गुरुदेहं गतो ब्रह्मोपदिशतीति प्रथमं संबन्धः। ननु भगवतस्तत्त्वज्ञानित्वेन जीवे स्वातिरिक्तत्वभ्रमाभावात् कथं तदुपदेशार्थं प्रवृत्तिरित्याशङ्क्य जीवकल्पितत्वाव-

**तस्यापि भवति। अनन्यव्यापारतालक्षणब्रह्मनिष्ठतायास्तस्याविरोधात्। केचित्तु भगवानेवान्तर्यामी शिष्यस्य स्वमतिकल्पितत्वशङ्काव्युदासाय गुरुशुश्रूषादिशास्त्रार्थवत्त्वाय च परोक्षनिश्चयवद् गुरुदेहं गतस्तदभेदज्ञानात्तदाराधनयाऽपि संतुष्टो ब्रह्मोपदिशति स्त्र्यादिशरीरे गन्धर्वोपदेशदर्शनात्।**

**"यो वै वेदांश्च प्रहिणोति तस्मै" तेने ब्रह्म "हृदाय आदिकवये" इत्यादिप्रमाणादन्तर्यामिण उपदेष्टृत्वाद्। जीवस्य चोपदेशानुकूलव्यापारवत्स्वशरीराभेदाभिमानात्स्वस्योपदेष्टृत्वाभिमानः। अत एव "मन्मुक्त्यैवासि मुक्तस्त्वम्" इत्युपदेशापादनमपि निरवकाशमिति।**

---

हारिकभेदेन तन्नियन्तृत्ववत् तदुपदेष्टृत्वमप्यस्तीत्याह—अन्तर्यामीति। नन्वीश्वरोऽधिकारिहृदयस्थ एव तस्य बोधयतु ब्रह्म, किं तस्य गुरूपदेशेनेत्याशङ्क्य तथात्वे शिष्यस्य स्वबुद्धिमोहादित्थंस्फुरतीति शङ्कया निर्विचिकित्सबोधायोग इत्याह—शिष्यस्येति। एवमप्यन्तर्हित एवेश्वरः श्रुतिवाक्योपन्यासपूर्वकं ब्रह्मोपदिशत्वित्याशशङ्क्याह—गुरुशुश्रूषेति। मूर्खशरीरं प्रति शिष्यस्य ज्ञानायोपसर्पणाभावात्तत्रोपदेशासम्भव इत्यभिप्रेत्य परोक्षनिश्चयवदित्युक्तम्। ननु गुरोरेवोपदेशार्थे प्रार्थितत्वादप्रार्थितस्येश्वरस्य कथमुपदेष्टृत्वमित्याशङ्क्योपदेष्टृत्वबुद्ध्या गुरोराराधितत्वात्तावता संतुष्टो भगवानुपदिशतीत्याह—तदभेदेति। नन्वन्यशरीरेऽन्यस्योपदेष्टृत्वं कुत्रापि न दृष्टमित्यत आह—स्त्र्यादीति। दर्शनादित्युपलक्षणं पतञ्जलस्य काप्यस्य भार्यायां प्रविष्टस्य गन्धर्वस्य याज्ञिकादीन् प्रत्युपदेष्टृत्वश्रवणाच्चेत्यर्थः।

ईश्वरस्योपदेष्टृत्वे मानाभावशङ्कायामाह—यो वा इति।

आदिपदेन

"ददामि बुद्धियोगं तं येन मामुपयान्ति ते"।

योऽन्तर्बहिस्तनुभृतामशुभं विधुन्व—

न्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति।

इत्यादि गृह्यते। नन्वेवं सत्यहमस्य गुरुर्ममायं शिष्य इति कथमाचार्यो वक्तीत्यत आह—जीवस्येति। एकजीवमते जीवद्वयाभावादुपदेश एव न सम्भवति। तत्सम्भवेऽपि

मन्मुक्त्यैवासि मुक्तस्त्वं मा यत्नं कुरु मुक्तये॥

इत्येवोपदेशः स्यादिति चोद्यं परोक्षज्ञानिन ईश्वरस्य वोपदेष्टृत्वाङ्गीकारादेव निरस्तमित्याह—अत एवेति। न जीवस्येश्वरस्य वोपदेष्टृत्वं किं तु मायाविजृम्भित

अन्ये तु स्वप्ने कल्पितपित्राद्युपदिष्टमन्त्रादिरिव कल्पिताचार्योपदिष्ट-विद्याऽपि फलवतीति स्वप्न इव जाग्रत्यपि विद्वत्त्वेन कल्पितस्योपदेष्टृत्वमित्याहुः।

भगवत्पादादयस्तु श्रीरघुनाथादिरिव स्वेच्छाकृतशरीरा भगवदंशा एव।

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने।
चतुर्भिः सहितः शिष्यैः शङ्करोऽवतरिष्यति।

इत्यादिपुराणवचनात्। अतो न तन्मुक्त्याऽपीदानीन्तनसंसारानुपलम्भः।

अतोऽनुकूलतर्काभावाज्जीवभेदानुमानमप्रयोजकम्। अननुसंधातृत्वस्यैव घटादौ मैत्रभेदव्याप्यतया इतरस्य व्याप्त्यनवच्छेदकत्वाच्च। तस्माद् देवदत्तातिरिक्ततया प्रतीयमानो जीवो न देवदत्तात् तत्त्वतो भिद्यते जीवत्वाद् देवदत्तवत्। अभेदेऽप्यनुसन्धानादिव्यवस्थोपपत्तिरनुकूलस्तर्कः। गौरवं च विपक्षे बाधकम्। "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा।" "स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्मादद्वय एवायमात्मा।" इति श्रुतिरपि जीवपरयोर्जीवानां चोपाधिनिमित्तं भेदं दर्शयति,

---

एवोपदेश इति मतान्तरमाह—अन्ये त्विति। विद्वत्त्वेनेति। विद्वत्त्वेन परिकल्पितशरीरावच्छिन्नचैतन्यनिष्ठाविद्या मुमुक्षुकर्माराधितपरमेश्वरप्रेरिता तत्तदुपदेशाकारेण परिणमत इत्यर्थः। मायिकोपदेशस्योन्मत्तप्रलापवदबुद्धिपूर्वकत्वान्न फलपर्यवसायित्वमित्याशङ्क्य यथार्थत्वात्फलवत्त्वमिति सदृष्टान्तमाह—स्वप्न इति। एकजीवमते व्यासादीनां तत्त्वज्ञानित्वे इदानीं संसारानुपपत्तिः। तेषामतत्त्वज्ञत्वे चार्वाचीनानां तत्त्वज्ञानं प्रति नैराश्यप्रसङ्ग इत्याशङ्क्य तेषामीश्वरांशत्वान्न तत्त्वज्ञानेन जीवगतसंसाराभाव इत्याह—भगवत्पादादय इति। व्यासादीनामीश्वरांशत्वे मानमाह—द्वापर इति।

मैत्रानुसंहितदुःखाननुसंधातृत्वादिति हेतोरप्रयोजकत्वमुपसंहरति—अत इति।

व्यर्थविशेषणत्वेनाप्ययुक्तहेतुं दूषयति—अननुसन्धातृत्वस्येति। जीवनानात्वे मानाभाववत्तदैक्येऽपि न मानमित्याशङ्क्य तत्रानुमानश्रुती प्रमाणयति—तस्मादित्यादिना। अयं प्रत्यक्षतोऽनुभूयमानः ज्योतिरात्मा ज्योतिःस्वरूपो विवस्वान् सूर्यः यथा बहुधा भिन्ना अपः प्रतिबिम्बभावेनानुगच्छन्नुपाधिना प्रतिबिम्बोपाधिभूतनानाजलेन भेदरूपः क्रियते नानात्वेन भासते। एवं दीव्यत इति देवः स्वप्रकाशोऽयमात्मा सर्वेषामहमनुभवसिद्धः क्षेत्रेषु ब्रह्मादिस्तम्बपर्यन्तेषु तत्तद्देहाद्युपाधिनैव भेदेन भासत इत्यर्थः। भेदे सत्यत्वभ्रमनिवृत्तिः परमेश्वरानुग्रहादेवेति मत्वा श्रद्धाविष्टस्तत्प्रणतिं कुर्वन्नर्थाद्वक्ष्यमाणवादार्थदार्ढ्यं दर्शयति—मायासंभृतेति। मायाकार्येष्वन्तःकरणेषु यो बिम्बितः प्रतिबिम्ब-

**वास्तवभेदं च निराकरोतीति सिद्धः स्वत आत्माभेद इति।**

**मायासंभृतमानसेषु बहुधा योबिम्बितो भासते।**
**ब्रह्मब्राह्मणदेवदैत्यपशुभिर्भास्वानिवाप्सु प्रभुः ॥**
**यः स्वाभापहृताखिलाशुभवपुर्यो भौतिकज्योतिषां**
**ज्योतिः श्रीपतये मृगेन्द्रवपुषे तस्मै परस्मै नमः ॥"**

जीवस्य तात्विकांशत्वमतं तन्निरासश्च

**केचित्तु जीवाः परमात्मनः पारमार्थिकांशाः। "ममैवांशो जीवलोके" इति स्मृतेः। न च निरवयवस्यांशवत्त्वं विरुद्धम्। औपाधिकस्य तस्याविरोधात्। अत**

---

भावं प्राप्तो बहुधा भासते। बहुधा भानमेव दर्शयति—ब्रह्मेति। चतुर्मुखाद्युच्चावचरूपेणेत्यर्थः। तृतीया चेत्थंम्भावे। बिम्बस्यैव प्रतिबिम्बभावेन नानोपाधिषु बहुधाभाने दृष्टान्तमाह—भास्वानिति ॥

नन्वेवं बहुधा भानस्य सुखप्रतिबिम्बवच्चित्प्रतिबिम्बेऽसंभवाद्बिम्बभूतेश्वरस्यैव भेदभ्रमो वक्तव्यः। तथा च तत्प्रयुक्तसंसारारोपोऽपि तस्यैव स्यादित्यत आह—यः स्वाभेति।

स्वस्य या आभा—अनावृतस्वरूपप्रकाशः तया अपहृतम्—अप्राप्तम् अखिलाशुभवपुः—भ्रान्त्यादिसकलदोषस्वरूपं यस्मिन् स तथोक्तः। बिम्बरूपस्यापीश्वरस्य स्वतस्तत्त्वज्ञत्वान्न तत्र भ्रान्त्यादिप्रसक्तिः मुखप्रतिबिम्बस्य जडत्वादेव न भ्रान्तिः, न तु प्रतिबिम्बत्वात्। बिम्बस्यापि स्तम्भकुम्भादेर्जडस्य भ्रान्त्यभावात्। चित्प्रतिबिम्बस्य तु जीवस्य चेतनत्वादज्ञत्वाच्च तस्यैव भ्रान्त्यादिरित्यर्थः। नन्वीश्वरस्य बिम्बरूपत्वे मुखादिबिम्बवत्तत्त्वज्ञतैव न स्यादित्याशङ्क्य मुखादेर्जडत्वादेव न तत्त्वज्ञता, ईश्वरस्य तु चिद्रूपत्वादज्ञत्वाभावाच्च तत्त्वज्ञतेत्यभिप्रेत्य तस्य सर्वसाक्षिचिद्रूपत्वमाह—यो भौतिकेति। आदित्यादिज्योतिषामपि ज्योतिः सत्तानिश्चयरूपप्रकाशः, अन्येषां किमु वक्तव्यमिति भावः। तथा च श्रुतिः—"तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति" इति। मृगेन्द्रवपुषे—नरसिंहात्मकविग्रहोपलक्षिताय सर्वावयवापेक्षया शिरसः प्रधानत्वात्तस्य सिंहाकारत्वात्, इतरावयवेषु नराकारस्यापि वपुषो मृगेन्द्राकारत्वव्यपदेश इति द्रष्टव्यम्।

जीवेश्वरयोरंशांशिभावेन भेदस्तात्त्विको न तु बिम्बप्रतिबिम्बभावेन कल्पित इति तान्त्रिकमतमनुवदति दूषयितुं—केचित्त्विति। ननु "ततस्तु तं पश्यते निष्कलं ध्यायमानः" "निष्कलं निष्क्रियं शान्तम्" इत्यादिनिरंशत्वप्रतिपादकश्रुतिविरोधात् स्मृतिरन्यपरतया नेयेत्याशङ्क्य निरंशस्याप्याकाशस्येवौपाधिकांशसंभवाद्विरोध एव नेत्याह—

एवाग्निविस्फुलिङ्गादिदृष्टान्तश्रुत्या जीवानां परस्मादुत्पत्तिश्रवणमविरुद्ध-मित्याहुः।

तन्न। स्वतो निरंशस्योपाधितोऽपि वास्तवांशासंभवात् औपाधिकस्य स्फटिकलौहित्यादेरिवानिर्वचनीयत्वात्। निरंशे उपाधिजन्यस्य तज्ज्ञाप्यस्य तत्तन्त्रस्य वा वास्तवांशस्याभावात्। अन्यथा निरंशत्वव्याहतेः। अग्निसंयोगजन्यलौहित्याश्रयस्यापि वस्तुतोऽलोहितमात्रस्वभावत्वात्। "ब्रह्मदाशा ब्रह्मैवेमे कितवाः" इति श्रुतिविरोधाच्च। "ममैवांश" इति स्मृतिरपि बिम्बप्रतिबिम्बभावेनांशांशिभावं कल्पितमाहाभेदाय। अत एवाग्निविस्फुलिङ्गश्रुतिरपि न विरुध्यते अग्निस्वभावापरित्यागेन विस्फुलिङ्गानां पृथग्भूतत्वमात्रत्वात्। अन्यथा "न जायते" इति श्रुतिविरोधात् कृतहानादिन्यायविरोधाच्चेति।

---

न चेति। स्वभावतो नित्यस्याप्यात्मन औपाधिकोत्पत्तिसंभवात्ममापीष्टेत्याह—अत एवेति।

वस्तुनो वस्तुतो द्वैरूप्यासंभवान्निरंशत्वस्य स्वाभाविकत्वे सांशत्वस्यावास्तवत्वमावश्यकमिति दूषयति—तन्नेति।

निरवयवे प्रदेशभेदस्यौपाधिकत्ववत्सांशत्वस्याप्यौपाधिकत्वं दुर्निरूपमित्यभिप्रेत्याह—निरंश इति। औपाधिकस्यापि वास्तवत्वाभ्युपगमे बाधकमाह—अन्यथेति। औपाधिकस्य वास्तवत्वे तद्विपरीतपूर्वरूपस्य हानिरेवेत्यत्रोदाहरणमाह—अग्नीति। अलोहितघटेऽग्निसंयोगाल्लौहित्यस्य सत्यस्योत्पत्तौ तदनन्तरं तस्यालोहितस्वभावाभावादित्यर्थः। किं च धीवरादीनामपि वस्तुतो ब्रह्माभेदाभिधानान्न जीवेश्वरयोर्वास्तवभेदः संभवतीत्याह—ब्रह्मदाशा इति। तर्ह्यंशत्वाभिधायिस्मृतेः का गतिरित्याशङ्क्य श्रुत्यनुरोधेनैव सा व्याख्येयेत्याह—ममेति। अभेदायेति। अभेदप्रमितये इत्यर्थः। नन्वग्निविस्फुलिङ्गदृष्टान्तश्रुत्या जीवानामुत्पत्तिश्रवणादुत्पन्नानुत्पन्नयोर्वास्तवाभेदायोगात्तदङ्गीकारे तच्छ्रुतिबाध इति, तत्राह—अतएवेति। अतःशब्दार्थमाह—अग्नीति। ब्रह्मस्वभावापरित्यागेन जीवानां तत औपाधिक एव विभाग इति वक्तुं श्रुतिर्दृष्टान्तत्वेन विस्फुलिङ्गानामौष्ण्याद्यग्निस्वभावापरित्यागेन ततो विभागमात्रं वक्ति न तु तेषामुत्पत्तिमपि। अग्न्यवयवानामेव ततो विभक्तानां विस्फुलिङ्गत्वेन तेषां तत उत्पत्त्यभावादिति भावः। जीवानामुत्पत्तावेव विस्फुलिङ्गदृष्टान्त इत्युक्तौ बाधकमाह—अन्यथेति॥

जीवपरयोर्बिम्बप्रतिबिम्बभावेऽपि तयोरभेदासम्भवाद्भेद एव वास्तव इति सदृष्टान्तमाह—अत्राहेति॥

बिम्बप्रतिबिम्बभावे पूर्वपक्षः

अत्राह नवीनः—यदि जीवो ब्रह्मणः प्रतिबिम्ब इत्युच्यते, तर्हि तात्त्विक एवैतयोर्भेदः स्यात्। अभेदे मानाभावात्। तथा हि—तत्र न तावत् प्रत्यक्षं मानम्। 'इमे चैत्र-तच्छाये भिन्ने' इतिवद् 'इमे चैत्रतत्प्रतिबिम्बे भिन्ने' इति पार्श्वस्थेन ग्रहणात्, स्वेनापि स्वकर-तत्प्रतिबिम्बे भिन्ने इति ग्रहणात्।

ननु यथा बहिः स्थितश्चैत्रो यत्स्वलक्षणः प्रतिपन्नस्तत्स्वलक्षण एव वेश्मान्तःस्थो भाति, तथा यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणमेव दर्पणस्थमपि भातीति न तद्वस्त्वन्तरम्। तस्मादेकमेकदेशस्थं मुखं भिन्नं भिन्नदेशस्थमिव भातीति चेत् न। किमनेन सव्येतरहस्तयोरिवात्यन्तसादृश्यधीरुपन्यस्ता प्रत्यभिज्ञा वा?। आद्ये न तयोरैक्यसिद्धिः। अन्त्येऽसिद्धिः। किञ्चित्स्वच्छताम्रादौ प्रतीते मुखच्छायामात्रे मुखसंस्थानविशेषाप्रतीत्या प्रत्यभिज्ञाऽभावस्य स्फुटत्वात्।

स्वनेत्रगोलकादौ स्वस्याभिज्ञाऽभावेन प्रत्यभिज्ञायोगाच्च। सूर्यपार्श्वे प्रतिसूर्य इव 'दर्पणे मुखच्छाया' इत्यनुभवेन 'दर्पणे मम मुखं लग्नम्' इतिप्रतीत्य-

---

बिम्बप्रतिबिम्बयोरभेदे किं प्रत्यक्षं मानमुतानुमानं किं वा स्मृतिः?। नाद्यः प्रत्यक्षेण तद्भेदस्यैव ग्रहादिति सदृष्टान्तमाह—तत्र न तावदिति। पार्श्वस्थेन भेदेन ग्रहणेऽपि चैत्रेण तयोरभेद एव गृह्यत इत्याशङ्क्याह—स्वेनापीति। ननु गृहाद्बहिश्चैत्रो यद्रूपो दृष्टस्तद्रूप एव गृहमध्ये दृष्ट इति यथा तस्य बहिर्दृष्टादभेदः, एवं ग्रीवास्थमुखं यत्स्वरूपं दृष्टं तत्स्वरूपमेव दर्पणे दृश्यत इति यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणं दर्पणस्थं भाति तत्स्वरूपमेव दर्पणेऽपि दृश्यत इति तत्तो न भिद्यते। तथा च तत्र भेदादिप्रतिभासो भ्रम इति टीकाकारोक्तमनुवदति—नन्वित्यादिना। भिन्नमित्यत्रापि इवशब्दो द्रष्टव्यः। यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणं दर्पणस्थं भातीत्यनेन किं बिम्बप्रतिबिम्बयोः सादृश्यं भातीत्युच्यते, उताभेद इति विकल्पयति—किमनेनेति। आद्ये सादृश्यस्य भेदसापेक्षत्वान्नाभेदसिद्धिरित्याह—आद्य इति। द्वितीये क्वचिन्मुखप्रतिबिम्बवत्वेन मुखाकारप्रतीत्यभावात्प्रत्यभिज्ञैव नेत्याह—अन्त्ये इति।

क्वचिच्च विशेष्येन्द्रियसंनिकर्षाभावेनाभिज्ञाऽयोगात्प्रत्यभिज्ञाऽभाव इत्याह—स्वनेत्रेति।

यत्रापि प्रतिबिम्बे मुखाकारो दृश्यते तत्रापि न प्रत्यभिज्ञेति सदृष्टान्तमाह—सूर्येति। प्रत्यभिज्ञाऽभावादेव बालानां स्वप्रतिबिम्बे चेतनान्तरत्वभ्रम इत्याह—अत एवेति। कथं तर्हि दर्पणे मम मुखमित्यादिव्यपदेश इत्याशङ्क्य ज्ञातभेदयोरभेदव्यपदेशत्वाद् गौण एवेति सदृष्टान्तमाह—क्वचिदिति। किं च बिम्बप्रतिबिम्बयोरभेदप्रतिभासे त्वदभिमतभेदभ्रम एव न स्यात्तन्मूलाज्ञानस्य तेन नाशादित्याह—किं च यदीति।

**भावाच्च। अत एव बालानां प्रतिबिम्बे बालान्तरभ्रमः। क्वचित् ममभुखमिति व्यपदेशः स्वच्छायाशिरसि स्वशिरोव्यवहारवत् मार्गविन्यस्तपादाकृतौ स्वपाद-व्यवहारवच्च गौणः। भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वनियमात्।**

**किं च यद्यैक्यं भासते तर्ह्यज्ञानस्य निवृत्तत्वान्न भेदभ्रमः स्यात्, न च तत्रोपाध्यभावसहकृतादेव ज्ञानादज्ञाननिवृत्तिरिति वाच्यम्। ज्ञानस्य स्वप्रागभाव-निवृत्ताविवाज्ञाननिवृत्तावप्यनपेक्षत्वात्। अन्यथा तत्रापि 'न जानामि' इत्यनुभव-प्रसङ्गात्।**

**न च मूलाविद्याकार्यः प्रतिबिम्बभ्रम इति वाच्यम्। व्यावहारिकत्वप्रसङ्गात्। न च सोपाधिकभ्रमे नाज्ञानंहेतुः, न वा ज्ञानमज्ञाननिवर्त्तक, किन्तूपाधिरेव कारणं तदभावश्च निवर्तकः इति वाच्यम्। भ्रान्तेरनुरूपमज्ञानमेव हेतुः असत्यं च न ज्ञानातिरिक्तनिवर्त्यमिति त्वदभ्युपगमविरोधात्। नाप्यनुमानं तत्र मानं; तत्र न तावत् अत्यन्तसदृशत्वं हेतुः। सव्येतरशृङ्गादौ व्यभिचारात्, सादृश्यस्य भेद-व्याप्तत्वेन विरोधाच्च। नापि वैधर्म्याभावो लिङ्गम् असिद्धेः। नापि बिम्बचल-**

---

अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकत्वाद् बिम्बप्रतिबिम्बाभेदज्ञानस्य चोपाधिना प्रति-बद्धत्वान्न भेदभ्रममूलाज्ञाननिवर्त्तकतेत्याशङ्क्य ज्ञानस्य स्वप्रागभावनिवृत्ताविवा-ज्ञाननिवृत्तावपि निवर्त्यातिरिक्तानपेक्षत्वादुपाध्यभावस्य तत्र सहकारित्वमेवायुक्त-मित्याह—न च तत्रेत्यादिना। ननु कार्यमात्रे प्रतिबन्धकाभावस्यानुकूलत्वात्तदभावे कथमज्ञाननिवृत्तिलक्षणकार्य्यमित्याशङ्क्य तर्हि तदनिवृत्तौ मुखाभेदं न जानामीत्यनुभवः स्यात्। अज्ञानस्य साक्षिमात्रभास्यत्वात्; इत्याह—अन्यथेति।

ननु बिम्बप्रतिबिम्बभावेन भ्रमो न मुखाभेदाज्ञानजन्यः, येन तन्निवृत्त्या निवर्तेत; किं तु वियदाद्युपादानमूलाज्ञानजन्यः तस्य च मुखाभेदज्ञानेनानिवृत्तत्वात्तद्भेदभ्रमानु-वृत्तिरित्याशङ्क्य तथात्वे घटादिभेदवत् बिम्बप्रतिबिम्बभेदस्यापि व्यावहारिकसत्यता-प्रसङ्ग इत्याह—न च मूलेति।

निरुपाधिकभ्रम एवाज्ञानजन्यः सोपाधिकभ्रमस्तुदर्पणाद्युपाधिनैव जन्यो यावदु-पाध्यनुवर्तत इत्याशङ्क्यापसिद्धान्तप्रसङ्गेन दूषयति—न च सोपाधिकेत्यादिना। द्वितीय-मपवदति—नापीति। तत्र हेतोरनिरूपणादिति शेषः। किं प्रतिबिम्बस्य बिम्बाभेदेऽ-त्यन्तसादृश्यं हेतुः, वैधर्म्याभावो वा, बिम्बचलनाधीनचलनवत्त्वं वा, बिम्बकारणमात्र-जन्यत्वं वा ?। आद्यं व्यभिचारेण दूषयति—सव्येतरेति। साध्यविपर्ययव्याप्तत्वाद्विरुद्ध-श्चायं हेतुरित्याह—सादृश्यस्येति। श्यामत्वावदातत्वप्रत्यङ्मुखत्वादिविरुद्धधर्मवत्त्वाद् बिम्बप्रतिबिम्बयोर्द्वितीयो हेतुरसिद्ध इत्याह—नापीति। बिम्बे चलति भूतलादौ तच्छायाया अपि चलनवत्त्वात्तत्र व्यभिचारेण तृतीयं दूषयति—नापि बिम्बेति। प्रतिबिम्बस्य

**नाधीनचलनत्वात् क्रियासाम्यं छायायामनैकान्त्यात् । नापि बिम्बकारणमात्रजन्यत्वं बिम्बादर्वाचीने प्रतिबिम्बे तदसिद्धेः । पृथग्दृष्टकार्यानुरोधेन परिवेषेन्द्रचापच्छायाप्रतिसूर्य्यादाविव कारणस्य कल्प्यत्वात् ।**

**प्रतिबिम्बमपि च्छायाविशेषो द्रव्यान्तरं वा तमोवत् । एतेन दर्पणं मुखव्यक्तिशून्यं तत्कारणशून्यत्वादित्यनुमानं प्रत्युक्तम् । "नोपरक्तं न वारिस्थम्" इति स्मार्त्तव्यवहारस्तु "चित्रे सिंह" इति लोकव्यवहारवत् यथा जतुमयी योषिद् इत्यादिवचनवच्च गौण इति न किंचिदभेदे मानम् । तद्भेदस्तु प्रत्यक्षेण चलत्वाचलत्वन्यूनाधिकपरिमाणप्रत्यङ्मुखत्वत्वग्ग्राह्यत्वाग्राह्यत्वलिङ्गैश्च सिद्धः । अभेदे**

---

बिम्बकारणमात्रजन्यत्वे तयोः पौर्वापर्यायोगात् तुरीयोऽपि हेतुरसिद्ध इत्याह—नापीति । प्रतिबिम्बस्य कारणान्तरानिरूपणाद् बिम्बकारणमात्रजन्यत्वम् । तथा च पौर्वापर्यविभासो भ्रम इत्याशङ्क्याह—पृथग्दृष्टेति ॥

ननु बिम्बातिरिक्तः प्रतिबिम्बः किं द्रव्याद्यन्यतमस्तदतिरिक्तो वा ? नाद्यः । तस्य पृथिव्यादित्रितयान्तर्भावे गन्धगुरुत्वद्रवत्वोष्णस्पर्शाद्युपलम्भप्रसङ्गात् । वाय्वादिद्रव्यात्मकत्वे चाक्षुषत्वायोगात् । रूपादिमत्त्वेन गुणादावप्यन्तर्भावायोगात् । न द्वितीयः । द्रव्यादिषट्कातिरिक्तभावपदार्थाप्रसिद्धेः, इत्याशङ्क्याह—प्रतिबिम्बमिति ।

प्रसिद्धच्छायायां शुक्लरूपादेरभावाच्छायाविशेष इत्युक्तम् । तथा च च्छायाया दशमद्रव्यत्वादिदमपि दशमं द्रव्यमित्यर्थः । तदतिरिक्तं वा द्रव्यान्तरमिति पक्षान्तरमाह—द्रव्यान्तरं वेति । प्रसिद्धद्रव्येष्वनन्तर्भूतस्य द्रव्यान्तरत्वे दृष्टान्तमाह—तमोवदिति । मुखप्रतिबिम्बस्यामुखत्वाङ्गीकारादेव दर्पणे मुखाभावसाधनं सिद्धसाधनत्वेन दुष्टमित्याह—एतेनेति ।

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इति स्मृतौ वारिस्थमादित्यं नेक्षेतेति वारिस्थप्रतिबिम्बस्याऽऽदित्यत्वेनानूदितत्वात्तद्भेदः सिद्ध इति तृतीयं दूषयति—नोपरक्तमिति । गौण इति । ज्ञातभेदयोरभेदव्यपदेशत्वादित्यर्थः । भेदेऽपि न मानमित्याशङ्क्य 'इमे चैत्रतत्प्रतिबिम्बे' इति प्रत्यक्षेण तावत्सिद्धः इत्याह—तद्भेदस्त्विति । "बिम्बप्रतिबिम्बे परस्परं भिन्ने विरुद्धधर्माश्रयत्वाद् दहनतुहिनवत्" इत्यनुमानेनापि तद्भेदः सिद्धइत्यभिप्रेत्य तयोर्विरुद्धधर्मानाह—चलत्वेति । त्वग्ग्राह्यत्वेति । बिम्बस्य त्वगिन्द्रियग्राह्यत्वमितरस्य तदग्राह्यत्वमित्यर्थः । दर्पणस्थप्रतिबिम्बस्य बिम्बादभेदे बाधकान्तरमाह—अभेद इति । ननु स्वतःप्राङ्मुखत्वादिरूपे मुखे प्रत्यङ्मुखत्वादेः शङ्खे पीतत्ववद् भ्रान्त्या प्रतिभासान्न विरुद्धधर्माश्रयत्वमित्याशङ्क्य

कस्तूरीप्रतिबिम्बे गन्धस्य गुडादिप्रतिबिम्बे रसस्य चानुभवप्रसङ्गात् । न च प्रतिबिम्बे प्रत्यङ्मुखत्वादिभ्रान्तिः प्रतिबिम्बं बिम्बाभिमुखं नेति कदाप्यननुभवात् ॥

एतेन "दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्" इति निरस्तम् । परावृत्य स्वमुखस्यैव ग्रहणे पार्श्वस्थमुखप्रतीत्ययोगात् । अस्मिन्पक्षे नेत्राभिघातमात्रोपक्षीणत्वेन दर्पणैक्य इव तद्भेदेऽप्येकमुखप्रतीत्यापत्तेश्च । अस्याः प्रक्रियाया ब्रह्मप्रतिबिम्बे जीवेऽसंभवात् । जलस्य नेत्राभिघातकत्वे जलान्तर्गतस्वर्णादेरग्रहप्रसङ्गाच्चेति ।

नवीनाक्षेपनिरासः

उच्यते । न तावदियं मुखच्छाया । प्रसिद्धच्छायाया अत्यन्तविलक्षणत्वात् । तथाहि—दर्पणे प्रतीयमानं मुखं पुरुषाभिमुखं पुरुषमीक्षमाणं स्पष्टतरदन्तरसनाद्यवयवविशेषं च दृश्यते । न च तमोविशेषच्छायाया एतदस्ति । एवं रजतादर्शादौ प्रतिबिम्बमुखमश्याममनुश्रूयते । प्रसिद्धा तु च्छाया नियमेन श्यामैव ॥

---

तत्प्रतिभासस्य बाधकाभावान्न भ्रान्तित्वमित्याह—न चेति । प्रतिबिम्बे प्रत्यङ्मुखत्वादिप्रतीतेर्बाधकाभावाद्वार्तिककारोक्तिरप्ययुक्तेत्याह—एतेनेति ।

स्वमाननं व्याप्नुवन्तीत्यत्र स्वमिति विशेषणमन्ययोगव्यवच्छेदार्थमिति मत्वा दूषयति—परावृत्येति । दर्पणाभिघातेन परावृत्तदृष्ट्या ग्रीवास्थमुखमेव व्यत्यस्ततया भातीति पक्षे बहूनां दर्पणानां सन्निधानेऽपि तेषामेकस्यैव दृष्टिप्रतिहतिमात्रहेतुत्वादेकमेव प्रतिबिम्बमुखं भायादित्याह—अस्मिन्पक्ष इति । उपाधिप्रतिहतदृष्ट्यैव प्रतिबिम्बभ्रमे चक्षुरविषये ब्रह्मणि जीवभावेन प्रतिबिम्बभ्रमो न स्यादित्याह—अस्या इति । दर्पणवदेव जलस्यापि चक्षुःप्रतिघातकत्वेन चक्षुषस्तदधस्तनद्रव्यसंयोगाभावात्तदवभासो न स्यादित्याह—जलस्येति ।

ग्रीवास्थमेव मुखं दर्पणाद्युपाध्यभिघातरूपदोषवता चक्षुषा व्यत्यस्ततया गृह्यमाणं तत्प्रतिबिम्बमिति वक्तुं छायाविशेषः प्रतिबिम्बमिति मतं प्रथमं दूषयति—न तावदिति । तव मते यथा च्छायायाः पृथिव्यादिविलक्षणत्वात्ततो भेदः, एवं छायातोऽपि विलक्षणत्वात्प्रतिबिम्बं न च्छायेत्यर्थः । वैलक्षण्यमेव दर्शयति—तथा हीति । प्रतिबिम्बस्य च्छायात्वे नियमेन श्यामता स्यात्, न च साऽस्तीत्याह—एवमिति । किं च प्रौढालोकसंसृष्टाऽऽदर्शतले च्छायाया असंभवात्तत्र प्रतीयमानं प्रतिबिम्बं ततोऽन्यदित्याह—एवमिति ।

एवं प्रचुरालोकवति प्रदेशे प्रत्यालोकं प्रतिबिम्बमनुभूयते । छाया चाऽऽलोकनिवर्त्या । छायाविधुरस्यादित्यादेरपि प्रतिबिम्बदर्शनाच्च । न च प्रतिबिम्बमुखस्य च्छायाविशेषत्वान्नैतत्सर्वं विरुद्धमिति वाच्यम् । अत्यन्तप्रसिद्ध-च्छायाविलक्षणे तस्मिन् कथमपि च्छायात्वानुभवाभावेन तद्विशेषत्वस्य कल्प-यितुमशक्यत्वात् । न चैवं तत्र प्रतिबिम्बे च्छायाशब्दप्रयोगः कथमिति वाच्यम् । प्रसिद्धच्छायायामिवाऽऽरोपितभेदाश्रयप्रतिबिम्बेऽपि बिम्बचलनाधीनचलनत्व-दर्शनेन तस्य गौणत्वात् । उक्तवैधर्म्येण भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वात् । 'दर्पणे मुखं पश्यामि' 'मम मुखं सुन्दरतरं' 'तव मुखं विपरीतम्' इति दर्पणे प्रतीयमानमुखे मुखत्वसंसर्गतदभेदयोरनुभवाच्च । न च च्छायायामिवैतदौपचारिकं किं न स्यादिति वाच्यम् । तद्वदत्र मुखत्वसंसर्गाद्यनुभवे बाधकाभावात् ।

न च भेदप्रत्ययादिरेव बाधक इति वाच्यम् । एवं तर्हि दर्पणस्थं मुखान्तर-मेव कल्प्यतामुभयप्रत्ययप्रामाण्याय । छायायां कल्प्यस्यालौकिककारणस्य तत्रापि कल्पयितुं शक्यत्वात् न च तदपीति वक्ष्यते ।

---

प्रत्यालोकमिति । आलोकाभिमुखमित्यर्थः । किं च चन्द्रसूर्य्याद्यालोकनिवारक-वृक्षादिप्रतियोगिकत्वात् छायायाश्चन्द्रादेश्चालोकानिवारकत्वात्तच्छायाया असत्त्वेऽपि जलादौ तत्प्रतिबिम्बदर्शनान्न तस्य च्छायात्वमित्याह—छायाविधुरस्येति । छायाविशेष-त्वादेव वृक्षादितो वैलक्षण्यमित्याशङ्क्य छायात्वव्यापकानां श्यामत्वालोकविरोधित्वादी-नामभावान्नैव च्छायात्वं, कुतस्तद्विशेषत्वमित्याह—न च प्रतिबिम्बेत्यादिना । कथं तर्हि 'दर्पणे मुखच्छाया' इति क्वचिद् व्यपदेश इत्याशङ्क्य पितृसदृशे पुत्रे पितृच्छायात्वव्य-पदेशवद्गौण इत्याह—न चैवमित्यादिना । ननु मुख्यत्वे संभवति गौणत्वमन्याय्यमित्या-शङ्क्य प्रसिद्धच्छायातो भेदस्य स्पष्टमनुभवान्न मुख्यत्वसंभव इत्याह—उक्तेति । किं च छायात्वाभावव्याप्तमुखत्वादेरेव प्रतिबिम्बेऽनुभवान्न तस्य च्छायात्वमित्याह—दर्पण इति । यदुक्तं स्वच्छायाशिरसि स्वशिरोव्यवहारवत् स्वपादाकृतौ पादव्यवहारवच्च 'दर्पणे मम मुखम्' इति व्यपदेशो गौण इति, तद् दूषयति—न चेति ।

ननु 'इमे चैत्रतत्प्रतिबिम्बे' इति भेदानुभव एव प्रतिबिम्बस्य मुखत्वादिमत्त्वे बाधक इत्यत आह—न च भेदेति ।

प्रतिबिम्बस्य बिम्बभेदानुभवो न तस्य मुखत्वसंसर्गानुभवबाधकः । तस्य मुखा-न्तरत्वेऽपि तदुपपत्तेः । तथा च न त्वदभिमतछायात्वमित्यभिप्रेत्याह—एवं तर्हीति । दर्पणे मुखकारणाभावात्तत्र मुखान्तरमसम्भवीत्याशङ्क्याह—छायायामिति । त्वदभिमत-च्छायाविशेष इत्यर्थः । अस्तु तर्हि तन्मुखान्तरं, तावताऽपि बिम्बप्रतिबिम्बयोरभेदा-सिद्धिरित्याशङ्क्याह—न चेति ।

**किं च दर्पणे छायां पश्यामीत्यनुभव एवास्तु, तथापि 'दर्पणे मुखं पश्यामि' 'ममेदं मुखं' 'ग्रीवास्थमेव मुखमत्र प्रतीयते' अहं पूर्वमुखः' 'मम मुखं तु मदभिमुखं प्रतीयते' इत्यादिमुखत्वसंसर्गतदभेदाद्यनुभवैः स बाध्यते। न च वैपरीत्यापत्तिः। अनेकानुभवप्रामाण्यानुरोधेनैकस्यैव छायाऽनुभवस्याप्रामाण्यात्। न च भवन्मतेऽपि मुखे दर्पणस्थत्वबिम्बाभिमुख्यभेदप्रत्ययानामप्रामाण्यं कल्पनीयमिति वाच्यम्। तथापि मुखत्वव्याप्तधर्मानुभवानामनेकेषामप्रामाण्यप्रसङ्गात्। अस्मन्मते द्विविध-प्रत्ययप्रामाण्योपपत्तेश्च। धर्मिकल्पनं चाधिकम्।**

प्रतिबिम्बस्य द्रव्यान्तरत्वनिरासः

**अत एव न द्रव्यान्तरमपि। किं च छाया वा द्रव्यान्तरं वा दर्पणस्थं मुखमिति मते अलौकिकं कारणान्तरमपि कल्प्यं, तच्चायुक्तम्। मुखमिति वाऽत्यन्तमुखसदृशतया वा प्रतीयमानस्य सव्येतरविषाणवत्तदतिरिक्तविलक्षण-**

---

पूर्वं प्रतिबिम्बे छायात्वव्यपदेश एव स गौण इत्युक्तम्। इदानीं तदनुभवमङ्गी-कृत्य तस्य मुखत्वाद्यनुभवेन बाधितस्य भ्रान्तित्वान्न प्रतिबिम्बस्य च्छायात्वमित्याह--किं चेति। छायात्वानुभवेनैव मुखत्वाद्यनुभवानां बाधः किं न स्यादित्याशङ्क्यानेकेषाम-प्रामाण्यकल्पनापेक्षयैकस्यैव तत्कल्पनमिति दूषयति--न च वैपरीत्येति। बिम्बप्रतिबिम्ब-योरभेदमतेऽपि बहूनामनुभवानामप्रामाण्यं तुल्यमित्याशङ्क्यास्मन्मते त्रिचतुरज्ञाना-प्रामाण्येऽपि तव मते मुखत्वव्याप्यचक्षुःश्रोत्रनासिकादन्तजिह्वालालाकेशश्मश्रुललाट-गण्डचुबुकाधरादिविषयज्ञानशताप्रामाण्यप्रसङ्गाद्वैषम्यमित्याह–न च भवन्मत इत्यादिना। भेदादिज्ञानानामप्रामाण्यमङ्गीकृत्येदमुक्तम्, अस्मन्मते चानिर्वचनीयभेदाद्यङ्गीकारात्तेषा-मपि तद्वति तत्प्रकारकत्वलक्षणप्रामाण्यमुपपद्यत इत्याह–अस्मन्मत इति। किं च तव मते प्रत्यङ्मुखत्वादिधर्मास्तद्धर्मी चेत्यनेकं कल्पतीयमिति कल्पनागौरवम्। अस्मन्मते तु प्राङ्मुखे एव धर्मिणि प्रत्यङ्मुखत्वादिधर्ममात्रकल्पनाङ्गीकाराल्लाघवमित्यभिप्रेत्याह--धर्मीति।

एवं प्रतिबिम्बस्य छायाविशेषत्वमतं निराकृत्य तस्य द्रव्यान्तरत्वमतमपि दूषयति—अत एवेति।

बहुतरप्रत्ययाप्रामाण्यप्रसङ्गात् कल्पनागौरवाच्चेत्यर्थः। न केवलं धर्मिकल्पना-गौरवं तत्कारणं चाधिकं कल्पनीयमित्याह--किं चेति। कार्यानुरोधेन तत्कल्पनमित्या-शङ्क्याह—तच्चेति। द्रव्यान्तरत्वे दृष्टान्तितस्य तमसः प्रतिबिम्बाद्वैषम्यमाह–अन्धकार-श्चेति। रूपवत्त्वे सत्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वात्तमसस्तादृशावयवा मूलाज्ञानं वा तत्कारणत्वेन कल्प्यमित्यर्थः। सौराद्यालोकस्यैवाभ्रविशेषोपाधौ परिवेषादिरूपेण भानात्

कारणजन्यत्वायोगात्। अन्धकारश्च प्रसिद्धद्रव्यविलक्षण एवानुभूयत इति तत्र विजातीयं कारणं कल्प्यम् प्रतिसूर्य्यादिकं च क्लृप्ततेजआदिद्रव्येष्वेवान्तर्भवति।

किञ्च कारणान्तरमपि दर्प्पणादिसंयुक्तं तदुपादानम्, उत स्वातन्त्र्येण वर्तमानम्?। नाद्यः। जलाशयतीरे किञ्चिद्दूरव्यवहितानां वृक्षाणां जलाशयप्रदेशादन्यत्रैव प्रसृतिपरिमितजले ताम्रादौ नक्षत्रादेर्योजनादिव्यवधानेन प्रतिबिम्बानुभवात्। अन्यत्र स्थितस्योपादानस्यान्यत्र कार्याजनकत्वात्। व्यवहितानुभवो भ्रम इति चेत्। न, त्वन्मते दर्पणे मुखाकारबुद्धेरिव व्यवहितदेशानुभवस्याप्यबाधितत्वात् 'जलोपरि वृक्ष' इति कदाचिदप्यननुभवाच्च।

न द्वितीयः। जलादेर्योजनादिव्यवहितदेशे कार्याजनकत्वात्। अन्यथा नदीस्थजलेन निदाघसमये तीरमप्यार्द्रीक्रियेत। न च जलादिस्तत्र कारणमेव न भवतीति वाच्यम्। अन्वयव्यतिरेकविरोधात्। बिम्बस्याप्यन्वयव्यतिरेकसिद्धं हेतुत्वं भज्येत। छायायां शरीरवद् व्यवहितस्यापि हेतुत्वं न विरुद्धमिति चेत्। न, शरीरस्यापि विच्छिन्नदेशच्छायाया अजनकत्वात्।

---

छायायाश्च तमोविशेषत्वान्न तत्रालौकिकं कारणं कल्प्यमिति न तत्र दृष्टान्त इत्यभिप्रेत्याह—प्रतिसूर्य्यादिकमिति।

किं च प्रतिबिम्बस्य द्रव्यान्तरत्वे किं तत् निमित्तकारणेनैव जन्यते, उतोपादानकारणेनापि?। नाद्यः। भावकार्यस्योपादानं विनोत्पत्त्ययोगादित्यभिप्रेत्य द्वितीयं विकल्पयति—किं चेति। स्वातन्त्र्येणेति। उपाधिसंसर्गं विना यत्र कुत्र वर्त्तमानमित्यर्थः। बिम्बस्य उपाधिना यावद्व्यवधानं प्रतिबिम्बस्यापि तावद्व्यवधानप्रतीतेरुपाधिसंसृष्टोपादानस्य न तज्जनकत्वमित्याह—नाद्य इति। व्यवधानप्रतीतेर्भ्रमत्वादुपाधिसंसृष्टमेव प्रतिबिम्बमिति शङ्कते—व्यवहितेति। भेदप्रतीतेरिव व्यवधानप्रतीतेरपि बाधकाभावान्न भ्रमत्वमित्याह—न त्वन्मत इति। बाधकाभावमेव विशदयति—जलोपरीति॥

द्वितीये जलाद्युपाधिरपि प्रतिबिम्बकारणम्, उत न?। आद्यमयुक्तमित्याह—जलादेरिति। व्यवहितेदेशे कार्यजनकत्वेऽतिप्रसङ्गमाह—अन्यथेति। द्वितीयं दूषयति—न चेति। अन्वयव्यतिरेकवत उपाधेः प्रतिबिम्बाहेतुत्वे बिम्बस्यापि तदापात इत्याह—बिम्बस्यापीति। ननु प्रातः शरीरादेर्व्यवहितदेशवर्तिच्छायाहेतुत्वं दृष्टं, तद्वदुपाध्यादेरपि तत्किन्न स्यादिति शङ्कते—छायायामिति। दृष्टान्तासंमत्या दूषयति—न शरीरस्यापीति। आलोकरहितप्रदेशे शरीरमवष्टभ्यैव च्छायाया उत्पत्तेर्न तस्य व्यवहितारम्भकत्वम्। इतरथा वनस्थदण्डवत्तस्यापि तज्जनकत्वायोगादित्यर्थः।

अपि च "शरीरादेःच्छायाविरोध्यालोकापसरणद्वारेणानुकूलतामात्रं, न हेतुत्वम्। ततश्च व्यवहितकार्यहेतुत्वे तन्नोदाहरणमित्यभिप्रेत्याह—किञ्चेति। अन्वयव्यतिरे-

**किञ्च छायायां शरीरं तद्विरोध्यालोकोत्सादकत्वेनोपयुज्यते, न तु हेतुः। अन्यथा सर्वतस्तुल्यप्रभावदनेकदीपवेष्टनेपि च्छायाप्रसङ्गात्। एवं पृथिव्यादिव्यवहितदेशे प्रतिबिम्बितनक्षत्रादेः प्रतीत्यनुपपत्तेश्च। असंबद्धस्यापि चक्षुषो ग्राहकत्वेऽतिप्रसङ्गात्। चक्षुषोऽन्वयव्यतिरेकाभ्यां तत्रापेक्षितत्वात्। अपि चैवं तव मते शुक्तिरजतादेरप्यलौकिकस्य संभवात्त्वदभ्युपगताऽसत्ख्यातिरपि न सिद्ध्येत्। तस्मान्न छाया द्रव्यान्तरं वा।**

**अतएव दर्पणे प्रतीयमाने मुखत्वसंसर्गानुभवात् भेदानुभवात्प्रत्यङ्मुखत्वादिविरुद्धधर्मानुभवाच्च मुखान्तरम् न च तदुत्पत्तिकारणाभावः। दर्पणसंयुक्तानां मुखावयवानामेव तदुत्पादकत्वात्। तच्च मुखं गुरुत्वोद्भूतस्पर्शहीनमिति न करावमर्शेन मुखप्रतीतिर्न वा गजादिप्रतिबिम्बे दर्पणादेर्दुर्वहत्वम्। अनुभवाद्दर्पणमुखस्यान्यत्वे सिद्धे पार्थिवद्रव्यस्याप्यनुपलम्भाद् गुरूत्वाभावसिद्धेः।**

---

काभ्यां साक्षादेव हेतुत्वं किं न स्यादित्याशङ्क्याह—अन्यथेति। परमते यथा प्रतिबिम्बोत्पत्तिरनुपपन्ना, एवं तत्प्रतीतिरप्यनुपपन्नेत्याह—एवमिति। जलस्योपरिष्टान्नक्षत्रादि यावद्दूरे प्रतीयते, तत्प्रतिबिम्बमपि तदधस्तात्तावद्दूरे प्रतीयत इति सर्वानुभवसिद्धम्। तथा च योजनादिव्यवहिताधस्तनदेशगतस्य प्रतिबिम्बस्य जलाद्याश्रयपृथिव्यादिना व्यवधानादचाक्षुषतापत्तिरित्यर्थः। प्रतिबिम्बमसंनिकृष्टमेव चक्षुषा भासतामित्याशङ्क्याह—असम्बद्धस्येति। अत एव प्रतिबिम्बं न चाक्षुषं किन्तु मानसं, साक्षिगम्यं वा इत्याशङ्क्यान्धादीनां प्रतिबिम्बादर्शनात्तस्य चाक्षुषत्वमावश्यकमित्याह—चक्षुष इति। किं च तव मते दर्पणादावलौकिककारणेन प्रतिबिम्बोत्पत्तिवच्छुक्त्यादावपि रजताद्युत्पत्तिसंभवात्तन्नाशसंभवाच्च सत्ख्यात्युपपत्तौ असत्ख्यात्यभ्युपगमो निर्मूल इत्याह—अपि चेति। नवीनमतनिराकरणमुपसंहरति—तस्मादिति।

प्रतिबिम्बे मुखत्वतद्व्याप्यधर्मानुभवानां भेदानुभवस्य च प्रामाण्याय मुखान्तरमेव तदिति मतान्तरमपवदति—अत एवेति।

अस्य प्रत्युक्तमित्युत्तरेण सम्बन्धः। मुखान्तरोत्पत्तौ कारणाभावात्तदसंभवमाशङ्क्य दर्पणसंयुक्तमुखान्तरावयवानामुपादानत्वाद्दर्पणबिम्बादीनां निमित्तत्वान्मैवमित्याह—न चेति। दर्पणादौ बिम्बसदृशं वस्त्वन्तरमस्ति चेत्, तर्हि बिम्बवद्धस्तेनापि गृह्येत, गजादिप्रतिबिम्बाश्रयदर्पणादेश्च दुर्वहत्वं स्यादित्याशङ्क्याह—तच्च मुखमिति।

ननु गजादेः पार्थिवत्वेन तत्सजातीयप्रतिबिम्बस्यापि पार्थिवत्वात्कथं गुरुत्वाभाव इत्याशङ्क्य पार्थिवत्वेऽपि धूमादाविवानुपलम्भादेव तदभाव इत्याह—अनुभवादिति। अस्मिन्पक्षे मुखभेदानुभवाविरोधेऽपि मुखसंसर्गाभावानुभवविरोध इत्याशङ्क्य तस्यान्य-

न चैवं दर्पणे मुखं नास्तीति दर्पणमुखसंसर्गनिषेधधीविरोधः। तस्या ग्रीवास्थमुखविषयत्वात्। दर्पणे मम मुखमिति प्रतीतिश्च पुत्रादेरिव स्वशरीरजन्यत्वादप्युपपद्यते। न च प्रत्युत्पन्नदर्पणादौ मुखपरिणामार्थं कारुकर्मापेक्षादर्शनात्तदभावे कथमन्यत्र मुखं जायेतेति वाच्यम्। कारुव्यापारस्य दर्पणस्वच्छतायामेवोपयुक्तत्वात्। मुखप्रतिबिम्बस्य तेन विनापि दर्शनादिति प्रत्युक्तम्। ग्रीवास्थमेवात्र प्रतीयते दर्पणे मुखं नास्ति प्रत्यङ्मुखमेव प्राङ्मुखमनुभूयते इत्यनुभवविरोधात्।

किञ्च सन्ति तावच्चतुरङ्गुलविस्तीर्णादर्शादौ गजतुरङ्गादीनां तावत्परिमाणानामेव युगपदसङ्कीर्णानि प्रतिबिम्बानि। तानि कथमादर्शसंयुक्तावयवपरिणामानि भवेयुः?। अल्पदेशे गजादिशरीराणां तावत्परिमाणानामसङ्करसमवायायोगात्। न चाल्पपरिमाणान्येव तत्र गजादिशरीराणि जायन्ते स्थूलबुद्धिस्तु भ्रम इति वाच्यम्। 'दर्पणे गजः' इति प्रतीतेरिव 'स्थूलो गजः' इति प्रतीतेः सति बिम्बसन्निधौ बाधाभावात् 'सूक्ष्मो गजः' इति कदाप्यप्रतीतेश्च॥

किञ्च तव मते धर्मी धर्माश्चेत्यनेकं कल्पनीयम्, पार्थिवस्यालौकिकस्वभावोऽपि कल्पनीयः, अनेकदेशव्यवहितानामपि दर्पणासंयुक्तावयवैरारम्भः,

---

विषयत्वान्नैवमित्याह—न चैवमिति। प्रतिबिम्बमुखस्य बिम्बमुखाद् भेदे कथं दर्पणे मम मुखमिति प्रतीतिरित्याशङ्क्य मम पुत्र इतिवदुपपद्यत इत्याह—दर्पण इति।

ननु मूषाया मुत्पन्नमात्रे दर्पणे प्रतिबिम्बोत्पत्तौ निघर्षणादिकारुकर्मापेक्षादर्शनात्कालान्तरे तदभावात्तत्र कथं प्रतिबिम्बोत्पत्तिरित्याशङ्क्य कारुकर्मणः प्रथममपि प्रतिबिम्बप्रतिबन्धकदर्पणगतमलनिवृत्तावेवोपयुक्तत्वान्न प्रतिबिम्बहेतुतेत्याह—न चेत्यादिना। अत एवेत्युक्तं विवृणोति—ग्रीवास्थमिति।

किं च बिम्बसजातीयेषु प्रतिबिम्बेषु प्रतीयमानं परिमाणमपि यथार्थं न वा? नाद्यः। अल्पपरिमाणे दर्पणजलादौ बिम्बसमपरिमाणानां गजादिप्रतिबिम्बानां परस्परासंसृष्टानामनुभवात्तेषां तत्संसृष्टावयवैस्तत्रारम्भासम्भवादित्याह—किञ्चेति।

द्वितीये बिम्बसमपरिमाणत्वप्रतीतेर्भ्रमत्वं वक्तव्यम्, तदयुक्तम्। द्रव्यवत्परिमाणेऽपि बाधकाभावादित्याह—न चेत्यादिना। बाधकाभावमेवोपपादयति—सूक्ष्म इति। प्रतीयमानपरिमाणस्यालीकत्वे तत्र परिमाणान्तरे मानाभावान्मुखान्तरत्वाद्यनुपपत्तिरिति चार्थः॥

प्रतिबिम्बस्य मुखान्तरत्वमतेऽपि कल्पनागौरवदोषो दुर्वार इत्याह—किं चेत्यादिना। ननु तव मतेऽप्यनिर्वचनीयप्रत्यङ्मुखत्वदर्पणस्थत्वबिम्बभेदानां तत्प्रमाऽप्रामाण्यस्य

**व्यवहितस्यापि चक्षुषा ग्रहणं, ग्रीवास्थमेव मुखमत्र भाति, दर्पणे मुखं नास्ति, प्रत्यङ्मुखमेव प्राङ्मुखतया भातीति प्रत्ययानामप्रामाण्यं चेति अनेकं कल्पनीयम्। मम त्वेकस्मिन्नेव मुखे प्रत्यङ्मुखत्वादिधर्मा एव कल्प्याः। बाधकबलात् प्रत्ययानामप्रामाण्यं चेति लाघवम्। प्रेक्षावतां स्वमुखविशेषपरिज्ञानाय दर्पणाद्युपादानमपि सङ्गच्छते॥**

**तस्माद् ग्रीवास्थे मुखे दर्पणस्थत्वम्, एकस्मिंश्च तस्मिन् भिन्नत्वं, प्राङ्मुखे च तस्मिन्प्रत्यङ्मुखत्वमिति धर्मा एव प्रतिबिम्बभ्रमे आरोप्यन्ते।**

मुखाज्ञानाभावादारोपो न भवेदित्याक्षेपः

**ननु मुखे ग्रीवास्थत्वेनानुभूयमाने तद्विषयाज्ञानाभावात्कथं तदारोप इति चेत्। न, मुखैकत्वाद्यावारकाज्ञानाभावेऽपि तदविषयकाज्ञानान्तरस्य तत्र सत्त्वात्। न च तत्र मानाभावः। भ्रमस्यैव तत्कार्यस्य तत्र मानत्वात्। न चानुपलम्भबाधः। सविषयकं ह्यज्ञानम् 'इदमहं न जानामि' इति विशिष्यानुभूयते। विषयश्च प्रमाणज्ञानाविषय एवाज्ञानविषय इति विशिष्याननुभवेऽपि तत्सत्त्वात्।[१]**

---

च कल्प्यत्वात्कल्पनागौरवमित्याशङ्क्य तथापि धर्मितदवयवचक्षुःश्रोत्रादिकल्पनाऽभावात् त्रिचतुराणामेव धर्माणां कल्प्यत्वात्तत्प्रत्ययानां च ग्रीवास्थमेव मुखं दर्पणे भातीत्यादिप्रमितिबाधितत्वेनाप्रामाण्यस्य न्याय्यत्वाल्लाघवमित्याह—ममत्विति। किं च ग्रीवास्थमुखस्यैव दर्पणादावप्रतीतौ तद्दिदृक्षया दर्पणाद्युपादानं न स्यात्। अन्यप्रत्यक्षेणान्यस्य प्रत्यक्षत्वायोगात् परोक्षप्रतीतावपि प्रत्यक्षज्ञानाय दर्पणादेरुपादानाद् ग्रीवास्थमुखस्यैव दर्पणे प्रत्यक्षत्वात् तदुपादानमित्याह—प्रेक्षावतामिति।

बिम्बस्यैव प्रतिबिम्बत्वात्तव दर्पणस्थत्वादिकं भ्रान्तिमात्रसिद्धमित्युपसंहरति—तस्मादिति।

यदुक्तं मुखैकत्वावभासे तदज्ञाननाशाद् भेदभ्रमायोग इत्येतदनुवदति—नन्विति। आवरणशक्तिमदज्ञाननाशेऽपि विक्षेपशक्तिमदज्ञानसत्त्वात्तदुपादानको भेदाद्यध्यास इत्याह—न मुखेति। अनावारकाज्ञाने मानाभावात्तदेव नास्तीत्याशङ्क्यानिर्वचनीयभेदाद्यध्यास एव स्वपरिणामितया तत् कल्पयति। अनिर्वचनीयकार्यस्यानिर्वचनीयकारणं विनाऽनुपपत्तेरित्याह—न चेति। मुखादावज्ञानकल्पनमनुपलब्धिविरुद्धमित्याशङ्क्याह—न चेति। सतोऽप्यज्ञानस्य उपलम्भायोग्यत्वात् अनुपलम्भ इति वक्तुं उपलम्भायोग्यमज्ञानमाह—सविषयकमिति। मुखादावज्ञानमस्ति चेत्तदपि तद्विषयः स्यादित्याशङ्क्याह—

अत एव तस्य तदा न ज्ञानान्निवृत्तिः । विषयावरणस्यैवाज्ञानस्य स्वसमानविषयज्ञानेन निवृत्तेः । न च तदाऽऽवरणाभावे कथं तत्र भ्रमहेतुत्वमज्ञानस्येति वाच्यम् । भ्रमविरोधिविशेषदर्शनाभावे सति अज्ञानमात्रात्तदुत्पत्तेः । अत्र च नास्ति तादृशं विशेषदर्शनम् । उपाधिना प्रतिबद्धस्य तस्य तदविरोधित्वात् ।।

अथ वा मूलाज्ञानमेव तत्र कारणम् । न चैवं व्यावहारिकत्वापत्तिः । अविद्यातिरिक्तदोषाजन्यत्वस्यैव तत्प्रयोजकत्वात् । अस्ति चात्रातिरिक्तो दोषः । अस्तु तर्हि दर्पणेऽनिर्वचनीयं मुखमिति चेत् । न, आदर्शे मुखं नास्तीति संसर्गमात्रनिषेधात् । भेदमात्रकल्पनयाऽपि मुखभेदप्रतीत्युपपत्तौ धर्मिकल्पनागौरवात् । नात्र मुखं तदेवेदमित्यनुभवाच्च ।।

---

विषयश्चेति । मुखाभेदस्य प्रमितत्वात्स नाज्ञानविषय इत्यर्थः । ततश्च तदज्ञानस्योपलम्भायोग्यत्वान्नानुपलब्धिविरोध इत्याह--इतीति ।

भेदादिभ्रमहेतोरज्ञानस्य मुखाविषयत्वादेव न तस्य तज्ज्ञानेन निवृत्तिरित्याह--अत एवेति । आवारकाज्ञानस्यैव विक्षेपहेतुत्वात्कथमनावारकाज्ञानाद्भेदभ्रमः । अन्यथा दर्पणाद्यभावेऽपि तत्प्रसङ्गादित्याशङ्क्याह--न चेति । अतिप्रसङ्गपरिहारायाह—भ्रमविरोधीति । दर्पणसन्निधानेऽपि विशेषदर्शनसत्त्वात्कथं भ्रम इत्याशङ्क्योपाध्यभावविशिष्टस्यैव तस्य तद्विरोधित्वात्, सत्युपाधौ न विरोधितेत्याह—अत्र चेति ।

एवं मुखादावनावारकमवस्थाज्ञानमङ्गीकृत्य तद्विलासो भेदादिभ्रम इत्युक्तम्, संप्रति मूलाज्ञानविलास एवायं भ्रम इति मतान्तरमाह—अथ वेति ।

अत्राप्युक्तदोषमपवदति—न चैवमिति । अत्राविद्यातिरिक्तदोषाजन्यत्वमेव व्यवहारिकत्वे तन्त्रं, न तु मूलाज्ञानजन्यत्वम् । अजन्याज्ञानादौ तदभावात् । मुखभ्रमस्याविद्याऽतिरिक्तदर्पणाद्यभिघातरूपदृष्टिदोषजन्यत्वान्न व्यावहारिकतेत्यर्थः । ननु भेदादिवत्प्रतिबिम्बस्वरूपस्याविद्यकत्वसम्भवान्न तस्य बिम्बाभेद इति शङ्कते—अस्त्विति । यदंशे बाधः, स एव कल्पितः । अन्यथा इदमंशस्यापि तदापातात् । बाधश्च प्रतिबिम्बस्य दर्पणसंसर्गविषय एव दृश्यते, न तु तत्स्वरूपविषयः । नेदं रजतमितिवन्नेदं मुखमित्यदर्शनात् । तथा च ग्रीवास्थमुखे एव व्यत्यासः कल्पित इत्यभिप्रेत्याह—न आदर्श इति । दर्पणेऽनिर्वचनीयमुखस्याप्यभावे कथं भेदप्रतीतिरित्याशङ्क्य चन्द्रभेदज्ञानवत्तदुपपत्तिरित्याह-भेदमात्रेति । प्रतिबिम्बप्रतीतिकालेऽपि दर्पणे तदभावावगमात्बिंबाभेदावगमाच्च न तत्र कल्पितमित्याह—नात्रेति ।

ननु स्वपृष्ठदेशवर्तिपुरुषप्रतिबिम्बः स्वपुरोवर्तिदर्पणे दृश्यते, तत्रापि तव मते पृष्ठदेशवर्तिपुरुषे एव दर्प्पणस्थत्वादिकमारोप्यते इति वाच्यम्, तदयुक्तम् । पाश्चिकाधिष्ठानस्य स्वेन्द्रियासंनिकृष्टत्वेनारोपकारणाभावादिति शङ्कते— नन्विति ।।

**ननु मुख एव दर्पणस्थत्वाद्यारोपे पश्चाद्भागवर्तिमुखप्रतिबिम्बं न प्रत्यक्षं स्यात्। अधिष्ठानेन्द्रियसंप्रयोगाभावादिति चेत्। न, लौकिकप्रतिबिम्बस्थलेऽस्त्येव चक्षुषोऽधिष्ठानसम्बन्धः। बिम्बस्योपाधिप्रतिहतनयनरश्मिभिर्ग्रहणनियमाभावे परमाणोः कुड्यादिव्यवहितस्थूलस्यापि चक्षुषा प्रतिबिम्बभ्रमप्रसङ्गात्। न चाव्यवहितस्थूलोद्भूतरूपवत एव चाक्षुषप्रतिबिम्बभ्रमो नान्यस्येति वाच्यम्। स्थौल्योद्भूतरूपयोः स्वाश्रयचाक्षुषज्ञानहेतुत्वेनाधिष्ठानस्य चाक्षुषज्ञानानङ्गीकारे तद्गतयोरनपेक्षितत्वात्॥**

**अथ प्रतिबिम्बज्ञाने न तयोर्हेतुत्वं, किं तु प्रतिबिम्बितरूपादाविति चेत्। न, द्रव्यान्तरं मुखान्तरं वा प्रतिबिम्बमिति मते बिम्बस्य निमित्तत्वेन तद्गतयो-**

---

चित्प्रतिबिम्बभ्रमस्याचाक्षुषत्वान्न तत्राधिष्ठानेन्द्रियसन्निकर्षापेक्षा। रूपवत्प्रतिबिम्बस्य सर्वत्रान्वयव्यतिरेकाभ्यां चाक्षुषत्वात्। दर्पणान्तर्वर्तिच्छायाविशेषादौ चक्षुःसंप्रयोगासम्भवस्योक्तत्वादुपाधिप्रतिहतनयनरश्मिसंयुक्तमेव स्वमुखं स्वपृष्ठदेशस्थशरीरादिकं च तत्तत्प्रतिबिम्बात्मना भातीत्यवश्यमभ्युपेयम्।

तथा च

दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्॥

इत्येतदयोगव्यवच्छेदपरं, नत्वन्ययोगव्यवच्छेदपरमित्यभिप्रेत्याह—लौकिकेति।

ननु चक्षुष उपाधिसन्निकर्ष एव प्रतिबिम्बग्रहहेतुर्नतु बिम्बसन्निकर्षः। तथा च प्रतिहतदृष्टेर्न बिम्बसन्निकर्षः कल्प्य इत्याशङ्क्याह—बिम्बस्येति। बिम्बगतयोर्महत्त्वोद्भूतरूपयोः कुड्याद्यव्यवधानस्य च तत्प्रतिबिम्बज्ञानहेतुत्वात् न परमाण्वादिप्रतिबिम्बग्रहप्रसङ्ग इत्याशङ्क्याह— न चेति। किं बिम्बगतोद्भूतरूपादेः साक्षात्प्रतिबिम्बग्रहहेतुत्वम्, उत स्वाश्रयचाक्षुषज्ञाद्वारा?। नाद्यः। तस्य घटादौ स्वाश्रयचाक्षुषज्ञानहेतुतायाः क्लृप्तत्वेनान्यत्र चाक्षुषज्ञानाजकत्वादित्याह—स्थौल्येति। द्वितीये चक्षुषो बिम्बसन्निकर्षः कल्प्योऽन्यथा तत्र चाक्षुषज्ञानायोगादित्युपाधिप्रतिघातेन व्यावृत्तचक्षुषस्तत्संनिकर्ष आवश्यक इति भावः।

बिम्बगतोद्भूतरूपादेः प्रतिबिम्बज्ञानाहेतुत्वेऽपि तत्र न तदनपेक्षा, प्रतिबिम्बचाक्षुषज्ञानहेतुभूततद्गतोद्भूतरूपादिजनकत्वेन बिम्बगतस्यापेक्षितत्वादिति शङ्कते—अथेति।

उपादानगतगुणानामेव तत्कार्ये स्वसमानजातीयगुणारम्भकत्वात्परमते बिम्बस्य प्रतिबिम्बे निमित्तकारणत्वान्नैवमित्याह—न द्रव्यान्तरमिति। ननु प्रतिबिम्बज्ञाने तद्गतरूपादौ वा न बिम्बगतरूपाद्यपेक्षा किं तु दण्डत्वादेरिव बिम्बस्य तत्कारणतावच्छेदकत-

स्तयोः प्रतिबिम्बगतरूपाद्यजनकत्वात् । न च तयोः बिम्बकारणतावच्छेदकत्वमेव न तु कारणत्वमिति वाच्यम् । स्वतन्त्रान्वयव्यतिरेकविरोधात् । अन्यत्रापि विषयगतयोस्तथात्वप्रसङ्गात् ।

आवरणद्रव्यस्य प्रतिहतनयनरश्मिसम्बन्धविघटनं विनैव प्रतिबन्धकत्वे चक्षुःसन्निकर्षमात्रस्य कारणत्वविलोपप्रसङ्गात् । प्रतिहतसन्निकर्षानङ्गीकारे गृहान्तर्गतस्याकाशोदिताद्भुतप्रतिबिम्बभ्रमाभावप्रसङ्गात् ।

तस्मादनन्यथासिद्धचक्षुरन्वयव्यतिरेकाभ्यां नयनोन्मीलनसमनन्तमेव तस्य मार्तण्डमण्डलसंयोगकल्पनवद्दर्पणादिना प्रतिहतस्यापि नयनस्य परावृत्त्य यथोपलम्भं स्वपरबिम्बसंयोगः कल्प्यः । न चास्मिन्पक्षे दर्पणस्यान्यथासिद्धत्वादेकदर्पणइव तद्भेदेऽप्येकमेव मुखं प्रतीयेतेति वाच्यम् । अनेकदर्पणस्थत्वारोपे अनेकेषु मुखमिति प्रतीत्युपपत्तेः । एकमेव मुखमनेकदर्पणेषु भिन्नवत्प्रतीयत इत्यनुभवात् ।

---

येति चेत् । न घटादिज्ञान इव प्रतिबिम्बज्ञानेऽपि स्वतन्त्रान्वयव्यतिरेकाभ्यां कारणत्वस्यैव न्याय्यत्वादित्याह—न च तयोरिति । अन्यथा घटादावपि तयोश्चाक्षुषज्ञानकारणतावच्छेदकतापातेनापसिद्धान्तः स्यादित्यभिप्रेत्याह—अन्यत्रापीति ।

किं च कुड्यादिव्यवधानस्य प्रतिबिम्बज्ञानप्रतिबन्धकत्वात्तत्र तदभावापेक्षेति वाच्यम् । तथा च कुड्यादेः किं चक्षुषो बिम्बसन्निकर्षरूपकारणविघटकत्वेन प्रतिबन्धकत्वमुत साक्षात् ? । आद्ये बिम्बसन्निकर्षः प्रतिहतचक्षुष आवश्यक इत्यभिप्रेत्य द्वितीयं दूषयति—आवरणेति । चक्षुःसन्निकर्षेति । चक्षुर्विषययोरव्यवधाने सति सन्निकर्षाभावेन चाक्षुषज्ञानाभावादर्शनात् तत्सन्निकर्षः कुत्रापि कारणं न स्यादित्यर्थः । ननु स्मर्यमाणमुखादेरेव दर्पणादावारोपाभ्युपगमे परावृत्तचक्षुषो बिम्बसन्निकर्षोऽकल्प्यः चाक्षुषारोपस्यारोप्यगतस्थौल्याद्यपेक्षितत्वात्तस्याप्यन्यथोपपत्तिरित्याशङ्क्याह—प्रतिहतेति । गृहान्तःस्थितेन बहिःस्थितजलादावाकाशेऽभिनवतयोत्पन्नस्य पूर्वमननुभूतस्योल्काद्युद्भूतस्य प्रतिबिम्बदर्शनात् स्मर्यमाणारोपपक्षे तदनुपपत्तेः । कुड्यादिव्यवहितस्यापि स्मर्यमाणस्य जलादौ प्रतिबिम्बभ्रमप्रसङ्गाच्चेति भावः ।

ननु नयनोन्मीलनानन्तरमेव प्रतिबिम्बं दृश्यते उपाधिप्रतिहतनयनस्यादित्यादिबिम्बसन्निकर्षापेक्षायां विलम्बः स्यादित्याशङ्कामुपसंहारव्याजेन निराकरोति—तस्मादिति ।

एकस्यैवानेकस्यापि दर्पणादेः प्रतिघातद्वारा चक्षुषो बिम्बसन्निकर्षमात्र एवोपयुक्तत्वादेकस्मिन्निवानेकेषु तेष्वेकमेव मुखं भायादिति चोद्यमपवदति—न चेति । अनेकदर्पणाभिघातरूपदोषदुष्टचक्षुषा मुखस्यानेकदर्पणस्थत्वारोपात्तदनेकत्वभ्रम इत्याह—अनेकेति । न चैतदुत्प्रेक्षामात्रं, किं त्वेवमेवानुभवोऽपीत्याह—एकमेवेति ।

**न च जलादेर्नयनप्रतिघातकत्वेन नजलस्थसूक्ष्मग्रहः स्यादिति वाच्यम्। केषाञ्चिच्चक्षुषोरवयवानां परावृत्य स्वमुखसंयोगेऽपि केषाञ्चित्तदन्तर्गतपदार्थसंयोगेन तदवगमसंभवात्। एतेन नयनादिप्रतिबिम्बोऽपि व्याख्यातः।**

**यत्त्वीषत्स्वच्छताम्रादौ मुखसंस्थानाप्रतीत्या न प्रत्यभिज्ञानमिति, तन्न। तत्रापि मुखं स्पष्टम् न प्रतीयत इत्यनुभवादेव मुखमात्रस्य धर्मिमात्रस्य वा प्रत्यभिज्ञासंभवात्।**

**यत्तु प्रतिबिम्बं पश्यामि, न चैत्रम्' चैत्रस्तु तेनानुमीयत इत्यादि, तन्न। दर्पणे चैत्रम् पश्यामीत्यनुभवात्, वर्णितरीत्या सर्वत्र बिम्बसन्निकर्षसम्भवाच्च। चैत्रम् न पश्यामीत्यनुभवस्तु चैत्रस्य देशविशेषाज्ञानविषयः। आत्मप्रतिबिम्बे तु नेयं विधा। तत्र ब्रह्मचैतन्यस्य स्वतः सिद्धप्रकाशत्वाच्चक्षुराद्यनपेक्षणात्।**

---

यदप्युक्तं दर्पणवज्जलस्यापि दृष्टिप्रतिघातकत्वेन दर्पणान्तः स्थितवज्जलान्तः स्थितमपि न भायादिति, तदयुक्तम्। जलादेर्विरलावयवद्रव्यत्वेन केषांचिन्नयनरश्मीनां तदन्तः प्रवेशोपपत्तेरित्यभिप्रेत्याह—न च जलादेरिति। यदपिचोक्तं स्वनेत्रगोलकादावभिज्ञाभावात् तत्प्रतिबिंबे तदेवेदं नेत्रमित्यादिप्रत्यभिज्ञानुपपत्तिरिति तदप्ययुक्तं दर्पणाभिहतदृष्ट्या स्वनेत्रगोलकादेरपि व्यस्ततया ग्रहणात् अभिज्ञादेरुपपत्तिरित्याह—एतेनेति। क्वचित्प्रतिबिंबे बिबाभेदप्रत्यभिज्ञाभावः स्पष्ट इत्युक्तमनूद्य दूषयति—यत्त्वित्यादिना, धर्मिमात्रस्य वेति। तदेवेदमित्येवमाकारेणेत्यर्थः।

प्रतिबिम्बज्ञानसमये बिम्बज्ञानाभावस्यैवानुभूयमानत्वाद्बिम्बसन्निकर्षप्रत्यभिज्ञयोरसम्भव इति परोक्तं चोद्यमनुवदति—यत्त्विति।

प्रतिबिम्बज्ञानस्यैव चैत्रविषयत्वेनानुभवात्तज्ज्ञानाभावोऽनुपपन्न इत्याह—तन्नेति। ननु बिम्बज्ञानकारणसन्निकर्षाभावात्तज्ज्ञानानुभवो भ्रम इत्यत आह—वर्णितेति। दर्पणे चैत्रं पश्यामीत्यनुभवान्न पश्यामीत्यनुभवस्तदतिरिक्तदेशे तदज्ञानविषयः अतस्तदनुमानमपि तस्य देशविशेषसंसर्गविषयमित्यभिप्रेत्याह—चैत्रमिति। यदुक्तम् चक्षुरगोचरात्मप्रतिबिम्बे नायं प्रकारः सम्भवतीति तदङ्गीकारेण परिहरति—आत्मेति। चाक्षुषप्रतिबिम्बभ्रमे हि चाक्षुषाधिष्ठानसामान्यज्ञानाय प्रतिहतसन्निकर्षापेक्षा, आत्मप्रतिबिम्बभ्रमे त्वधिष्ठानचिदात्मनः स्वप्रकाशत्वेन तद्भानस्य स्वतः-सिद्धत्वात् तद्भ्रमस्य चाचाक्षुषत्वाच्च न चक्षुराद्यपेक्षेत्यर्थः।

अलौकिकसन्निकर्षकल्पनारूपदोषभयात् सन्निकृष्टोपाधावेव मुखसंसर्ग आरोप्यतामित्यन्यथाख्यातिवादिनश्चोद्यं दूषयति—अत एवेति। स्मर्यमाणारोपासम्भवेन प्रतिहतचक्षुः सन्निकर्षस्यावश्यकत्वादेवेत्यर्थः। तृतीये परिच्छेदेऽन्यथाख्यातेर्निरसिष्यमाणत्वाच्च न तन्मतमादर्तव्यमित्याह—अन्यथेति। मधूच्छिष्टादावङ्गुलीयकप्रतिमुद्रावद्दर्पणादौ

**अत एवोक्तदोषपरिहाराय दर्पण एव मुखसंसर्ग आरोप्यतामिति निरस्तम् । अन्यथाख्यातेर्निरसिष्यमाणत्वाच्च । मुखप्रतिमुद्रैव प्रतिबिम्बमित्यप्यत एव निरस्तम् जलादेर्बिम्बसंश्लेषाभावात् । जले पादादिप्रतिमुद्राया अप्यनुपलम्भप्रसङ्गाच्च ।**

**तस्मात्प्रत्यभिज्ञापरिशेषाभ्यां बिम्बप्रतिबिम्बयोरभेद इति ।**

**किं च दर्पणं मुखाधारो न भवति मुखकारणशून्यत्वात् । न च प्रतिबिम्बस्य छायात्वमते सिद्धसाधनम् तस्य निरस्तत्वात् । नाप्यसिद्धिः । दर्पणे मुखकारणसद्भावस्य निरस्तत्वात् । यत्तु बिम्बप्रतिबिम्बयोरभेदे कस्तूरिकादिप्रतिबिम्बादौ गन्धाद्युपलम्भप्रसङ्ग इति, तन्न । बिम्बान्यप्रतिबिम्बकस्तूर्याद्यभावात् ।**

---

मुखादिप्रतिमुद्रैव प्रतिबिम्बमिति मतान्तरं दूषयति—मुखेति । अत एवेति । प्रत्यभिज्ञादिविरोधादेवेत्यर्थः । मुद्राया उपाधिसंसर्गे सत्येव प्रतिमुद्रोत्पत्तेर्नभस्स्थादित्यादेजलादिसंयोगाभावान्न तत्र तत्प्रतिमुद्रा सम्भविनीत्याह—जलादेरिति—जलादिगतप्रतिबिम्बस्य प्रतिमुद्रात्वे प्रत्यक्षता च न स्यादित्याह—जलेति ।

किं च प्रतिमुद्राया उपाधिरूपसजातीयरूपवत्त्वाद्दर्पणस्थप्रतिबिम्बस्य प्रतिमुद्रात्वे रक्तरूपादेरनुपपत्तिः । प्रतिमुद्राश्रयस्य दर्पणस्य समतलताऽनुपपत्तिः । बिम्बापाये तत्प्रतिमुद्रापायानुपपत्तिश्चेत्याद्यनुक्तसमुच्चयश्चशब्दार्थः ।

मुखप्रतिबिम्बस्य च्छायाद्यात्मकतानिरासात्परिशेषान्मुखत्वसिद्धिः, प्रत्यभिज्ञाविरोधान्मुखान्तरत्वानुपपत्तेःग्रीवास्थमुखाभेदसिद्धिश्चेत्याह—तस्मादिति ।

बिम्बप्रतिबिम्बाभेदेऽनुमानमप्याह—किं चेति । मुखकारणशून्यत्वादिति । तदुपादानसंसर्गरहितत्वादित्यर्थः । तथा च न मुखावयवे व्यभिचारः । एकावयवस्येतरावयवसंसृष्टत्वेन तत्र हेतोरभावात् । अत्र परोक्तदोषमपवदति—न चेति । छायात्वमत इति द्रव्यान्तरत्वमते प्रतिमुद्रात्वमते चेत्यपि द्रष्टव्यम् । प्रतिबिम्बं मुखान्तरमिति मते दर्पणे तदुपादानाङ्गीकारादसिद्धो हेतुरित्याशङ्क्याह—नापीति । तथा च दर्पणस्य मुखाधारत्वे निषिद्धे ग्रीवास्थमेव मुख दर्पणस्थतया भातीति सिद्ध्यतीति भावः । अत्र परोक्तं बाधकमनुवदति दूषयितुम्—यत्त्विति । वस्तुतो दर्पणादौ प्रतिबिम्बमुररीकृत्य तस्य बिम्बाभेदम् न ब्रूमः । येन तत्रापि कस्तूरिकादेः सत्वेन तद्गन्धोपलंभः स्यात्किन्तु बिम्बमेव दर्पणस्थतया भ्रान्त्या प्रतीयमानं प्रतिबिम्बमिति । तथा च दर्पणादौ कस्तूरिकादेरेवाभावान्न तत्र गन्धोपलम्भ इत्याह—तन्नेति । बिम्बान्यतया प्रतीयमानकस्तूरिकादेर्दर्पणादावभावादित्यर्थः ॥

ननु कस्तूरिकादेर्दर्पणादावभावेन तत्र तद्गन्धप्रमा मा भूत् तत्र तद्गतरूपादिभ्रमवत्तद्गन्धभ्रमोऽपि किन्न स्यादिति शङ्कते—नन्विति ।

**ननु मा भूदन्यत् तदेव तद्रूपविशिष्टतया यथा दर्प्पणादौ प्रतीयते, एवं तद्गतगन्धरसादिविशिष्टमपि प्रतीयतामिति चेत् न, चक्षुषो गन्धरसाद्यग्राहकत्वात् । घ्राणादेश्च स्वदेशसन्निकृष्टग्राहिणोऽसन्निकृष्टगन्धाद्यग्राहकत्वात् । तव मते चायं दोषो दुष्परिहरः । कस्तूरिकादिच्छायायास्तज्जातीयरूपवत्तत्सजातीयगन्धरसादेरप्यावश्यकत्वात् । रूपस्य चक्षुषाऽसन्निकृष्टेनापि ग्रहणवद्गन्धादेरप्यसन्निकृष्टघ्राणादिना ग्रहणप्रसङ्गात् ।**

**अत एव "नोपरक्तं न वारिस्थम्" इतिस्मार्तव्यवहारोऽपि नगौण इति बिम्बप्रतिबिम्बयोरभेदे मानं भ्रमविरोधिभेदज्ञानस्यैव गौणत्वप्रयोजकत्वात् ।**

आत्मनः प्रतिबिम्बे प्रमाणानि ।

**न चात्मनः प्रतिबिम्बे मानाभावः । "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिविवस्वत्प्रतिबिम्बदृष्टान्तेन जीवपरयोर्भेदानुवादश्रुतेः, प्रवेशश्रुतेश्च । तत्र**

---

किं चक्षुषा गन्धरसादिभ्रम आपाद्यते उत तद्ग्राहकघ्राणादिना ? नाद्यः । चक्षुषस्तत्प्रमायामिव तद्भ्रमेऽप्यहेतुत्वादित्याह—न चक्षुष इति । द्वितीयं दूषयति—घ्राणादेश्चेति । घ्राणरसनादीनां चक्षुर्वद्बहिर्निर्गमनाभावेन प्रतिहतसन्निकर्षायोगाद्यत्र स्वयं वर्तते नासाग्रादौ तत्र कस्तूरिकादेरभावादधिष्ठानसामान्यज्ञानाभावेन तत्र दर्पणस्थत्वाद्यारोपायोगादित्यर्थः । यन्मते वस्तुत एवोपाधौ प्रतिबिम्बमस्ति तन्मते एवायं दोष इत्याह—तव मत इति । दर्पणगतच्छायादौ गन्धादेरेवाभावात्तदनुपलम्भ इत्याशङ्क्य यद्गतं रूपं यत्र स्वसजातीयरूपारम्भकं तद्गतगन्धस्यापि तत्र स्वसजातीयगन्धारम्भकत्वनियमात्तत्र गन्धादिकमावश्यकमित्याह—कस्तूरिकादीति । तथापि दर्पणान्तर्गतगन्धस्य घ्राणासन्निकृष्टत्वान्न तद्ग्रह इत्याशङ्क्याह—रूपस्येति । असन्निकृष्टेनेति च्छेदः ।

यदुक्तं वारिस्थमादित्यमिति स्मार्तव्यवहारो गौण इति, तदप्ययुक्तमित्याह—अत एवेति । अतः शब्दार्थमेवाह—भ्रमविरोधीति । न हि भेदज्ञानमात्रमभेदव्यवहारस्य गौणत्वप्रयोजकं नभःस्थचन्द्रभेदज्ञाने सत्यप्येक एवायं चन्द्र इति व्यवहारस्य अभेदज्ञानस्य मुख्यत्वात्, किन्त्वभेदभ्रमविरोध्येव भेदज्ञानं तथा । यथा माणवके सिंहभेदज्ञानम् । बिम्बप्रतिबिम्बयोस्तु भेदज्ञाने सत्यपि तव भ्रमत्वेन सम्मतस्याभेदज्ञानस्यानुवर्तमानत्वान्न तद्व्यवहारस्य गौणत्वमित्यर्थः ।

बिम्बप्रतिबिम्बयोरभेदेऽपि जीवस्य ब्रह्मप्रतिबिम्बत्वे मानाभावान्न तयोरभेद इत्याशङ्क्याह—न चात्मनः इति ।

प्रवेशश्रुतेश्चेति । "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य कोशांश्च सृष्ट्वा प्रविश्यानेन जीवेनात्मनाऽनु प्रविश्य" इत्यादिः स्रष्टुरेवेश्वरस्यसृष्टोपाधिषु प्रवेशः श्रूयते ।

**मानत्वात् । अत एवात्रोपाध्यवच्छिन्नांशो जीव इत्येव तदर्थः किं न स्यादिति निरस्तम् । दृष्टान्ते जलस्य सूर्यसंबंधाभावेनावच्छेदकत्वाभावात् । निरंशस्य वास्तवोपाधिसंबन्धाभावेन तदवच्छेदानुपपत्तेश्च ।**

**किं च यद्यवच्छिन्नं ब्रह्म जीवभावमापद्येत तर्ह्यनवच्छिन्नब्रह्मणः सर्वगत्वादिश्रुतिर्विरुद्ध्येत । अवच्छेदकाभावविशिष्टत्वलक्षणानवच्छिन्नत्वस्य प्रतियोगिवैशिष्ट्याश्रयप्रदेशाश्रयत्वायोगात् ।**

**"य आत्मनि तिष्ठन्" इति च जीवव्यावृत्तरूपेणैव सर्वगत्वादिश्रवणात् । बिम्बत्वं तु सर्वगताधिष्ठानव्याप्यवृत्तीति तद्विशिष्टं ब्रह्मापि सर्वगतमिति न प्रतिबिम्बपक्षे दोष इत्याचार्याः ।**

---

न च सर्वगतस्येश्वरस्य चैत्रस्य गृह इव मण्डूकस्य पाषाण इव वा प्रवेश उपपद्यते, किंतु सूर्यो जले प्रविष्ट इत्यत्र यथा तस्य प्रतिबिम्बभाव एव प्रवेशशब्दार्थ एवमीश्वरस्याप्यज्ञानाद्युपाधिषु जीवरूपेण प्रतिबिम्बभाव एव प्रवेशश्रुत्यर्थ इति भावः । बिम्बप्रतिबिम्बदृष्टान्तेन जीवपरभेदस्य श्रुतिसिद्धत्वाद्घटाकाशमहाकाशवदवच्छिन्नानवच्छिन्नभावेन तयोर्भेद इति मतमयुक्तमित्याह—अत एवेति । विवस्वतोऽपि बहूपाध्यवच्छेदेनैव बहुभावो दृष्टान्तश्रुत्यर्थो, न प्रतिबिम्बभावेनेत्याशङ्क्याह—दृष्टान्त इति । असंभवादपि नायं पक्ष उपादेय इत्याह—निरंशस्येति ।

ब्रह्मण उपाध्यवच्छिन्नरूपेण जीवत्वम्, अनवच्छिन्नरूपेणेश्वरत्वं, तद्भेदश्च यथार्थ एवेति मते विराडुपाधिभूतब्रह्माण्डानवच्छिन्नेश्वरस्य तदन्तरालवर्तित्वायोगात्तत्रत्यचेतनाचेतननियन्तृत्वानुपपत्तिरित्यभिप्रेत्याह—किं चेति । ननु सिद्धान्ते सप्रपञ्चस्यापि निष्प्रपञ्चत्ववदवच्छिन्नस्याप्यनवच्छिन्नत्वं किन्न स्यादित्याशङ्क्य तव मते उपाध्यवच्छेदस्य वास्तवत्वेन तद्वैशिष्ट्याश्रयावच्छिन्नप्रदेशे तदभावविशिष्टत्वरूपानवच्छिन्नत्वस्य विरुद्धत्वेनासंभवान्नानवच्छिन्नस्य सर्वगतत्वमित्यभिप्रेत्याह—अवच्छेदकेति ।

ननु ब्रह्मणश्चिद्रूपेणैव सर्वगतत्वं सर्वनियन्तृत्वं च नेश्वररूपेणेत्याशङ्क्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति" इति जीवभिन्नरूपेण नियन्तृत्वश्रवणान्नियम्यजीवस्यापि चिद्रूपत्वे तेन रूपेण नियन्तृत्वायोगाच्चेत्यभिप्रेत्याह—य आत्मनीति ।

ननु प्रतिबिम्बवति प्रदेशे बिम्बस्याप्यभावान्न बिम्बरूपेश्वरस्यापि सर्वगत्वमित्याशङ्क्य मुखादिगतबिम्बत्वस्य तत्र व्याप्यवृत्तित्वदर्शनात्सर्वगतचैतन्यवृत्तिबिम्बत्वमपि तद् व्याप्य वर्तते इति तद्विशिष्टचिद्रूपेश्वरस्यापि सर्वगतत्वाद्युपपद्यते इत्याह—बिम्बत्वमिति ।

**एवं "रूपं रूपं प्रतिरूपो बभूव" इति परमेश्वरस्य प्रतिरूपतद्भेदौ दर्शयति। नचात्रान्तर्यामिण एव प्रतिरूपत्वमुच्यत इति वाच्यम्। बिम्बात्मनैव परमेश्वरस्य नियन्तृत्वाद्युपपत्तौ जीवभावानुप्रवेशव्यतिरिक्तप्रवेशान्तरस्य एकेनैव सकलजगन्नियमनाद्युपपत्तौ तद्भेदस्य चानपेक्ष्यत्वात् श्रुतेरतदर्थत्वात्। प्रतिबिम्बभावेन प्रविष्टस्य मौढ्यश्रुतेश्च तस्यान्तर्यामित्वानुपपत्तेः।**

प्रतिबिम्बवादे बाधानिरासः।

**एतेन बिम्बप्रतिबिम्बयोरभेदे वारिस्थादित्यस्य दर्शननिषेधेन नभस्थस्यापि तत्स्यादिति प्रत्युक्तम्। धर्म्यभेदेऽपि धर्मभेदेन व्यवस्थोपपत्तेः। अन्यथोपरक्तादित्यदर्शननिषेधेन केवलस्यापि दर्शननिषेधप्रसङ्गात्। न च बिम्बप्रतिबिम्बादित्ययोरभेदे प्रतिबिम्बदर्शनादेव बिम्बादित्यदर्शननिमित्तशास्त्रार्थोऽनुष्ठितः स्यादिति वाच्यम्। परमेश्वरविग्रहस्यैकत्वेऽपि मञ्चस्थपरमेश्वरदर्शनेन रथस्थपरमेश्वरदर्शनाऽसिद्धिवद्वारिस्थसवितृदर्शनेन नभस्थत्वादिविशिष्टदर्शनासिद्धेः। अन्यथा नभस्थत्वविशिष्टादित्यदर्शनेनैवोपरक्तत्वादिविशिष्टादित्यदर्शनफलमपि स्यात्।**

---

ईश्वरस्यैव शरीराद्युपाधिषु प्रतिबिम्बभावेन जीवत्वस्य मुखत एव श्रवणान्न जीवेशभेदः परमार्थ इत्याह—एवमिति। नन्वीश्वरस्य तत्तन्नियमनाय तत्र तत्र प्रतिरूपभाव एतन्मन्त्रार्थ इत्याशङ्क्य बिम्बरूपेश्वरस्यैवेच्छामात्रेण सर्वनियमनसंभवात्तदर्थं प्रतिबिम्बभावस्य तन्नानात्वस्य चानपेक्षितस्य तदर्थत्वायोगादित्याह—नचात्रेत्यादिना। "कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते। "स एष इह प्रविष्ट आनखाग्रेभ्यः। स प्राणन्नेव प्राणो नाम भवति" इत्यादिना प्रविष्टस्य मौढ्यप्राणनादेः श्रवणादपि न प्रविष्टस्य नियन्तृत्वमित्याह—प्रतिबिम्बेति।

एवं वास्तवभेदे बाधकमुक्त्वा पुनरप्यभेदे परोक्तं बाधकान्तरमपाकरोति—एतेनेति।

एतच्छब्दार्थमाह—धर्मीति। जलस्थत्वरूपधर्मावच्छेदेन दर्शननिषेधः नभस्थत्वरूपेण तदभाव इति व्यवस्थेत्यर्थः। धर्म्यभेदमात्रेणाव्यवस्थायामतिप्रसङ्गमाह—अन्यथेति। ननु चण्डालादिदर्शनप्रायश्चित्तत्वेनादित्यादिदर्शनं तद्दर्शने ज्योतिषां दर्शनमित्यादि शास्त्राद्विधीयते। तदर्थश्चादित्यादिप्रतिबिम्बदर्शनेनाप्यनुष्ठितः स्यात्। तव मते तस्य तदभेदादित्याशङ्क्य किमादित्यादिदर्शनमात्रं तच्छास्त्रार्थः उत नभस्थादित्यदर्शनम्? आद्ये प्रतिबिम्बदर्शनस्याप्यादित्यादिस्वरूपविषयताया उपपादितत्वात्ततोऽपि तद्दर्शनमात्रं शास्त्रार्थोऽनुष्ठित एव। नभस्थादित्येऽस्पष्टोपरागं शरावजलस्थतत्प्रतिबिम्बे दृष्ट्वा स्नानाद्यर्थं प्रयतन्ते वृद्धाः। गणेशचतुर्थ्यां निषिद्धं चन्द्रदर्शनं जलादावपि परिहरन्तीत्यभिप्रेत्य दूषयति—न चेति। द्वितीये प्रतिबिम्बदर्शनान्न नभस्थत्वेनादित्यदर्शनसिद्धिरिति

**यत्तु बिम्बप्रतिबिम्बयोरभेदे प्रतिबिम्बजीवज्ञानादेव मोक्ष इति। तत्र किं जीवत्वविशिष्टज्ञानान्मोक्ष उत कर्तृजीवस्य यत्स्वरूपं ब्रह्म तज्ज्ञानात् ?।।**

**नाद्यः। भ्रान्तेरविद्यानिवर्तकत्वायोगात्, अभेदविषयाज्ञानस्य जीवत्वज्ञानानिवर्त्यत्वाच्च। न द्वितीयः। इष्टापत्तेः। न च बिम्बप्रतिबिम्बयोरभेदे सर्वज्ञत्वकिंचिज्ज्ञत्वयोः सांकर्यप्रसङ्ग इति वाच्यम् मुखश्यामत्वावदातत्वादेरिव कल्पितभेदेन तद्व्यवस्थासंभवात्।**

**यत्त्वचाक्षुषस्यात्मनो गन्धादिवत्प्रतिबिम्ब एव न स्यात् कुतो व्यवस्थेति, तन्न। अचाक्षुषस्यापि गगनस्य प्रतिबिम्बदर्शनात्। न च गगनमपि चाक्षुषमेव, तज्ज्ञानस्य चक्षुरन्वयव्यतिरेकानुविधानादिति वाच्यम्। नीरूपस्यापि चाक्षुषत्वे वायोरपि तत्प्रसङ्गात्। पञ्चीकरणन्यायेन गगने रूपमस्तीति चेत्। न, रूपहीनभागस्याधिकत्वेन चाक्षुषत्वायोगात्। अन्यथा वायावपि प्रसङ्गतादवस्थ्यात्।**

---

सदृष्टान्तमाह—परमेश्वरेति। धर्म्यभेदमात्रेणातिप्रसङ्गस्तव मतेऽपि तुल्य इत्याह—अन्यथेति।

जीवब्रह्मणोरभेदे जीवज्ञानेनापि ब्रह्मज्ञानप्रयोजनं स्यादिति चोद्यान्तरमनुवदति—यत्त्विति। किं जीवविषयभ्रान्तिज्ञानान्मोक्ष आपाद्यते उत तद्याथात्म्यज्ञानादिति विकल्पयति—तत्रेति।

रजतभ्रमेण शुक्त्यज्ञानानिवृत्तेर्न भ्रान्त्या तन्निवृत्तिरित्याह—नाद्य इति।

किं चाज्ञानस्य स्वसमानविषयज्ञाननिवर्त्यत्वादज्ञानाविषयजीवत्वज्ञानेन न तन्निवृत्तिरित्याह—अभेदेति।

जीवस्य पारमार्थिकस्वरूपब्रह्मज्ञानान्मोक्षापादनमिष्टमिति द्वितीयं दूषयति—न द्वितीय इति। सर्वत्र विरुद्धधर्माणां स्वसमानसत्ताकधर्मिभेदेन व्यवस्थितत्वात्सर्वज्ञत्वकिंचिज्ज्ञत्वादीनामपि तादृशधर्मिभेदेन व्यवस्थोपपत्तेस्तन्मात्रेण सांकर्यापादनमयुक्तमित्याह—न चेत्यादिना।

आत्मा प्रतिबिम्बत्वादिरहितः अचाक्षुषत्वाद् गन्धादिवत्। तथा च श्यामत्वादिवन्न सर्वज्ञत्वादेर्व्यवस्थेति चोद्यं व्यभिचारेण दूषयति—यत्त्वित्यादिना। गगने हेतोरेवाभावान्न व्यभिचार इत्याशङ्क्याह—न चेति। चक्षुरन्वयव्यतिरेकयोर्वक्ष्यमाणविधयाऽन्यथासिद्धिरित्यभिप्रेत्य गगनस्य चाक्षुषत्वे बाधकमाह—नीरूपस्येति। सिद्धान्ते पञ्चीकरणाङ्गीकाराद्गगने रूपवदंशस्यापि सत्त्वान्नीरूपत्वमसिद्धमित्याशङ्कते—पञ्चीकरणेति। तथाऽपि वायाविव रूपहीनांशस्याधिकत्वादचाक्षुषत्वमित्याह—न रूपेति।

न च गगने रूपमस्त्येव 'नीलं नभः' इति बुद्धेर्बाधाभावादिति वाच्यम्। समीपस्थेऽपि गगने रूपानुभवप्रसङ्गात्। उच्चतरपर्वतशिखरमारूढस्य पूर्वप्रतीतरूपगगनप्रदेशस्यैव नीरूपत्वानुभवाच्च।

त्रिवृत्करणस्यैव श्रुतिसूत्रयोः सिद्धत्वाच्च। क्व तर्हि चक्षुरन्वयव्यतिरेकयोरुपयोग इति चेत्। न, आकाशव्यापिप्रभाज्ञाने एव तदुपयोगात्। तस्मादाकाशस्य चाक्षुषत्वायोगात् लिङ्गाद्यनुसंधानं विनाऽप्यनुभवात्साक्षिप्रत्यक्षमात्रमाकाशमिति। श्रुतिसिद्धात्मप्रतिबिम्बस्य नीरूपत्वेन निरासायोगाच्च। चाक्षुषप्रतिबिम्बस्यैव रूपवद्बिम्बकत्वनियमाच्च। अन्यथा रूपस्पर्शवत एव द्रव्यस्य प्रत्यक्षत्वं दृष्टमिति त्वदभिमतात्मा प्रत्यक्षो न स्यात्।

---

पृथिव्यादाविव गगनेऽपि रूपं स्वाभाविकमेवेति मतं दूषयति—न चेति। रूपं किं गगने व्याप्यवृत्ति उताव्याप्यवृत्ति?। आद्ये दोषमाह—समीपेति। न द्वितीयः रूपस्याव्याप्यवृत्तित्वायोगात्। तदङ्गीकृत्यापि दोषमाह—उच्चतरेति।

पञ्चीकरणन्यायेनाकाशेऽपि रूपमस्तीत्यत्र दूषणान्तरमाह—त्रिवृत्करणस्येति।

"तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति श्रुतौ "संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" [ ब्र० सू० ४-२-३ ] इति सूत्रे च तेजोबन्नानां त्रिवत्करणस्यैवोक्तत्वात्पञ्चीकरणं विनाऽनुपपत्त्यभावेन तत्कल्पनायोगाच्च तदेवासिद्धमित्यर्थः। आकाशस्याचाक्षुषत्वे तज्ज्ञाने चक्षुरन्वयव्यतिरेकविरोध इति शङ्कते—क्व तर्हीति। अनवच्छिन्नाकाशप्रतीतेस्तदवच्छेदकालोकज्ञाने चक्षुष उपयोग इत्याह—न आकाशेति। कथं तर्ह्याकाशप्रतीतिरित्याशङ्क्य परिशेषात्साक्षिप्रत्यक्षगम्यं तदित्याह—तस्मादिति। लिङ्गाद्यनुसंधानं विनापीति। वर्णात्मकः शब्दो नित्यः सर्वगतश्च। ध्वन्यात्मकस्तु वायुधर्म एवेति मतानुसारिणामपि नीलं नभ इति प्रतीतिदर्शनाच्चक्षुषेदमंशज्ञाने तत्रत्यरजतवदालोके चक्षुषा ज्ञाते तदवच्छिन्नं नभः साक्षिमात्रभास्यमित्यर्थः।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥

"यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिश्रुतिबाधितविषय चात्मप्रतिबिम्बाभावानुमानमित्याह—श्रुतिसिद्धेति। बिम्बस्यैव व्यस्तस्ततया गृहीतस्य प्रतिबिम्बत्वाद्बिम्बस्य रूपवत्त्वाभावे प्रतिबिम्बस्य चाक्षुषत्वायोगाच्चाक्षुषद्रव्यप्रतिबिम्बस्यैव रूपवद्बिम्बकत्वं न प्रतिबिम्बमात्रस्येत्याह—चाक्षुषेति। प्रमाणसिद्धस्यापि युक्तितोपलापे बाधकमाह—अन्यथेति।

अद्वैतवादेऽविद्योपाधेरात्मातिरेकेण सत्त्वाभावात्तत्रात्मनः प्रतिबिम्बभाव एवानु-

न चात्मसत्तातिरिक्तसत्ताहीनस्योपाधेः कथमात्मप्रतिबिम्बोपाधित्वमिति वाच्यम्। अधिष्ठानातिरिक्तसत्ताभावेऽपि आरोपितस्यासद्विलक्षणतया घटादेरिव स्वोचितकार्य्यकरत्वात्। बिम्बप्रतिबिम्बभेदानुमनानि चानुकूलतर्काभावादन्यथा-सिद्धानि, उक्तप्रतिकूलतर्कपराहतानिच तस्माल्लोके बिम्बप्रतिबिम्बयोर्वास्तवाभेदाज्जीवब्रह्मणोरप्यभेदो वास्तव इति। कस्तर्ह्युपाधिः? । न तावत्स्थूल-शरीरम् कादाचित्कस्य तस्यानादिजीवोपाधित्वायोगात्। जीवस्यानादित्वाभावे कृतहानाकृताभ्यागमादिदोषप्रसङ्गात्। अत एव क्षणिकविज्ञानमात्रं जीव इत्ययं पक्षोऽनुपपन्नः। तत्कृतधर्मादेर्वैयर्थ्यात्सुखादेराकस्मिकत्वप्रसङ्गाच्च। स्वर्गाद्युपदेशेन चैत्यवन्दनाद्यननुष्ठानप्रसङ्गात्।

सन्तानिव्यतिरिस्थायिसन्तानाभ्युपगमे सर्वं क्षणिकमिति पक्षक्षतिः। सन्तानस्य द्रष्टृत्वाभ्युपगमे स एव स्थाय्यात्मा स्यात्। तस्य तदनभ्युपगमे वा द्रष्टुः

---

पपन्न इत्याशङ्क्यासद्विलक्षणत्वात्स्वसमानसत्ताकात्मभेदवत्त्वादर्थक्रियासमर्थत्वाच्च दर्पणादिवत्प्रतिबिम्बोपाधित्वोपपत्तिरित्याह--न चेत्यादिना।

चलत्वाचलत्वप्राङ्मुखत्वप्रत्यङ्मुखत्वादीनि बिम्बभेदानुमाने लिङ्गान्यप्रयोजकानीत्याह—बिम्बेति। चकारोऽनुक्तसमुच्चयार्थः। अभेदानुभवबाधितानि चेत्यर्थः। जीवपरयोर्बिम्बप्रतिबिम्बभावोपपादनफलमाह--तस्मादिति।

अभेदो वास्तव इत्युक्त्या भेदस्यौपाधिकत्वमभिप्रेतं तत्रोपाधिमाक्षिपति—कस्तर्हीति। किं स्थूलशरीरं जीवपरभेदे उपाधिः, अन्तःकरणं वा, अज्ञानं वा, भ्रान्तिज्ञानं वा, तत्संस्कारो वा, अन्यद्वेति किंशब्दार्थः। स्थूलशरीरस्यागन्तुकत्वेनानादिजीवविभागप्रयोजकत्वाभावान्नाद्य इत्याह--न तावदिति। जीवत्वमप्यागन्तुकमित्यत आह--जीवस्येति। कृतहानादिदोषप्रसङ्गादेव सुगतमतमप्यनुपपन्नमित्याह—अत एवेति। तत्र कृतहानादिकमेव विशदयति--तत्कृतेति। तेन वेदप्रामाण्यानङ्गीकारादग्निहोत्रादिधर्मवैयर्थ्यं तस्येष्टमित्याशङ्क्य तदभिमतधर्मस्यापि वैयर्थ्यं स्यादित्याह--स्वर्गादीति।

विज्ञानानां क्षणिकत्वेऽपि तत्संतानस्यैकत्वान्नकृतहानादिप्रसङ्ग इत्याशङ्क्य किं क्षणिकविज्ञानातिरिक्तः संतानः तदनतिरिक्तो वेति मनसि निधायाद्यं दूषयति--संतानीति।

किं च स्थायिसन्तानस्य द्रष्टृत्वमस्ति न वा? आद्ये तस्यैवात्मत्वान्मदिष्टसिद्धिरित्याह–सन्तानस्येति। विकल्पद्वयेऽपि द्वितीयं दूषयति--तस्येति। द्वितीयं दूषयति–नापीति।

"एतस्मात् जायते प्राणो मनः सर्वेन्द्रियाणि च"।

"सुषुप्तिकाले सकले विलीने तमोऽभिभूत" इत्यादिना मनस उत्पत्त्यादिश्रवणात्तदुपाधिकस्य जीवत्वे कृतहानादिप्रसङ्ग इत्यभिप्रेत्याह— तस्यापीति।

कर्तुः स्थायिनोऽभावात्स्मृत्यादिविरहप्रसङ्गः। नाप्यन्तःकरणमुपाधिः। तस्यापि कार्यत्वात्, सुषुप्तिप्रलययोर्विनाशाच्च।

अथ सुषुप्तिप्रलययोर्नात्यन्तं तस्य विनाशः पुनरनुत्पत्तिप्रसङ्गात्। ननु न विनष्टस्य पुनरुत्पत्तिः। तत्र मानाभावात्। किन्तु तज्जातीयस्यैवेति चेत्। न, असत उत्पत्त्यनुपपत्त्या विनष्टकार्यस्य स्वकारणात्मना स्थितस्य पुनर्निमित्त-योगादभिव्यक्तेः। कार्यभेदे प्रमाणाभावाच्च।

परिमाणभेदस्य जलूकादाविवाविरोधात्। एकस्मिन्नपि वृक्षाद्यवयविनि मूलाग्रभेदेन परिमाणभेदानुभवाच्च। न चावयवपरिमाणभेद एव तथाऽनुभूयत इति वाच्यम्। वृक्षत्वसामानाधिकरण्येनैवानुभवात्। अन्यथाऽवयविनि परिमाणमात्र-विलोपप्रसङ्गात्। कार्यस्य कारणाद्भेदे वा तुलिततन्त्वारब्धपटे द्विगुणगुरुत्वोप-लम्भप्रसङ्गात्।

तस्मात्कारणमेव कार्यस्वरूपम्, आकारस्त्वनिर्वचनीयो भिद्यत इति सति कारणे नात्यन्तं विनाश इति चेत्। तर्हि सुप्त्यादावन्तःकरणकारणमज्ञानं वर्तत इत्युक्तं स्यात्। तथा च तदेव जीवोपाधि स्यात्। तदपि न संभवति।

---

प्रागुत्पत्तेर्नाशानन्तरं च कार्यस्यासत्त्वानभ्युपगमान्नोक्तदोष इति शङ्कते—अथेति। सुषुप्तावसत्त्वपर्यन्तं नाशे पुनर्जाग्रत्युत्पत्तिर्न स्यात्, असत उत्पत्त्ययोगादित्याह—पुनरिति। कार्यस्य विनाशानन्तरासत्त्वमेव, पश्चादुत्पत्तिस्तु तदन्यस्यैवेत्यसत्कार्यवादी शङ्कते—नन्विति। असत उत्पत्तेः साक्षिविवेके निरस्तत्वाद्विनाशसामग्र्या कारणात्म-तामापादितस्योत्पत्तिसामग्र्या पुनः स्थूलाकारेणाभिव्यक्तिरेवेति परिहरति—नासत इति। यदुक्तं विनष्टादेव तज्जातीयं कार्यमुत्पद्यत इति, तत्राह—कार्येति।

ननु बालस्थविरशरीरयोस्तदन्वयिदुःखाद्युपलम्भेन तदुपादानान्तःकरणपरिमा-णभेदस्यावश्यकत्वात् परिमाणभेदाच्च भेदोऽनुमीयत इत्याशङ्क्यैकस्मिन्नपि काल-भेदात्परिमाणभेददर्शनान्नैवमित्याह—परिमाणेति।

एकस्मिन्नैवैकदापि परिमाणभेदोऽवच्छेदकभेदेन दृष्ट इत्याह एकस्मिन्निति। ननु मूलाद्यवयवपरिमाणमेव भेदेन प्रतीयते न वृक्षपरिमाणमित्याशङ्क्य मूले स्थूलो वृक्षः अग्रे सूक्ष्म इति वृक्षत्वसादेश्यानुभवान्नैवमित्याह—न चावयवेति। अवयविनि प्रतीयमानपरिमाणभेदस्य बाधकाभावेऽप्यवयवधर्मत्वकल्पने बाधकमाह—अन्यथेति। कार्यकारणयोर्भेदाभावादपि नैककारणजन्यकार्याणां भेद इत्यभिप्रेत्य तयोर्भेदे बाधक-माह—कार्यस्येति। कार्यकारणयोर्भेदे कारणगतगुरुत्वव्यतिरेकेण कार्ये गुरुत्वान्तरस्या-वश्यकत्वात्तुलायामारब्धपटकतन्त्वारोपे पूर्वोपलब्धगुरुत्वादधिकगुरुत्वमुपलभ्येतेत्यर्थः।

अज्ञानस्यास्वच्छस्य प्रतिबिम्बाश्रयत्वायोगात् । अहमनुभवागोचरस्य तस्य जीवोपाधित्वे मानाभावात् ।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।

इति श्रुतिविरोधात् । जीवस्य ब्रह्मण्यज्ञानमित्यज्ञानस्य जीवसंबन्धित्वावगमाच्च । नापि मिथ्याज्ञानं तद्वासना वा । तयोरपि कादाचित्कत्वात् । एभ्योऽन्य उपाधिस्तु प्रमाणविहीनः शङ्कितुमपि न शक्यत इति चेत्, उच्यते । अन्तःकरणमुपाधिः "कार्योपाधिरयं जीवः" इति श्रुतेः, अहमित्यनुभवगोचरत्वाच्च । न च सुप्त्यादौ तदभावः । तत्राप्यन्तःकरणस्य सूक्ष्मतया सत्त्वात् । न चैवमज्ञानोपाधित्वापत्तिः । दुर्निरूपेणापि सूक्ष्मरूपेण तत्सत्त्वस्यावश्यकत्वात् । "कार्योपाधिरयं जीवः" "कोशांश्च सृष्ट्वा प्रविश्य" इत्यादिश्रुत्याऽहमनुभवेन च तस्यैव जीवभेदनिमित्तत्वावगमात् ।

---

उत्पत्तेः पूर्वमपि कार्यस्य कारणात्मनाऽवस्थाने कथं कार्यकारणभावः, कथं वा कार्यार्थिनः कारणगवेषणा ? इत्याशङ्क्य कार्यस्य कारणातिरेकेण सत्त्वाभावेऽपि तत्तदतिनिर्वचनीयस्थूलाकारापेक्षया कार्यकारणभावाद्युपपत्तिरित्याह—तस्मादिति । फलितमाह—इतीति । सुषुप्त्यादावन्तः करणस्याज्ञानात्मनैवावस्थाने तस्यैवावस्थात्रयानुयायिनो जीवोपाधित्वापातेन तृतीयपक्षान्तर्भाव इत्याह—तर्हीति । तर्ह्यज्ञानमेव तदुपाधिरिति पक्षोऽस्त्वित्याशङ्क्याह—तदपीति ।

किमज्ञानं दर्पणादिवद्भेदकम्, उत घटादिवत् ? । नाद्य इत्याह—अज्ञानस्येति ।

जीवोपाधि विवेचनम्

द्वितीयं दूषयति—अहमनुभवेति। घटाकाशज्ञाने घटवन्नियमेन जीवज्ञानेअज्ञानाप्रतीतेर्न तस्य घटवद्भेदकत्वमित्यर्थः । अज्ञानस्य जीवोपाधित्वं श्रुतिविरुद्धञ्चेत्याह—कार्येति । ब्रह्मविषयाज्ञानस्य जीवाश्रितत्वानुभवात् जीवत्वस्य तदधीनत्वे परस्पराश्रयप्रसङ्ग इत्यभिप्रेत्याह—जीवस्येति । चतुर्थपञ्चमौ दूषयति—नापीति । षष्ठं दूषयति—एभ्य इति । सत्त्वप्रधानमायाप्रतिबिम्बमीश्वरः, अन्तःकरणप्रतिबिम्बं तु जीव इति मतमाश्रित्याह—उच्यत इति । अत्र च श्रुत्यनुभवौ मानमित्याह—कार्येते । यदुक्तं सुषुप्तावन्तःकरणस्य नाशात्तदनादिजीवत्वाप्रयोजकमिति तत्राह—न चेति । कार्यस्य कारणात्मतापत्तेरेव सूक्ष्मत्वादज्ञानोपाधितापत्तिरित्युक्तं दूषयति—न चैवमिति । "नैवेह किंचनाग्र आसीत्" "मृत्युनैवेदमावृतमासीत्" इति श्रुतौ सृष्टिपूर्वं कार्यकारणयोरावृतावरकभावेन भेदाभिधानाल्लयकालेऽपि कारणातिरेकेणानिर्वचनीयं कार्यं सूक्ष्मरूपमस्त्येव इतरथा सुषुप्तावन्तः करणाभावे तद्गतपुण्यपापादेरभावेन पुनरुत्थानाद्ययोगादिति भावः । सुषुप्तावज्ञानान्तः करणयोः सतोः कथमन्तः करणस्यैवोपाधित्वमित्याशङ्क्याह—कार्येति ।

**अथवाऽज्ञानमेवोपाधिः ।**

**विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।**

**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥**

**इति स्मृत्या तस्यैवोपाधित्वावगमात् । कार्योपाधिरित्यादिश्रुतिश्च नाज्ञानोपाधित्वं निवारयति, किंत्वन्तःकरणावच्छिन्नो व्यवहारयोग्य इति तस्य स्पष्टोपाधित्वाभिप्राया । न चाज्ञानस्यास्वच्छत्वान्न प्रतिबिम्बाश्रयत्वमिति वाच्यम् । त्रिगुणात्मकस्य तस्य सत्त्वगुणप्रयुक्तस्वाच्छ्यस्यापि सत्वात् । जीवोपाध्यज्ञानस्यापि जीवाश्रयत्वस्य वक्ष्यमाणत्वात् जीवे भ्रान्त्यादिजनकत्वाच्च जीवस्य ब्रह्मण्यज्ञानमित्यनुभव इति ।**

अज्ञानलक्षणम्

**ननु किमिदमज्ञानम् ? । न तावदनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं तल्लक्षणम् । अविद्यासम्बन्धे अतिव्याप्तेः । न च साक्षाज्ज्ञाननिवर्त्यत्वं विवक्षितमिति**

---

अज्ञानप्रतिबिम्बितं चैतन्यं जीवः, तद्बिम्बरूप ईश्वर इति मतेनाह--अथ वेति ।

किं तत्र मानमित्याशङ्क्य

तद्भावभावमापन्नस्तदाऽसौ परमात्मना ।

भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥

इति जीवेशभेदस्याज्ञानाधीनतामुक्त्वा "विभेदजनके ज्ञाने" इत्यज्ञाननाशात्तद्भेदाभावाभिधायकविष्णुपुराणवचनमत्र मानमित्याह--विभेदेति । "कार्योपाधिरयं जीवः" इति श्रुतिविरुद्धोऽयं पक्ष इत्याशङ्क्योक्तस्मृत्यनुरोधेनेयं श्रुतिरयोगव्यवच्छेदपरा न त्वन्ययोगव्यवच्छेदपरा इत्याह--कार्येति । अज्ञानस्य तमोरूपत्वान्न प्रतिबिम्बोपाधित्वमित्याशङ्क्य विशुद्धसत्त्वप्राधान्येन तदुपपत्तिरित्याह--न चेत्यादिना । यदुक्तम्-अज्ञानस्य जीवनिष्ठत्वानुभवान्न तस्य जीवत्वप्रयोजकतेति तत्राज्ञानस्य जीवाश्रयत्वमङ्गीकृत्याज्ञानजीवत्वयोरनादित्वात्साक्षिमात्रभास्यत्वाच्च नोत्पत्त्यादौ परस्परापेक्षा स्थितावान्योन्यप्रयोजकत्वं द्रव्यत्वगुणवत्त्वादावविरुद्धमित्यनन्तरवादे वक्ष्यत इत्याह--जीवोपाधीति । चिन्मात्राश्रयमज्ञानमिति मते तस्य कथं जीवसम्बन्धानुभव इत्याशङ्क्याह--जीव इति ।

भावरूपाज्ञाने लक्षणप्रमाणायोरभावात्तदेव नास्ति, कुतस्तस्य जीवोपाधित्वमित्यभिप्रेत्य चोदयति--नन्विति ।

अनादिभावत्वे सति ज्ञाननिवर्त्यत्वमज्ञानलक्षणम् । उत भ्रमोपादानत्वमिति किं शब्दार्थः । तत्राद्यं दूषयति—न तावदिति । नन्वत्र साक्षाज्ज्ञाननिवर्त्यत्वं विवक्षितम् ।

**वाच्यम्। तथा सत्यनादिपदवैयर्थ्यात्, असंभवाच्च। कल्पितत्वेन दोषजन्यत्व-नियमात्तस्यानादित्वानुपपत्तेः। अज्ञानं नानादि ज्ञाननिवर्त्यत्वात्। न चाज्ञान-संबन्धे व्यभिचारः तस्य पक्षतुल्यत्वात् न चाज्ञानत्वानधिकरणत्वमुपाधिः पक्षे-तरत्वात् अपि चानादेरभावविलक्षणस्यात्मवन्न ज्ञाननिवर्त्यत्वम्। न च भावत्वं आत्मत्वं वोपाधिः। अत्यन्ताभावेऽसति च साध्याव्याप्तेः।**

**ननु सादित्वमनादित्वं वा विनाशाविनाशयोर्न निमित्तं, किं तु विरोधि-सन्निपातासन्निपातौ। किं च 'अनादिभावो न निवर्त्तते' इति सामान्यव्याप्तेः 'अज्ञानं ज्ञाननिवर्त्यम्' इति विशेषव्याप्तिर्बलीयसी। अभाववैलक्षण्यादात्मवद-निवृत्तौ भाववैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यात्, इति चेत्।**

---

अविद्यासम्बन्धस्याविद्यानिवृत्तिद्वारा तन्निवर्त्यत्वान्न तत्रातिव्याप्तिरित्याशङ्क्य तर्ह्यना-दिपदव्यावर्त्यशुक्तिरजतादेः साक्षात्पदेनैव व्यावृत्तत्वादनादिपदवैयर्थ्यापातादिति दूष-यति—न च साक्षादिति। न च साक्षाज्ज्ञाननिवर्त्येच्छादावतिव्याप्तिवारणायानादिपद-मिति वाच्यम्। इच्छादेः सिद्धान्ते ज्ञाननिवर्त्यताऽनभ्युपगमात्परमतेऽपि तस्य ज्ञानत्वेन तन्निवर्त्यत्वाभावाच्चेति भावः।

कल्पिताज्ञानस्य शुक्तिरजतवदनादित्वमसंभवि चेत्याह—अज्ञानमिति। यस्या-ज्ञानानादित्वमसंमतं, तस्य तत्संबन्धानादित्वमपि तथेति न तत्र व्यभिचार इत्याह—न चेति। उक्तहेतोर्व्याप्यत्वासिद्धिं निराकरोति—न चेति। पक्षेतरत्वादिति (विशेषणस्य) पक्षमात्रव्यावर्तकविशेषणत्वात्त्वात्पक्षेतरत्वम्। तस्याप्युपाधित्वेऽनुमानमात्रोच्छेदा-पात इति भावः। अज्ञानस्यानाद्यभावविलक्षणत्वाभ्युपगमे तस्य ज्ञाननिवर्त्यत्वमप्यसं-भवि तत एवात्मवत्तदभावानुमानादित्याह—अपि चेति। आत्मनो ज्ञानानिवर्त्यत्वेऽन्यदेव प्रयोजकमित्याशङ्क्याह—न चेति। अत्यन्ताभावस्यासतो वा ज्ञाननिवर्त्यत्वाभावेऽपि भावत्वादेरभावात्तत्र साध्याव्याप्तिरित्यर्थः॥

ननु सादित्वेऽपि यावद्विरोधिसंनिपातमविनाशात्तत्संनिपात एव विनाशित्वे प्रयोजक इत्यविनाशे तदभावः प्रयोजकः। तथा चानादिभावरूपस्याप्यज्ञानस्य विरोधि-सन्निपाते विनाशो दुर्निवार इति शङ्कते—नन्विति।

"न हिंस्यात्सर्वा भूतानि" इति सामान्यशास्त्राद् यथा "अग्नीषोमीयं पशुमाल-भेत" इति विशेषशास्त्रस्य बलवत्त्वम्, एवं त्वदुक्तव्याप्त्यपेक्षया 'अज्ञानं ज्ञाननिवर्त्यम्' इति विशेषव्याप्तेर्बलीयस्त्वाद्भावरूपाज्ञानस्यापि ज्ञाननिवर्त्यत्वसिद्धिरित्याह—किं चेति। अज्ञानस्यानाद्यभावविलक्षणत्वेनाविनाशानुमानं प्रतिप्रयोगग्रस्तं चेत्याह—अभावेति।

यदुक्तमज्ञानस्य विरोधिसन्निपाताद्विनाशोपपत्तिरिति तत्राह—न अज्ञानमिति। अज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलीयसीत्येतदतिप्रसङ्गेन दूषयति—यः पर्वत

न, अज्ञानं न विरोधिसंसर्गि अनादिभावत्वात् आत्मवदित्यनुमानात् 'यः पर्वतः सोऽनग्निकः' इति विशेषव्याप्तिप्रसङ्गात् त्वदभिमताज्ञानस्यासिद्धेः। विशेषव्याप्त्यभावाद् भाववैलक्षण्यान्निवृत्तौ ध्वंसात्यन्ताभावादेरपि निवृत्त्यापातात्। प्रतिभासशरीरस्याज्ञानस्य तत्प्रतिभाने साक्षिणि सति निवृत्त्ययोगाच्च।

शुक्त्यवच्छिन्नचैतन्यनिष्ठाज्ञानस्यानादित्वासम्भवेन लक्षणस्य तत्राव्याप्तेः। शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मतेऽज्ञानस्य तद्ज्ञानानिवर्त्यत्वाच्चाव्याप्तिः। न ह्यन्याज्ञानमन्यज्ञानेन निवर्तते। एवं जीवन्मुक्तिकालीनेऽप्यज्ञानेऽव्याप्तिः। तस्य ज्ञाननिवर्त्यत्वे स्वकार्ये आरब्धकर्मभिः सहैव पूर्वकालीनसाक्षात्कारेणैव निवृत्त्यापातात्। नापि भ्रमोपादानत्वमज्ञानलक्षणम्। अनुत्पादितभ्रमाज्ञानेऽव्याप्तेः। मायावच्छिन्नं ब्रह्मैवोपादानमितिमतेऽसंभवात् मायाब्रह्मणी द्वितन्तुरज्जौ सूत्रद्वयवदुपादाने इति मते ब्रह्मण्यतिव्याप्तेश्च।

---

इति। विशेषव्याप्तिरपि किं त्वदभिमताज्ञाने मदभिमताज्ञाने वा?। नाद्यः। भावरूपाज्ञानस्य ममासिद्धत्वादित्याह—त्वदभिमतेति। न द्वितीयः। मदभिमताज्ञानस्य ज्ञानप्रागभावस्य स्वनिवृत्तिरूपज्ञाननिवर्त्यत्वाभावादिति भावः। प्रतिप्रयोगं दूषयति—भावेति। न च ध्वंसादेरपि ज्ञानान्निवृत्तिरिष्टेति वाच्यम्। ध्वंसस्य निवृत्त्या ध्वस्तघटस्य पुनरुन्मज्जनापत्तेः। अत्यन्ताभावादेश्च निवृत्तौ तत्त्वव्याघात इत्याशयः। किं चाज्ञानस्य प्रतिभासमात्रशरीरत्वाङ्गीकारात्तत्प्रतिभासे नित्यसाक्षिणि सति कथं तद्विनाश इत्याह—प्रतिभासेति।

किं च प्रातीतिकरजताद्युपादानाज्ञानस्यावच्छिन्नचैतन्यनिष्ठत्वादवच्छेदकशुक्त्यादेरागन्तुकत्वेन तदवच्छिन्नरूपस्यागन्तुकत्वात्तन्निष्ठाज्ञानस्यानादित्वासम्भवेन तत्राव्याप्तिरित्याह—शुक्त्यवच्छिन्नेति।

वाचस्पतिमते शुद्धब्रह्मणो वृत्तिविषयत्वस्याप्यभावात्तद्विषयकमूलाज्ञानस्य निवर्त्यत्वासंभवात्तत्राव्याप्तिरित्याह—शुद्धमिति। उपहितब्रह्मज्ञानादेव शुद्धब्रह्मविषयाज्ञानं निवर्ततामित्यत्राह—न हीति। किं च जीवन्मुक्तस्य प्रारब्धकर्मोपादानाज्ञानलेशस्य ज्ञाननिवर्त्यत्वायोगात्तत्राव्याप्तिरित्याह—एवमिति। तदपि प्रारब्धकर्मक्षयानन्तरं ज्ञानेनैव निवर्ततामित्याशङ्क्याह—तस्येति। द्वितीयं लक्षणं दूषयति—नापीति। अनुत्पादितेति। स्फीतालोकमध्यवर्तिघटादौ प्रथमत एव विशेषज्ञानोत्पत्तेस्तदज्ञानस्यानुत्पाद्यैव भ्रमं ततो विनाशात्तत्राव्याप्तिरित्यर्थः। यन्मते मायावच्छिन्नं ब्रह्मैवोपादानं, तन्मते मायायास्तन्तुत्वादिवत्तदवच्छेदकत्वेनानुपादानत्वादसंभवश्चेत्याह—मायेति। यन्मते मायाब्रह्मणोः समप्राधान्येन जगदुपादानत्वं तन्मते ब्रह्मण्यतिव्याप्तिरित्याह—मायाब्रह्मणीति।

एवमज्ञाने लक्षणाभावं प्रतिपाद्य प्रमाणाभावं प्रतिजानीते—नापीति।

नापि प्रमाणं भावरूपाज्ञाने पश्यामः। तत्र "अहमज्ञ" इत्यनुभवस्तावन्न प्रमाणम् अहमर्थस्य भावरूपाज्ञानानाश्रयत्वेन तत्प्रामाण्याय तत्प्रत्यक्षस्य 'सुखं न जानामि" इति प्रत्यक्षवत् ज्ञानाभावविषयत्वात्। परोक्षज्ञानानिवर्तकत्वेन सत्यपि तस्मिन्न जानामीत्यनुभवापातात्। नापि त्वदुक्तमर्थं न जानामीत्याद्यनुभवस्तत्र प्रमाणम् तस्यापि तव मते जडविषयाज्ञानाभावेन ज्ञानाभावविषयत्वस्यैव वक्तव्यत्वात्। ज्ञानाभावविषयत्वेनाभिमतान्मयि ज्ञानं नास्तीति ज्ञानादहमज्ञ इति ज्ञानस्य विशेषणविशेष्यभावव्यत्यासं विनेच्छाद्वेषादिज्ञानस्येव विषयभेदाप्रतीतेश्च।

न च प्रतियोगिज्ञानसत्त्वासत्त्वयोरात्मनि ज्ञानाभावानुभवो न संभवतीति वाच्यम्। इदानीं ब्रह्मसाक्षात्कारप्रागभावस्य सत्त्वेन तद्ज्ञानस्य त्वयापि वक्तव्य-

---

किं भावरूपाज्ञाने प्रत्यक्षं प्रमाणम्, अनुमानं वा, अर्थापत्तिर्वा श्रुतिर्वा ?। आद्येऽपि किम् "अहमज्ञः" इत्यनुभवस्तत्र मानं, "त्वदुक्तमर्थं न जानामि" इत्यनुभवो वा ?। "न किंचिदवेदिषम्" इति परामर्शमूलसौषुप्तिकाज्ञानानुभवो वा ? तत्राद्यं दूषयति-- तत्रेति। "अहमज्ञ" इति ह्यहमर्थाश्रिताज्ञानं प्रतीयते त्वदभिमताज्ञानस्याहंकारकारणत्वेन तदाश्रितत्वायोगात्तत्प्रामाण्यमहंकाराश्रितागन्तुकज्ञानाभावरूपाज्ञानविषयकत्वेनैव निर्वहणीयं यथा "सुखं न जानामि" इत्यनुभवस्य सुखविषयज्ञानाभावरूपाज्ञानविषयकत्वेनैव प्रामाण्यं सुखविषयभावरूपाज्ञानस्य त्वयाऽप्यनभ्युपगमात्तद्वदित्याह--अहमर्थस्येति 'अज्ञो न जनामि" इत्यनुभवस्य भावरूपाज्ञानगोचरत्वे तव मते परोक्षज्ञानस्य तदनिवर्तकत्वादनुमितवह्न्यादावपि भावरूपाज्ञानसत्त्वात् वह्निं न जानामीत्यनुभवापात इत्याह--परोक्षेति। ननु त्वदुक्तमर्थं न जानामीत्यर्थविशेषितमज्ञानमनुभूयते। ज्ञानाभावरूपाज्ञानस्य च तज्ज्ञानदशायामसंभवाद्भावरूपाज्ञानमेव तद्विषय इति तत्तत्र मानमिति द्वितीयमाशङ्क्य तव मते जडार्थविषयभावरूपाज्ञानाभावादस्य तद्विषयत्वानुपपत्तेर्वक्ष्यमाणविधया ज्ञानाभावविषयत्वमेवाभ्युपेयमिति दूषयति--नापित्वदुक्तमिति। सिंहावलोकनन्यायेनाहमज्ञ इत्यनुभवस्य ज्ञानाभावविषयत्वे युक्त्यन्तरमाह-- ज्ञानाभावेति।

ननु त्वदुक्तमर्थं न जानामीत्यत्र किमर्थज्ञाने गृहीते तदभावोऽनुभूयते उतागृहीते ? नाद्यः। ज्ञानविशेषणतयाऽर्थस्यापि ज्ञातत्वेन तज्ज्ञानाभावरूपाज्ञानस्यैवाभावेन तदनुभवासंभवात्। न द्वितीयः, प्रतियोगिज्ञानरूपकारणाभावेऽभावज्ञानायोगादित्यत आह-- न च प्रतियोगीति।

प्रतियोगिविषयकज्ञानातिरिक्तार्थज्ञानाभाव एव न जानामीत्यनुभवविषयः। इतरथोक्तन्यायेन तव मते ब्रह्मज्ञानाभावस्येदानीमननुभवापातादित्यभिप्रेत्याह-- इदानीमिति। किं च अर्थज्ञाने सति तदज्ञानमेव न संभवति तदज्ञाने च तद्विशेषितप्रतियोगिनोऽप्यज्ञानात्तदभावानुभवायोग इत्येतद्भावरूपाज्ञानेऽपि तुल्यमित्याह--भावेति।

त्वात् भावरूपाज्ञानमपि न जानामीति ज्ञानविरोधित्वेनैव भातीति कथं तदवच्छेदकज्ञाने सति प्रतीयेत। अवच्छेदकाज्ञाने च नतराम्। साक्षी नाज्ञानविरोधीत्येतत्तु ज्ञानाभावेऽपि तुल्यं तस्य प्रतियोगिनोऽन्यत्वात्। अथ वा तद्विशेषज्ञानाभाव एवाज्ञानं तद्ज्ञानं प्रति तत्सामान्यज्ञानमेव हेतुः तथैवान्वयव्यतिरेकदर्शनात्।

अपरे तु विशेषस्य स्वरूपतो ज्ञानेऽपि विशेषतो न जानामीति विशेषप्रकारकं ज्ञानं निषिद्ध्यते। तस्यैव संशयविरोधित्वात्। संभवति च सर्वत्र प्रमेयत्वादिरूपेण विशेषज्ञानमित्याहुः।

अन्ये तु करतलामलकादिज्ञाने स्वविषयेतरप्रतियोगिकव्यावृत्त्यधिकरणतावच्छेदकधर्मविषयत्वादिकं प्रसिद्धमिह ज्ञाने निषिद्ध्यत इत्याहुः।

---

तदवच्छेदके ति। तस्याज्ञानस्यावच्छेदको विषयः तज्ज्ञाने सति तद्विरुद्धाज्ञानस्यैवाभावात्तत्प्रतीत्ययोगः। तदज्ञाने च नागृहीतविशेषणान्यायेन सुतरां तदसंभव इत्यर्थः। ननु सिद्धान्ते सविषयमज्ञानं साक्षिणैव गृह्यते तस्य प्रमाणजन्यज्ञाननिवर्त्यत्वेन साक्षिणाऽविरोधादित्याशङ्क्य तर्हि ज्ञानाभावरूपाज्ञानमपि सप्रतियोगिकं साक्षिणैव गृह्यते तस्य तत्प्रतियोग्यन्यत्वेन तदविरोधादितितुल्यमित्याह —साक्षीति। पूर्वं प्रतियोगिविषयज्ञानातिरिक्तार्थज्ञानाभावस्यैवाज्ञानत्वान्न विरोध इत्युक्तम्। संप्रत्यर्थविशेषविषयज्ञानाभाव एवाज्ञानं, तज्ज्ञाने चार्थसामान्यज्ञानं हेतुरिति तस्य तेनाविरोधादनुभवसंभव इत्याह—अथवेति। सामान्यज्ञानस्याप्रतियोगित्वात्कथं तज्ज्ञानं विशेषज्ञानाभावरूपाज्ञानानुभवे हेतुरित्याशङ्क्याह—तथैवेति।

घटज्ञाने सत्यपि तत्प्रकारकज्ञानाभावाद् अर्थविशेषज्ञाने सत्यपि तत्प्रकारकज्ञानाभावरूपाज्ञानसंभवात्तदनुभवोपपत्तिरिति मतान्तरमाह—अपरे त्विति।

विशेषस्य प्रकारतयैव प्रतीतिर्न त्वन्यथेत्याशङ्क्याह संभवतीति।

त्वदुक्तमर्थं न जानामीति नार्थज्ञाननिषेधः किं तु तज्ज्ञाने करतलामलकादिज्ञाने प्रसिद्धासाधारणधर्मविषयत्वं निषिध्यते इति मतान्तरमाह—अन्ये त्विति स्वविषयेति। स्वस्यामलकज्ञानस्य विषय आमलकं तदितरद्घटादि तत्प्रतियोगिका या व्यावृत्तिरामलकनिष्ठोभेदः तदधिकरणतावच्छेदको यो धर्म आमलकत्वादि तद्विषयकत्वं तज्ज्ञाने प्रसिद्ध तदभावः परोक्तार्थज्ञाने विद्यमानो न जानामीत्यनुभवविषय इत्यर्थः। आदिपदेन स्वाविषयनिष्ठव्यावृत्तिप्रतियोगितावच्छेदकविषयत्वादिकं गृह्यते।

परोक्तेऽर्थे ज्ञानमात्रे सत्यपि साक्षात्प्रमाणज्ञानस्याप्रसंभवान्न विरोध इति मतान्तरमाह—केचित्तु साक्षादिति। अर्थविशेषिताज्ञानानुभवस्य प्रमाणत्वादर्थविषयत्वाच्च। तस्मिन्सति कथमर्थे प्रमाणज्ञानाभाव इत्याशङ्क्यास्यानुभूयमानाभावप्रतियोगिज्ञानवि-

केचित्तु साक्षात्त्वदुक्तार्थविषयं प्रमाणमपि नास्तीत्यर्थः। न चास्यैव विशिष्टविषयज्ञानस्य प्रमाणत्वात्तद्विशेषणतयाऽर्थस्यापि प्रमाणेनाधिगमात्स्ववचनव्याघात इति वाच्यम्। अस्य साक्षात्तद्विषयत्वाभावात्। साक्षात्प्रमाणविषयत्वस्य च सत्त्वप्रयोजकत्वादित्याहुः।

एतेन भावरूपाज्ञानमेवाज्ञानशब्देन समुदायशक्त्याऽभिधीयते इति तदेव न जानामीत्यनुभवगोचर इति परास्तम्। वृत्तिज्ञाननिवर्त्यस्याज्ञानस्य तद्विरुद्धत्वेन क्लृप्तावयवशक्त्यैवोपपत्तौ समुदायशक्तिकल्पनागौरवात्। किं चाज्ञानं वृत्तिविषयो न चेत्तत्रानुमानं शब्दप्रयोगोपि न स्यात्। वृत्तिग्राह्यं चेत्तदवच्छेदकविषयस्यापि तद्ग्राह्यत्वे कथं तत्राज्ञानम्। न च परोक्षवृत्तिर्नाज्ञानविरोधिनीति वाच्यम्। परोक्षतोपि ज्ञाने न जानामीत्यनुभवाभावात्। अज्ञानानिवृत्तौ परोक्षे व्यवहारायोगाच्च। परोक्षवृत्त्या परोक्षभ्रमानिवृत्तिप्रसङ्गाच्च। शास्त्रश्रवणेन धर्माद्यज्ञानं निवृत्तमित्यनुभवाच्च।

---

शेषणतयाऽर्थविषयत्वेन साक्षात्तद्विषयकत्वाभावान्न विरोध इत्याह--न चेत्यादिना। इदं रजतं जानामीति ज्ञानविशेषणतया प्रमाणगोचरस्यापि रजतस्य सत्वाभावात्साक्षात्प्रमाणविषयत्वमेवार्थसत्त्वप्रयोजकं तथा च तदभाव एव तत्संशयादिप्रयोजकाज्ञानमित्यभिप्रेत्याह--साक्षादिति।

नन्वज्ञानशब्दस्य भावरूपाज्ञाने रूढत्वात्तदर्थस्यैव न जानामीत्यनुभवगोचरत्वान्न ज्ञानाभावस्तद्गोचर इत्याशङ्क्याह--एतेनेति।

एतच्छब्दार्थमाह--वृत्तीति। क्लृप्तयोगस्य कल्प्यरूढिबाधकत्वाद्योगस्य चाभावरूपाज्ञानेऽपि सत्त्वान्नोक्तदोष इत्यर्थः। एवमभावरूपाज्ञानस्य प्रमाणज्ञानादिनाऽविरोधमुपपाद्य भावरूपाज्ञाने तद्विरोधमाह--किं चेति। किमज्ञानं वृत्तेर्विषयो न वा?। अन्त्ये दोषमाह--अनुमानमिति। आद्यमनुवदति--वृत्तीति तत्रापि किमज्ञानविषयवस्त्वपि अज्ञानविषयवृत्तेर्विषयो न वा?। आद्ये स्वसमानविषयप्रमाणज्ञानेन विरोधादज्ञानस्य न तद्ग्राह्यतेत्याह--तदवच्छेदकेति। अज्ञानविषयवृत्तेरज्ञानविषयवस्तुविषयकत्वेऽपि परोक्षत्वान्नाज्ञानविरोधिनी सेति चेत्, न परोक्षतो ज्ञातेऽपि वन्ह्यादावज्ञानानुभवाभावात्परोक्षज्ञानस्यापि तद्विरोधित्वादित्याह--न च परोक्षेति। परोक्षवृत्त्या तद्विषयाज्ञानानिवृत्तावज्ञाते व्यवहाराभावेन ततस्तद्व्यवहारोपि न स्यादित्याह--अज्ञानेति। किं च परोक्षप्रमाणज्ञानेन परोक्षभ्रमो निवर्तते इति तवापि संमतं तदनुपपन्नम्। अज्ञानानिवृत्तौ तन्मूलकभ्रमनिवृत्त्ययोगादित्याह--परोक्षेति। परोक्षज्ञानादज्ञानं न निवर्तत इत्येतदनुभवविरुद्धं चेत्याह--शास्त्रेति।

द्वितीयमनुवदति--अज्ञानेति।

अज्ञानग्राहकवृत्त्या विषयो न ज्ञायते चेत् तर्हि ज्ञानाभावग्राहकवृत्त्याऽपि विषयो न ज्ञायताम्। न किञ्चिदवेदिषमिति स्वापकालीनस्य तस्य परामर्शोऽप्येतावन्तं कालं दुःखं नावेदिषमिति परामर्शवत् ज्ञानाभावविषयः सुषुप्तौ धर्म्यादिज्ञानाभावस्तु तवाप्यनिष्टः। तेन विना भावरूपाज्ञानस्याप्यननुभवात्।

सुषुप्तौ सामान्येन विषयज्ञानादज्ञानानुभव इत्येतत् ज्ञानाभावेपि तुल्यम्। सुषुप्तौ केवलमज्ञानमनुभूतमुत्थितेन सविषयं परामृश्यत इत्यप्यभावेऽपि तुल्यम्। अभावस्यापि प्रमेयत्वादिना ज्ञाने प्रतियोगिज्ञानानपेक्षणात्।

अथ वा नायं परामर्शः किं तूत्थितस्य ज्ञानाभावानुमितिः अवस्थाविशेषत्वस्येन्द्रियप्रसादेन तदुपरमानुमाने सामग्र्यभावस्य प्रातर्गजाद्यभाव इव तुल्ययोग-

---

तर्ह्यभावरूपाज्ञानानुभवस्याप्यज्ञानाविषयत्वात् न तेन तस्य विरोध इत्याह--तर्हीति। तृतीये न किंचिदवेदिषमित्यस्य परामर्शत्वमभ्युपेत्य तस्य भावरूपाज्ञानविषयत्वाभावात्तन्मूलानुभवो न तत्र मानमित्याह--न किंचिदिति। दुःखं नावेदिषमिति परामर्शवदिति। दुःखविषयभावरूपाज्ञानानभ्युपगमात्तत्परामर्शस्य तद्विषयज्ञानाभावविषयत्वमावश्यकं, तद्वदित्यर्थः। ननु सर्वज्ञानोपरमसुषुप्तौ धर्मिप्रतियोगिज्ञानाभावान्न ज्ञानाभावरूपाज्ञानानुभवः तदभावे च कथं तत्परामर्श इत्याशङ्क्य धर्म्याद्यज्ञाने भावरूपाज्ञानस्याप्यनुभवायोगात्तवाप्ययं दोषस्तुल्य इत्याह--सुषुप्ताविति।

ननु भावरूपाज्ञानानुभवस्य साक्षिणो नित्यतया धर्म्यादिज्ञानानपेक्षणादज्ञानावच्छेदकविषयस्यापि सामान्येन तद्विषयत्त्वात्तदवच्छिन्नाज्ञानानुभवे न काचिदनुपपत्तिरित्याशङ्क्य तर्ह्यभावरूपाज्ञानस्यापि साक्षिवेद्यत्वसंभवात्तत्रापि नानुपपत्तिरित्यभिप्रेत्याह--सुषुप्ताविति। सुषुप्तावज्ञानमात्रं साक्षिणानुभूतं पश्चाद्विषयावच्छिन्नं परामृश्यते इत्येतदप्यभावरूपाज्ञाने तुल्यमित्याह--सुषुप्ताविति। किं च सप्रतियोगित्वेनैवाभावानुभवो धर्म्यादिज्ञानमपेक्षते न तदनुभवमात्रं तस्य तेन विनापि दर्शनादित्याह--अभावस्यापीति। ननु सुषुप्तौ तव मते नित्यसाक्षिणोऽभावान्न तन्मूलकोऽयं ज्ञानाभावपरामर्शः अनित्यसाक्ष्युपगमे च सुषुप्तिभङ्गप्रसङ्गः। तस्य धर्म्यादिज्ञानं विनाऽनुपपत्तिश्च अज्ञानस्य तदा स्वरूपेण वेद्यत्वे ततो विशिष्टविषयपरामर्शायोगात्। अस्मन्मते नित्यस्यापि साक्षिणोऽसङ्गस्य भावरूपाज्ञानेन विना दृश्येन ज्ञानाभावादिना वास्तवसंबन्धायोगान्मतद्वयेऽपि न ज्ञानाभावरूपाज्ञानानुभवसंभवः। तदसंभवे च कथं तद्विषयपरामर्श इत्याशङ्क्यास्य परामर्शत्वमेवासिद्धमित्याह--अथ वेति।

तदनुमितौ लिङ्गत्रयमाह--अवस्थेति। सुप्तोत्थितेन्द्रियेषु प्रसाददर्शनात्तेषां स्वापकाले व्यापाराभावरूप उपरमोऽनुमीयते। इन्द्रियव्यापाराभावाच्च प्रत्यक्षज्ञानसामग्र्य-

क्षेमेऽप्यात्मादौ स्मर्यमाणेऽपि नियमेनाऽस्मर्यमाणत्वस्य वा लिङ्गत्वात् । भवन्मतेऽपि सुषुप्तावहमर्थाभावेनान्यानुभूतेऽन्यस्य परामर्शायोगात् सुषुप्तावज्ञानस्य केवलसाक्षिवेद्यस्य संस्काराभावेन परामर्शायोगाच्च ।

न च सुषुप्तावविद्यावृत्तिविनाशात् संस्कार इति वाच्यम् । तर्हि जागरणेऽप्यज्ञानस्याविद्यावृत्तिवेद्यत्वनियमप्रसङ्गेन तद्विरहदशायामज्ञाने संशयाद्यापत्तेः । किं च भवन्मतेऽपि सुषुप्तौ ज्ञानाभावः कथं सिद्ध्येत् । भावरूपाज्ञानलिङ्गेनानुमीयते इति चेत् न । त्वन्मते जडे तदभावादित्युक्तत्वात्, साक्षिवेद्येच्छादिज्ञानाभावासिद्ध्यापाताच्च ।

किं चैवं सुषुप्तिकालीनो रागाद्यभावो न सिद्ध्येत् । न हि तदा रागादिविरोधिद्वेषोऽस्ति येनाज्ञानेन ज्ञानाभाव इव द्वेषेण रागाभावोऽनुमीयेत । न च

---

भावः, ततः प्रत्यक्षज्ञानाभावः, ततः परोक्षज्ञानाभाव इति सर्वज्ञानाभावसिद्धिरित्याह—इन्द्रियेति । प्रातश्चत्वरमार्गेगान्यत्र गतश्चैत्रः केन चित् गजोस्तीति सायं समये पृष्टो यथा गजसमानयोगक्षेमपाषाणादौ स्मर्यमाणेपि गजस्यास्मर्यमाणत्वलिङ्गेन तदभावं तत्र निश्चिनोति । एवं ज्ञानसमानकालीनात्मादौ स्मर्यमाणेपि सुषुप्तौ ज्ञानस्यास्मर्यमाणत्वात्तदभावनिश्चय इत्याह—प्रातरिति । न किंचिदवेदिषमित्ययं न परामर्शः किंत्वनुमितिरित्यत्र किन्नियामकमित्यत्राह—भवन्मतेऽपीति । अस्मन्मतेऽपि सुषुप्तावज्ञानानुभवायोगेन तत्परामर्शायोगादित्यपेरर्थः । किं च भावरूपाज्ञानानुभवस्य साक्षिणो नित्यतया ततः संस्कारानुदयात्तत्कार्यपरामर्शोऽनुपपन्न इत्याह—सुषुप्ताविति ।

ननु सुषुप्तावज्ञानादिविषयाविद्यावृत्त्यङ्गीकारात्ततस्तत्परामर्शहेतुसंस्कारोत्पत्तिरिति चेत् न । तथा सत्यज्ञानस्य केवलसाक्षिवेद्यत्वाभावापातेन जागरणेऽपि तथा स्यात् तथा च स्थाण्वादाविव तत्र कदाचित्संशयादिः स्यादित्याह—न चेत्यादिना ।

उक्तलिङ्गैर्ज्ञानाभावानुमित्यनभ्युपगमे तव मतेऽपि स्वापे ज्ञानाभावो न सिद्ध्येदित्याह—किं चेति । ननु यदा यद्विषयभावरूपाज्ञानं तदा तद्विषयवृत्तिज्ञानाभाव इति जाग्रति नियमदर्शनात्स्वापोऽपि सर्वविषयाज्ञानेन परामर्शसिद्धेन सर्वविषयज्ञानाभावोऽनुमीयते इति शङ्कते—भावरूपेति । जडविषयभावरूपाज्ञानाभावादेव तेन तद्विषयज्ञानाभावानुमानायोगादिति दूषयति—न त्वन्मत इति । किं चेच्छादिविषयभावरूपाज्ञानानङ्गीकारात्स्वापे तज्ज्ञानाभावो न सिद्ध्येदित्याह—साक्षीति । अपि च स्वापे तद्विरोधिदर्शनेन तदभावनिश्चये तदा रागाद्यभावोऽपि न सिद्ध्येदित्याह—किं चैवमिति ।

नन्विष्टज्ञानादेः रागादिकारणत्वात्तदभाव एव भावरूपाज्ञानानुमितस्तत्कार्यरागाद्यभावमनुमापयतीत्याशङ्क्य तथापि तदा प्रकाशमानात्मसुखादावज्ञानादेरभावात्तद्वि-

ज्ञानाभावादेव रागाद्यभावसिद्धिः। प्रकाशमानात्मादौ तदभावासिद्धेः। तस्मान्न प्रत्यक्षं भावरूपाज्ञाने मानम्।

विवरणोक्तानुमानेन भावरूपाज्ञानसाधननिरासः

नाप्यनुमानम्। तत्र न तावत्प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्। अप्रकाशितार्थप्रकाशकत्वात्। अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदित्यनुमानं प्रमाणं सुखादिसाक्षिप्रमाया अज्ञानानिवर्त्तकत्वेन बाधात् वृत्तेः पक्षत्वे परोक्षवृत्तौ बाधात्। अपरोक्षवृत्तेः पक्षत्वे च परोक्षवृत्तौ व्यभिचारात्। तद्व्यावृत्त्यर्थं हेतुविशेषणे चाप्रयोजकत्वात्, भ्रमे धर्म्यंशापरोक्षप्रमाणे बाधाच्च। तदन्यस्य पक्षत्वे धारावाहिकद्वितीयादिप्रमायां बाधादसिद्धेश्च प्रथमप्रमाद्यव्यवहितायास्तस्या अज्ञानानिवर्तकत्वात्, प्रकाशितार्थप्रकाशकत्वाच्च, सूक्ष्मतत्तत्क्षणानामप्रत्यक्षत्वाच्च। तदन्यस्य पक्षत्वेऽप्यनात्मविषयापरोक्षवृत्तौ बाधात् जडावरकाज्ञानाभावात्।

---

षयरागाद्यभावो न सिद्ध्येदित्याह—न च ज्ञानेति। प्रत्यक्षनिराकरणमुपसंहरति—तस्मादिति।

द्वितीयं दूषयति - नापीति।

प्रथमं विवरणाचार्यानुमानं निराकरोति--तत्रेति। भावरूपाज्ञाने इत्यर्थः। प्रमाणज्ञानमित्यनेन किं यथार्थज्ञानमात्रं पक्षीक्रियते उत प्रमाणजन्यं वृत्तिज्ञानम्?। आद्ये अंशतोबाध इत्याह—सुखादीति। द्वितीयेऽपि किं तादृशवृत्तिमात्रं पक्षः उतापरोक्षवृत्तिः। आद्ये परोक्षवृत्तौ बाधः तस्या अज्ञाननिवर्त्तकत्वानङ्गीकारादित्याह—वृत्तेरिति। द्वितीये दोषमाह—अपरोक्षेति। अप्रकाशितार्थापरोक्षप्रकाशकत्वादिति हेतोर्विवक्षितत्वान्न परोक्षवृत्तौ व्यभिचार इत्याशङ्क्याह—तद्व्यावृत्त्यर्थमिति। परोक्षज्ञानस्येवोक्तसाध्यं विनाऽप्यप्रकाशितार्थप्रकाशकत्वसम्भवादप्रयोजकत्वमित्यर्थः। किं च भ्रान्ताविदमाकारवृत्तेरज्ञाननिवर्त्तकत्वे तन्मूलरजतभ्रमायोगात्तत्र बाध इत्याह—भ्रम इति। भ्रमविरोधित्वेनापि पक्षविशेषणे दोषमाह—तदन्यस्येति। धारायां द्वितीयादिज्ञाने हेतोरसिद्धिश्चेत्याह—असिद्धेश्चेति। दोषद्वयेऽपि क्रमेण हेतुमाह—प्रथमेति। ननु प्रथमादिज्ञानानामुत्तरोत्तरक्षणविशिष्टघटादिविषयकत्वाद् उत्तरोत्तरक्षणविशिष्टघटविषयकद्वितीयादिज्ञानमज्ञातार्थविषयमिति नोक्तदोषद्वयमित्यत आह--सूक्ष्मेति। धारान्यत्वेनापि पक्षो विशेष्यते इत्याशङ्क्याह—तदन्यस्येति। बाधमेवोपपादयति--जडेति।

घटाद्याकारवृत्तेरपि तदवच्छिन्नचैतन्यावरकाज्ञाननिवर्तकत्वान्न तत्र बाध इति शङ्कते--घटादीति।

घटाद्यवच्छिन्नचैतन्यस्यावारकमज्ञानं तत्रापि निवर्त्तत इति चेत् न, एकाज्ञानपक्षे तदभावात् । अवच्छिन्नस्यास्वप्रकाशत्वेन घटादाविव तत्राप्यज्ञानायोगाच्च, रूपादिहीनस्यावच्छिन्नचैतन्यस्य चाक्षुषत्वायोगाच्च । अध्यात्मविषयापरोक्षवृत्तेः पक्षत्वेऽनात्मज्ञाने व्यभिचारात् । आत्मविषयत्वेन हेतुविशेषणे दृष्टान्तस्य साधनवैकल्यात् । साध्येऽप्याद्यविशेषणं व्यर्थम् । यतो ज्ञानमज्ञानस्यैव निवर्त्तकमिति ज्ञानमेव प्रागभावनिवृत्तिरिति च मते स्वनिवर्त्यविशेषणेनैव तस्य व्यावृत्तत्वात् अभावव्यतिरिक्तपदेनैव तद्व्यावृत्तिसिद्धया शेषवैयर्थ्याच्च ।

द्वितीयविशेषणं चायुक्तम् । जडावरकाज्ञानस्यानङ्गीकृतत्वात् । उत्पादकादृष्टव्यावृत्तेरावरणपदेनैव सिद्धत्वाच्छेषवैयर्थ्याच्च । त्वन्मते ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन स्वनिवर्त्यपदेनैव तद्व्यावृत्तिसिद्धेश्च ।

---

अज्ञानमेकमेवेति मते घटादिवृत्तीनामज्ञाननिवर्तकत्वमयुक्तमित्याह--न एकेति । ननु मूलाज्ञानस्यैकत्वेऽप्यवस्थाज्ञानं तत्तदवच्छिन्नचैतन्यावरकं तत्तद्विषयवृत्तिनिवर्त्यं चानन्तमभ्युपेयते । अत्र च नोक्तदोष इत्याशङ्क्यावच्छिन्नचैतन्यस्य चिन्मात्रादन्यत्वे जडत्वादावारकाज्ञानमेवानुपपन्नमित्यभिप्रेत्याह--रूपादीति । तर्ह्यनात्मविषयवृत्तावबाधायात्मविषयवृत्तिरेव पक्षीक्रियत इत्याशङ्क्याह--आत्मेति । अप्रकाशितात्मप्रकाशकत्वादिति हेतोर्विवक्षितत्वादनात्मविषयवृत्तौ न व्यभिचार इत्याशङ्क्याह--आत्मेति । एवं पक्षं दूषयित्वा साध्यमपि दूषयति--साध्येऽपीति । सिद्धान्ते भावरूपाज्ञानस्यैव ज्ञाननिवर्त्यत्वात्परमते तु ज्ञानस्यैव स्वप्रागभावनिवृत्तिरूपत्वेन तत्प्रागभावस्य तन्निवर्त्यत्वाभावात् । मतद्वयेऽपि स्वनिवर्त्यपदेनैव स्वप्रागभावस्य व्यावृत्तत्वात्तदर्थमाद्यविशेषणं व्यर्थमित्याह--यत इति । प्रागभावस्य प्रतियोगिनिवर्त्यत्वमतेऽपि अभावव्यतिरिक्तेत्येतावतापि तद्व्यावृत्तिसिद्धेः स्वप्रागिति विशेषणं व्यर्थमित्याह—अभावेति ।

स्वविषयावरणेत्येतदसंभवेन दूषयति--द्वितीयेति ।

किं च पक्षीभूतज्ञानजनकादृष्टव्यावृत्तये हि द्वितीयविशेषणम् । तत्र चावरणपदेनैव तद्व्यावृत्तिसंभवात्स्वविषयेति व्यर्थमित्याह—उत्पादकेति । उत्पादकादृष्टस्य सिद्धान्ते ज्ञाननिवर्त्यत्वाभावात् तृतीयविशेषणेनैव तद्व्यावृत्तिसिद्धेर्द्वितीयं सर्वं व्यर्थमित्याह--त्वन्मत इति । स्वनिवर्त्येतिविशेषणमप्यसंभवि विषयसंसृष्टतयोत्पन्ना वृत्तिः स्वोपहितचैतन्यस्य विषयसंबन्धघटिकेति मते विषयाधिष्ठानचैतन्यमेव वृत्त्या तदवच्छिन्नचैतन्येन वाऽभिव्यक्तं विषयप्रकाशकमिति मते चाज्ञानस्य वृत्त्यनिवर्त्यत्वादित्याह--तृतीय चेति । वृत्तिप्रतिबिम्बितचैतन्यस्य घटादिप्रकाशकतया तदज्ञाननिवर्तकत्वाद्वृत्तिरपि तत्सहका-

तृतीयं चायुक्तम् । वृत्तिश्चिदुपरागार्थेति मते घटाकारवृत्त्या तत्प्रतिबिम्बितचैतन्येन वाऽभिव्यक्तं घटाधिष्ठानं चैतन्यं घटप्रकाशकमिति मते च घटविषयज्ञानस्य घटाज्ञानानिवर्त्तकत्वात् । वृत्तिप्रतिबिम्बचैतन्येन विषयस्याध्यासिकसंबन्धाभावेन घटाद्यप्रकाशकत्वाच्च । चतुर्थं चायुक्तम् । अज्ञानस्यचिन्मात्राश्रयत्वात् । वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य तदभिव्यक्ताधिष्ठानचैतन्यस्य वा प्रमाणज्ञानस्य तदनाश्रितत्वात् ।

किञ्च स्वविषयावरणपूर्वकमित्येतावदेवालम् । न हि प्रमाप्रागभावस्तद्धेत्वदृष्टमन्यद्वा ज्ञानातिरिक्तं किञ्चिदावरणं भवति । तथात्वे तेनैव ब्रह्मस्वरूपावरणसंभवादप्रयोजको हेतुः स्यात् । न च तमोऽव्यावृत्त्यर्थन्तृतीयं विशेषणम् । तस्य प्रमामात्रविषयावरणत्वाभावात् ।

न च व्यापकविशेषणानामुद्देश्यप्रतीत्यर्थत्वान्न वैयर्थ्यमिति वाच्यम् । यत्राविशेषित साध्यं प्रति हेतोरप्रयोजकता विमतं भिन्नाभिन्नं समानाधिकृतत्वादित्यादौ तत्रैव विशिष्टप्रतीतेरुद्देश्यत्वात् । अन्यथाऽतिप्रसङ्गात् नीलधूमजन्यवन्हिप्रतीतेरेवोद्देश्यत्वादिति वक्तुं शक्यत्वात् हेतावपि तदभावप्रसङ्गात् ।

---

रिणीत्याशङ्क्य वृत्तिप्रतिबिम्बितचैतन्ये घटादेरनध्यासात्तस्य घटादिनाऽध्यासिकसंबन्धाभावेन तत्प्रकाशकत्वमेवानुपपन्नमित्याह—वृत्तीति । अज्ञानस्य पक्षीभूतज्ञानदेशगतत्वमप्ययुक्तम् । वृत्तेरन्तःकरणगतायाश्चिन्मात्रगताज्ञानसादेश्याभावात् । वृत्तिप्रतिबिम्बितचैतन्यस्य तदभिव्यक्तविषयाधिष्ठानचैतन्यस्य वा प्रमाणज्ञानत्वेन विवक्षायां तयोरपि निरधिकरणतयाऽज्ञानसमानाधिकरणत्वाभावादित्याह—चतुर्थं चेति ।

इदानीमेकविशेषणमङ्गीकृत्येतरविशेषणानां वैयर्थ्यमाह—किं चेति ।

अज्ञानातिरिक्तस्याप्यावारकत्वे तत एव ब्रह्मस्वरूपानवभाससंभवात् उक्तसाध्ये हेतुरप्रयोजकः स्यादित्याह—तथात्व इति । ननु स्वविषयावरणपूर्वकमित्युक्तौ संतमसपूर्वकत्वेन सिद्धसाधनता स्यात् तन्निवारणाय स्वनिवर्त्येति विशेषणमर्थवदित्याशङ्क्यात्र गन्धादिविषयप्रमाया अपि पक्षत्वात्स्वशब्देन तस्यापि ग्रहणात्तमसस्तद्विषयावरकत्वाभावान्नैवमित्याह — न चेत्यादिना ।

नन्वत्र स्वप्रागभावातिरिक्तत्वादिविशेषणविशिष्टाज्ञानप्रतीतेरुद्देश्यत्वादेकेनापि विशेषणेन विना तदयोगान्न कस्यापि वैयर्थ्यमित्याशङ्कामपवदति—न च व्यापकेति । विशिष्टप्रतीतिर्न सर्वत्रोद्देश्या, किं तु यस्मिन्साध्ये विशेषणेन विना हेतुरप्रयोजकः । यथा भेदमात्रे अभेदमात्रे वा समानाधिकृतत्वहेतुरप्रयोजकः, तत्रैव विशिष्टप्रतीतिरुद्देश्या। प्रकृतसाध्ये तु विशेषणेन विना हेतुर्नाप्रयोजकः । ततो न विशिष्टप्रतीतिरुद्देश्येत्याह—यत्रेति । इतरथा हेतुविशेषणस्याप्यवैयर्थ्यापात इत्याह—अन्यथेति । तदेवोपपादयति—नीलेति ।

एवं साध्यं दूषयित्वा हेतुमपि दूषयितुं विकल्पयति—हेतौ चेति ।

हेतौ च प्रकाशकत्वं किं ज्ञानत्वं, ज्ञानहेतुत्वं वा, साक्षात्परंपरया व्यवहारहेतुत्वमात्रं वा, तमोनिवर्तकत्वं वा, आवरणनिवर्त्तकत्वं वा, अज्ञानान्धकारान्यतरनिवर्तकत्वं वा, प्रकाशशब्दवाच्यत्वं वा ? नाद्यः । दृष्टान्तेऽभावात् । न द्वितीयः । असिद्धेः, इन्द्रियादौ व्यभिचाराच्च । अत एव न तृतीयः । न चतुर्थः । अज्ञानान्धकारानुगततमस्त्वाभावात् । न च पञ्चमः । साध्यावैशिष्ट्यात् । अत एव न षष्ठः । न सप्तमः । शब्दसाम्येव साध्यसाधने गोशब्दवाच्यत्वेन पृथिव्यादौ शृङ्गित्वसाधनापातात् ।

किं चानुमितेरप्रकाशितार्थप्रकाशत्वे सा व्यर्था । अप्रकाशितप्रकाशकत्वे वाऽस्यामेवानुमितौ व्यभिचारः । अनादित्वे सति भावत्वमभावविलक्षणत्वं वा न निवर्त्यनिष्ठम् । अनादिभावमात्रवृत्तित्वात् । अनाद्यभावविलक्षणमात्रवृत्तित्वाद्वा आत्मत्ववत् । निवर्त्यत्वं वा नानादिभावनिष्ठम् । निवर्त्यमात्रवृत्तित्वात्प्रागभावत्ववत् । अनादित्वं वा नावरणनिष्ठम् । अनादिमात्रवृत्तित्वात् प्रागभावत्ववत् । प्रमाणज्ञानं वा नानादिभावनिवर्तकम् । ज्ञानत्वादप्रमावदिति सत्प्रतिपक्षत्वाच्च ।

---

दीपप्रभायां ज्ञानत्वाभावात्साधनवैकल्येनाद्यं दूषयति—नाद्य इति । असिद्धेरिति । पक्षीकृतज्ञानमात्रस्य ज्ञानाहेतुत्वादित्यर्थः । इन्द्रियादेरपि ज्ञानद्वारा व्यवहारहेतुत्वेन तत्र व्यभिचारादेव न तृतीय इत्याह—अत एवेति । अज्ञानेति । ज्ञानदीपप्रभानिवर्त्ययोरज्ञानान्धकारयोरनुगतस्य जातिरूपस्योपाधिरूपस्य वा तमस्त्वस्याभावात् ज्ञाने तन्निवर्त्तकत्वमसिद्धमित्यर्थः । साध्यावैशिष्ट्यादिति । ज्ञाननिवर्त्यावरणस्यैव साध्यत्वादावरणनिवर्तकत्वं ज्ञाने सिद्धमित्यर्थः—अत एवेति । साध्यावैशिष्ट्यादेवेत्यर्थः । ज्ञानस्याज्ञानान्धकारान्यतरनिवर्तकत्वमज्ञाननिवर्त्तकत्वेन वाच्यं, तदेवासिद्धम् । तस्यैव साध्यत्वादित्यर्थः । प्रकाशशब्दवाच्यत्वमिति पक्षमाभाससमतया दूषयति—न सप्तम इति ।

अनुमितावप्युक्तहेतुरस्ति न वा ? अन्त्यं दूषयति—किं चेति । आद्ये अज्ञानविषयानुमितावेव व्यभिचारः । अज्ञानावरकाज्ञानान्तराभावात् । तत्रोक्तसाध्याभावादित्याह—अप्रकाशितेति । प्रतिपक्षपराहतिमप्याह—अनादित्व इति । प्रागभावगतानादित्वे घटगतभावत्वे च बाधवारणाय पक्षविशेषणे । अविद्यायां भावत्वस्याप्यभावात् सिद्धसाधनमित्याशङ्क्याह—अभावेति । घटत्वे व्यभिचारवारणाय हेतावनादीति विशेषणम् । प्रागभावत्वे तद्वारणाय भावपदम् । प्रमेयत्वे तद्वारणाय मात्रपदम् । अज्ञाननिष्ठाभावविलक्षणत्वेऽयं हेतुरसिद्ध इत्याशङ्क्याह—अनाद्यभावेति । उत्तरानुमानानि स्पष्टार्थानि । ज्ञानोत्पत्तेः पूर्वं तद्विषयावरकतन्निवर्त्यभावरूपाज्ञानाभावेऽपि हेतोः संभवादप्रयोजकतापीत्याह—पूर्वमिति ।

पूर्वप्रकाशाभावमात्रेणाप्रकाशितप्रकाशकतोपपत्तेरप्रयोजकश्च।

नापि देवदत्तप्रमा देवदत्तगतप्रमाप्रागभावातिरिक्तानादिनिर्वर्त्तिका प्रमात्वात् यज्ञदत्तप्रमावदित्यनुमानं प्रमाणम्। देवदत्तसुखादिप्रमायां बाधात्। किं च साध्ये देवदत्तगतत्वं किं प्रमातत्प्रागभावयोरन्यतरस्य विशेषणं तदतिरिक्तानादेर्वा? नाद्यः। वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वा प्रमाया आत्मगतत्वाभावात्। प्रागभावस्य प्रतियोगिसमानाधिकरणत्वात्।

न द्वितीयः। दृष्टान्ते साध्याभावात्। यज्ञदत्तप्रमाया यज्ञदत्तगतप्रागभावनिवर्तकत्वेऽपि देवदत्तगतानाद्यनिवर्त्तकत्वात्। साध्ये च प्रमापदवैयर्थ्यम्। चैत्रप्रमा चैत्रगतस्याभावातिरिक्तस्यानादेरनिर्वर्त्तिका प्रमात्वात् मैत्रप्रमावदिति प्रतिप्रयोगाच्च। चैत्रप्रमा स्वप्रागभावातिरिक्तानाद्यभावनिर्वर्त्तिका प्रमात्वादित्याभाससमानयोगक्षेमत्वाच्च। अर्थापत्तिरपि तत्र न मानम्। तेन विनाऽनुपपन्नार्थाभावात्। प्रपञ्चस्य पारमार्थिकत्वात्। श्रुतौ च मायादिशब्दानामन्यार्थत्वात्। तस्माल्लक्षणप्रमाणयोरभावान्न भावरूपमज्ञानमिति।

अज्ञानसमर्थनेऽज्ञानलक्षणम् प्रागभावनिरासः

अत्रोच्यते। अनादित्वे सति ज्ञाननिवर्त्यमज्ञानम्। न च प्रागभावेऽतिव्याप्तिः। तत्र प्रमाणाभावात्। तथा हि--तत्र न तावदुत्पन्नमात्रतन्तुषु

---

चित्सुखाचार्यानुमानमपि निराकरोति—नापीति। पक्षदोषमाह—देवदत्तेति। सुखादिविषयभावरूपाज्ञानाभावेन तत्प्रमायास्तन्निवर्त्तकत्वाभावादित्यर्थः। साध्यमपि विकल्प्य दूषयति—किं चेति। आत्मगतत्वाभावादिति। वृत्तेरन्तःकरणगतत्वात् तदवच्छिन्नचैतन्यस्य च निरधिकरणत्वादित्यर्थः। चैतन्यस्य प्रागभावाभावात् वृत्तिप्रागभावस्यान्तःकरणगतत्वेनात्मगतत्वमसिद्धमित्याह—प्रागभावस्येति। देवदत्तगतत्वमनादेर्विशेषणमिति कल्पं दूषयति—न द्वितीय इति। अभावव्यतिरिक्तत्वविशेषणेनैव प्रमाप्रागभावस्यापि व्यावृत्तिसंभवादितरवैयर्थ्यं चेत्याह—साध्य इति। उक्तस्यापि प्रतिप्रयोगपराहतिमप्याह—चैत्रेति। स्वप्रागभावेति। अत्र स्वशब्दः पक्षवाची, तथा च मैत्रप्रमायां न साध्यवैकल्यम्। तृतीयं दूषयति—अर्थापत्तिरिति। प्रपञ्चमिथ्यात्वं तादृशोपादानमन्तरेणानुपपन्नमित्याशङ्क्याह—प्रपञ्चस्येति। "मायां तु प्रकृतिं विद्यात्" "अजामेकाम्" "भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिश्रुतिस्तत्र मानमिति कल्पं निराकरोति—श्रुताविति। पूर्वपक्षमुपसंहरति—तस्मादिति। उक्तदोषोद्धारं प्रतिजानीते—अत्रोच्यत इति।

स्वाभिमतं लक्षणमाह—अनादीति। पराभिमतेच्छादिप्रागभावेऽतिव्याप्तिं निराकरोति—न चेति। तत्रेति। प्रागभावमात्रे इत्यर्थः। एतच्च लक्षणाभावस्याप्युपलक्षणम्।

पटो नास्तीति प्रत्यक्षं प्रमाणम्। पटो नास्तीति बुद्धेः पटत्वावच्छिन्नप्रतियोगिकाभावविषयिण्याः सामान्याभावविषयतया प्रागभावाविषयत्वात्। न हि सामान्याभावरूपः प्रागभावोऽस्ति। घटादिव्यक्तिव्यतिरेकेण सामान्यस्य प्रतियोगिनोऽभावात्। प्रागभावस्यावश्यं प्रतियोगिजनकत्वात्। व्यक्तिविशेषाणां च विशेषप्रागभावकार्यत्वात्तद्व्यतिरेकादेव तद्व्यतिरेकेण सामान्याभावस्य तत्कारणत्वे मानाभावात्। यावद्विशेषाभाववत्येव सामान्याभावस्य नियमात् यावत्प्रागभावानां चैकत्रासंभवात्।

ननु तन्तुषु पटात्यन्ताभावाभावात् कथञ्चित्सा बुद्धिः प्रागभावमेव विषयीकरोतीति चेत्। न, भूतले घटो नास्तीति बुद्धेरिव कालभेदेनाधिकरणसंसर्ग्यत्य-

---

प्रमाणाभावमुपपादयति—तथा हीति। तत्र किं पटोत्पत्तेः पूर्वं तन्तुषु पटो नास्तीति बुद्धिर्मानम्, एतावन्तं कालं तन्तुषु पटो नासीदिति बुद्धिर्वा, इह माभूदिति कामनाऽनुपपत्तिर्वा, तन्तुषु पटो भविष्यतीत्यनुभवो वा?। नाद्य इत्याह—तत्र न तावदिति। घटे पटो नास्तीति बुद्धिवत्सामान्याभावविषयत्वान्नेयं प्रागभावविषयेत्याह—पट इति। अत्यन्ताभाववत्प्रागभावोऽपि सामान्याभावरूपोऽस्त्वित्याशङ्क्याह—न हीति। प्रतियोगिजनको ह्यभावः प्रागभावः। तथा च सामान्याभावरूपप्रागभावेन घटादिव्यक्तय एव जन्यन्ते तदतिरिक्तं सामान्यं वा? नान्त्य इत्याह—घटादीति। सामान्याभावरूपप्रागभावस्य प्रतियोगिजनकत्वमेव मास्त्वित्याशङ्क्याह—प्रागभावस्येति। तव मते प्रागभावत्वस्य प्रतियोगिजनकत्वव्याप्यत्वात्तदभावे प्रागभावत्वस्यैवानुपपत्तेरित्यर्थः। आद्यं दूषयति—व्यक्तिविशेषाणामिति। सामान्याभावोऽपि तत्र कारणमित्याशङ्क्याह—तद्व्यतिरेकादिति। धर्मिणोऽसंभवादपि न सामान्यप्रागभाव इत्याह—यावदिति। रूपप्रतियोगिकयावद्विशेषाभाववत्येव वायौ रूपसामान्याभावदर्शनात् यावद्घटप्रागभावाश्रयस्य कस्यचिदभावान्न तत्सामान्यप्रागभाव इत्यर्थः। ननु तन्तुषु पटो नास्तीति धीः स्वविषयाभावप्रतियोगितायाः पटत्वावच्छिन्नत्वं न विषयीकरोति पटत्वावच्छिन्नप्रतियोगिकाभावस्य तन्तुष्वभावात्। किं तु तस्याः पटत्वसामानाधिकरण्यमात्रम्। तच्च प्रागभावविषयत्वेऽप्युपपद्यत इति शङ्कते—नन्विति।

भूतले पटो नास्ति तन्तुषु पटो नास्तीति बुद्ध्योः पटप्रतियोगिकाभावविषयत्वांशे वैलक्षण्याभावादुभयत्रापि पटत्वावच्छिन्नप्रतियोगिकाभाव एव विषयः। तथा च संयोगितया घटाधारे भूतलादौ यथा समयभेदेन संसर्गशीलस्तदत्यन्ताभावः, एवं समवायितयाऽऽश्रये तन्त्वादौ तादृशपटात्यन्ताभावसम्भवान्न प्रागभावसम्भव इति दूषयति—न भूतल इति। अभावप्रतीतिविषयस्य प्रतियोगिगतसामान्यस्य तत्प्रतियोगितानवच्छेदकत्वे बाधकमाह—अन्यथेति।

न्ताभावस्यैव तद्विषयत्वात् । अन्यथा वायौ रूपं नास्तीति प्रत्ययोऽपि कथं चिद्विशेषाभावविषय एवेति सामान्याभावस्यैवासिद्धिप्रसङ्गात् ।

अत एवैतावत्कालं तन्तुषु पटो नासीदिति बुद्धिरपि न प्रमाणम् । एतावत्कालं भूतले घटो नासीदिति बुद्धेरिवात्यन्ताभावविषयत्वात् ।

नापि 'इदं मा भूत्' इति कामना प्रागभावविषया । अत्यन्ताभावस्यासाध्यस्य तदयोगात्, ध्वंसस्य च तदानीमनिष्पन्नप्रतियोगिकस्याकाम्यत्वात्, प्रागभावपरिपालनस्य च साध्यत्वात्, इति वाच्यम् । अनादिप्रागभावस्य कालान्तरे सम्बन्धस्येवात्यन्ताभावस्यापि कालान्तरे सम्बन्धस्य कामनासम्भवात् । तस्य च प्रागभावसम्बन्धस्येव प्रतियोगिजनकविघटनाधीनत्वात् तदर्थं यत्नाविरोधात् ।

अथ 'तन्तुषु पटो भविष्यति' इति बुद्धिः प्रागभावविषया । न च भविष्यतीति बुद्धिः पटादेः भविष्यत्कालसम्बन्धविषयेति वाच्यम् । विद्यमानप्रागभाव-

---

ननु वायौ रूपं नास्तीति बुद्ध्या न सामान्याभावसिद्धिः, किं तु पृथिव्यादिरूपाभाववत्तया निश्चितेऽपि वायौ रूपमस्ति न वेति संशयविषयतया निश्चिताभावातिरिक्तरूपाभावसिद्धिरिति चेन्न । तस्य निश्चिताभावेष्वेव वायुवृत्तिधर्मरूपत्वसंशयाहितसंशयत्वोपपत्तेः । वायौ प्रत्येकप्रतियोगिकनिखिलरूपाभावाः सन्तीति निश्चयदशायां तत्संशयाभावेन तत्संशयस्योक्तसंशयाहितत्वस्यावश्यकत्वात् । तस्मात्प्रतीतिवैलक्षण्यादेव त्वया सामान्याभावः साधनीयः, प्रतियोगिनि सामान्याकाराभावप्रतीतेरन्यथासिद्धित्ववर्णने स न सिध्येदिति भावः। द्वितीयं दूषयति—अत एवेति । अतः शब्दार्थमेवाह—एतावदिति ।

तृतीयं दूषयति—नापीति ।

अस्य वाच्यमित्युत्तरेण सम्बन्धः । अभावान्तरविषयत्वेनान्यथोपपत्तिं निराकरोति—अत्यन्तेति । एतदप्यन्योन्याभावस्योपलक्षणम् । प्रागभावस्याप्यनादितया कथं काम्यतेत्याशङ्क्य तत्प्रतियोगिजनकविघटनद्वारा तत्परिपालनस्य साध्यत्वात्तत्कामनेत्याह—प्रागभावेति । सामयिकात्यन्ताभावविषयत्वेनान्यथोपपत्तिमाह—अनादीति । कालान्तरे सम्बन्धस्येति । कालान्तरे स्वाधिकरणसम्बन्धस्येत्यर्थः ।

चतुर्थमुत्थापयति—अथेति । पटादेरागामिकालसम्बन्ध एव भविष्यद्बुद्धेर्विषयो न प्रागभाव इत्याशङ्क्याह—न चेति । विद्यमानपर्वतादेरागामिकालसम्बन्धावगमेऽपि भविष्यतीतिबुध्यादेरदर्शनात् प्रागभाव एव तद्विषय इत्याह—उत्पन्नेति । नागामिकालसम्बन्धित्वमात्रं 'भविष्यति' इति बुद्धिविषयः, किं तु तद्बुद्धिकाले स्वाधिकरणसंसर्गाभावप्रतियोगित्वे सति तत्त्वम् । तथा चातीतस्य वर्तमानस्य वा न तादृशबुद्धिगोचरतेत्युक्तविशेषणद्वयं युक्तमेव भविष्यतीति बुद्ध्यादिविषय इत्याह—न वर्तमानेति । विद्य-

प्रतियोगित्वस्यैव भविष्यच्छब्दार्थत्वात्। उत्पन्नस्य कालान्तरसम्बन्धज्ञानेऽपि भविष्यतीति बुद्धिप्रयोगयोरभावाच्चेति चेत्। न, वर्त्तमानक्षणासत्त्वोपहितोत्तरक्षणवैशिष्ट्यस्यैव भविष्यतीति बुद्धिविषयत्वात्। तथैव तच्छब्दात्प्रतीतेः।

वर्त्तमानक्षणासत्त्वं च न प्रागभावप्रतियोगित्वेन, किं तु वर्तमानक्षणे तदवच्छिन्ने वा आगामिघटस्य सर्वथाऽसत्त्वात्। अत्यन्ताभावप्रतियोगित्वेनैव। अन्यथा देवदत्तः पण्डितो भविष्यतीत्यादिप्रत्ययप्रयोगौ न स्याताम्। उत्पन्नदेवदत्तस्य विद्यमानप्रागभावाप्रतियोगित्वात्, विशिष्टस्यानन्यत्वाच्च। अन्यथा बुध्यादेः परमतेऽनात्मधर्मत्वापातात्। शरीरादिविशिष्टात्मन्येव बुद्ध्यादिदर्शनात्।

न च तत्र पाण्डित्यमात्रस्यैव भविष्यत्ता, न तु देवदत्तस्येति वाच्यम्। पण्डितदेवदत्तस्यैव भविष्यत्तान्वयानुभवात्। शब्दप्रयोगेऽपि देवदत्त इति प्रथमया सप्तम्यर्थो लक्षणीयः पण्डितशब्दस्य च धर्मपरत्वं लिङ्गव्यत्ययश्चेति बहुकल्पनाप्रसङ्गात्। पण्डितत्वविशिष्टदेवदत्तात्यन्ताभावश्च प्रागप्यस्तीति न विद्यमानस्य

---

मानप्रागभावप्रतियोगित्वमेव तद्विषयोऽस्त्वित्याशङ्क्याह--तथैवेति। तन्तुषु पटो भविष्यतीत्याप्तोक्त्या तत्रागामिकाले पटासत्त्वशङ्का व्यावर्त्यते प्रागभावप्रतियोगित्वमात्रस्य भविष्यच्छब्दार्थत्वे तन्न स्यात्। तत्रैतावन्तं कालं प्रागभावसत्त्वेऽपि सहकारिविरहात्पटाभाववदनन्तरमपि तद्विरहात्तदभावसम्भवात्तत्सत्त्वनिश्चयायोगादिति भावः।

नन्वागामिकार्यस्य वर्तमानक्षणे सत्त्वाभावस्तदभावप्रयुक्तो वाच्यः। स च प्रागभाव एवेत्याशङ्क्य तदानीं तत्रत्यसामयिकात्यन्ताभाव एव तदसत्त्वप्रयोजक इत्याह—वर्तमानेति।

विद्यमानप्रागभावप्रतियोगित्वस्यैव भविष्यच्छब्दार्थत्वे बाधकमाह--अन्यथेति। पाण्डित्यविशिष्टदेवदत्तस्य केवलदेवदत्तादन्यत्वेन तत्पूर्वं तत्प्रागभावोऽस्तीत्याशङ्क्याह— विशिष्टस्येति। विशेष्याद्भिन्नं विशिष्टं किमभावरूपं भावरूपं वा। नाद्यः प्रतियोगिनो दुर्निरूपत्वात्। द्वितीयेऽपि तत्किं नित्यमनित्यं वा। नाद्यः विशेषणाद्यभावेऽपि तत्प्रसङ्गात्। न द्वितीयः तदुपादानानिरूपणात्। न च विशेषणादिकमेव तदुपादानमिति वाच्यम्। गुणादीनामपि तदापत्तेः। विशिष्टस्यापि विशेषणादिभेदविशिष्टत्वेन तदनवस्थाप्रसङ्गाच्चेति भावः। विशिष्टस्य विशेष्यादन्यत्वे बाधकान्तरमाह—अन्यथेति। पण्डितो भविष्यतीति बुद्धिशब्दयोर्विशेषणस्यैव भविष्यत्ताविषयो न विशेष्यस्येति शङ्कां निराकरोति--न च तत्रेति। देवदत्तस्थितिकाले देवदत्ताभावाभावात् त्वन्मतेऽपि कथं तदा विशिष्टासत्त्वमित्याशङ्क्याह—पण्डितत्वेति। विशेषणाभावप्रयुक्तविशिष्टाभावस्य

**प्रागसत्त्वविरोधः। प्राक्त्वं च कालस्य प्रतियोगितद्ध्वंसानाधारत्वमिति न तदर्थमपि प्रागभावः।**

**न च कार्यत्वमेव प्रागभावं विना न निर्वहतीति वाच्यम्। घटादीनां स्वरूपविशेषेण प्रागभावप्रतियोगित्ववत्कार्यत्वस्यापि साध्यत्वलक्षणस्य तत एवोपपत्तेः। असत्कार्यवादिनः कार्यासत्त्वमात्रस्यैव तत्रापेक्षितत्वात्। एतेन प्रागभावाप्रतियोगिनः कार्यत्वे आत्मनोऽपि कार्यत्वापत्तिरिति प्रत्युक्तम्। येन**

---

तदापि सत्त्वादित्यर्थः। ननु प्रागभावाभावे कालस्य प्राक्त्वमेवानुपपन्नम् प्रागभावावच्छिन्नकालस्यैव प्राक्कालत्वादित्यत आह—प्राक्त्वं चेति।

घटादीनां प्रागभावप्रतियोगित्वाभावे आत्मवत्कार्यत्वमेव न स्यादित्याशङ्क्याह—न च कार्यत्वमिति।

उत्पत्तेः पूर्वं पटादेः सत्त्वे तस्य साध्यत्वायोगात्तदा तत्प्रागभाव आवश्यक इत्याशङ्क्याह—असदिति। कार्यासत्वस्य कारणनिष्ठात्यन्ताभावादप्युपपत्तेरिति भावः। परमते प्रागसत्त्वमेव कार्यत्वप्रयोजकमित्यनेन आत्मादावतिप्रसङ्गोऽपि निरस्त इत्याह—एतेनेति। किं च सतोऽपि घटादेः प्रागभावप्रतियोगित्वे आत्मनोऽपि तत् किं न स्यात्। आत्मत्वात्तन्नास्तीति चेत्। तर्हि तदेवाकार्यत्वे प्रयोजकमित्याह—येनेति। प्रागभावप्रतियोगित्वस्यैव कार्यताप्रयोजकत्वे बाधकमाह—किं चेति।

किं ध्वंसप्रागभावो घटादिरेव तदन्यो वा ?। नान्त्यः अभावाभावस्य भावत्वनियमात् प्रतियोगिनो घटादेरभावभेदस्यावश्यकत्वाद् तद्ध्वंसो घटध्वंसादन्य एव वाच्यः। तथा च तत्प्रागभावस्य तद्ध्वंसस्य चान्यस्यावश्यकत्वादप्रामाणिकानन्तध्वंसप्रागभावमालापत्तेश्च। नाद्यः अभावत्वानधिकरणे घटादौ तद्व्याप्यप्रागभावत्वादेरसम्भवात् भावरूपे घटादौ गन्धानाधारसमयानाधाराभावत्वरूपस्य प्रागभावलक्षणस्याभावाच्च। तत्राभावपदत्यागे विभुद्रव्येष्वतिव्याप्तिः स्यात्। न च विनाशित्वमेव तल्लक्षणमिति वाच्यम्। तस्य घटादावभावत्वाव्याप्यत्वेनाभावचातुर्विध्याङ्गीकारविरोधात्। न च घटादावप्यभावत्वमस्तीति वाच्यम्। सर्वस्याप्येकपदार्थत्वप्रसङ्गात्। तस्य प्रतियोगिप्रतीतिनिरपेक्षप्रतीत्यनुपपत्तेश्च।

किं च विनाशित्वं हि ध्वंसप्रतियोगित्वम्। ध्वंसत्वं च यदि प्रागभावप्रतियोग्यभावत्वं तर्ह्यन्योन्याश्रयः। यद्युत्पत्तिमदभावत्वम्, तन्न। स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयाधारत्वलक्षणोत्पत्तेः ध्वंसनिरूप्यतयाऽन्योन्याश्रयात्। यदि चास्मन्मत इव कादाचित्काभावत्वं तर्ह्यस्य प्रागभावेऽतिव्याप्तिर्माभूदिति तस्य साम-

**स्वरूपविशेषेणात्मा न प्रागभावप्रतियोगी तेनैवाकार्यमिति वक्तुम् शक्यत्वाच्च। किं चैवं ध्वंसोऽपि कार्यं न स्यात् तत्प्रागभावासम्भवात्।**

**न चैवमुत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः। निरस्तत्वात्। तत्स्वरूपमपि दुर्निरूपम्। अदृष्टानाधारसमयावृत्तित्वस्य चरमकार्यप्रागभावेऽभावात्, अत्यन्ताभावे सत्त्वाच्च। विनाशश्च दुर्निरूपः।**

---

यिकात्यन्ताभावरूपत्वमभ्युपेयमिति त्वदभिमतप्रागभावासिद्धिः स्यात्। तस्मात् ध्वंस-प्रागभावानिरूपणात्तत्कार्यत्वानुपपत्तिरिति भावः।

प्रागभावाभावे उत्पन्नस्य पुनरुत्पत्त्यापत्तिः तदतिरिक्तसामग्र्याः सत्त्वादिति चोद्यमनुव्यवसायभङ्गे निरस्तमित्याह—न चैवमिति।

एवं प्रागभावे प्रमाणं निराकृत्य तल्लक्षणमपि निराकरोति—तत्स्वरूपमिति। चरमकार्येति। चरमध्वंस एव चरमकार्यं, तस्य प्रागभावस्तव मते प्रतियोग्येव। तथा च फलविनाश्यस्यादृष्टस्य तदुत्पत्त्यैव नष्टत्वात्तत्स्थितिकालेऽदृष्टाभावात्तस्मिन्नदृष्टानाधार-समयानाधारत्वं नास्तीत्यव्याप्तिरित्यर्थः। किं च तादृशकालप्रतियोगिकान्योन्याभावस्य तत्रावृत्तेस्तत्रातिव्याप्तिः। न च कालभेदः काले वर्त्तते। तदनेकत्वापातात् अदृष्टानाधार-समये सूर्यगत्याद्युपाध्यभावेनौपाधिकभेदस्यापि तत्राऽभावात्। परमते भेदस्यौपाधि-कत्वानिरुक्तेश्च।

स्वमतेन घटाद्यत्यन्ताभावादावतिव्याप्तिमाह—अत्यन्ताभाव इति। एतच्च ध्वंसाऽ-न्योन्याभावयोरप्युपलक्षणम्। न च तेषां नित्यतयाऽदृष्टानाधारसर्वमुक्तिसमयेऽपि सत्त्वान्न तत्रातिव्याप्तिरिति वाच्यम्। तेषां नित्यत्वे मानाभावात्। तदनित्यत्वस्य चाभावत्वहेतु-नैव प्रागभावदृष्टान्तेन साधयितुं शक्यत्वात्। न चाप्रयोजको हेतुः। तन्नित्यत्वे माना-भावलक्षणानुकूलतर्कस्याद्वैतश्रुतिप्रामाण्यभङ्गरूपविपक्षबाधकतर्कस्य च सत्वात्। न च तद्विनाशे कारणाभावः नामरूपलयहेतोर्ब्रह्मज्ञानस्यैव तन्नाशकत्वादिति भावः।

यद्वा परमत एव कालसमवेतगुणाद्यत्यन्ताभावेऽतिव्याप्तिः यत्र येन सम्बन्धेन यद्वर्त्तते तत्र तेन सम्बन्धेन तदभावाभ्युपगमे भावाभावयोर्विरोधो दत्तोदक एव स्यात्। वस्तुनो द्वैरूप्यायोगाच्च कालस्य गुणत्वावच्छिन्नप्रतियोगिकात्यन्ताभाववत्त्वे द्रव्यत्वा-नुपपत्तेः, कालस्य द्रव्यात्वाद्यभाववत्त्वे तस्य गुणादिभ्यो भेदासिद्धेश्चेति भावः। किं च त्वदभिमतप्रागभावस्य विनाशोऽस्ति न वा? न चेत्तस्य प्रागभावत्वानुपपत्तिरित्यभि-प्रेत्याद्यं दूषयति—विनाशश्चेति। किं तत्ध्वंसः प्रतियोग्येव तदतिरिक्तो वा? नाद्यः। अभावत्वव्याप्यध्वंसत्वस्य भावेष्वसम्भवात्। ध्वंसानधिकरणकालस्य प्रतियोगितत्प्राग-

**ननु प्रागभावानङ्गीकारेऽत्यन्ताभावादौ का तवास्थेति चेत् । न, भूतले घटो नास्ति तन्तुषु पटो नष्ट इत्यनन्यथासिद्धाधाराधेयबुध्या प्रतीतिवैलक्षण्येन कारणसापेक्षत्वनिरपेक्षत्वाभ्यां च भिन्नयोस्तयोरावश्यकत्वात् ।**

---

भावान्यतराधारत्वनियमेन घटस्वरूपध्वंसविनाशकाले घटस्तत्प्रागभावो वा स्यात् घटतद्विनाशयोरनुगतध्वंसत्वानिरूपणाच्च । नचोत्पत्तिमत्त्वमेव ध्वंसत्वम् । उत्पत्तेर्ध्वंसगर्भत्वेनान्योन्याश्रयादित्युक्तत्वात् । द्वितीये तस्यापि विनाशस्यासावेव प्रागभावः अन्यो वा ? नाद्यः । सामग्रीभेदाभावेन प्रागभावनाशघटयोर्भेदायोगात् । न च प्रागभावविनाशस्य घटजन्यत्वात्सामग्रीभेद इति वाच्यम् । तथात्वे घटोत्पत्तिकालीनप्रागभावेनानन्तरमपि घटोत्पत्त्यापातात् । द्वितीये तस्याप्यन्यो विनाशः तस्याप्यन्यः प्रागभाव इत्यप्रामाणिकानन्तप्रागभावतद्ध्वंसमाला स्यादिति भावः ।

नन्वेवं सति शुक्त्यादौ रजताद्यभावप्रतीतिवद्भूतलादौ घटाद्यभावप्रतीतेरप्यधिकरणविषयतयाऽन्यथासिद्धिसंभवात्तव भूतलाद्यतिरिक्तघटाद्यत्यन्ताभावो ध्वंसो वा न सिद्ध्येत् । तत्सिद्धावप्यत्यन्ताभावस्यैव विनाशप्रतीतिविषयत्वसंभवात्प्रागभाववत्तदतिरिक्तध्वंसो न स्यादित्यभिप्रेत्य शङ्कते—नन्विति । शुक्त्यादौ रजताद्यभावस्य धर्मिसमानसत्ताकस्य प्रतियोगिसमानसत्ताकस्य वाऽसंभवात्तदधिष्ठानमेव तदभावधीविषयः, भूतलादौ तु घटाद्यभावस्य धर्मिप्रतियोगिसमसत्ताकस्य संभवात्तस्य तदाश्रितत्वबुद्धेरसति बाधकेऽप्रामाण्यायोगाद् भूतलाद्याश्रयौघटाद्यत्यन्ताभावध्वंसावावश्यकाविति परिहरति—न भूतल इति । तथापि प्रागभाववदत्यन्ताभावातिरिक्तो ध्वंसो न स्यादिति यदुक्तं तत्राह—प्रतीतीति । भिन्नयोरिति तन्तुभूतलादिनियताधिकरणभिन्नयोः परस्परभिन्नयोश्च ध्वंसात्यन्ताभावयोरावश्यकत्वादित्यर्थः । नष्टो नास्तीति प्रतीत्योरनुभूयमानवैक्षण्यस्य विषयवैलक्षण्यं विनाऽनुपपत्तेरतद्विषयध्वंसात्यन्ताभावयोर्भेद आवश्यकः । तथा ध्वंसस्य मुद्गरप्रहारादिकारणसापेक्षत्वादत्यन्ताभावस्य च तदनपेक्षत्वात्तयोर्भेदः । न च विनाशबुद्धेःसमयभेदेन प्रतियोग्युपादानसंबन्ध्यत्यन्ताभाव एव विषयः । समयविशेषे तस्योपादानसंबन्ध एव कारणमपेक्षते नत्वभाव इति वाच्यम्, स्वरूपसंबन्धस्य सम्बन्धिद्वयात्मकत्वेन संबन्धिनोः सतोः स्वतः कारणापेक्षाऽयोगात् । तदतिरिक्तसम्बन्धस्याभावस्य भावस्य वाऽयोगात् अनिर्वचनीयसम्बन्धस्यापि पञ्चमप्रकाराविद्यानिवृत्तावसम्भवात् । अन्वयव्यतिरेकाभ्यामभावस्यैव कारणजन्यत्वाच्च । इतरथा घटादेरपि दण्डादिना मृदादौ सम्बन्ध एव जन्यत इति तस्याकार्यत्वापातादिति भावः । एतच्चातिरिक्ताभावमभ्युपेत्योक्तम् । वस्तुतस्तु सर्वोऽप्यभावो ब्रह्मैवेत्यनिर्वचनीयवादे वक्ष्यति ।

एवं लक्षणादेरसम्भवात्प्रागभावासिद्धिमुक्त्वा तदभ्युपगमे बाधकमाह-किञ्चेति ।

प्रागभावस्वीकारे बाधकम्

किं चानादिप्रागभावाङ्गीकारे प्रागभावानामपरिमितत्वेऽनिर्मोक्षप्रसङ्गः। तत्क्षयं विना मोक्षायोगात्। परिमितत्वे वा त्वदभिमतमोक्षशास्त्रानारम्भप्रसङ्गात्। तेन विनापि निखिलदुःखप्रागभावक्षयात् त्वदभिमतमोक्षसम्भवात्। न च शास्त्रारम्भे योगाभ्यासात्सार्वज्ञ्यं, ततः समाहृत्य भोगान् भुञ्जानस्य झटिति प्रागभावक्षय इति न शास्त्रारम्भवैयर्थ्यमिति वाच्यम्। दैवादवशिष्टद्वित्रादिप्रागभावस्य शास्त्रसार्वज्ञ्यादीनां व्यर्थत्वात्। विषयान् भुञ्जानस्यापि क्रमेण मुक्तौ सम्भवन्त्यामावश्यकत्वाच्च यावत्प्रतियोगिदुःखानां मुक्त्यर्थिप्रवृत्त्यनुपपत्तेश्च।

न ह्यनादिपरिमिताः प्रागभावाः शास्त्रानारम्भान्न क्षीयन्ते तेनैवक्षीयन्ते इति नियन्तुं शक्यते। दुःखप्रागभावाभावे मिथ्याज्ञानकर्मानुवृत्तेरकिञ्चित्करत्वात्, तत्प्रागभावक्षये देहे सत्यपि मिथ्याज्ञानाद्यसम्भवाच्च। अनादिप्रागभावाभ्युपगमे मुमुक्षोर्ब्रह्महत्याद्यनुष्ठानं वा मोक्षसाधनाननुष्ठानं वा स्यादित्यप्युक्तम्।

---

किं प्रागभावाः परिमिताः उतापरिमिताः ?। अन्त्ये दोषमाह—प्रागभावानामिति। अपरिमितानां दुःखप्रागभावानामवसानासम्भवेन तदसहकृतदुःखध्वंसस्य तादृशसुखस्य वा मोक्षस्यासंभवादित्यर्थः। आद्ये घटादिप्रागभावानामिव सर्वेषामपि दुःखप्रागभावानां प्रतियोग्युत्पादकेनैव विनाशसम्भवात्तदसहकृतदुःखध्वंसस्यायत्नसिद्धत्वान्मोक्षशास्त्रानर्थक्यप्रसङ्ग इत्याह—परिमितत्वे इति। ननु शास्त्रारम्भे आत्मानात्मतत्त्वज्ञानं तत आत्मनि चित्तसमाधानरूपयोगप्रवृत्तिः, ततो धर्म्यविशेषात्सार्वज्ञ्यं, ततः कायव्यूहसंपादनेन युगपदेव निखिलसुखदुःखानुभवात्तत्प्रागभावक्षये झटिति मोक्षसिद्धिरिति शङ्कामपवदति—न चेति। यस्य मुमुक्षोर्द्वित्रा दुःखप्रागभावा अवशिष्टाः तस्य कायव्यूहवैयर्थ्येन तदर्थं शास्त्रारम्भवैयर्थ्यापातादिति हेतुमाह—दैवादिति। किं च दुःखप्रागभाववत् सुखप्रागभावानामपि बहुशः सत्त्वाद्दीर्घकालसुखभोगानुरोधेनैव दुःखप्रागभावक्षयसम्भवात् कायव्यूहेऽपि यावद्दुःखोत्पत्तेरावश्यकत्वाच्च न तदर्थं मुमुक्षुप्रवृत्तिरुचितेत्याह—विषयानिति।

ननु मुमुक्षूणां मोक्षशास्त्रप्रामाण्यायैव तदारम्भानन्तरमेव दुःखप्रागभावानां क्षयो न तत्पूर्वमिति कल्प्यतामित्याशङ्क्य तत्प्रामाण्यस्यान्यथैवोपपत्तेर्मैवमित्यभिप्रेत्याह—न हीति।

ननु दुःखप्रागभावक्षयस्यान्यतः सम्भवेऽपि मिथ्याज्ञानादिनिवृत्तये शास्त्रारम्भ इत्याशङ्क्य तस्मिन् स्थितेऽप्यनर्थासम्भवान्न तन्निवृत्तिः साधनीयेत्याह—दुःखेति। किं च दुःखप्रागभाववन्मिथ्याज्ञानप्रागभावानामपि परिमितत्वात्प्रतियोग्युत्पादकैरेव तेषां क्षयसम्भवात्तत एव मिथ्याज्ञानानामुपरमोपपत्तौ तदर्थं न शास्त्रमारम्भणीयमित्याह—

तस्मात् प्राक्कालीनोऽभावः प्रागभाव इति कालभेदेनाधिकरणसंसर्ग्यत्यन्ताभावः प्रागभावशब्दार्थ इति न ज्ञाननिवर्त्यप्रागभावोऽस्तीति न तत्रातिव्याप्तिः।

नाप्यविद्यासम्बन्धेऽतिव्याप्तिः। अविद्यानिवृत्त्यैव तन्निवृत्तेः। अनादिपदं च प्रत्यभिज्ञानाश्यसंस्कारे स्वस्मिंश्चातिव्याप्तिनिवृत्त्यर्थम्। ज्ञाननिवर्त्यत्वं वा लक्षणम्।

अस्तु वा सर्वमेव भावत्वं चोपादानत्वं विवक्षितमिति नाविद्यासम्बन्धेऽतिव्याप्तिः। नापि कल्पितत्वादज्ञानस्यानादित्वासम्भवः। स्वसमानाधिकरणस्य

---

तत्प्रागभावेति। कृतब्रह्महत्याप्रायश्चित्तस्य मुमुक्षोर्ब्रह्महत्यासाध्यदुःखप्रागभावानामावश्यकत्वात्तत्क्षयाय तत्प्रतियोगिजनकब्रह्महत्याऽनुष्ठेया स्यात्। इतरथा तत्क्षयासम्भवेन मोक्षशास्त्रानारम्भप्रसङ्गादिति प्रागभावकारणताभङ्गे कथितमित्याह--अनादीति। पराभिमतप्रागभावे साधकाभावाद्बाधकसद्भावाच्च सामयिकात्यन्ताभाव एव प्रागभावशब्दार्थः, तस्य परमते ज्ञानानिवर्त्यत्वादस्मन्मतेऽप्यविद्यानिवृत्त्यैव निवृत्तेस्तत्राज्ञानलक्षणस्य नातिव्याप्तिरित्याह--तस्मादिति।

नन्वविद्यात्मसम्बन्ध-जीवेशभेदादेरनादित्वात् ज्ञाननिवर्त्यत्वाच्च तत्रातिव्याप्तिरित्याशङ्क्य तस्य ज्ञाननिवर्त्यत्वमसिद्धमिति दूषयति--नापीति। तर्हि शुक्तिरजतादेरप्यविद्यानिवृत्त्यैव निवृत्तेरनादिपदवैयर्थ्यमित्याशङ्क्याह--अनादीति। ज्ञाननिवर्त्यत्वं नाम ज्ञानजन्यध्वंसप्रतियोगित्वम्। तच्च प्रत्यभिज्ञानाश्यसंस्कारे स्वजन्यध्वंसप्रतियोगिनि ज्ञाने चास्तीति तत्रातिव्याप्तिवारणायानादिपदमित्यर्थः। यद्वा ज्ञानत्वेन ज्ञानजन्यध्वंसप्रतियोगित्वमज्ञानलक्षणम्। प्रत्यभिज्ञायाः फलतया संस्कारध्वंसजनकत्वात् ज्ञानस्य प्रतियोगितया स्वध्वंसजनकत्वान्न तत्रातिव्याप्तिरित्यभिप्रेत्याह--ज्ञाननिवर्त्यत्वं वेति।

अनादिभावत्वे सति ज्ञाननिवर्त्यत्वमज्ञानत्वमित्याचार्यलक्षणमपि साध्वित्याह--सर्वमेवेति।

सर्वत्र साक्षात्परंपरासाधारण्येन ज्ञाननिवर्त्यत्वं विवक्षितम्। तथा चाविद्याकार्येऽतिव्याप्तिपरिहारायानादिपदम्। आत्मन्यतिव्याप्तिवारणाय ज्ञाननिवर्त्यपदम्। अत्र यद्यपि ज्ञानपदमनपेक्षितं तथाप्यनन्तरोक्तप्रकारेण ज्ञाननिवर्त्यत्वमेव लक्षणान्तरमिति सूचयितुं तदिति द्रष्टव्यम्। एवमपि प्रागभावाभावाद् भावपदव्यावर्त्याभावात्तद्वैयर्थ्यमित्याशङ्क्याह--भावत्वं चेति। एवमतिव्याप्तिं परिहृत्यासम्भवं परिहरति—नापीति। किमज्ञानस्य कल्पितत्वं कार्यत्वं मिथ्यात्वं वा? नाद्यः। असिद्धेः। द्वितीये न विरोध इत्याह—स्वसमानेति। स्वसमानाधिकरणस्य स्वसमानकालीनस्यात्यन्ताभाव

स्ववैयधिकरण्यानधिकरणस्य वा स्वसमानकालीनात्यन्ताभावस्य प्रतियोगित्व-लक्षणमिथ्यात्वस्यानादित्वेनाविरोधात्। ननु कल्पितस्य दोषजन्यत्वं नियतमिति चेत्। तर्हि परमार्थस्यापि गुणजन्यत्वं नियतमिति तव तद्विरहान्नित्यमात्र-विलोपप्रसङ्गः।

ननु कार्यं कारणजन्यं, तन्निवृत्तौ निवर्तते। पारमार्थिकं च सर्वं न कार्य्यं, किन्तु यथाप्रमाणं किञ्चिदेवेति चेत्। तर्हि कल्पितमपि सर्वं दोषजन्यमिति न नियमः, किन्तु यथानुभवं कार्यमेव कल्पितं दोषजन्यमिति तुल्यम्। दोषजन्यत्वा-भावेऽपि कल्पितत्वे किमात्माऽपि कल्पितो न भवेदिति चेत्। परमार्थस्यापि जन्यत्वे किमित्यात्मापि जन्यो न भवेदिति समम्। किञ्च कल्पितत्वे हि जडत्वं प्रयोजकम्। तच्च दोषाजन्यत्वेऽप्यज्ञानादेरक्षतम्। न च वैपरीत्यमात्मनः सत्य-ज्ञानाद्यात्मतया श्रुत्यादिभिः प्रमितत्वात्। आत्मनोऽपि कल्पितत्वे जगदान्ध्य-

---

प्रति प्रतियोगित्वं मिथ्यात्वमिति। अधिष्ठानातिरिक्तारोप्याभाववादिमते, अधिष्ठान-मेवारोप्याभाव इति मते तु स्वस्याज्ञानादेर्यद् व्यधिकरणं घटत्वादि तत्र स्ववैयधि-करण्यं नाम धर्म्मः तस्याधिकरणं न भवति योऽत्यन्ताभावोऽधिष्ठानरूपस्तं प्रति प्रतियोगित्वं मिथ्यात्वं; पराभिमतसत्यप्रतियोगिकात्यन्ताभावस्य प्रतियोगिव्यधि-करणत्वनियमेन तदनधिकरणत्वायोगान्मिथ्यावस्तुन एवेदं लक्षणम्। एतच्चाज्ञानस्य नानादित्वविरोधीत्यर्थः।

अज्ञानस्य मिथ्यात्वे रजतादिवद्दोषजन्यत्वाभावेनानादित्वासम्भव इति। शङ्कते—नन्विति। कल्पितस्य दोषजन्यत्वनियमं प्रतिबन्द्या दूषयति—तर्हीति। गुणज-न्यत्वमिति दोषाभावजन्यत्वं दोषासहकृतसामग्रीजन्यत्वं वेत्यर्थः।

ननु कारणं नाम व्यापकविशेषः। तदभावे तद्व्याप्यकार्यस्यैवाभावो न नित्य-स्येति शङ्कते—नन्विति।

तर्हि परमार्थत्वाविशेषात्सर्वस्यापि कार्यत्वं किन्न स्यादित्याशङ्क्याह—पारमार्थिकं चेति। मिथ्यात्वेऽपि कार्याकार्यविभागासम्भवात्कार्यस्यैव दोषजन्यत्वनियमो नाकार्यस्याज्ञानादेरिति साम्यमाह—तर्हीति। दोषाजन्यस्याप्यज्ञानादेर्मिथ्यात्वेऽतिप्रसङ्गं शङ्कते - दोषेति। एतदाभाससाम्येन परिहरति—परमार्थस्येति। अपि चाज्ञानादेश्चैतन्ये कल्पितत्वमन्तरेण दृश्यत्वरूपजडत्वस्यानुपपत्तेस्तदेव कल्पितत्वे प्रयोजकं, न दोषज-न्यत्वमित्याह—किञ्चेति। ननु लाघवाद् दृग्रूपत्वमेव कल्पितत्वे प्रयोजकमिति तद्रूपा-त्मन एव मिथ्यात्वं किं न स्यादित्यत आह—न चेति। आत्मनो मिथ्यात्वे तस्य स्वप्रकाशचिद्रूपत्वायोगात्तदतिरिक्तचैतन्यस्याभावाज्जगद्व्यवहारविलोपापात इत्याह—आत्मनोऽपीति। जगदवभासस्यात्मरूपत्वे मानमाह—तथा चेति।

प्रसङ्गात्। जगदवभासस्यात्मस्वरूपत्वात्। तथा च श्रुतिः। "तमेव भान्तमनुभाति सर्वम्, तस्य भासा सर्वमिदं विभाति" इति।

आत्मनोऽपि कल्पितत्वे तदधिष्ठानानिरूपणात् सर्वभ्रमाधिष्ठानचिद्रूपस्यैव च आत्मत्वात्। कल्पितस्य बाधनियमात् आत्मनश्च तदभावात्। प्रत्युत सर्वभ्रमबाधावधित्वात्। तथा च श्रुतिः "अथात आदेशो नेति नेति न ह्येतस्मादिति नेति अन्यत्परमस्ति" इति।

कल्पिताज्ञानस्यानादित्वे किं प्रमाणमितिचेत् न, ब्रह्मविषयमज्ञानमनादि

---

आत्मनः कल्पितत्वे तदधिष्ठानमन्यन्निरूपणीयम्। इतरथा तस्य कल्पितत्वायोगात्। तच्च जडं स्वप्रकाशात्मकं वा? आद्ये तस्य दृश्यतया कल्पितत्वादधिष्ठानत्वानुपपत्तिरित्यभिप्रेत्याह—आत्मनोऽपीति॥

द्वितीये तस्यैवास्माकं मते आत्मत्वान्न तस्याकल्पिततेत्याह—सर्वेति। किञ्च कल्पितत्वस्य बाधव्याप्तत्वादात्मनो बाधकप्रमाणाभावान्न कल्पिततेत्याह—कल्पितस्येति। निरवधिकबाधायोगाच्चेति चार्थः। सर्वेषां भ्रमाणां बाधावधित्वेनाबाध्यत्वमेवात्मन्यावश्यकमित्याह—प्रत्युतेति। आत्मन एव सर्वबाधावधित्वे मानमाह—तथा चेति। अथ= सप्रपञ्चमूर्तामूर्तनिरूपणानन्तरम् अतः=यस्मात्तत्परिज्ञानात् निरतिशयं श्रेयो नास्ति अतः। नेति नेतीति आदेशः-आदिश्यत इत्यादेशः। नेतिनेतीत्युपदिश्यमान आत्मैव ज्ञेय इत्यर्थः। अत्र मूर्तामूर्तयोः स्थूलसूक्ष्मप्रपञ्चयोर्वा निषेधाय वीप्सा। नेत्यादेशार्थमेवाह—नहीति। एतस्मादात्मनोऽन्यन्न ह्यस्तीति नेतीत्युच्यते। किं तर्हि प्रपञ्चवदात्मापि नास्ति? नेत्याह—नेतीति।

अन्यद् दृश्यप्रपञ्चविलक्षणं परं-सर्वभ्रमबाधावधिभूतमात्मस्वरूपमस्तीति श्रुत्यर्थः।

कल्पिताज्ञानस्यानादित्वे मानाभावान्न तस्यात्मवदकार्यत्वमिति शङ्कते—कल्पितेति। मानाभावोऽसिद्ध इति दूषयति—न ब्रह्मविषयमिति। ब्रह्म न जानामीत्यनुभूयमानमज्ञानमित्यर्थः। शुक्तिं न जानामीत्यनुभूयमानावस्थाज्ञाने भागासिद्धिवारणाय च ब्रह्मविषयमित्युक्तम्। प्रागभावस्य निरस्तत्वान्नैव तस्य पक्षता, येन तत्र भागासिद्धिः स्यात्। मृदादौ व्यभिचारवारणाय—सर्गाद्येति। हेतोरप्रयोजकतां निराकरोति—कार्यस्येति। आद्यकार्योपादानस्य कार्यत्वे तस्याप्युपादानान्तरमावश्यकं, तस्यापि कार्यत्वं चेदुपादानानवस्थापातात् प्रलये कार्यद्रव्यमात्रविलयेन तदसंभवाच्च तस्यानादित्वं चेत्सर्गाद्यकालीनकार्योपादानाज्ञानस्यैवानादित्वसंभवात्। तत्कार्यत्वे तदुपादानान्तरकल्पने गौरवात्तदनादित्वमावश्यकमिति भावः।

**सर्गाद्यकार्योपादानत्वात्, ब्रह्मवत्। कार्यस्य सर्गाद्यकालीनकार्योपादानत्वासम्भवान्नाप्रयोजकत्वम्।**

**उपादानत्वं च परिणामितयाऽज्ञानस्य ब्रह्मणः कार्यसत्तादिरूपत्वेन। जडस्य सत्यानृतोभयात्मकत्वाद् उभयमप्युपादानमिति नासिद्धिः। न वा दृष्टान्तः साधनविकलः।**

**न चानादित्वेऽज्ञानस्य निवृत्त्यनुपपत्तिः, अनादिभावस्यान्यत्र निवृत्त्यदर्शनादिति वाच्यम्। तर्हि प्रागभावस्यापि त्वदभिमतस्य न निवृत्तिः स्यात्।**

---

अज्ञानस्य ब्रह्मणो वा सर्गाद्यकार्योपादानत्वमसंप्रतिपन्नमित्याशङ्क्याह—उपादानत्वं चेति।

सर्गाद्यकार्यं जडोपादानकं भावकार्यत्वात् घटादिवदिति अनुमानाल्लाघवानुगृहीताद् ब्रह्म नजानामीत्यनुभूयमानमेकमेवाज्ञानं तदुपादानतया सिद्ध्यति। तथा मायाविद्ययोरभेदस्य वक्ष्यमाणत्वात् "मायां तु प्रकृतिं विद्यात्" इति श्रुतेरज्ञानोपादानत्वसिद्धिः। नामरूपात्मकप्रपञ्चस्य श्रुतज्ञाननिवर्त्यत्वान्यथानुपपत्तेश्च तत्सिद्धिः। एवं ब्रह्मापि तदुपादानम्। विमतं ब्रह्मोपादानकं तत्स्वभावानुरक्तत्वे सति तत्कार्यत्वात् मृत्स्वभावानुरक्तघटादिवदित्यनुमानात्तत्सिद्धिः। न चासिद्धिः। जगतः सदनुरक्ततया प्रतीतेः ब्रह्मातिरिक्तसत्तायां मानाभावात्। ब्रह्मणश्च "सदेव सोम्येदमग्र आसीत्।" "तत्सत्यम्"। "अस्ति ब्रह्मेति चेद्वेद" इत्यादिश्रुतिभिः सद्रूपत्वेन सिद्धत्वात्। एवं "सोऽकामयत बहु स्यां प्रजायेयेति" "सच्च त्यच्चाभवत्" "तदात्मानं स्वयमकुरुत" इत्यादिश्रुतेरात्मविज्ञानात्सर्वविज्ञानप्रतिज्ञानुपपत्तेश्च ब्रह्मोपादानत्वसिद्धिरिति नासिद्धिर्न वा साधनवैकल्यमिति भावः। ननु ब्रह्मणो जगदुपादानत्वे तस्मिन्सतिज्ञानेनापि जगतो निरन्वयनाशो न स्यादित्याशङ्क्य परिणामिनाशादेव कार्यस्य निरन्वयविनाशो न त्वधिष्ठानविनाशादित्यभिप्रेत्याज्ञानस्य परिणामितयोपादानत्वं ब्रह्मणस्त्वधिष्ठानतयेति विभागमाह—परिणामितयेति। धर्मिसमसत्ताको ह्यन्यथाभावः परिणामः प्रपञ्चस्यानिर्वचनीयाविद्यासमसत्ताकतदन्यथाभावत्वात् स तत्परिणामः। ब्रह्मसमसत्ताकत्वाभावात्तदन्यथाभावोऽपि प्रपञ्चः स्वसत्तास्फूर्त्यर्थमात्मिकब्रह्मविवर्त एव। अतत्वतोऽन्यथाभावत्वस्य विवर्तत्वादित्यर्थः। उभयोपादाने हेतुमाह—जडस्येति। घटादिगतनामरूपयोरज्ञानपरिणामतयाऽनृतत्वात्सत्तादेश्चाधिष्ठानस्वरूपतया सत्यत्वादुभयमप्युक्तविधयोपादानमित्यर्थः।

यदपि चोक्तमज्ञानस्यानादिभावत्वे ज्ञाननिवर्त्यत्वं न स्यादिति तदपि प्रतिबन्दीग्रहेण दूषयति—न चेत्यादिना।

अभावान्तरेषु नाशाभावेऽपि प्रमाणबलात्प्रागभावे सोऽभ्युपेयत इत्याशङ्क्याज्ञानेऽपि प्रामाणिकत्वात्सोऽभ्युपेयतामित्याह—अन्यत्रेति। ननु ज्ञानेनाज्ञानं निवृत्तमित्या-

अभावान्तरे तददर्शनात्। अन्यत्रादृष्टस्यापि प्रमाणबलादत्रैव कल्पनं तु नाज्ञानेपि मूषिकभक्षितम्। किं तत्प्रमाणं यद्बलादनादिभावस्यापि निवृत्तिरिष्टेति चेत्—

उच्यते रज्ज्वाद्यज्ञाने सति सर्पस्तदभावे नेत्यन्वयव्यतिरेकाभ्यामज्ञानात् भ्रम इत्यनुभवात्। भ्रमे च जानामीत्यनुभवेन ज्ञानत्वस्यैव सत्त्वात्। भ्रमस्याज्ञानत्वे तद्विषयसर्पस्य न जानामीत्यनुभवप्रसङ्गात् भ्रान्त्यतिरिक्तं तत्कारणमेव अज्ञानम्। एवं ज्ञाने सति अज्ञानाननुभवात् असति च तस्मिन् नियमेन न जानामीत्यनुभवात् ज्ञानादज्ञानं निवृत्तमित्यनुभवाच्च ज्ञाननिवर्त्यं तद्भ्रमादतिरिक्तं च।

ननु भ्रमोऽपि ज्ञाननिवर्त्यो भवतीति चेत् न। भ्रमस्य ज्ञानादन्येनापि निवृत्तेर्ज्ञानैकानिवर्त्यत्वात्। अज्ञानस्य च यावत् ज्ञानमवस्थायिनो नियमेन ज्ञाननिवर्त्यत्वात्। भ्रान्तिनिवृत्त्यनन्तरमपि किं तदिति जिज्ञासादर्शनाच्च न भ्रान्तिरज्ञानम्। अज्ञातं हि तर्हि जिज्ञास्यते। प्रागभावश्च नेत्युक्तम्। परमते

---

द्यनुभवस्य भ्रान्तिज्ञानप्रागभावादिरूपाज्ञानविषयत्वसंभवादनादिभावरूपाज्ञाननिवर्त्यत्वे न किञ्चिन्मानमिति चोदयति—किं तदिति।

भ्रान्त्याद्यतिरिक्तमेवाज्ञानं ज्ञाननिवर्त्यतया भाति, तच्चानादीति वक्तुं तस्य ततो भेदमाह—रज्ज्वाद्यज्ञान इति। अत्रत्यहेतुचतुष्टयस्यापि भ्रान्त्यतिरिक्तं तत्कारणमेवाज्ञानमित्युत्तरेणान्वयः। अन्वयव्यतिरेकाभ्यामित्यनेनाज्ञानस्यार्थाध्यासात् कार्यकारणभावेन भेद उक्तः। ज्ञानाध्यासाद् भेदे हेतुमाह—अज्ञानादिति। पुरोवर्तिनं सर्पतया जानामीति भ्रान्तौ ज्ञानत्वानुभवान्न तदज्ञानमित्याह—भ्रमे चेति। किं च रज्जुं न जानामीतिवत् सर्पं न जानामीत्येवानुभवः स्यादित्याह—भ्रमस्येति। अज्ञानस्य नियमेन ज्ञाननिवर्त्यत्वाद् भ्रमाद्भेद इत्याह—एवमिति।

भ्रमस्याप्यधिष्ठानज्ञाननिवर्त्यत्वात् ज्ञाननिवर्त्यत्वं कथमज्ञानस्य ततो भेदकमिति शङ्कते—नन्विति।

इच्छादिनाऽपि भ्रमनिवृत्तेर्नियमेन निवर्त्यत्वं तस्य नेत्याह—न भ्रमस्येति। अज्ञानेऽपि नियमेन ज्ञाननिवर्त्यत्वमसिद्धमित्याशङ्क्याह—अज्ञानस्येति। नायं सर्प इत्याप्तोपदेशाद् भ्रमनिवृत्तावपि किं तदिति जिज्ञासादर्शनात् तदा तन्मूलमज्ञानमावश्यकमिति भ्रमातिरिक्तमेवाज्ञानमित्याह—भ्रान्तीति। तर्हि ज्ञानप्रागभाव एव ज्ञाननिवर्त्यमज्ञानमित्यत आह—प्रागभावश्चेति। ज्ञानप्रागभावस्य ज्ञाननिवर्त्यत्वं चानुपपन्नमित्याह—परमत इति। तव पराभिमताज्ञानविलक्षणं रज्ज्वाद्यज्ञानं लोक एव तावत् सिद्धमित्याह—ततश्चेति। तस्यानादित्वे मानमाह—तच्चेति। तस्याप्यज्ञानान्तरमेव कारणमित्याशङ्क्याह—जन्यत्व इति। अज्ञानकारणज्ञानस्यानादित्वे प्रथमस्यैव तथात्वो-

ज्ञानस्य प्रागभावनिवृत्तिरूपत्वेन तस्य तदनिवर्त्यत्वाच्च। ततश्च लोके भ्रमकारणत्वेन ज्ञाननिवर्त्यत्वेन प्रसिद्धमज्ञानं पराभ्युपेतप्रागभावभ्रान्त्यतिरिक्तमित्यभ्युपेयम्। तच्चानादि अकारणकत्वात् आत्मवत्। न चासिद्धिः मिथ्याज्ञानातिरिक्तस्याज्ञानस्य कारणानिरूपणात्, जन्यत्वे गौरवाच्च तदसिद्धेः। अत एव नाप्रयोजकत्वम्। तथा च घटाद्यज्ञानस्यानुमानेनानादित्वं प्रत्यक्षेण ज्ञानान्निवृत्तिश्चानुभूयते।

[ननु कथं कार्यावच्छिन्नचैतन्यनिष्ठाज्ञानमनादीति चेत्। न, पूर्वमपि कार्यस्यानभिव्यक्तरूपेण स्थितत्वात्। शुद्धं ब्रह्म वृत्तिव्याप्यं नेत्येतत्त्वनङ्गीकारपरास्तम्। नापि जीवन्मुक्तिकालीने अज्ञानेऽव्याप्तिः। तस्याप्यनादित्वात्, ज्ञाननिवर्त्यत्वाच्च।

न च तस्य ज्ञाननिवर्त्यत्वे प्राथमिकसाक्षात्कारादेव निवृत्त्यापात इति वाच्यम्। तदा तस्य प्रारब्धकर्मप्रतिबद्धस्य तदवस्थाननिमित्ताविद्यालेशानिवर्तकत्वात्। विपरीतज्ञानजन्यवासनायाः शास्त्रात् प्रथममुत्पन्नात्मसाक्षात्कारफलाविद्यानिवृत्तिप्रतिबन्धकत्ववत् क्षुद्रस्यापि प्रारब्धकर्मणो महत्तराश्वमेधादिकर्मप्रतिबन्धकत्ववच्च। इदं शोधपत्रं द्रष्टव्यम्।]

---

पपत्तेर्न कारणापेक्षा। तस्यापि कार्यत्वे तत्तत्कारणत्वेनानन्ताज्ञानकल्पनागौरवमित्यर्थः। तदसिद्धेरिति। अज्ञानकारणासिद्धेरित्यर्थः। न च मूलाज्ञानमेवानादि तत्कारणमस्त्विति वाच्यम्। तस्य कार्यत्वे मानाभावेन कारणापेक्षाया एवाभावात्।

ननु रज्ज्वाद्यवच्छिन्नचैतन्यस्थाज्ञानस्य रज्ज्वाद्युत्पत्तेः पूर्वमवस्थानानुपपत्तेः कार्यत्वमावश्यकमिति चेत् न। रज्ज्वादिनाशानन्तरमिव तदुत्पत्तेः पूर्वमप्यव्याकृततदवच्छिन्नचैतन्ये तदवस्थानोपपत्तेरिति भावः। सादित्वे मानाभावाद्गौरवाच्चाप्रयोजकता नेत्याह—अत एवेति। एवमवस्थाज्ञाने प्रमाणद्वयेनोक्तलक्षणं सिद्धमित्याह—ज्ञानान्निवृत्तिश्चेति। तदन्यथानुपपत्त्या भावत्वं चेत्यपि द्रष्टव्यम्।

शुक्तेरागन्तुकत्वेन तदवच्छिन्नचैतन्यस्यापि तथात्वात्तन्निष्ठाज्ञानस्यानादित्वमसंभवीति शङ्कते—नन्विति।

उक्तानुमानात्स्मृतितन्मूलप्रत्यक्षाभ्यां च मूलाज्ञानेऽपि समग्रं लक्षणं सिद्धमित्याह—एवमिति।

एवं ब्रह्मविषयाज्ञानस्याप्यनुमानादनादित्वम् ।

अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।

इति सर्वेश्वरवचनेन तदनुमिततदीयप्रत्यक्षेण च ज्ञानान्निवृत्तिरिति नासंभवः । एवम् "अनादिमायया सुप्तः" "तरत्यविद्यां विततां" "भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिशास्त्रादपि ब्रह्मविषयाज्ञानस्यानादित्वं ज्ञाननिवर्त्यत्वं च सिद्धयति । अत एवाज्ञानपदमपि ज्ञानविरुद्धमज्ञानमिति योगेनानादिभावरूपाज्ञानमेवाभिधत्ते । तदन्यत्र योगासंभवात् । क्लृप्तयोगे सत्यर्थान्तरे रूढेरकल्प्यत्वात् ।

ननु मिथ्याज्ञानमपि ज्ञानविरुद्धं विशेषदर्शने सति तदनुत्पादादिति चेत् न । "अज्ञानेनावृतं ज्ञानं" "ज्ञानेन तु तदज्ञानं येषां नाशितं" "ज्ञानेनाज्ञानं निवृत्तम्" इत्यादिशास्त्रलौकिकप्रयोगयोरावरणे ज्ञाननिवर्त्य एव दर्शनात्तस्यैव तदर्थत्वात् ।

---

मायाविद्ययोरभेदान्मायायाश्चानादित्वादेः श्रवणादप्युक्तलक्षणसिद्धिरित्याह—एवमिति । अस्मदभिमताज्ञान एव यौगिकार्थसम्भवाल्लोके वेदे चाज्ञानपदस्य स एवार्थ इत्याह—अत एवेति । ज्ञानप्रागभावादावपि योगसंभवात् स एव तदर्थोऽस्त्वित्याशङ्क्याह—तदन्यत्रेति । किं ज्ञानान्यत्वमवयवार्थः ज्ञानविरुद्धत्वं वा ? नाद्यः, अतिप्रसक्तत्वात् । न च प्रयोगप्राचुर्यात्पङ्कजादिपदवत्प्रतीतिनियम इति वाच्यम् । तत्र कथमपि व्यवस्थितार्थाभावात्प्रयोगप्राचुर्याश्रयणस्यागतिकगतित्वात् । संभवति चात्र ज्ञानविरुद्धार्थपरिग्रहे व्यवस्थितोऽर्थः । न द्वितीयः । प्रागभावस्यैवासत्त्वात्, तत्र ज्ञानविरुद्धत्वायोगात् । तदभ्युपगमेऽपि ज्ञानत्वेन ज्ञानविरुद्धत्वस्याज्ञानशब्दार्थस्य तत्रासंभवात् । प्रतियोगितयैव ज्ञानस्य तद्विरोधित्वात् । तथा भ्रान्तिज्ञानेऽपि न ज्ञानविरोधित्वं तस्य ज्ञानादन्येनापि निवृत्तेः । यस्य तु ज्ञानमेव निवर्त्तकं तत्रापि प्रत्यक्षात्मधर्मत्वेनैव ज्ञानस्य तद्विरुद्धत्वमिति न ज्ञानत्वेन तद्विरोधिता । तस्मादस्मदभिमताज्ञानमेव ज्ञानत्वेन तद्विरुद्धत्वादज्ञानशब्दार्थ इति भावः । ननु ज्ञानप्रागभावादावज्ञानपदस्य रूढिरेवास्त्वित्यत आह—क्लृप्तेति ।

भ्रान्तिज्ञानस्य ज्ञाननिवर्त्यत्वरूपेण तद्विरुद्धत्वाभावेऽपि तस्मिन्सत्यनुत्पत्तेस्तद्विरुद्धत्वमिति शङ्कते—नन्विति ।

सर्वत्र कार्यानुत्पत्तेः कारणाभावप्रयुक्तत्वाद्विशेषदर्शनमपि विशेषादर्शनरूपकारणाभावत्वेनैव भ्रान्त्यनुत्पादे प्रयोजकं न ज्ञानत्वेन । तथा च ज्ञानत्वेन तद्विरुद्धता नास्त्येवेत्यभिप्रेत्याह—नेति । किं च लोकशास्त्रयोरज्ञानपदस्य ज्ञाननिवर्त्य एव प्रयोगप्राचुर्यान्निवर्त्यतयैव तद्विरुद्धमज्ञानपदार्थ इत्याह—अज्ञानेति । यदुक्तमज्ञानप्रतिभासे

न चाज्ञानप्रतिभासे साक्षिणि सति कथं तन्निवृत्तिरिति वाच्यम्। घटादिप्रतिभासे त्वदभिमतेश्वरज्ञाने सत्येव तव मते घटादिविनाशवत्कल्पिताज्ञाननिवृत्तेरपि ममाविरुद्धत्वात्। अज्ञानस्य प्रतिभासमात्रशरीरत्वम् ज्ञानदशायामेव विद्यमानत्वं न तु ज्ञानमात्रत्वम्। अतिरिक्तज्ञेयाभ्युपगमात्। ततश्चानादिभावत्वेनाज्ञानस्य ज्ञानानिवर्त्यत्वानुमानमनुभवविरुद्धम्, उदाहृतश्रुतिभगवद्वचनविरुद्धं च, अनुकूलतर्काभावादप्रयोजकं च। अस्मदभिमताज्ञानस्य न जानामीति ज्ञानविरुद्धतयैवानु-

---

साक्षिणि सति तन्निवृत्त्ययोगादिति तद्दूषयति--न चाज्ञानेति। प्रतिभासमात्रशरीरस्याज्ञानस्य सति प्रतिभासे कथं निवृत्तिरित्याशङ्क्याह--अज्ञानस्येति। प्रतिभासमात्रशरीरशब्देनाज्ञानस्य वियदादिवन्नाज्ञातसत्ताकत्वं किं तु सुखादिवत् ज्ञायमानसत्ताकत्वं विवक्षितं न तु प्रतिभासरूपत्वं दृग्दृश्ययोर्भेदाङ्गीकारादित्यर्थः। भावरूपाज्ञानादन्यस्य ज्ञाननिवर्त्यत्वासंभवात्तस्य तदनिवर्त्यत्वसाधकानुमानं बाधितविषयमित्याह--ततश्चेति। अनादिभावस्यापि विरोधिसन्निपाते सति नाशोपपत्तेस्तदुक्तहेतूनामप्रयोजकता चेत्याह--अनुकूलेति। यच्चोक्तमनादिभावत्वादात्मवद्विरोधिसन्निपात एव नेति, तत्राह--अस्मदभिमतेति। एवमसम्भवं निरस्याव्याप्तिं निराकरोति--शुक्त्यवच्छिन्नेति।

उत्पत्तेः पूर्वं सतोऽसतो वा कार्यत्वायोगात्तदाऽपि कार्यमनिर्वचनीयसूक्ष्मरूपेण वर्तत इति तदवच्छिन्नचैतन्यस्याप्यनादित्वात्तन्निष्ठाज्ञानेऽपि तदुपपत्तिरिति परिहरति--न पूर्वमिति। यदुक्तं--शुद्धं ब्रह्म वृत्तिव्याप्यमपि नेति मते मूलाज्ञानस्य ज्ञाननिवर्त्यत्वायोगात्तत्राव्याप्तिरिति, तदपवदति--शुद्धमिति। अनङ्गीकारेति। स्वप्रकाशस्यापि जडवृत्तिविषयत्वे बाधकाभावात् चरमवृत्तेरपि न विषयान्तर्भावः किं तु बाह्यासती सा ब्रह्म विषयीकरोति व्यासाश्रमैरेवोक्तत्वाच्चेति भावः। ज्ञानकालीनाविद्यालेशेऽप्युक्तामव्याप्तिं परिहरति--नापीति।

तस्य ज्ञानविवर्त्यत्वे परोक्तं दोषमपवदति--न चेति। प्राथमिकसाक्षात्कारेण संचितकर्मावस्थाननिमित्ताज्ञानलेशस्य नाशेऽपि न प्रारब्धकर्मोपादानाज्ञानलेशस्य नाशः। तस्य प्रारब्धकर्मभिः प्रतिबद्धत्वात्। प्रतिबन्धके सति सामग्र्यां सत्यामपि कार्यायोगात्। भोगेन प्रारब्धकर्मनाशे ज्ञानादेव तस्यापि नाश इत्यभिप्रेत्याह--तदा तस्येति। विषयावभासात्मनो विज्ञानस्य कथं कार्ये प्रतिबन्ध इत्याशङ्क्य स्वयूथ्यं प्रति दृष्टान्तमाह--विपरीतेति। शास्त्रादिति। पदपदार्थव्युत्पत्तिमतः अधीतवेदान्तादित्यर्थः। बिंबसाक्षात्कारेसति उपाधिना प्रतिबन्धात्प्रतिबिम्बादिभ्रमो यथा न निवर्तत इति परं प्रत्युदाहार्यम्। क्षुद्रफलस्य कर्मणः कथं निःश्रेयसप्रतिबन्धकत्वमित्याशङ्क्याह--क्षुद्रस्यापीति। कर्मप्रतिबन्धकत्ववदिति। कर्मफलप्रतिबन्धकत्ववदित्यर्थः। इतरथाऽश्वमेधानुष्ठानानन्तरमेव ब्रह्मलोकादिप्राप्तिप्रसङ्ग इति भावः।

**भवाद्धर्मिग्राहकमानबाधश्च । शुक्त्यवच्छिन्नचैतन्यनिष्ठाऽज्ञानेऽव्याप्तिरप्यत एव निराकृता। तस्याप्यनादित्वात् ज्ञाननिवर्त्यत्वाच्च ।**

**अज्ञानकार्यस्यापि कर्मणो ज्ञानात्प्रबलस्य स्वोपादानांशाज्ञाननिवृत्तिप्रतिबन्धकत्वात् अनिर्वचनीयाज्ञानस्य सांशत्वनिरंशत्वप्रयुक्तदूषणाभावात् विदुषामपि शुकादीनां शरीरश्रवणेन प्रारब्धकर्मणो ज्ञानात्प्रबलत्वोपपत्तेः ।**

**न चान्तकालज्ञाननियमाभावात्कथं तस्य ज्ञानान्निवृत्तिरिति वाच्यम्। जीवन्मुक्ते तदानीमपि वृत्त्यभ्युपगमे बाधकाभावात् ।**

---

निवर्त्त्याज्ञानकार्यस्य दुर्बलत्वात्कथं पुनर्ज्ञानफलप्रतिबन्धकतेत्याशङ्क्य तस्य ज्ञानोपजीव्यतया प्रतिबलत्वात्तदुपपत्तिरित्याह--अज्ञानेति ।

ननु निरंशस्याज्ञनस्य कथमेकांशस्य नाशेऽप्यपरांशस्य स्थितिः, सांशत्वे वा कथमकार्यत्वमित्याशङ्क्याह--अनिर्वचनीयेति । अनिरूपितरूपाज्ञानस्य तादृशांशभेदो न विरुद्धयते । न चैवं तस्य कार्यत्वापत्तिः तदुत्पादकाभावादित्युक्तत्वादिति भावः । ननु प्रारब्धकर्मणो ज्ञानात्प्राबल्ये तत्फलप्रतिबन्धकत्वे च न किंचिद्गमकमस्ति, तदुपजीव्यत्वस्य तु तन्निवर्त्त्याज्ञानेऽपि सत्त्वेन तदनियामकत्वादित्यत आह–विदुषामिति ।

ननु सत्यपि ज्ञाने प्रतिबद्धत्वाच्चेदज्ञानलेशस्य न निवृत्तिः तर्हि तन्नाशसमये ज्ञानस्यैवाभावान्न तस्य ज्ञाननिवर्त्यतेत्याशङ्कां हेत्वसिद्धया दूषयति—न चान्तकाल इति । प्रसादितपरमेश्वरे स्वयं तद्भावमुपगते जीवन्मुक्तेऽस्मदादिवच्चरमकाले न ज्ञानाभावः कल्पयितुं शक्यः । तच्चित्तस्य प्रत्यक्प्रवणतया तदेकनिष्ठत्वात् तदुक्तं—

देहं च नश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ॥ इति ।

तथा –

प्रमाणकालेऽपि च मां ते विदुर्युक्तचेतसः ।

इति च । तथा च जीवन्मुक्तिकालीनाज्ञानस्याप्यन्तकाले ज्ञाननिवर्त्यत्वान्नाव्याप्तिरिति भावः ।

मतान्तरमाह—प्राथमिकेति । अयमर्थः – प्राथमिकवृत्तिसाक्षात्काराद् ब्रह्मचैतन्यमभिव्यज्यते । अभिव्यक्तं च चैतन्यमावरकाज्ञानांशं निवर्तयतीति तदनन्तरं चावरणाभावात्सर्वदाऽभिव्यक्तमेवेति तदेवान्तकाले वृत्त्यभावेऽपि प्रतिबन्धककर्मनाशाद्विक्षेपोपादानाज्ञानांशं निवर्तयतीति । तदुक्तं—"तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहं ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः" इति ।

**प्राथमिकवृत्तिसाक्षात्काराभिव्यक्तस्वरूपचैतन्यस्यैव प्रतिबन्धक्षये तन्निवर्त्तकत्वाच्च विक्षेपाभासशक्तिमदज्ञानांशस्य सत्त्वेऽप्यावरणशक्तिमदज्ञानांशस्यासत्त्वेन ब्रह्मचैतन्यस्य ततः परमभिव्यक्तैकस्वरूपत्वात् ।**

**न चैवं कदाचिदुत्पन्नघटाकारवृत्त्यभिव्यक्तघटावच्छिन्नचैतन्यस्य कालान्तरेऽपि तद्वृत्तिं विना तदज्ञाननिवर्तकत्वापत्तिरिति वाच्यम् । कालान्तरीयघटावच्छिन्नचैतन्यस्य पूर्वकालावच्छिन्नचैतन्याभिव्यञ्जकवृत्त्याऽनभिव्यक्तत्वात्, अज्ञानान्तरेणावृतत्वाच्च, ब्रह्मसाक्षात्कारस्य च सर्वात्मना चैतन्यव्यञ्जकत्वात् ।**

**न चैवमविषयस्याज्ञानस्य कथं निवृत्तिरिति वाच्यम् । विक्षेपातिशयेन सविषयत्वात् । आवरकाज्ञानं त्वावृत्तसाक्षात्कारादेव निवर्तते । न च पूर्वकालीन-**

---

नन्वेवं सति घटाद्यवच्छिन्नचैतन्यस्यापि सकृदुत्पन्नसाक्षात्काराभिव्यक्तस्य सर्वदाऽवस्थानसंभवात्कालान्तरे तदज्ञाननिवृत्तये वृत्त्यन्तरापेक्षा न स्यादिति चेत् न । प्राथमिकवृत्तेर्घटमात्रविषयत्वेऽपि कालान्तरीयघटाविषयत्वान्न सर्वात्मना तदभिव्यञ्जकता । तथा च कालान्तरीयतदभिव्यक्तये वृत्त्यन्तरापेक्षा युक्तेत्याह—न चैवमित्यादिना ।

प्राथमिकवृत्त्याऽभिव्यक्तस्यापि तन्नाशेऽज्ञानान्तरेणावृतत्वात्पुनस्तदभिव्यक्तये वृत्त्यन्तरमावश्यकमित्यभिप्रेत्याह—अज्ञानान्तरेणेति । वेदान्तानां सर्वात्मना ब्रह्मबोधने समर्थत्वात्तज्जनितसाक्षात्कारः सर्वात्मना तदभिव्यञ्जक इत्याह—ब्रह्मेति । मानाभावेन तदावरकाज्ञानान्तराभावाच्चेति द्रष्टव्यम् । अनावरकाज्ञानांशस्य ब्रह्माविषयत्वात्कथं तज्ज्ञानान्निवृत्तिरिति शङ्कां हेत्वसिद्धया परिहरति —न चैवमिति । ननु घटादावावृतविषयकज्ञानादेवाज्ञाननिवृत्तिदर्शनात्कथमनावृतस्वरूपज्ञानात्तद्विषयकवृत्तेर्वाऽज्ञाननिवृत्तिः । इतरथा शुक्तीदमंशेविक्षेपहेत्वज्ञानस्य तज्ज्ञानान्निवृत्तिप्रसङ्गादित्यत आह—आवरकेति । रजतोपादानाज्ञानस्य शुक्त्यावरकत्वात्तज्ज्ञानादेव निवृत्तिरित्यर्थः । प्राथमिकवृत्त्यभिव्यक्तचैतन्यस्य कालान्तरेऽज्ञाननिवर्त्तकत्वसंभवेऽपि न तत्र मानमस्तीत्यत आह—न चेति । तस्य शास्त्रयुक्तिभ्यां निश्चितस्याभिध्यानात्सजातीयप्रत्ययप्रवाहरूपात् प्रपञ्चे पारमार्थिकत्वभ्रमप्रयोजकविपरीतवासनाहेतुमायांशस्य निवृत्तिः । ततो युज्यतेऽनेनेति योजनम् असम्भावनाद्यसहकृतसाक्षात्कारस्तस्मात्प्रपञ्चे व्यावहारिकत्वभ्रमप्रयोजकावरमायांशस्य ततस्तत्त्वभावोऽभिव्यक्तब्रह्मात्मनाऽवस्थानं तस्मादन्ते प्रारब्धकर्मक्षये बाधितानुवृत्त्या प्रतिभासमानप्रपञ्चहेतुमायांशस्येत्येवं तदा सर्वमायानिवृत्तिरिति श्रुत्यर्थः । तदुक्तम्—

शास्त्रेण नश्येत्परमार्थरूपं कार्यक्षमं नश्यति चापरोक्ष्यात् ।
प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥ इति ।

**वृत्त्यभिव्यक्तस्वरूपचैतन्यस्य कालान्तरेऽविद्यानिवर्त्तकत्वे मानाभावः। "तस्याभिध्यानाद् योजनात् तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" इति श्रुतेः। तस्मादनादि ज्ञाननिवर्त्यमज्ञानमिति सिद्धम्।**

**भ्रान्तिपरिणाम्यज्ञानमिति केचित्। न च ब्रह्मण्यतिव्याप्तिः, असम्भवो वा। अज्ञानस्यैव परिणामित्वात्, ब्रह्मणस्तु कार्यसत्तात्मतयैवोपादानत्वात्। न चानुत्पादितभ्रमाज्ञानेऽव्याप्तिः। अज्ञानस्यैकत्वात्।**

अज्ञाने प्रमाणविचारः।

**तत्र च अहमज्ञो न जानामि इत्यनुभवः प्रमाणम्। तथा हि—न तावदस्य प्रागभावो विषयः। तस्यैवाभावात्। नापि ध्वंसः विशेषज्ञानस्य प्रागनुदयात्, सामान्यज्ञानस्याज्ञानाप्रतियोगित्वात्।**

---

अव्याप्त्यादेरभावादुक्तलक्षणं सुस्थमित्याह - तस्मादिति। एवं स्वसमानविषयज्ञानप्राक्कालव्यापिसत्ताकत्वे सति तन्निवर्त्यत्वं स्वसमानविषयज्ञानासहकृतसामग्रयचयोग्यध्वंसप्रतियोगित्वं वा ज्ञानातिरिक्तागन्तुकदृष्टकारणायोग्यध्वंसप्रतियोगित्वं वा ध्वंसप्रतियोग्यजन्यत्वे सति स्वसमानविषयज्ञाननिवर्त्यत्वं वाऽज्ञानलक्षणम्। न चाविद्यासम्बन्धादावतिव्याप्तिः तस्य निर्विषयत्वात्, अविद्यानिवृत्तिरूपदृष्टकारणयोग्यध्वंसप्रतियोगित्वाच्चेति द्रष्टव्यम्।

भ्रमोपादानमज्ञानमित्यत्रोपादानशब्देन परिणामित्वं विवक्षितम्। तथा च नोक्तातिव्याप्त्यादिरित्याह—भ्रान्तीति।

यदुक्तम्—अनुत्पादितभ्रमे घटाद्यज्ञानेऽव्याप्तिरिति, तदयुक्तम्। अज्ञानैकत्वमते एवास्य लक्षणस्योक्तत्वात्। तत्रानुत्पादितभ्रमाज्ञानाभावादित्यभिप्रेत्याह—न चेति। भ्रान्तिपरिणामित्वयोग्यताया वा तल्लक्षणत्वेन विवक्षितत्वाद् अवस्थाज्ञानवादेऽपि नाव्याप्तिरिति द्रष्टव्यम्।

एवं भावरूपाज्ञाने लक्षणं निरूप्य तत्र प्रमाणमपि निरूपयति—तत्र चेति। यदुक्तं ज्ञानाभाव एवैतदनुभवविषय इति तद् दूषयितुमुपक्रमते—तथा हीति। किं ज्ञानप्रागभावोऽस्य विषयः तद्ध्वंसो वा? नाद्य इत्याह—न तावदिति। द्वितीयेऽपि किं विशेषज्ञानस्य ध्वंसो विषयः सामान्यज्ञानस्य वा। आद्यमसंभवेन दूषयति—नापीति। द्वितीयं दूषयति—सामान्येति। सामान्यज्ञाने सत्यपीदं न जानामीत्यनुभूयमानाज्ञानस्य तदविरोधित्वान्न तद्ध्वंसतेत्यर्थः।

अभ्युपेत्यापि प्रागभावं स नोक्तानुभवविषय इति वक्तुं तद्विषयमाह—किं चेति।

**किं चाहमज्ञो न जानामीति च ज्ञानसामान्यविरोधिताऽनुभूयते । सा च यदि ज्ञानाभावतया, तदा ज्ञानत्वावच्छिन्नप्रतियोगिकः प्रत्येकप्रतियोगिको निखिलज्ञानाभावो वा वाच्यः । तदुभयं च प्रागभावादेरज्ञानत्वे न संभवति, धर्म्यादिज्ञाने तु नतराम् । सिद्धान्ते वस्तुतोऽपरोक्षवृत्त्यनुगतप्रकाश एव ज्ञानत्वसामान्यात्मना तद्विरोधीति तदुपपन्नम् । यथा परमते वस्तुतः शरीरावच्छिन्नात्मन आत्मत्वेन सुखादिसमवायिकारणत्वं तथा वस्तुतो विशेषानुगतस्यापि सामान्येन तद्विरोधित्वोपपत्तेः । न चैवं कल्पने प्रमाणाभावः । अज्ञानमित्याद्यनुभवस्यापरोक्षवृत्तेरेवाज्ञाननिवृत्त्यनुभवस्य च मानत्वात् ।**

---

न तावदस्य निखिलज्ञात्रन्यत्वं विषयः । स्वस्यापि ज्ञातृत्वेन तदयोगात् । नापि निखिलज्ञानान्यत्वम् । विशेषज्ञाने सत्यपि तथानुभवप्रसङ्गात् । तस्मात्स्वस्य ज्ञानसामान्यविरोध्याश्रयत्वमेव तदनुभवविषय इत्यर्थः । स्वाश्रिते प्रागभाव एव ज्ञानसामान्यविरोधिताऽस्त्वित्याशङ्क्य तस्य किं ज्ञानसामान्याभावतया तद्विरोधित्वम् उत तन्निवर्त्यतया ? आद्य आह—सा चेति । सामान्याभावो विशेषाभावातिरिक्त इति मतेनाह—ज्ञानत्वावच्छिन्नेति । यावद्विशेषाभावः स इति मतेनाह—प्रत्येकेति । ततः किमित्यत आह—तदुभयमिति । सामान्यप्रागभावस्य प्रतियोग्यनिरूपणात्परैरनभ्युपगमाच्चासम्भवः । प्रतियोगिसमानाधिकरणानां यावज्ज्ञानप्रागभावानामपि सर्वज्ञानानधिकरणे स्वस्मिन्नसम्भव इत्यर्थः । प्रागभावाद्यनुभवसमये तद्धेतुधर्म्यादिज्ञानस्यावश्यकत्वादपि नोक्ताभावसम्भव इत्याह—धर्म्यादीति । ननु सिद्धान्तेऽपि न ज्ञानसामान्यविरोधिता । सत्यपि परोक्षज्ञाने तद्विषयाज्ञाननिवृत्त्यभावात् । ततो ज्ञानस्यावश्यकत्वादपि ज्ञानत्ववद्विरोधितामात्रं तदनुभवविषयः । तच्च विशेषाभावस्याप्यस्तीत्याशङ्क्याह—सिद्धान्त इति । न तावत् ज्ञानत्ववद्विरोधितामात्रं तद्विषयः नञर्थस्य विरोधस्य तदन्वितज्ञानपदार्थज्ञानसामान्यप्रतियोगिकतयाऽनुभवात् । इतरथा सत्यपि विशेषज्ञाने ज्ञानत्ववद्विशेषज्ञानान्तराभावसत्त्वात् 'न जानामि' इत्यनुभवप्रसङ्गात् । सिद्धान्ते तु ज्ञानसामान्यमात्मचैतन्यमेव । तच्च सदातनमप्यज्ञानप्रयुक्तावरणप्रतिबद्धं नाज्ञाननिवर्तकम् । सत्तावधारणापरोक्षवृत्त्या च प्रतिबन्धकावरणे निवृत्ते चिन्मात्रमेवाज्ञाननिवर्तकमिति तस्य ज्ञानसामान्यविरोधितोपपत्तिः, नाप्यतिप्रसङ्ग इति भावः । अपरोक्षवृत्त्यनुगतप्रकाशस्यैवाज्ञाननिवर्तकत्वेऽपि स्वरूपेणैव तद्योग्यतेत्येतत्पराभिमतोदाहरणेन द्रढयति—यथेति । ननु वृत्तिविशेषस्य चिन्मात्रस्य वा तन्निवर्तकत्वसंभवात्तस्य वृत्तिविशेषानुगतत्वकल्पनमप्रामाणिकमित्यत आह—न चैवमिति ।

एवं स्वमते ज्ञानसामान्यनिवर्त्यतयाऽज्ञानस्य तद्विरुद्धत्वमुपपाद्य परमतेऽभावतया तद्विरोधित्वासंभवात् तन्निवर्त्यतयैव तद्वक्तव्यमिति द्वितीयं परिशेषयित्वा दूषयति—तत इति ।

ततो ज्ञानसामान्यविरोधित्वं ज्ञाननिवर्त्यत्वेन वक्तव्यमिति न तदनिवर्त्य-प्रागभावादिरज्ञानं। ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात्। "ज्ञानेन तु तदज्ञानम्" इति स्मृतेश्च ज्ञाननिवर्त्यमेवाज्ञानमभ्युपेतव्यमिति तदेवानुभवविषयः।

नन्वज्ञो न जानामीति तस्याभावत्वमनुभूयत इति चेत्, न तावदहमज्ञ इत्यनुभवस्याभावविषयता। मयि घटाज्ञानमिति यदज्ञानमात्मविशेष्यमनुभूयते तदेवाहमज्ञ इति विशेषणतयाऽनुभूयते। तस्मिंश्च ज्ञाने यथाऽऽत्मन्यधर्मोऽसुखम-निच्छेतिज्ञाने पापदुःखद्वेषादिधर्मादिविरोधित्वेनानुभूयते तद्वत् ज्ञानविरोधित्वेनैव किञ्चिदनुभूयते न त्वभावतया। अन्यथा वायौ पृथिव्या रूपमिति बुद्धेरिवाऽऽ-त्मनि घटाज्ञानमिति बुद्धिप्रयोगयोरभावप्रसङ्गात्।

अत एव न जानामीत्यनुभवोऽपि ज्ञानविरोधित्वमात्रविषयः। तस्याज्ञान-मित्यनुभवेनैकविषयत्वात्।

---

किं चाज्ञानस्य ज्ञाननिवर्त्यतयाऽनुभवादिसिद्धत्वात्तेन रूपेणैव तद्विरुद्धत्वं तदनुभवविषयः। तच्च न पराभिमताज्ञाने सम्भवतीत्याह—ज्ञानेनेति।

यदुक्तं मयि ज्ञानं नास्तीति विशेष्यतया प्रतीयमानज्ञानाभाव एवाहमज्ञ इत्याद्यनुभवे विशेषणतया ज्ञायत इति तदनुवदति—नन्विति। मयि ज्ञानं नास्तीत्य-स्यैवाभावमात्रविषयत्वमसंमतमित्यभिप्रेत्य तदुक्तन्यायेनाहमज्ञ इत्यस्य तावद्भावविषय-त्वमावश्यकमित्याह—न तावदिति। ननु घटाज्ञानमित्यस्यापि घटज्ञानाभाव एव विषय इत्यत आह—तस्मिंश्चेति। यथा मय्यधर्म इति धर्म्मविरोधितया शास्त्रेणोपनीतं भावरूपं पापं प्रतीयते, यथा वा असुखमनिच्छा असत्यमित्यादौ दुःखद्वेषानृतवचनादीनि सुखादि-विरोधीनि प्रतीयन्ते, एवं घटाज्ञानमित्यत्रापि ज्ञानविरोधिभावरूपमेव किञ्चित्प्रतीयत इत्यर्थः। तदुक्तम्—

नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः। इति।

अभावमात्रे नञन्वितप्रतियोगिबोधकनामपदोल्लेखिबुद्धिप्रयोगयोरभावाज्ज्ञानस्या-प्यभावत्वे तौ न स्यातामित्याह—अन्यथेति। ममाज्ञानमिति विशेष्यतयाऽनुभूयमाना-ज्ञानस्यैवाहं न जानामीत्यत्रापि विशेषणतया भानादयमप्यनुभवो ज्ञानविरोधिभावविषय इत्याह—अत एवेति॥

न जानामीत्यनुभवस्याभावविषयत्वेऽपि भावरूपाज्ञानमेव ज्ञानाभावात्मनाऽनु-भूयते। आरोपितज्ञानाभावस्याधिष्ठानचिन्मात्रतया तदभावस्याप्यारोपिताज्ञानात्म-कत्वादित्यभिप्रेत्याह—अभावत्वमिति।

अज्ञानस्याभावत्वस्वीकारः

**अभावत्वमपि भावरूपाज्ञानस्यास्त्येव। चैतन्ये कल्पितस्य तदभावात्मत्वात्। कथं तर्हि धर्मिनिर्णयः ज्ञानसामान्यविरोधित्वनिर्वाहाय भावधर्मिकल्पनायां लाघवाच्च भाव एवाज्ञानम्। एतेन ज्ञानं नास्तीत्यादिबुद्धिर्व्याख्याता।**

**कथं तर्हि ज्ञानाभावसिद्धिरिति चेत्। न, जन्यज्ञानं नास्तीत्यादिबुद्ध्यैव तत्सिद्धेः। एतेन विशेषज्ञानाभाव एव न जानामीत्यनुभवविषय इति प्रत्युक्तम्।**

**किं च यस्मिन्विशेषे यस्येतः परं न ज्ञानं, तस्मिन्न जानामीत्यनुभवो न स्यात् प्रतियोग्यभावेन प्रागभावासम्भवात्।**

---

ननु न जानामीत्यनुभवस्याभावविषयत्वे तद्विषयोऽभावो न पराभिमतः प्रागभावः, किं तु सिद्धान्त्यभिमत एवेत्यत्र किं नियामकमिति पृच्छति—कथमिति। पराभिमताभावस्य ज्ञानसामान्यप्रतियोगिकत्वा ोगाद्भावविरहात्मकाभावकल्पनातो भावस्यैव तद्विषयत्वे लाघवात्प्रागभावस्याभावाच्च भावरूपाज्ञानमेवाभावतया प्रथते इत्याह—ज्ञानेति। ज्ञानं नास्तीत्यस्याभावमात्रविषयत्वमसम्मतमित्याह—एतेनेति। भावरूपाज्ञानमेवोक्तविधया तदनुभवविषयः, न भावविरहैकस्वभावोऽभाव इत्यर्थः।

ज्ञानाभावानुभवानां भावरूपाज्ञानविषयत्वे तव तदतिरिक्तवृत्तिज्ञानाभावो न सिध्येदिति शङ्कते—कथं तर्हीति। यत्र वृत्तिज्ञानं विशिष्याभावप्रतियोगितयाऽनुभूयते ततस्तत्सिद्धिरित्याह—न जन्येति।

यदुक्तं सामान्यतो ज्ञानेऽपि विशेषज्ञानाभाव एव न जानामीत्यनुभवविषय इति, तत्राह—एतेनेति। तस्य ज्ञानसामान्यविरोधित्वासम्भवेनेत्यर्थः। विशेषज्ञानाभावो नाज्ञानमित्यत्र हेत्वन्तरमाह—किं चेति। यस्य दाक्षिणात्यस्याऽऽमरणं क्रमेलकादिविशेषज्ञानं न भविष्यति तस्य तन्न जानामीत्यनुभवो न स्यात्तस्मिन् तद्विशेषज्ञानाभावे तत्प्रागभावाभावात्। तथा च तत्र भावरूपाज्ञानमेव तदनुभवविषय इति सर्वत्रापि स एव तद्विषय इत्यर्थः।

अस्मिन् जन्मनि तद्विशेषज्ञानाभावेऽपि चरमदेहे योगमहिम्ना तज्ज्ञानसम्भवाद् इदानीं तत्प्रागभावरूपाज्ञानमस्तीति शङ्कते— तस्यापीति।

**तस्यापि सर्वज्ञतादशायां तद्विशेषज्ञानमस्तीति चेत् न। जीवेषु तन्नियमाभावात्, अनपेक्षितचिरातीतविषयाणां त्वदभिमतमुक्तिसाधनयोगजधर्मजज्ञानविषयत्वे प्रमाणाभावाच्च। न च तत्र पुरुषान्तरे प्रसिद्धविशेषज्ञानात्यन्ताभाव एवाज्ञानमिति वाच्यम्। यस्योत्तरकाले तज्ज्ञानं तस्मिन् तव मते तज्ज्ञानसामान्याभावासम्भवात्।**

**पुरुषान्तरीयज्ञानात्यन्ताभावश्चेदज्ञानं तर्हि त्वदभिमतेश्वरे विशेषज्ञानवति जीवे चाहमज्ञ इत्यनुभवप्रसङ्गः। किं चैवं घटो न जानातीति प्रयोगः साधुः स्यात्, मुक्तानां चाज्ञानं स्यात्।**

सामयिकात्यन्ताभावोऽज्ञानमिति पक्षनिरासः

**एतेन सामयिकात्यन्ताभावोऽज्ञानमिति निरस्तम्। तदभ्युपगमे तव प्राग-**

---

"तरति शोकमात्मवित्" "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिनाऽऽत्मज्ञानादेव मुक्तिश्रवणात्सर्वज्ञत्वं नावश्यकमित्याह—जीवेष्विति। परमतेऽपि भाविसुखदुःखतत्साधनस्फुरणायैव योगजधर्मजज्ञानाभ्युपगमाच्चिरातीतविशेषज्ञानं नावश्यकमित्याह—अनपेक्षितेति। उक्तस्थले विशेषज्ञानप्रागभावाभावेऽपि तदत्यन्ताभावसत्त्वात् स एव न जानामीत्यनुभवविषय इति शङ्कां निषेधति—न चेति। किं यत्र विशेषज्ञानप्रागभावासम्भवः तत्रैव तदत्यन्ताभावोऽज्ञानम्, उत सर्वत्र? नाद्यः। तद्विशेषाज्ञाने तद्विषयज्ञानत्वावच्छिन्नप्रतियोगिनोऽप्यज्ञानात् तदभावानुभवायोगान्न जानामीत्येकाकारप्रतीतेः क्वचित्प्रागभावः क्वचिदत्यन्ताभाव इति विषयवैलक्षण्यायोगाच्चेत्यभिप्रेत्य द्वितीये भाविविशेषज्ञानवति तदत्यन्ताभावोऽसम्भवीत्याह—यस्येति। सिद्धान्ते कार्यात्पूर्वं तदाश्रये तत्प्रतियोगिकसामयिकात्यन्ताभावाङ्गीकारात्तव मत इत्युक्तम्।

ननु तत्र पुरुषान्तरीयविशेषज्ञानात्यन्ताभाव एवाज्ञानमित्याशङ्क्यातिप्रसङ्गमाह—पुरुषान्तरीयेति। न जानामीत्यनुभवस्य ज्ञानात्यन्ताभावश्चेद्विषयः तर्हि तत्प्रयोगस्यापि स एव विषय इति घटादौ उत्तमपुरुषप्रयोगाभावेऽपि प्रथमपुरुषान्तस्तत्प्रयोगः स्यादित्याह—किं चेति। परकीयज्ञानात्यन्ताभावस्य मुक्तेष्वपि सम्भवात् तेषामप्यज्ञत्वापात इत्याह—मुक्तानामिति।

ननु ज्ञानसमवायिनि तत्प्रतियोगिकसामयिकात्यन्ताभाव एवाज्ञानम्। स च नेश्वरघटादावित्यत आह—एतेनेति।

तस्य मुक्तेष्वभावात् सर्वदा विशेषज्ञानरहिते चाभावादित्यर्थः। ज्ञानसामयिकात्यन्ताभाव एवाज्ञानमिति किं त्वन्मतानुसारेणोच्यते उतास्मन्मतानुसारेण?।

**भावविलोपप्रसङ्गात् । अस्मन्मते चाधिष्ठानातिरिक्तज्ञानात्यन्ताभावस्याऽऽत्मनि वृत्त्यसम्भवात् । अधिष्ठानस्य तदभावत्वं ह्यज्ञानाधीनमेव । एतेन देवदत्तस्य घटज्ञाने पुरुषान्तरप्रसिद्धं विशेषविषयत्वं तत्प्रकारकत्वं वा निषिद्ध्यत इति प्रत्युक्तम् ।**

**विशेषविषयत्वाभावादेरज्ञानत्वे ज्ञानमज्ञानीत्यनुभवः, स्यात् । मय्यज्ञानमित्याद्यनुभवोऽपि न स्यात् ।**

**विशेषाविषयज्ञानमात्मन्यस्तीति चेत् तर्हि ज्ञानमज्ञानं स्यात् । आत्मधर्माज्ञानानुभवव्याख्याने च पदार्थमात्रविप्लवः स्यात् ।**

---

नोभयथाऽपीति क्रमेण दूषयति—तदभ्युपगम इति । अज्ञानाधीनमेवेति । वृत्तिज्ञानस्यानिर्वचनीयत्वे तदधिष्ठानं तदभावः स्यात् । तदनिर्वचनीयत्वं च तादृशाज्ञानकार्यत्वाधीनमित्यर्थः ।

यदप्युक्तं पुरुषान्तरीयकरतलामलकादिज्ञाने प्रसिद्धं स्वविषयेतरव्यावृत्ताधिकरणतावच्छेदकधर्मविषयत्वादिकमिह निषिध्यत इति, तद् दूषयति—एतेनेति । किमत्र स्वशब्दः पुरुषान्तरीयज्ञानपरः समभिव्याहृतपरो वा ? । नाद्यः । विशेषज्ञानवति जीवेऽज्ञानप्रसङ्गात् । न द्वितीयः । शुक्त्यादाविदं प्रमेयवदिति ज्ञानस्यापि तादृशधर्मप्रकारकत्वात् शुक्तिं न जानामीत्यनुपपत्तेः । न च तदवच्छेदकत्वेन तत्प्रकारकत्वाभावो विवक्षित इति वाच्यम् । करतलामलकज्ञानेऽपि तदभावेन तत्रापि न जानामीत्यनुभवापातात्, इह शुक्तित्वमिति ज्ञानस्यापि तत्प्रकारत्वाभावाच्च न च स्वविषयशब्दः स्वविशेष्यपर इति वाच्यम् । शुक्ताविदं रजतमिति ज्ञानानन्तरं तन्न जानामीत्यनुभवापातात्, उक्तनिषेधस्य ज्ञानसामान्यविरोधित्वाभावाच्चेत्यर्थः ।

किञ्च किं ज्ञाने विशेषविषयत्वाभाव एवाज्ञानं तद्विशिष्टज्ञानं वा ? आद्ये दोषमाह—विशेषेति । द्वितीयं शङ्कते—विशेषेति ।

तथा च मय्यज्ञानमित्यनुभवोपपत्तिरिति भावः । तद् दूषयति—तर्हीति । न च ज्ञानस्याज्ञानत्वं युक्तं घटत्वाघटत्ववत् ज्ञानत्वाज्ञानत्वयोरेकत्र विरोधादित्यर्थः । अहमज्ञ इत्यनुभवस्य मद्ज्ञाने विशेषविषयत्वं नेत्येवं व्याख्याने स्वस्वमतानुरोधेन सर्वानुभवव्याख्यानसम्भवात् पदार्थव्यवस्था न स्यादित्याह—आत्मेति ।

ज्ञानविरोधितया प्रतीयमानमज्ञानं च न प्रागभावादिरूपमित्युपसंहरति—तस्मादिति । प्रागभाववत्तदनुभवस्याप्यसम्भवान्नाहमज्ञ इत्याद्यनुभवस्तद्विषय इत्याह—प्रागभावस्येति । तत्र हेतुमाह—जनिष्यमाणेति । प्रतियोगितावच्छेदकविशिष्टप्रतियोगि-

**तस्मान्न पराभिमताभावोऽज्ञानानुभवविषयः । प्रागभावस्यानुभवासंभवादपि नाज्ञानानुभवस्तद्विषयः । जनिष्यमाणज्ञानानां विशिष्यानुभवासंभवात् ।**

**न च घटज्ञानं सामान्यज्ञानमेव तद्विशेषज्ञानाभावज्ञानहेतुः । प्रतियोगितावच्छेदकाकारज्ञानस्याभावधीहेतुत्वात् । अन्यथाऽतिप्रसङ्गात् सामग्र्यन्तरकल्पने गौरवात् ।**

**ननु प्रतियोगिनियतप्रकारकमभावज्ञानं तत्प्रकारकज्ञानमेवाभावधीहेतुः, न तु प्रतियोगितावच्छेदकधर्मवत्तया प्रतियोगिज्ञानम् । अन्यथा सामान्यलक्षणाप्रत्यासत्त्यनङ्गीकारमते वायौ रुपाभावाननुभवप्रसङ्गादिति चेत् । न, परमतेऽभावज्ञा-**

---

ज्ञानस्याभावधीहेतुत्वात् कार्यस्य तत्तद्व्यक्तिविशेषत्वेनैव प्रागभावप्रतियोगित्वाद्विषयविशेषविषयत्वस्यैव ज्ञाने विशेषत्वात्तदुत्पत्तेः पूर्वं तत्त्वेन तदवगमायोगात्तत्कार्यप्रागभावधीरप्ययुक्तेत्यर्थः ।

यदत्रोक्तं तद्विशेषज्ञानाभावज्ञानं प्रति तत्सामान्यज्ञानं हेतुरिति, तदनुवदति--न चेति । अभावान्तरे प्रतियोगितावच्छेदकविशिष्टज्ञानस्याभावधीहेतुत्वेन क्लृप्तत्वात् तदभावेऽभावधियोऽसम्भवात् । इतरथा क्लृप्तकारणभङ्गः क्वापि दोषो न स्यादित्यभिप्रेत्याह--प्रतियोगीति । विपक्षे बाधकान्तरमाह—अन्यथेति । प्रमेयत्वाद्याकारेण घटादिज्ञानादपि घटत्वाद्यवच्छिन्नतदभावधीः स्यादित्यर्थः । न च सिद्धान्तेऽपि कथमनित्यज्ञानादेर्ध्वंसावगम इति वाच्यम् । उत्पन्नस्य तस्य प्रत्यक्षादिना विशिष्यावगमसम्भवादिति भावः ।

ननूक्तप्रतियोगिज्ञानं ज्ञानप्रागभावेतराभावधीहेतुः । अत्र च सामान्यज्ञानमेवेत्यन्यदेव कारणमित्यत्राह—सामग्र्यन्तरेति ।

अभावधीमात्रेऽन्य एवानुगतो हेतुः, न तु त्वदुक्त इति शङ्कते—नन्विति ।

अभावज्ञानस्य प्रतियोगी यद्विशिष्टतया प्रतीयते तत्प्रकारकज्ञानमेव तद्धेतुः । 'अहमज्ञः' इत्यादिप्रागभावानुभवे च प्रतियोगिनो ज्ञानत्वविशिष्टतया प्रतीतेस्तत्प्रकारकज्ञानस्य विशेषज्ञानाभावेऽपि सम्भवान्न तदनुपपत्तिः, न चातिप्रसङ्ग इति भावः । प्रतियोगितावच्छेदकवत्तया प्रतियोगिज्ञानस्यैव हेतुत्वे बाधकमाह—अन्यथेति । सामान्यप्रत्यासत्त्यभावमते रूपत्वावच्छिन्नयावद्रूपज्ञानासम्भवेन वायौ तत्सामान्याभावस्य यावत्तद्विशेषाभावस्य वाऽनुभवो न स्यादित्यर्थः । यस्य मते सामान्यप्रत्यासत्तिरस्ति तन्मते प्रतियोगिनि प्रतियोगितावच्छेदकस्यैवाभावज्ञाने भाननियमात् तत्र तदनवच्छेदकस्य तथाऽवभास एवानुपपन्नः । इतरथा घटवत्यपि भूतले घटो नास्तीत्येवमाकारेण घटान्तराभावप्रमाप्रसङ्गादित्यभिप्रेत्याह—नेति ।

**नस्य प्रतियोगिज्ञानजन्यत्वनियमात्। यदवच्छिन्नमज्ञानमनुभूयते स एव हि तस्य विषयः। ज्ञान इवाज्ञानेऽपि निरूपकस्यैव विषयत्वात्। अन्यथाऽतिप्रसङ्गात्। अवच्छेदके च न त्वदभिमताज्ञानमिति ततोऽन्यदेव तत्।**

**न च सामान्यावच्छिन्नं विशेषाज्ञानं भातीति नातिप्रसङ्ग इति वाच्यम्। सामान्यविशेषयोर्भेदेनातिप्रसङ्गापरिहारात्, व्यक्तिरूपविशेषस्य ज्ञातत्वाच्च। व्यञ्जकासाधारणधर्मस्तु व्याप्यत्वेन विशेषः तथा च वह्निं न जानामीत्यनुभूयमानाज्ञानस्यापि धूमविषयत्वप्रसङ्गः।**

---

किं च त्वदुक्तमर्थं न जानामीति विषयनिरूपितमेवाज्ञानमनुभूयते। तन्निरूपितत्वं च स्वस्यैव स्वप्रतियोगिज्ञानस्य वा। उभयमपि साक्षात्परम्परयो वा तन्निरूपकस्य तस्य तद्विश्रयत्वं वाक्यं ज्ञान इवाज्ञानेऽपि निरूपकस्यैव विलयत्वात् इतरथा घटाज्ञाने पटस्यापि विषयत्वप्रसङ्गात्। निरूपकत्वं च ज्ञातस्थैवेत्यज्ञानविषयज्ञानस्य तस्यावश्यकत्वान्न परोक्ताज्ञानसम्भव इत्याह—यदवच्छिन्नमिति।

ननु सामान्यनिरूपिताज्ञानस्य विशेषो विषयः। तथा च न पूर्वोक्तातिप्रसङ्ग इत्याशङ्क्य तयोरपि तव मते भिन्नत्वादतिप्रसङ्गस्तदवस्थ इत्याह—न चेति।

भेदेऽपि तयोः सामान्यविशेषभाव एव नियामक इत्याशङ्क्य किं विशेषशब्देन व्यक्तिर्विवक्षिता उतापरजापिः व्यञ्जकासाधारणधर्मो वा ?। नाद्यः सामान्याश्रयत्वेन व्यक्तेरपि ज्ञानत्वादित्याह—व्यक्तीति। न द्वितीयः जातिरहितेषु सामान्यादिष्वज्ञानादेरभावप्रसङ्गादिति चार्थः। तृतीये तस्य तस्य तद्विशेषत्वं तद्व्याप्यत्वप्रयुक्तं वाच्यं अन्यथा तस्य तद्व्यञ्जकत्वायोगात्। ततश्च व्यापकनिरूपिताज्ञानस्य व्याप्यो विषय इत्यतिप्रसङ्गमाह—व्यञ्जकेति।

यदप्युक्तं विशेषतो न जानामीति विशेषप्रकारकं ज्ञानं निषिध्यते तस्यैव संशयविरोधित्वादिति, तद् दूषयति—अत एवेति। सर्वदा तज्ज्ञानरहिते तत्प्रागभावासंभवात्परकीयतज्ज्ञानाभावस्य पराभिमतेश्वरादावपि सत्त्वाद्विशेषस्योक्तप्रकारेण दुर्निरूपत्वाच्चेत्यर्थः। निरस्तसर्वपक्षेषु दूषणान्तरमाह—चन्द्रमिति। चक्षुषा प्रकृष्टप्रकाशव्यक्तिविशेषंपश्यतोऽप्यस्मिन् ज्योतिर्मण्डले चन्द्रं न जानामीति तदज्ञानानुभवः सुप्रसिद्धः। तत्र त्वदुक्तनिखिलनिषेधप्रतियोगिनः सत्त्वात्तदभावरूपाज्ञानानुपपत्तिः। न च तत्र चन्द्रं न जानामीत्यनुभवश्चन्द्रपदवाच्यत्वादिविषयो, न चन्द्रत्वादिविषय इति वाच्यम्। चन्द्रत्वं नाम काचिज्जातिः। सा च चन्द्रपदप्रवृत्तिनिमित्ता इत्याप्तोपदेशात्तज्जातिमतः तद्वाच्यत्वं निश्चितवतः प्रकृष्टप्रकाशे चन्द्रत्ववैशिष्टयाज्ञानाभावे तद्वाच्यत्वेऽप्यज्ञानानुपपत्तेरित्यादि चतुर्थे वक्ष्यते इति भावः। साक्षात्त्वदुक्तार्थविषयं प्रभाणज्ञानं नास्तीत्यत्रापि किं तत्प्रागभावोऽज्ञानत्वेनाभिमतः तदत्यन्ताभावो वा ?। नाद्यः। सर्वदा तद्विशेषज्ञानरहिते तदयोगात्। न द्वितीयः। भाविताद्दशज्ञानाश्रये तदत्यन्ताभावायोगात् पुरुषान्तरीयतदत्यन्ताभावस्यातिप्रसक्तत्वादित्यभिप्रेत्याह—अत एवेति।

**अत एव विशेषप्रकारकं ज्ञानं निषिध्यत इत्यादिकं त्वसङ्गतम् । चन्द्रं न जानामीत्यनुभवकालेऽपि विशेषप्रकारकज्ञानादेः सत्त्वाच्च । अत एव साक्षात्प्रमाणज्ञानं मयि नास्तीत्यपि निरस्तम् । स्वातन्त्र्यस्य वा सत्तानिश्चयरूपत्वस्य वा प्रत्यक्षत्वस्य वा साक्षात्त्वस्य विवक्षायां चन्द्रं न जानामीत्यादावज्ञानानुभवायोगात् तत्रोक्तस्य सर्वस्य सत्त्वात् । शेषे चोक्तमनुसंधेयम् ।**

---

प्रमाणज्ञानस्य साक्षात्त्वं विकल्पयन्सर्वकल्पेष्वनन्तरोक्तदोषमप्याह—स्वातन्त्र्यस्येति । किं च स्वातन्त्र्यमपि किमन्यानुपनीतविषयत्वं ज्ञानाविशेषणविषयत्वं वा, विशेष्यतयैव तद्विषयकत्वं वा ? । नाद्यः । सुरभिचन्दनमिति निश्चये सत्यपि 'चन्दने सौरभ्यं न जानामि' इति धीप्रसङ्गात् । किं चैवं सति त्वदुक्तमर्थं न जानामीत्यनुभवस्यार्थांशे उपनीतविषयत्वं वाच्यम् । तदुपनायकस्याप्युपनीतविषयत्वेऽनवस्थापातात्तदनुपनीतविषयत्वमज्ञातार्थे तस्य बाधाभावात् प्रमाणं चेति साक्षात्प्रमाणाज्ञाने तस्मिन् सति कथं तदभावः । न द्वितीयः । स्वप्रकाशज्ञानवादे सर्वज्ञानानामिदं ज्ञातं जानामीत्येवमाकारेणोत्पत्तेः । तथैव तत्रार्थस्य ज्ञानत्वस्य च ज्ञानविशेषणतयैव भानात् सत्यपि विशेषज्ञाने तयोरज्ञानप्रसङ्गात् । वेद्यज्ञानवादेऽप्यनुव्यवसाये अर्थस्य ज्ञानत्वस्य च ज्ञानविशेषणतयैव भानात् तदनन्तरमपि तत्राज्ञानं स्यात् ।

किं चात्रापि त्वदुक्तमर्थं न जानामीत्यनुभवे ज्ञानविशेषणतयैवार्थो भातीति वाच्यम् । ततश्चैतत्कारणतया विशेषणभूताज्ञातार्थविषयज्ञानमावश्यकम् । तस्यापि ज्ञानविशेषणतयाऽर्थविषयत्वेऽनवस्थापातात्स्वातन्त्र्येण तत्तद्विषयमिति तदभावरूपाज्ञासंभवः । नापि तृतीयः । दण्ड्यमितिज्ञानानन्तरं दण्डं न जानामीत्यनुभवप्रसङ्गात् । अत्राप्यनन्तरोक्तदोषापाताच्च ।

सत्तानिश्चयत्वं च तव जातिरूपमुपाधिरूपं वा दुर्निरूपम् । प्रत्यक्षत्वस्य साक्षात्त्वे चाज्ञानानुभवस्यापि अज्ञातेऽर्थेऽलौकिकप्रत्यक्षत्वात्तदभावासंभवः । लौकिकप्रत्यक्षत्वविवक्षायां नित्यातीन्द्रियार्थेषु तदसंभवात्तदभावरूपाज्ञानानुपपत्तिः । अन्यविषयतदत्यन्ताभावस्य च लिङ्गादितो निश्चितेष्वपि तेषु संभवात्तदाऽपि न जानामीत्यनुभवापत्तिरित्यादि प्रातिस्विकदूषणमपि द्रष्टव्यम् ॥

यदुक्तं साक्षात्प्रमाणविषयत्वस्यैव सत्त्वप्रयोजकत्वादिति, तदपि साक्षात्त्वदुर्निरूपणेनैव निरस्तमित्याह—शेषे चेति ।

एवं परमते दोषमुक्त्वा स्वमते तदुक्तदोषं परिहर्तुमनुवदति—यच्चेति ।

अपरोक्षाध्यासस्यापरोक्षज्ञानेनैव निवर्त्यत्वादविद्याध्यासस्याप्यपरोक्षत्वाद् दिङ्मोहशङ्खपीतिमचन्द्रप्रादेशिकत्वनभोनीलिमादिभ्रमाणां परोक्षात्मकतत्त्वनिश्चये

परोक्षज्ञानस्याज्ञान निर्वर्तककत्वाभावः

**यच्च परोक्षज्ञानमविद्यानिवर्त्तकमिति सविषयकाविद्याविषयवृत्त्याऽविद्याऽपि निवर्तेतेति, तदसत्। आप्तवाक्यादशोकत्वनिश्चयानन्तरमपि तत्राज्ञानसंशयदर्शनात्। न चात्राशोकस्वरूपे नाज्ञानं, न वा संशयः किंतु तस्य देशविशेषस्थत्व इति वाच्यम्। देशविशेषतत्संबन्धयोरपि प्रत्यक्षेण निश्चितत्वात्। अशोकत्वादिस्वरूपेऽज्ञानाभावे तस्य देशविशेषस्थत्वसंशयाद्यसम्भवात्।**

**न हि माहिष्मत्यां देवदत्ते प्रत्यक्षेण निर्णीते पाटलिपुत्रे तस्मिन् दृष्टे 'देवदत्तोऽत्रास्ति न वा' इति संशयो भवति। अविद्यानिवृत्त्यनिवृत्तिरूपविशेषं विना देवदत्तप्रत्यक्षाशोकत्वपरोक्षनिश्चययोः सत्तानिश्चयरूपत्वे विशेषाभावात्। अत**

---

सत्यप्यनुवर्त्तमानत्वेन तत्कारणतया तत्तदज्ञानस्याप्यावश्यकत्वान्न परोक्षज्ञानात्तन्निवृत्तिरित्यभिप्रेत्याह—तदसदिति। किं च अशोकत्वं नाम काचिद्वृक्षत्वव्याप्या जातिः तद्वानशोकपदार्थ इति व्युत्पत्तिमतो "अस्मिन्वनेऽशोकोऽस्ति" इत्याप्तोक्तितस्तद्वनेऽशोकत्वविशिष्टवृक्षसंसर्गविषयं सत्तानिश्चयरूपं ज्ञानं जन्यते। वनाशोकसंसर्गे संशयाद्यभावात्। ततो वनगतस्य "अशोकं न जानामि. अस्मिन्नशोकत्वमस्ति न वा" इत्यनुभूयमानावज्ञानसंशयौ परोक्षज्ञानस्याविद्यानिवर्तकत्वेऽनुपपन्नौ भवेताम्। ततः परोक्षज्ञानं सत्तानिश्चयरूपमप्यविद्यानिवृत्त्ययोग्यमित्यभिप्रेत्याह—आप्तवाक्यादिति। ननु तद्वाक्यादशोकत्वविशिष्टवृक्षस्य वनसंसर्गनिश्चयेऽपि तत्र तस्य देशविशेषसंसर्गानिश्चयात्तस्य तद्विषयावेवाज्ञानसंशयावित्याशङ्क्य वस्तुतोऽशोकत्वाश्रयस्यैव परोक्षे दृश्यमानत्वान्न वस्तुनोऽशोकत्वात् तत्राज्ञानादीति दूषयति—न चात्रेति। ननु वृक्षत्वाकारेणैव तस्य देशविशेषस्थत्वनिश्चयो न त्वशोकत्वाकारेणेत्याशङ्क्याशोकत्वतद्वैशिष्ट्याज्ञाननिवृत्तौ तेन रूपेणापि निश्चयः स्यादित्याह—अशोकत्वादीति।

यत्स्वरूपावरकाज्ञानं तस्य निवृत्तं तत्संस्कारवतस्तस्य पश्चाद् देशविशेषे तदाकारेणैव तन्निश्चयो भवतीत्यत्रोदाहरणमाह—न हीति।

ननु माहिष्मत्यां देवदत्तस्वरूपज्ञानं सत्तानिश्चयरूपं वाक्योत्थमशोकज्ञानं न तथेति वैषम्यमाशङ्क्याह—अविद्येति। नन्वाप्तवाक्याद् वनस्थवृक्षेऽशोकत्वनिश्चयेऽपि तस्येतरभेदोऽज्ञातः संदिह्यत इत्याशङ्क्य तस्यापि प्रत्यक्षेण निश्चितत्वान्मैवमित्याह—अत एवेति। किं च देवदत्तप्राथमिकप्रत्यक्षेण तत्स्वरूपावरकाज्ञाननिवृत्तौ यथा तस्येतरभेदसंशयाभावः, एवं शाब्दज्ञानादशोकाज्ञाननिवृत्तौ तस्यापि तत्संशयो न स्यादित्याह—देवदत्त इति। ननु वाक्याद् वनस्थवृक्षमात्रेऽशोकत्वनिश्चयेऽपि वृक्षविशेषे तत्संसर्गोऽज्ञातः संदिह्यत इत्यत आह—अत एवेति। अतः शाब्दार्थमेवाह— तस्यैवेति। वृक्षमात्रेऽशोकत्वं बोधयतो वाक्यस्याप्रामाण्यापाताद् वृक्षविशेष एव तन्निश्चयस्ततो जायत इत्यर्थः।

**एवाशोकस्येतरव्यावृत्तिर्वाक्यादनिश्चिता संदिह्यत इति परास्तम्। देवदत्तप्रत्यक्षे तस्येतरव्यावृत्तिसंदेहाद्यभावात्। अत एव वृक्षविशेषेऽशोकत्वसंसर्गविषयोऽयं संदेहादिरिति परास्तम्। तस्यैव वाक्यीयप्रमाविषयत्वात्।**

क्वचित् वाक्यात् अपरोक्षत्वम्

**क्वचिच्चोपदेशोऽप्यपरोक्षज्ञानजनकः। अशोकापरोक्षमपि क्वचित्सत्ताऽनवधारणम्, उपदेशप्रामाण्यस्यान्यथासिद्धिशङ्काकलङ्कितत्वं च। अपि चाभिव्यक्तं विषयावच्छिन्नं चैतन्यं फलम्। अभिव्यक्तिश्चाविद्यानिवृत्तिरेव।**

**ततश्चापरोक्षार्थ इव परोक्षेऽप्यविद्यानिवृत्तिरस्ति चेत्तदपि स्पष्टमवभासेत। विषयावच्छिन्नस्फुरणस्यैव स्पष्टतारूपत्वात्।**

---

नन्वाप्तवाक्यादशोकत्वस्य वृक्षत्वेनैव सामानाधिकरण्यं निश्चितं न त्वेतद्वृक्षत्वेनेति चेत्। न, सामानाधिकरण्यं नामैकाधिकरणत्वम्। तच्चैकप्रत्यक्षतो निश्चितैकाधिकरणत्वमेव। तथा च रूपवत्त्वेन चक्षुषा दृष्टे घटे त्वचा घटत्वसामानाधिकरण्येन स्पर्शावगतौ यथा तयो रूपस्पर्शयोर्न सामानाधिकरण्यसंदेहः, एवमत्रापि स्वरूपाज्ञानाभावेऽशोकत्वैतद्वृक्षत्वयोरपि स संदेहो न स्यादिति भावः।

ननु परोक्षज्ञानमात्रस्याविद्याऽनिवर्तकत्वे "अयमशोकः" इत्युपदेशजन्यज्ञानादपि तदनिवृत्तिः स्यादित्याशङ्क्य तस्य "दशमस्त्वमसि" इत्यादिवाक्यवदिन्द्रियसन्निकृष्टतया प्रमात्रव्यवहितविषयत्वेनापरोक्षज्ञानादिजनकत्वात्तत एव तदज्ञानादिनिवृत्त्युपपत्तिरित्यभिप्रेत्याह—क्वचिच्चेति।

नन्वेवमिन्द्रियसन्निकृष्टेऽशोके 'अस्मिन्वनेऽशोकोऽस्ति' इति वाक्यादप्यपरोक्षज्ञानोत्पत्त्या तदज्ञानादिनिवृत्तिः स्यादित्यत आह—अशोकेति। ननूक्तवाक्यजन्यपरोक्षज्ञानवत्तज्जन्यापरोक्षज्ञानमपि तत्प्रयोक्तुराप्तत्वान्यथानुपपत्तिरूपतर्कबलात्सत्तानिश्चयरूपंकिन्न स्यादित्यत आह—उपदेशेति। इन्द्रियसन्निकृष्टस्य कस्यचिदशोकत्वेऽपि तत्प्रयोक्तुराप्तत्वसम्भावनया तदुपदेशस्यान्यथाऽपि प्रामाण्योपपत्तिशङ्कास्कन्दितत्वात्सन्निकृष्टविषये तज्जन्यज्ञानमपरोक्षमपि सत्तानवधारणमेव दूरस्थस्य तु वस्तुतस्तद्विषयपरोक्षज्ञानोत्पत्तिसमसमये वर्णितशङ्कानवतारात् तत्र सत्तानिश्चयरूपमेवेति परोक्षज्ञानस्य व्यभिचारान्नाविद्यानिवर्तकतेति भावः।

किं च समानविषययोरपि ज्ञानाज्ञानयोर्व्यधिकरणत्वे निवर्त्यनिवर्त्तकभावानुपपत्तेस्तन्निवर्त्तकस्य तत्सामानाधिकरण्यमावश्यकम्। परोक्षवृत्तेश्च निर्गमनाभावेन स्वविषयावच्छिन्नचैतन्यावरकाज्ञानेन सामानाधिकरण्यानुपपत्तेस्तस्यास्तन्निवर्त्तकत्वमनुपपन्नम्। परोक्षज्ञानस्याप्यविद्यानिवर्त्तकत्वे शाब्दापरोक्षवादे यत्नान्तरेण ब्रह्मसाक्षात्काराभ्युपगमो व्यर्थः स्यात्।

न च घटस्य स्पष्टता अपरोक्षज्ञानविषयत्वमेव । ज्ञानस्यात्मनिष्ठत्वाद् अतिरिक्तविषयतायाश्चानङ्गीकारात् । न चेन्द्रियसन्निकृष्टत्वं तत् । अन्धकारस्थघटेऽपीन्द्रियसन्निकृष्टे वाक्यात् ज्ञायमाने स्पष्टताया अदर्शनात्, तस्यातीन्द्रियत्वाच्च ।

किं च परोक्षज्ञानस्याविद्यानिवर्त्तकत्वे चक्षुषा दृष्टघटादिव्यक्तौ त्वगिन्द्रियेणानुमाननिर्णीतेऽर्थे शब्देन जिज्ञासाभाववत् शब्दाद्यवगतेऽपि श्रीवेङ्कटाचलेशलीलाकमनीयविग्रहादौ प्रत्यक्षेण जिज्ञासाभावः स्यात् । अज्ञाननिवृत्तेस्तुल्यत्वात् ।

नन्विष्टविशेषप्रत्यक्षात् सुखविशेषो भवतीति जिज्ञासाऽर्थवतीति चेत्, सत्यम् । अज्ञाननिवृत्तितौल्ये तदेव न सम्भवति । परोक्षापरोक्षवृत्तेर्विषयसम्बन्धासंबन्धाभ्यामज्ञाननिवृत्तितदभावाविति सिद्धान्ते न दोषः ।

---

किं चैवं प्रत्यक्षविषयवत्परोक्षविषयस्यापि फलव्याप्यतयाऽस्पष्टताया अभावात् तत्रापरोक्षव्यवहारादिरपि स्यादित्याह—अपि चेति । ननु स्पष्टता नाम ज्ञातता, सा च न परोक्षविषयेष्वित्याशङ्क्य तस्या निरस्तत्वादभिव्यक्तं विषयावच्छिन्नचैतन्यमेव सेत्याह—विषयेति ॥

नन्वपरोक्षज्ञानविषयत्वमेव स्पष्टता, सा च न परोक्षविषय इति वैशेषिकादिमतमाशङ्क्याह—न चेति ।

किं ज्ञानविषयत्वं ज्ञानमेव उत तदतिरिक्तो विषयगतो धर्मः ?। आद्ये तस्य विषयसम्बन्धिस्पष्टतात्मत्वमयुक्तमित्यभिप्रेत्याह—ज्ञानस्येति । द्वितीयं दूषयति—अतिरिक्तेति । द्रव्याद्यन्यतमत्वेनातिरिक्तविषयताया दुर्निरूपत्वादित्यर्थः । ननु ज्ञायमानस्येन्द्रियसन्निकृष्टत्वमेव स्पष्टतेत्यत आह—न चेन्द्रियेति । प्रत्यक्षज्ञानविषयस्येन्द्रियसन्निकृष्टत्वं स्पष्टतेत्याशङ्क्य स्पष्टताया अपरोक्षत्वादस्यातीन्द्रियत्वात् मैवमित्याह—तस्येति ।

किं चैवं परोक्षतो निर्णीते दूरस्थे वस्तुनि "निष्पादितक्रिये कर्मणि" इति न्यायेन तदविद्यानिवृत्तये प्रत्यक्षापेक्षा न स्याच्चक्षुषा निर्णीते घटे स्पार्शनज्ञानापेक्षाऽदर्शनात् । अनुमाननिश्चिते शब्दापेक्षाऽदर्शनात् तद्वदित्याह—किं चेति ।

नन्वविद्यानिवृत्तेरन्यतः सिद्धत्वेऽपि सुखविशेषार्थं तत्प्रत्यक्षज्ञानापेक्षेति शङ्कते—नन्विति । इष्टापरोक्षज्ञानस्य स्वविषयगतेष्टत्वावारकाविद्यानिवर्तकत्वादेव सुखविशेषहेतुता । परोक्षज्ञानस्यापि तदस्ति चेत्ततोऽपि सुखविशेषः स्यादित्याह—सत्यमिति । ननु सिद्धान्तेऽपि ज्ञानत्वाविशेषेऽपि किञ्चित् ज्ञानमविद्यानिवर्तकं किञ्चिन्नेति कथं

अज्ञाननिवृत्तेस्तुल्यत्वेऽपि स्वरूपविशेषादेव सुखविशेष इति चेत् । न, अतिप्रसङ्गात् । तस्मादविद्यानिवृत्तिरूपविशेषादेव प्रत्यक्षं सुखविशेषकरमिति तदेवाविद्यानिवर्तकम् । अविद्याविषयकवृत्तिश्च नाविद्याविरोधिनीति । प्रमाणानां स्वप्रमेयाव्युदासकरत्वात् ।

न चैवं परोक्षज्ञानात् व्यवहारोऽपि न स्यादिति वाच्यम् । व्यवहारमात्रे ज्ञानमात्रस्यैव हेतुत्वात् । संशयमिथ्याज्ञानादपि तद्दृष्टेः ।

नन्वेवं निर्णीतेऽपि धर्मादौ न जानामीत्यनुभवः स्यादिति चेत् । न, तन्निर्णयस्यैव प्रतिबन्धकत्वात् । तदननुभवमात्रात्तन्निवृत्त्यनुभवो भ्रान्तिः । न चैवं सुखं न जानामीत्यनुभवस्यापि भावरूपाज्ञानविषयत्वप्रसङ्ग इति वाच्यम् । स्वस्य विद्यमाने सुखे विशेषतोऽनुभवनियमेन न जानामीत्यनुभवाभावात् । परसुखे च तदिष्टमेव ।

---

वैषम्यमित्यत आह—परोक्षेति । प्रत्यक्षपरोक्षवृत्त्योर्निवर्त्याविद्यासामानाधिकरण्यतदभावावेव वैषम्यमित्यर्थः ।

इष्टविषयापरोक्षवृत्तेः प्रत्यक्षज्ञानत्वमेव सुखहेतुत्वप्रयोजकं, न त्वविद्यानिवर्तकत्वमिति शङ्कते—अज्ञानेति ।

प्रमेयमित्येवरूपेष्टज्ञानादपि सुखं स्यादिति दूषयति—नेति । न चेष्टतावच्छेदकप्रकारकज्ञानमेव सुखहेतुरिति वाच्यम् । प्रमेयवदिति ज्ञानेऽपीष्टतावच्छेदकतद्वैशिष्ट्ययोर्भानात् । न च तत्र व्यावर्तकतया प्रकाशे न भातीति वाच्यम् रजतादिज्ञानेपि रजतत्वस्य तथाभानाभावात् । कारणकारणादेव कार्योपपादने ज्ञानसामग्रीत एव कार्यसंभवात् ज्ञानस्यापि कुत्रापि कारणतायोगाच्चेति भावः । ततश्चेष्टापरोक्षज्ञानस्याविद्यानिवर्त्तकत्वप्रयुक्तमेव सुखानुकूलत्वं, परोक्षज्ञानस्य च तदभावान्नाविद्यानिवर्तकत्वमित्याह—तस्मादिति । एवं तावत्परोक्षज्ञानस्याविद्यानिवर्तकत्वाभावादविद्याविषयवृत्तेरविद्यासमानविषयत्वेऽपि न तन्निवर्तकत्वमित्युक्तम् । इदानीं विमतं नाविद्यानिवर्तकं तद्विषयज्ञानत्वात्संमतवत् । न च सुखादिज्ञाने व्यभिचारः । तस्य पक्षसमत्वात् । तथा च निवर्त्याज्ञानाविषयकं तत्समानविषयमेव ज्ञानं तन्निवर्तकमित्यभिप्रेत्याह—अविद्येति ।

ननु परोक्षज्ञानेनाज्ञानानिवृत्तौ तदावृतविषये व्यवहारोऽपि न स्यादित्याशङ्क्य ज्ञानमात्रस्यैव तत्कारणत्वात्ततस्तदुपपत्तिरित्याह न चैवमिति । अज्ञानानिवर्तकज्ञानादपि व्यवहारदर्शनान्नाज्ञाननिवृत्तिस्तद्धेतुरित्याह—संशयेति । अत एव परोक्षज्ञानाद् भ्रान्तिरपि न निवर्तेतेति निरस्तम् । दण्डभ्रान्त्याऽपि सर्पभ्रान्तिनिवृत्तिदर्शनादिति । भावः ।

**यत्त्वहमर्थस्य भावरूपाज्ञानानाश्रयत्वेनेत्यादि. तदसत् । तस्याज्ञानाश्रयाभेदात् । श्वेतोधावतीतिवदहमज्ञ इति प्रतीत्युपपत्तेः ।**

**यत्तु जडविषयाज्ञानाभावात् घटं न जानामीत्यनुभवोऽभावविषय एवेति, तन्न । तदभिन्नचैतन्याज्ञानस्यैव तदज्ञानत्वात् ।**

**तस्मादज्ञो न जानामीत्येतत्प्रत्यक्षगोचरः ।**
**अनादिभावरूपा साऽविद्यानाभावरूपिणी ।।**

सौषुप्तिकाज्ञानपरामर्शस्य भावरूपाज्ञाने प्रमाणता

**एवं सौषुप्तिकाज्ञानपरामर्शोऽपि भावरूपाज्ञाने प्रमाणम् । ज्ञानाभावस्य सुषुप्तौ प्रतियोगिस्मरणाद्यभावेनानुभवितुमशक्यत्वात् परामर्शासम्भवात् ।**

---

परोक्षनिश्चयात्तद्विषयाज्ञाननिवृत्तौ तदनुभवोऽपि स्यादिति चोद्यमनुवदति—नन्विति ।

सुषुप्ताविव सतोऽप्यज्ञानानुभवस्य जानामीतिस्फुटतरज्ञानानुभवेनाभिभूतत्वात्सौरप्रभाभिभूतदीपादिप्रभाया इव न स्फुटव्यवहारयोग्यतेत्यभिप्रेत्याह—न तन्निर्णयस्येति । यदुक्तं शास्त्रश्रवणाद्धर्माज्ञानं निवृत्तमित्यनुभवादिति, तदन्यथयति—तदननुभवमात्रादिति । यथा सौरप्रभायां सत्यां चन्द्रादिप्रभाया अननुभवमात्रेण तन्निवृत्तित्वभ्रमः, एवं परोक्षज्ञाने सति तदज्ञानस्य स्पष्टमननुभवात्तन्निवृत्तित्वभ्रमः; निवर्तकाभावस्य बाधकस्योभयत्र तुल्यत्वादिति भावः । न जानामीत्यनुभवस्यभावरूपाज्ञानविषयत्वे सुखादावपि तत्सत्त्वात्तत्रापि भावरूपाज्ञानापात इति न शङ्कनीयमित्याह—न चैवमिति । किं वर्त्तमाने स्वकीयसुखादौ तदनुभव उत परकीये तस्मिन्, किं वाऽतीतादिरूपे ? । नाद्य इत्याह—स्वस्येति । द्वितीयतृतीययोरिष्टापत्तिरित्याह—परसुखे चेति । अतीतादिरूपस्यापि सुखस्याव्याकृतात्मना स्थितस्यावृतचैतन्यएवाध्यासात्तदज्ञानमपीष्टमिति चशब्दार्थः ।

'अहमज्ञः' इत्यनुभवेऽहङ्काराश्रितत्वेनाज्ञानमनुभूयते । भावरूपाज्ञानस्य च तदनुपपन्नमिति चोद्यमनुवदति—यत्त्विति । यथा श्वेतरूपस्य गतिमद्द्रव्यतादात्म्याद्यथाऽश्वगत्या गत्याश्रयत्वानुभव एवमज्ञानाश्रयचित्तादात्म्यादहङ्कारस्य तदनुभव इति दूषयति—तदसदिति ।

चोद्यान्तरमनुवदति—यत्त्विति ।

अज्ञानविषयसद्रूपचैतन्यावच्छेदकतया जडस्य तद्विषयत्वानुभवो न स्वत इति दूषयति—तन्नेति । "अज्ञो न जानामि", इत्यनुभवयोरन्यथानुपपत्तेर्भावरूपाज्ञानमेव तद्विषय इत्युपसंहरति श्लोकेन —तस्मादिति । न किञ्चिदवेदिषमितिपरामर्शकल्प्यसौपु-

अस्मदभिमताज्ञानं तु सुषुप्तावपि साक्षिणा विषयव्यावृत्तमेवानुभूयते। विषयस्याप्यज्ञाततया नित्यानुभवमात्रवेद्यत्वात्। न चैवं जागरण इव 'अहमज्ञो घटं न जानामि' इति प्रत्ययप्रसङ्ग इति वाच्यम्। तदाऽज्ञानसाक्षिणः सविकल्पकतापादकाहङ्कारस्याभावेन तथाऽननुभवात्।

यत्त्वयं न सौषुप्तिकाज्ञानस्य परामर्शः किं त्वनुमानमिति, तन्न। तत्र न तावदहं ज्ञानाभाववान् अवस्थाविशेषवत्त्वादित्यनुमानम्। अहमर्थमात्रपक्षीकारे जाग्रति तस्मिन् ज्ञानसत्त्वेनांशतो बाधात्। सुषुप्तिकालीनाहमर्थस्य पक्षत्वे सुषुप्तेर्निखिलज्ञानाभावरूपायाः पूर्वमसिद्धत्वात्। यत्किञ्चिज्ज्ञानाभावस्य साध्यत्वे न किंचिदवेदिषमित्यनुभवासंभवात्, सुषुप्तिकालीनज्ञानाभावासिद्धेश्च। निखिलज्ञानाभावस्य साध्यत्वे व्याप्तिग्रहाभावात्।

अवस्थाविशेषत्वं च यदि सुषुप्तित्वं, तदा साध्याविशेषः। निखिलज्ञानाभावरूपत्वात् सुषुप्तेः। यदि जाग्रत्स्वप्नातिरिक्तकालत्वं, तन्न। तदा निखिलज्ञा-

---

प्तिकानुभवोऽपि तत्र मानमित्याह—एवमिति। सोऽपि ज्ञानाभावविषयतयाऽन्यथासिद्ध इति शङ्कां निराकरोति—ज्ञानाभावस्येति। न च संस्कारानुपपत्तिः। सिद्धान्ते अज्ञानाकाराविद्यावृत्तेः सुषुप्त्यवस्थाया वा नाशात्तद्विशिष्टप्रकाशस्यापि नाशात्तदुपपत्तेरिति भावः।

धर्म्यादिज्ञानाभावाद्भावरूपाज्ञानानुभवोऽपि न स्यादित्युक्तं दूषयति—अस्मदभिमतेति। साक्षिणो नित्यतया धर्म्यादिज्ञाननिरपेक्षत्वात्सविषयमेवाज्ञानं ततो भासते। न च तदाऽज्ञानविषये प्रमाणाभावान्न तस्य साक्षिगोचरतेति वाच्यम्। अज्ञाततया साक्षिभास्यत्वे प्रमाणापेक्षाभावादित्यर्थः। सुषुप्तौ साक्षिणा अज्ञानानुभवेऽहमित्याकारा प्रतीतिः स्यात्। तदाकारप्रतीतिश्च तदाऽनुपलब्धिविरुद्धेत्याशङ्क्याऽभिव्यक्ताहङ्कारतादात्म्यापन्नसाक्षिण एव तथा प्रतीतेः। सुषुप्तौ च तदभावान्नैवमित्याह—न चैवमित्यादिना।

न किंचिदवेदिषमित्यस्य स्वापकालीनज्ञानाभावानुमितित्वान्न तदाऽज्ञानानुभव इत्युक्तमनुवदति—यत्त्विति।

लिङ्गानिरूपणान्न तस्यानुमितित्वमित्याह—तन्नेति। अवस्थाविशेषवत्त्वं लिङ्गमित्येतत्तावद् दूषयति—तत्र न तावदिति। तत्र किमहमर्थमात्रं पक्षः सुषुप्तिकालीनाहमर्थो वा। आद्यं दूषयति—अहमर्थेति। द्वितीयेऽनुमितेः पूर्वं पक्षविशेषणाज्ञानात्तद्विशिष्टपक्ष एवासिद्ध इत्याह—सुषुप्तीति। साध्येऽपि किं कतिपयज्ञानाभाववत्त्वं विवक्षितं निखिलज्ञानाभाववत्त्वं वा ?। आद्ये दोषमाह—यत्किंचिदिति। जाग्रत्यपि तस्य सत्त्वात्सिद्धसाधनता च स्यादित्यभिप्रेत्याह —सुषुप्तीति। द्वितीयं दूषयति—निखिलेति। निखिलज्ञानानामेकत्रैकदा वाऽप्रसिद्धत्वेन व्यतिरेकव्याप्तेरपि दुर्ग्रहत्वादिति भावः।

नाभावज्ञानात् प्राक् तदतिरिक्तत्वस्य दुर्विज्ञेयत्वात् । एतेन सामग्र्यभावेन ज्ञानाभावोऽनुमीयत इति प्रत्युक्तम् । तत्रापि पक्षस्य दुर्निरूपत्वात् । सामग्र्यभावस्यापि कार्याभावोन्नेयत्वात् ।

न चेन्द्रियप्रसादेन तदुपरमानुमानात् सामग्र्यभावोऽन्यतः सिद्ध इति वाच्यम् । वाह्येन्द्रियोपरमेऽपि स्वप्ने विषयज्ञानतत्सामग्र्योः सत्त्वात्, शोभनस्वप्नदर्शनादपि मनः प्रसादस्य सत्त्वेनान्यथासिद्धेश्च ।

नापि तत्तुल्ययोगक्षेमात्मादौ स्मर्यमाणेऽपि नियमेनास्मर्यमाणत्वलिङ्गादनुमितिः । परमते सुषुप्तिकालीनात्मनोऽस्मर्यमाणत्वेन विशेषणासिद्धेः, जाग्रत्कालीन आत्मनि ज्ञानस्यास्मर्यमाणत्वासिद्धेश्च ।

सुषुप्तिकालेऽस्मर्यमाणत्वं हेतुरिति चेत्, न । असिद्धेः, निखिलविषयज्ञानाभावस्यैव सुषुप्तित्वात्, वेद्यजानवादेऽननुभूतज्ञानस्यापि सम्भवादप्रयोजकत्वात्, जाग्रति तादृशज्ञाने व्यभिचाराच्च, लिङ्गव्याप्त्याद्यनुसन्धानं विनापि नावेदिषमिति परामर्शदर्शनात् ।

---

हेतुरपि दुर्निरूप इत्याह—अवस्थेति । एतदीयसुप्तेरन्यदीयजाग्रदादिकालत्वादसिद्धिः । एतदीयजाग्रत्कालाद्यन्यत्वविवक्षायामन्यदीयजाग्रति व्यभिचार इत्यभिप्रेत्याह—तन्नेति । किं च कतिपयज्ञानवद् जाग्रत्स्वप्नकालातिरिक्तत्वस्य निखिलज्ञानाभावत्वग्रहं विना दुर्ग्रहत्वाद्धेतोरज्ञाततासिद्धिरित्याह—निखिलेति । परोक्तं द्वितीयलिङ्गमपि दूषयति—एतेनेति । एतच्छब्दार्थमाह—तत्रापीति । निखिलज्ञानाभावग्रहं विना तत्सामग्र्यभाव एव दुर्ग्रह इत्याह—सामग्रीति ।

यदप्युक्तं प्रत्यक्षसिद्धेन्द्रियप्रसादेन तदुपरमानुमानात्सामग्र्यभावः सिद्ध इति तदप्ययुक्तमिति दूषयति—न चेति ।

ननु मनःप्रसादेन मनसोऽप्युपरमानुमानान्निखिलज्ञानसामग्र्यभावसिद्धिरित्याशङ्क्य तत्प्रसादोऽन्यथापि सम्भवतीत्याह—शोभनेति । इन्द्रियाणामतीन्द्रियत्वेन परमते तत्प्रसादो दुर्विज्ञेय इत्यपि द्रष्टव्यम् ।

तृतीयं लिङ्गमपि दूषयति—नापीति । पराभिमतात्मनो जडत्वेन सुषुप्तावनुभवासंभवात्तस्य जाग्रति स्मर्यमाणत्वायोगाद्विशेषणासिद्धो हेतुरित्याह—परमत इति । विशेष्यासिद्धिमप्याह—जाग्रत्कालीन इति ।

विशेष्यासिद्धिपरिहाराय हेतुविशेषणं शङ्कते—सुषुप्तीति । निखिलज्ञानाभावज्ञानात्पूर्वं सुषुप्तेरेवाज्ञानादसिद्धिरित्याह—न असिद्धेरिति । सुषुप्तौ सतोऽपि ज्ञानस्याननुभवाभावादपि स्मरणाभावोपपत्तेरप्रयोजकताऽपीत्याह—विद्येति । नवीनमते ज्ञानस्य स्वविषयत्वेऽपि संस्कारप्रमोषादिना स्मरणाभावसंभवात्तत्राप्यप्रयोजकतेति भावः ।

न चैवं सिद्धान्तेऽपि कथं सुषुप्तौ ज्ञानाभावनिश्चय इति वाच्यम् । न किञ्चिदवेदिषमिति परामर्शसिद्धसर्वविषयाज्ञानान्यथानुपपत्त्या तस्य कल्प्यत्वात् । अत एव रागाद्यभावानुमानमपि तद्विषयज्ञानाभावस्यैव तदनुत्पत्तिव्याप्यत्वात् । न चैवमात्मादिगोचरेच्छाद्यभावो न सिध्येत्, तज्ज्ञानस्य तदानीमपि सत्त्वादिति वाच्यम् । सविकल्पकज्ञानस्यैव तद्धेतुतया तदभावानुमानादेव तदभावस्यापि सिद्धत्वात् । किं च सुषुप्तौ ज्ञानाद्यभावोऽपि साक्षिणाऽनुभवितुं शक्यते । न चैवं तदाऽज्ञानाद्यसिद्धिप्रसङ्गः । तस्य तदाऽप्यावश्यकत्वेन जाग्रतीव 'नावेदिषम्' इत्यनुभवस्य तदेकविषयत्वात् ।

भावरूपाज्ञाने अनुमानोपपत्तिः

अनुमानमपि तत्र प्रमाणम् । इच्छाद्यसमानकालीनसामग्रीजन्यप्रत्यक्षधर्मा-

---

मतद्वयेऽपि केषाञ्चित्काष्ठलोष्ठादिज्ञानानां सतामप्यस्मर्यमाणत्वात्तत्र व्यभिचारश्चेत्याह—जाग्रतीति । अनुमितिकारणं विनापि सौषुप्तिकाज्ञानानुसन्धानदर्शनान्नेयमनुमितिरित्याह—लिङ्गेति ।

यदुक्तमुक्तलिङ्गैः स्वापे ज्ञानाभावासिद्धौ सिद्धान्तेऽपि तदसिद्ध्यापात इति, तद् दूषयति—न चैवमिति ।

अज्ञानान्यथानुपपत्त्येति । भावरूपाज्ञानेन तद्विरोध्यपरोक्षज्ञानाभावसिद्धौ लिङ्गदर्शनादेरभावात् परोक्षज्ञानाभावोऽपि सिध्येदिति भावः । यदप्युक्तम्–एवं सति रागविरोधिद्वेषस्य त्वत्राभावात्तदभावासिद्धिरिति, तत्राह—अत एवेति । इष्टज्ञानादेरभावादित्यर्थः । ज्ञानाभावात्कथं रागाद्यभावसिद्धिरित्याशङ्क्याह—तद्विषयेति । तर्हि तदा ज्ञायमानात्मसुखादिविषयरागाद्यभावो न सिध्येदिति यदुक्तं तद् दूषयति—न चैवमिति । आत्मनो निर्विकल्पकज्ञानेन स्फुरणेऽपि तदा रागादिहेतोः सविकल्पकस्याभावात्तदभावसिद्धिरित्याह—सविकल्पकेति । स्वापकालीनस्य ज्ञानाद्यभावस्यानुमेयत्वमङ्गीकृत्येदमुक्तम् । वस्तुतस्तस्य तदा नित्यसाक्षिवेद्यत्वसंभवादुत्थितस्य नापश्यं नाश्रौषमिति तत्परामर्श एवेत्याह—किं चेति । नन्वेवं सति न किंचिदवेदिषमित्यस्यापि ज्ञानाभावविषयत्वसम्भवात्ततोभावरूपाज्ञानासिद्धिरिति चेत् न । भावरूपाज्ञानं विना साक्षिणो दृश्यसंबन्धायोगित्वेन तस्यावश्यकत्वात् । नावेदिषमितिज्ञानसामान्यविरोधितया परामृश्यमानाज्ञानस्य विशेषाभावरूपत्वायोगाच्चेत्याह—न चैवमित्यादिना ।

एवं भावरूपाज्ञाने प्रत्यक्षमुपपाद्यानुमानमप्याह—अनुमानमिति ।

इच्छाद्यसमानकालीना या सामग्री तज्जन्या प्रत्यक्षधर्मभूतेच्छाद्यजनिका च या घटादिप्रत्यक्षप्रमा साऽत्र पक्षः । ज्ञानातिरिक्तप्रत्यक्षस्य निवर्त्तिकेति साध्यम् । बाह्यो यो विषयोघटादिः तज्जन्यप्रमात्वादिति हेतुः । प्रतियोगिप्रत्यक्षवदिति । संजिहीर्षाद्वारा ध्वंस-

जनकघटादिप्रत्यक्षप्रमा ज्ञानातिरिक्तप्रत्यक्षनिवर्तिका बाह्यविषयजन्यप्रमात्वात् प्रतियोगिप्रत्यक्षवत् ।

अभिहितज्ञाननिवर्त्यं चाबाधितं नास्मदभिमताज्ञानादन्यत्संभवति ।

यद्वा प्रत्यक्षधर्माजनकघटादिप्रत्यक्षप्रमाणज्ञानं कार्यस्वसमानाधिकरणातिरिक्तप्रत्यक्षनिवर्त्तकं, कार्यत्वानधिकरणप्रत्यक्षनिवर्तकं, जन्यज्ञानासहकृतसामग्री-

---

जनकतत्प्रतियोगिप्रत्यक्षवदित्यर्थः । प्रमामात्रस्य पक्षत्वे स्वमते परोक्षप्रमायां बाधः । तन्निवारणाय प्रत्यक्षप्रमेत्युक्तम् । अत्र प्रमापदं स्वसामग्रीकालीनजन्यविशिष्टज्ञानानधिगतार्थविषयप्रमापरम् । तेन धारावाहिकद्वितीयादिप्रमायां न बाधः । स्वमते शब्दादिजनिताऽहमाकारवृत्तेरपरोक्षप्रमात्वात्तत्र बाधवारणाय घटादीति । इच्छादिजनकघटादिप्रमायां परमते तत्प्रागभावनिवर्त्तकत्वेन सिद्धसाधनतावारणाय—धर्माजनकेति । पक्षीकृतज्ञानस्यापि संस्कारजनकत्वादसंभववारणाय प्रत्यक्षधर्मेत्युक्तम् । अत्र धर्मपदं भावरूपधर्मपरम् । तेन प्रत्यक्षस्य स्वध्वंसस्य जनकत्वेनाविद्यानिवृत्तेरात्मातिरेकमते तज्जनकत्वेन वा नासंभवः जिज्ञासाद्यनन्तरभाविघटादिप्रमायास्तन्निवर्त्तकत्वेनार्थान्तरतावारणायेच्छाद्यसमानकालीनसामग्रीजन्येत्युक्तम् । अत्रादिपदेन द्वेषप्रयत्नौ गृह्येते । साध्येऽपि संस्कारप्रागभावनिवर्त्तकत्वेनार्थान्तरतावारणाय—प्रत्यक्षपदम् । स्वनिवर्त्तकत्वेन विशेषणज्ञाननिवर्तकत्वेन चार्थान्तारतावारणाय—ज्ञानातिरिक्तेति । हेतौ परोक्षप्रमायां व्यभिचारवारणाय—विषयजन्येति पदम् । उक्ताहमाकारवृत्तौ व्यभिचारवारणाय—बाह्येति । अत्रापि प्रमापदं स्वसामग्रीकालीनजन्यज्ञानाविषयविषयप्रमापरम् । तेन धारायां द्वितीयादिज्ञाने न व्यभिचारः ।

अत्रायमनुमाननिष्कर्षः – इच्छाद्वेषप्रयत्नासमानकालीनसामग्रीजन्यप्रत्यक्षभावधर्माजनकस्वसामग्रीकालीनजन्यविशिष्टज्ञानाविषयविषयक घटादिप्रत्यक्षप्रमा, ज्ञानातिरिक्तप्रत्यक्षनिवर्तिका, स्वसामग्रीकालीनजन्यविशिष्टज्ञानाविषयकबाह्यविषयजन्यप्रमात्वात् । स्वविषयध्वंसजनकप्रत्यक्षवदिति ।

नन्वज्ञानादन्यदेव प्रत्यक्षं वस्तूक्तप्रमानिवर्त्यमस्त्वित्याशङ्क्याह—अभिहितेति ।

स्वस्य स्वप्रागभावनिवृत्तिरूपत्वेन तन्निवर्त्तकत्वायोगात् इच्छातत्प्रागभावाद्यनिवर्तकस्यैव पक्षत्वात्तदन्यस्य प्रत्यक्षस्य तन्निवर्त्यत्वं बाधितमिति अनिर्वचनीयाज्ञानमेव तादृशं सिद्धयतीत्यर्थः ।

इदानीं पक्ष आद्यविशेषणं परित्यज्य साध्ये विशेषणान्तराणि वदन् उक्तहेतोः षट् साध्यान्याह—यद्वेति । अत्रापि पक्षविशेषणकृत्यं पूर्ववदेव । कार्यत्वे सति स्वेन पक्षीकृतज्ञानेन समानाधिकरणमिच्छादि तदतिरिक्तं यत्प्रत्यक्षं तन्निवर्तकमित्येकं साध्यम् । सर्वत्रापि संस्कारप्रागभावनिवर्त्तकत्वेनार्थान्तरतावारणाय—प्रत्यक्षेति । ज्ञाने-

जन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्षनिवर्त्तकं, जन्यज्ञानाजन्यध्वंसप्रतियोगिजातीयातिरिक्तज्ञानान्यप्रत्यक्षनिवर्त्तकं, गुणत्वानधिकरणप्रत्यक्षनिवर्तकंस्वस्थितिक्षणनियतस्वविनाशसामग्रीमद्भिन्नप्रत्यक्षनिवर्त्तकमिति वा साध्यम्। तत एव तद्वत्।

**विशिष्टाभावस्य साध्यत्वान्न व्यर्थविशेषणत्वम्॥**

---

च्छादिनिवर्तकत्वेनार्थान्तरतावारणाय कार्येति। स्वसमानाधिकरणातिरिक्तेत्युक्ते बाधः। अज्ञानस्यापि स्वसमानाधिकरणत्वेन तदतिरिक्तनिवर्त्तकत्वाभावात्, तन्निवारणाय—कार्येति। अज्ञानस्य कार्यत्वाभावादेव तद्विशिष्टस्वसमानाधिकरणातिरिक्तत्वसंभवान्न बाधः। वस्तुतो दृष्टान्ते साध्यवैकल्यपरिहाराय स्वसमानाधिकरणेति ध्येयम्। परमतानुसारेण घटादिप्रागभावनिवर्त्तकमृदादिप्रत्यक्षदृष्टान्तमभिप्रेत्य साध्यान्तरमाह—कार्यत्वेति। अत्रापीच्छादिनिवर्त्तकत्वेनार्थान्तरतावारणाय—विशेषणम्।

साध्यान्तरमाह—जन्येति। जन्यज्ञानासहकृता या सामग्री तज्जन्यो यो ध्वंसः तत्प्रतियोगिजातीयान्यद् यत् ज्ञानान्यप्रत्यक्षं तन्निवर्तकमित्यर्थः। अत्र ध्वंसप्रतियोगिजातीयपदेन तादृशध्वंसप्रतियोगिवृत्तिबाह्यवृत्तिजातिमत्त्वं विवक्षितम्। तथा च न घटध्वंसजनकतत्प्रत्यक्षे साध्यवैकल्यम्। जातिरहितप्रागभावनिवर्तकमृदादिज्ञानं वाऽत्रापि दृष्टान्तः। स्वस्य विशेषणज्ञानस्य च स्वजन्यध्वंसप्रतियोगित्वात्तन्निवर्तकत्वेनार्थान्तरतावारणाय—ज्ञानान्येत्युक्तम्। इच्छादिनिवर्तकत्वेनार्थान्तरतावारणाय—ध्वंसप्रतियोगिजातीयातिरिक्तेत्युक्तम्। अज्ञानस्यापि ध्वंसप्रतियोग्यज्ञानान्तरजातीयत्वात्तदतिरिक्तनिवर्तकत्वं ज्ञाने बाधितमिति तद्वारणाय—ज्ञानासहकृतेति। अज्ञानस्य नियमेन ज्ञानसहकृतसामग्रीजन्यध्वंसप्रतियोगित्वेन तदसहकृततज्जन्यध्वंसप्रतियोगिजातीयत्वाभावान्न बाधः। सर्वध्वंसस्येश्वरज्ञानसहकृतसामग्रीजन्यत्वादप्रसिद्धिवारणाय—जन्येति।

एतदेव साध्यं प्रकारान्तरेणाह—जन्येति। जन्यज्ञानेनाजन्यो यो ध्वंसस्तत्प्रतियोगिजातीयान्यद् यत् ज्ञानान्यत्प्रत्यक्षं तन्निवर्तकमित्यर्थः। अत्रापि ध्वंसप्रतियोगिजातीयशब्दार्थः पूर्ववदेव। ज्ञानध्वंसस्य नियमेन जन्यज्ञानजन्यत्वात् ज्ञानस्य तदजन्यध्वंसप्रतियोगिजातीयातिरिक्तत्वेन तन्निवर्तकतयाऽर्थान्तरतावारणाय—ज्ञानान्येति। जिज्ञासाद्यनन्तरभाविज्ञानस्येच्छादिनिवर्तकत्वेनार्थान्तरतावारणाय—ज्ञानाजन्येत्यादि। अप्रसिद्धिवारणाय—जन्येति।

साध्यान्तरमाह—गुणत्वेति। अत्रापीच्छादिनिवर्तकत्वेनार्थान्तरवारणाय गुणत्वानधिकरणेति; सिद्धान्ते वृत्तिज्ञानस्य परभिमतपरिभाषिकद्रव्यत्वेपि स्वाभिमतगुणत्वस्यापि सत्वान्न तन्निवर्त्तकत्वेन मतद्वयेऽप्यर्थान्तरता। अपरं साध्यमाह—स्वस्थितीति। स्वस्थितिक्षणे नियता या स्वविनाशसामग्री तद्वतो भिन्नं प्रत्यक्षं तन्निवर्तकमित्यर्थः। अत्रापीच्छादिनिवर्तकत्वेनार्थान्तरतावारणाय—स्वस्थितीत्यादि विशेषणम्।

मूलाज्ञाने प्रमाणम्

**एवं ब्रह्मज्ञानेऽपि प्रयोक्तव्यम् । न चाप्रयोजकत्वम् । घटाद्यज्ञानाभावे तद्विषयभ्रमानुत्पादप्रसङ्गात् । भ्रमविषयेन्द्रियसंप्रयोगाभावेन तस्य तदजन्यत्वात्, न जानामीत्यननुभवप्रसङ्गाच्च । मूलाज्ञानानङ्गीकारे मोक्षशास्त्रानर्थक्यप्रसङ्गात् । दुःखध्वंसस्यापुरुषार्थत्वात् । तत्त्वज्ञानं विनाऽपि प्रागभावक्षयादेवोपपत्तेश्च । धर्मा-**

---

अत्र निवर्तकपदेन तन्निवृत्तौ चरमकारणत्वमभिप्रेतम् । तथा च सिद्धान्ते वृत्तिज्ञानस्य यावत्कारणनाशं स्थायित्वाभ्युपगमात् उक्तविशेषणविशिष्टस्वनिवृत्तौ स्वस्य चरमकारणत्वाभावेन न स्वनिवर्त्तकत्वेनार्थान्तरता । एवं चेष्टानपेक्षज्ञानाजन्यप्रत्यक्षनिवर्तकं चेष्टाऽजन्यकार्यातिरिक्तप्रत्यक्षनिवर्तकंचेष्टानिमित्तजातीयातिरिक्तप्रत्यक्षनिवर्तकम्, अहमनुभवविषयधर्मातिरिक्तनिवर्तकमित्येवमादि साध्यान्तरं द्रष्टव्यम् ।

तत एव तद्वदिति । बाह्यविषयजन्यप्रमात्वात् । संजिहीर्षाद्वारा ध्वंसजनकघटादिप्रत्यक्षवदित्यर्थः । जन्यज्ञानासहकृतेत्यादिसाध्यद्वये प्रतियोगिजातीयातिरिक्तपदेन बाह्यावृत्तितादृशध्वंसप्रतियोगिवृत्तिजातिमद्भिन्नत्वं विवक्षितमित्युक्तं, तन्न, बाह्यावृत्तिजातिमद्भिन्नप्रत्यक्षनिवर्त्तकमित्येतावतैव विवक्षितसिद्धेर्जन्यज्ञानेत्यादिविशेषणवैयर्थ्यमित्याशङ्क्याह—विशिष्टाभावस्येति । बाह्यावृत्तिजातिमद्भिन्नत्वापेक्षयोक्तध्वंसप्रतियोगिवृत्तितादृशजातिमद्भिन्नत्वस्यान्यत्वादस्यैवात्र साध्यत्वान्न वैयर्थ्यमित्यर्थः । एवम् अयं घट एतद्घटाज्ञानान्यान्यभावान्यः मेयत्वात्पटवत् । अज्ञानं स्वस्वेतरवृत्तित्वरहितभाववृत्तिधर्माधिकरणम् । अज्ञानत्वं स्वस्वेतरवृत्तित्वरहितभाववृत्तिवृत्तिधर्म्माधिकरणम् । भावत्वं स्वस्वेतरवृत्तित्वानधिकरणाज्ञानवृत्तिवृत्तिधर्मवत् मेयत्वात् घटवदिति महाविद्याप्रयोगोऽपि द्रष्टव्यः ।

ब्रह्मसाक्षात्कारः स्वसमानविषयभावरूपाज्ञाननिवर्तकः । अज्ञातविषयसाक्षात्कारत्वात् घटादिसाक्षात्कारवत् । न च दृष्टान्तः साध्यविकलः साधितत्वादित्यभिप्रेत्याह—एवमिति ।

उक्तानुमानानां विपक्षे बाधकतर्काभावादप्रयोजकत्वमित्याशङ्क्यां हेत्वसिद्ध्या दूषयति—न चेति । घटाद्यज्ञानाभाव इति । घटाद्यवच्छिन्नचैतन्यविषयभावरूपाज्ञानाभावे तत्र वल्मीकादिभ्रमायोगादित्यर्थः । दुष्टेन्द्रियादेवान्यथाख्यातिभ्रमोपपत्तिरित्याशङ्क्याह—भ्रमेति । एतच्चान्यथाख्यातिभङ्गे निपुणतरं वक्ष्यत इति भावः । प्रागभावस्य निरस्तत्वात्तस्य ज्ञानसामान्याविरोधित्वाच्च भावरूपाज्ञानाभावे न जानामीत्यनुभव एव न स्यादित्याह--न जानामीति । वियदाद्युपादानभूतब्रह्मविषयाज्ञानाभावे बाधकमाह—मूलेति । स्वप्रकाशस्वरूपानन्दावारकभावरूपाज्ञाननिवृत्तिव्यतिरेकेण मोक्षशास्त्रजन्यतत्त्वज्ञानसाध्याभावादित्यर्थः । किमात्यन्तिकदुःखध्वंसो ज्ञानसाध्यः बन्धहेतुधर्मादिनिवृत्तिर्वा,

**धर्मादिरूपबन्धहेतोः सत्यत्वे ज्ञानानिवर्त्यत्वप्रसङ्गात् । एतच्चाग्रे उपपादयिष्यते । भोगादेवकर्मणां क्षय इति चेत् न तथापि ज्ञानवैयर्थ्यप्रसङ्गात् । अनन्तकर्मणां युगपद्भोगासंभवात् ।**

**क्रमेण च भोगे कर्मप्रवाहस्यानुच्छेदप्रसङ्गात् । आनन्दस्यापि जन्यस्यामृतत्वायोगात् । मुक्तौ शरीराद्यभावेन तदुत्पत्त्यसंभवाच्च । नित्यानन्दाभिव्यक्तिर्मोक्ष इत्यत्राप्यभिव्यक्तिः प्रागस्ति न वा ? । अन्त्ये कार्यत्वादनित्यत्वापत्तिः, पश्चाच्च शरीराद्यभावान्नोत्पत्तिरिति मुक्तेरनित्यत्वप्रसङ्गः । प्रथमे वाऽनावृतस्य तस्येदानीं सत्त्वेऽनुपलम्भो न स्यात् । आवरणस्य स्वरूपभूते स्वधर्मे वाऽऽनन्दे वास्तवस्यासंभवात् । न हि प्रकाशमानत्वमप्रकाशमानत्वं च युगपदेकस्य वस्तुनः संभवति । न चेदानीमानन्दः संकुचितो मुक्तौ तु विस्तृत इति वाच्यम् । निरवयव आनन्दे वास्तवसंकोचादेरसंभवात् ॥**

---

सुखं वा, नित्यसुखाभिव्यक्तिर्वा, लिङ्गशरीरनिवृत्तिर्वा ? । आद्यं दूषयति—दुःखध्वंसस्येति । तस्य पश्वादिवत्सुखव्यञ्जकत्वेन सुखशेषत्वेन स्वतः पुरुषार्थत्वायोगादित्यर्थः । किंच निषिद्धाचरणेनैव सर्वदुःखप्रागभावक्षये तत एवात्यन्तिकदुःखनिवृत्तेरूपपत्तेर्न तत्ज्ञानफलमित्याह—तत्त्वज्ञानमिति । द्वितीयं दूषयति—धर्मेति । सत्यस्य ज्ञानानिवर्त्यत्वं मायाविद्याऽभेदवादे वक्ष्यत इत्याह—एतच्चेति । सत्यधर्मादेः ज्ञाननिवर्त्यत्वासंभवेऽपि भोगादेव निवृत्तिरिति लब्धावकाशस्तार्किकवराकः शङ्कते—भोगादेवेति । तर्हि तत एव कर्मनिवृत्तेरुपपत्तेर्ज्ञानवैयर्थ्यं तदवस्थमित्याह—न तथापीति । किं च किं कर्मणां युगपद्भोगेन क्षयः क्रमेण वा ? । नाद्य इत्याह—अनन्तेति । केषांचित्कर्मणां क्रमिकानेकजन्मफलकत्वात्केषांचिदनेकलोकवृत्त्युपभोग्यफलकत्वाच्च न तेषां कायव्यूहेऽपि युगपद्भोगसम्भव इत्यर्थः ॥

द्वितीयं दूषयति—क्रमेणेति ।

संचितानन्तकर्मसु केनचिन्मनुष्यशरीरारम्भस्यावश्यकत्वात् तत्रापि तादृशकर्मान्तरस्यावश्यंभावान्न कदापि कर्मतत्फलभोगोपरम इत्यर्थः । तृतीयं दूषयति—आनन्दस्येति । भावकार्यस्यानित्यत्व नियमात् जन्यसुखात्मकमुक्तिरनित्या स्यादित्यर्थः । सुखव्यक्तेरनित्यत्वेऽप्यविच्छिन्नस्तत्प्रवाह एव पुरुषार्थ इत्याशङ्क्याह—मुक्ताविति । चतुर्थमपि दूषयितुं विकल्पयति—नित्येति । प्रागिति । तत्त्वज्ञानात्प्रागित्यर्थः । नेति पक्षं दूषयति—अन्त्ये इति । अभिव्यक्तेरनित्यत्वेऽपि तत्प्रवाहोऽविच्छिन्न इत्याशङ्क्याह—पश्चाच्चेति । अभिव्यक्तिः प्रागप्यस्तीति पक्षे तद्विषयानन्दः किं तदाऽनावृत आवृतो वा ? । आद्ये दोषमाह—अनावृतस्येति । द्वितीये तदावरणं किं वास्तवम्, उतानिर्वचनीयम् । आद्यं दूषयति—आवरणस्येति । द्वितीयं तु अनिवर्चनीयाज्ञानकृत्यमिति तदभावे तदसंभव इति भावः । सर्वदाऽनावृत एवानन्दः संसारदशायां संकुचितो मुक्तौ विस्तृत इति चोद्यम् ।

**लिङ्गशरीरनिवृत्तिर्मुक्तिरिति च न साधु । तन्मात्रस्यापुरुषार्थत्वात् । तस्माद्वैदिकैरानन्दात्मरूपाविद्यानिवृत्तिर्मोक्ष इत्यवश्यमज्ञानमभ्युपगन्तव्यं तच्छास्त्रार्थवत्त्वाय । किञ्च उपादानत्वमनादि ज्ञाननिवर्त्यवृत्तिकारणत्वावान्तरधर्मत्वात् निमित्तत्ववत् । न चासमवायित्वे व्यभिचारः । तस्यैव गगनप्रसूनायमानत्वात् ।**

---

तत्र वास्तवसकोचाद्यसंभवेन दूषयति—न चेत्यादिना । अवास्तवसुखसंकोचादिस्तादृशाज्ञानं विनाऽनुपपन्न इति भावः ।

पञ्चममपवदति—लिङ्गेति ।

तन्मात्रस्येति । साक्षात्परम्परया वा सुखस्यैव पुरुषार्थत्वादित्यर्थः । एवं पराभिमतमोक्षस्य ज्ञानफलत्वासंभवाद्वेदप्रामाण्यवादिभि "रनृतेन हि प्रत्यूढाः" 'अनीशया शोचति मुह्यमानः" "ब्रह्मैव सन् ब्रह्माप्येति" इत्यादिश्रुतिपर्यालोचनया प्रत्यग्रूपब्रह्मानन्दावरक निखिलानर्थनिदानानिर्वचनीयाज्ञाननिवृत्तिरेव ज्ञानफलमित्यभ्युपेयमित्याह—तस्मादिति । भावरूपाज्ञानेऽनुमानान्तरमाह— किं चेति । मृदादिवृत्तित्वेन सिद्धसाधनतावारणायानादीति । आत्मवृत्तित्वेन सिद्धसाधनतावारणाय—ज्ञाननिवर्त्येति । अत्र यद्यपि ज्ञानपदं विनाऽप्युक्तदोषपरिहारः तथापि ज्ञाननिवर्त्यत्वघटिताज्ञानलक्षणसिद्धये तदिति द्रष्टव्यम् । इच्छाप्रागभाव उपादानत्वस्य बाधितत्वान्न तद्वृत्तित्वेनार्थान्तरताशङ्कनीया ।

कारणत्वावान्तरेति । कारणविभाजकधर्मत्वादित्यर्थः । द्रव्यत्वादौ व्यभिचारवारणाय—कारणेति । निमित्तत्वस्यानादिज्ञाननिवर्त्येच्छाप्रागभावे परस्य संमतत्वात्तदनुरोधेन दृष्टान्तमाह— निमित्तत्ववदिति । समवायस्य तुच्छत्वेन तदधीनासमवायिकारणत्वस्यापि तथात्वान्न तत्र व्यभिचार इत्याह—न चेति ।

ननु समवायाभावेऽप्युपादानप्रत्यासन्नत्वे सति कारणत्वं तन्तुसंयोगादौ विद्यमानमसमवायिकारणत्वमिति चेत्, न धर्मादेरपि सुखाद्यसमवायिकारणत्वप्रसङ्गात् । न चेष्टापत्तिः । असमवायिकारणावच्छिन्नप्रदेशे कार्यनियमेनादृष्टाश्रयमनुष्यशरीरोपहितात्मप्रदेश एवामुष्मिकसुखादिप्रसङ्गात् तन्तुरूपादेः पटरूपादिकं प्रत्यसमवायिकारणत्वायोगाच्च ।

किं च प्रत्यासत्तिः किं तादात्म्यं संयोगो वा स्वरूपसम्बन्धो वा ?। नाद्यः । भिन्नयोर्वास्तवतादात्म्यायोगात् । अवास्तवस्य तस्य निमित्तेऽपि संभवात् भेदस्याप्रामाणिकत्वादतिप्रसक्तत्वाच्च । न द्वितीयः । तन्तुसंयोगादावभावात्, निमित्तेऽपि सत्त्वाच्च । न तृतीयः । तन्तुगोचरज्ञानादेरपि पटासमवायिकारणत्वप्रसङ्गात् । तस्मादसमवायिकारणत्वं नाम न किञ्चिदिति भावः ।

तदङ्गीकृत्याप्याह—अनाश्रितेति ।

अविद्याया आवश्यकत्वम्

**अनाश्रितवृत्तिकारणविभाजकधर्मत्वादिति वा हेतुः। न चाप्रयोजकत्वम्। सर्गाद्यकार्यस्योपादानान्तरानिरूपणात् निरवयवाणूनां संयोगासंभवेनोपादानत्वासंभवात्। कार्यस्य स्वन्यूनपरिमाणद्रव्यारब्धत्वस्य कार्यारब्धत्ववदप्रयोजकत्वात् नित्याणुद्रव्ये प्रमाणाभावात्। आत्मा तु निरवयवत्वान्न परिणमते। विवर्तस्त्वविद्यां विना न संभवति। नापि पराभिमता प्रकृतिः। स्वतन्त्रप्रकृतौ मानाभावात्। परतन्त्रा साऽविद्यैव। तस्या अनादित्वात् ज्ञाननिवर्त्यत्वाच्च। ज्ञाननिवर्त्यत्वं च तस्या वक्ष्यते॥**

**जाताजाताभेदस्यानिर्वचनीयस्य तादृशाविद्यां विनाऽसंभवाच्च। ततः कारणान्तरासंभवान्नाप्रयोजकत्वम्। अत एवोपादानत्वमनादिज्ञाननिवर्त्यवृत्ति न भवति। निमित्तत्वातिरिक्तकारणत्वावान्तरधर्मत्वात् असमवायित्ववदिति प्रत्यनु-**

---

असमवायिकारणत्वस्याश्रितगुणकर्ममात्रवृत्तित्वान्न तत्र व्यभिचार इत्यर्थः। विपक्षे बाधकसद्भावान्नाप्रयोजकताऽस्येत्याह—न चेति। किं सर्गाद्यकार्यस्य परमाणव उपादानमुताऽऽत्मा किं वा प्रकृतिः?। आद्यं दूषयति—निरवयवेति। निरवयवसंयोगस्य साक्षिविवेके निरस्तत्वादसंयुक्तपरमाणूनामारम्भकत्वस्य परैरप्यनभ्युपगमान्न तेषां तदुपादानतेत्यर्थः। सर्गाद्यकार्यद्रव्यं स्वन्यूनपरिमाणद्रव्यारब्धं कार्यद्रव्यत्वात् पटवत् इत्यनुमानात्परमाणुकारणतासिद्धिरित्याशङ्क्याह—कार्यस्येति। दीर्घविस्तृतपटारब्धरज्जुद्रव्ये सागरसंभूततरङ्गादौ च व्यभिचारोऽपि द्रष्टव्यः। अनुभवसिद्धैकाज्ञानेनैव सर्गाद्यकालीनसर्वकार्योपपत्तावनन्तपरमाणुकल्पने गौरवान्न तत्र किमपि मानमित्याह—नित्येति। द्वितीयेऽपि कार्यजातं किमात्मनः परिणामः उत विवर्तः?। नाद्य इत्याह—आत्मेति। द्वितीये भावरूपाज्ञानमावश्यकमित्याह—विवर्त्तस्त्विति। असत्त्यरूपान्तरापत्तिर्हि विवर्त्तः। तथा च विश्वस्य सद्रूपात्ममात्रकार्यत्वेऽसद्रूपत्वायोगात्तत्परिणामिनी तत्समानसत्ताकाऽविद्याऽऽवश्यकीत्यर्थः। तृतीयं दूषयति—नापीति। "मायां तु प्रकृतिं विद्यात्" इति श्रुतौ मायैव प्रकृतिरित्याशङ्क्याह—परतन्त्रेति। मायाया अप्यविद्यालक्षणवत्त्वादिति हेतुमाह—तस्या इति। मायाया ज्ञाननिवर्त्यत्वमसिद्धमित्याशङ्क्य तन्मायाविद्ययोरभेदवादे निरूपयिष्यत इत्याह—ज्ञानेति।

किं च मृदादिकारणाभिन्नमेव घटकुड्याद्यनुभूयते मृदेव घटः, सुवर्णमेव कुण्डलमिति। कार्यकारणयोश्च जाताजातयोश्च विरोधेन वास्तवाभेदायोगादनिर्वचनीय एव स इति तदुपपादकतया तादृशाज्ञानमावश्यकम्। तथा द्वितन्तुकपटाभेदेनैवोत्तरपटस्योत्पत्तेस्तत्रापि जाताजाताभेदस्य वास्तवस्यासंभवादनिर्वचनीय एव स तादृशकारणं विनाऽनुपपन्न इति उपादानवादे वक्ष्यमाणत्वाच्च तदावश्यकमित्याह—जाताजातेति।

**मानं निमित्तवृत्तित्वेन सोपाधिकत्वं च परास्तम् । तर्काभावेनास्य दुर्बलत्वात् साध्याव्यापकत्वाच्च, ब्रह्मणः सर्वात्मत्वप्रतिपादकानेकश्रुत्या कारणान्तरस्य बाधितत्वाच्च । तस्मादनादिज्ञाननिवर्त्यमुपादानं नाज्ञानादन्यदबाधितमिति तत्सिद्धिः ।**

अविद्यानुमानान्तरम्

**एवं श्यामघटः पीतघटोपादानजडोपादानकः घटत्वात् पीतघटवत् । अन्यथा घटानुगतबुद्धेराकस्मिकत्वप्रसङ्गात् । अविद्यातिरिक्तघटत्वे प्रमाणाभावादित्यादि द्रष्टव्यम् । विवादगोचरापन्नमित्याचार्यानुमानमपि प्रमाणम् । तत्र जन्यसविकल्पकाजन्यचाक्षषघटप्रमाणज्ञानं स्वविषयावरणस्वनिवर्त्यवस्त्वन्तरपूर्वकमित्येकं साध्यम् ।**

**स्वविषयावरणत्वं च स्वजननायोग्यत्वं स्वनिवर्त्यत्वं स्वजन्यध्वंसप्रतियोगित्वं वस्तुपदंच स्वपरं तदन्तरं तदन्यत् । अनेन स्वस्य स्वाधिकरणक्षणोत्तर-**

---

प्रकृतहेतोरप्रयोजकत्वनिरसनमुपसंहरति—तत इति । उक्ततर्कोपोद्बलितहेतुना पक्षे साध्यनिश्चयादनेनैव दुर्बलं प्रत्यनुमानं बाध्यते । उपाधिश्च पक्षे एव साध्याव्यापक इत्याह—अत एवेति । किं च परमाण्वादिसत्यकारणमात्रजन्यत्वे प्रपञ्चस्य सत्यत्वे भेदस्यापि तथात्वाद् ब्रह्मणः सर्वात्मत्वाद्वितीयत्वपरानेकश्रुतिरुन्मत्तप्रलापः स्यात्, तदयुक्तम् । ततो न कारणान्तरं कल्प्यमित्याह—ब्रह्मण इति । उपादानत्वस्यानादिज्ञाननिवर्त्यवृत्तित्वसिद्धावपि कथमज्ञानसिद्धिरित्याशङ्क्यपरिशेषादित्याह—तस्मादिति ।

अनुमानान्तरमाह—एवमिति ।

अत्र पीतघटसमकालीनश्यामघटः पक्षः । तथा च श्यामघटावयवैरेव कालान्तरे पीतघटान्तरसंभवात्तदुपादानकत्वेन नार्थान्तरता । आत्मोपादानकत्वेनार्थान्तरतावारणाय—जडेति । अप्रयोजकतां निराकरोति—अन्यथेति । घटत्वजातिरेव घटाकारानुगतबुद्धेर्विषय इत्याशङ्क्याह—अविद्येति । जातिवादिनोऽपि तदाश्रयव्यक्तिविशेषस्यावश्यकत्वात्तद्विशेषेषूपादानतयाऽनुगताविद्याया एवैकाकारबुध्यालम्बनत्वसंभवे नानन्तजातिः कल्पनीया इत्याद्युपादानवादे वक्ष्यत इति भावः । एवमनादिभावत्वं ज्ञाननिवर्त्यवृत्ति अनात्मवृत्तित्वात् घटत्ववत्, अनादित्वं ज्ञाननिवर्त्यभाववृत्ति जडभाववृत्तित्वात् घटत्ववत्, भावत्वमनादिज्ञाननिवर्त्यवृत्ति अनादिजडवृत्तित्वात् प्रागभावत्ववदित्याद्यूहनीयमित्याह—इत्यादि द्रष्टव्यमिति । विवरणाचार्यानुमानमप्यनवद्यमित्याह—विवादेति । तत्र विवादगोचरापन्नमितिपदसूचितं पक्षविशेषमाह—जन्येति । अप्रमायां पराभिमतनिर्विकल्पके च बाधपरिहाराय—प्रमाणपदम् । पराभिमतेश्वरज्ञानव्यावृत्तये—चाक्षुषेति । अत्र स्वपूर्वसविकल्पकध्वंससमये चक्षुर्जन्यत्वमभिप्रेतम् । तथा च वक्ष्यमाणहेतोः पटज्ञा-

**क्षणत्वेन स्वपूर्वत्वमस्तीत्यर्थान्तरता निरस्ता। इदं च साध्यं प्रागभावनिवृत्तिः प्रतियोग्यतिरिक्तेति मते। तेन स्वानिवर्त्येच्छाप्रागभावादिनाऽर्थान्तरवारणम्। स्वविषयावरणेति स्वप्रागभावादिनाऽर्थान्तरत्वं वारितम्। स्वप्रागभावव्यतिरिक्त-स्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमित्यपरम्। स्वसमानाधिकरणप्रागभावः स्वप्राग-भावस्तेनेच्छाभ्रान्तिप्रागभावादिभिर्नार्थान्तरम्। आत्मत्वादिनाऽर्थान्तरतावारणाय स्वनिवर्त्येति। स्वदेशगतत्वं च स्वसमानाधिकरणत्वे सति प्रत्यक्षत्वम्। तेन स्वजनकादृष्टादिभिर्नार्थान्तरता॥**

**अथ वा एकमेव साध्यम्। अत्र च स्वदेशगतत्वं स्वाश्रये वर्तमानत्वम्। तेन संयोगादिप्रागभावपूर्वकत्वेन नार्थान्तरता। अथवाऽज्ञानस्य पराभिमतप्रागभाव-व्यावृत्तिज्ञानसमानविषयत्वज्ञाननिवर्त्यत्वज्ञानसमानाश्रयत्वानिर्वचनीयत्वसिद्धये**

---

नध्वंसोत्पत्तिसमयाधारस्थितिकघटज्ञाने न भागासिद्धिः। पराभिमतधारावाहिकव्यावृत्तये—सविकल्पकाजन्येति। सर्वज्ञानस्येश्वरसविकल्पकजन्यत्वादसंभववारणाय—जन्येति। स्वप्रागभावव्यतिरिक्तेत्यादिविशेषणैस्तावत्साध्यद्वयं विवक्षितमित्याह—स्वविषयेति॥

विशेषणत्रयस्य विवक्षितमर्थमाह—स्वविषयावरणत्वमिति।

अत्र पक्षीभूतज्ञानस्य स्वजननायोग्यत्वात् स्वजन्यध्वंसप्रतियोगित्वात् स्वोत्पत्ति-क्षणानन्तरक्षणासंबन्धित्वेन स्वपूर्वत्वाच्चार्थान्तरतावारणाय वस्त्वन्तरपदमित्याह—अनेनेति। स्वनिवर्त्येतिविशेषणकृत्यं वक्तुं वादिविशेषं प्रत्येवेदं साध्यमित्याह—इदं चेति। अस्मिन्मत इच्छाप्रागभावस्येच्छयैव निवर्त्यत्वेन ज्ञानानिवर्त्यत्वात् स्वनिवर्त्यपदेन तन्निवारणमित्याह—तेनेति। अत्र स्वप्रागभावस्य स्वनिवर्त्यत्वात्तत्पूर्वत्वेनार्थान्तरता-वारणायाऽऽद्यविशेषणमित्याह—स्वविषयेति। स्वजनकादृष्टमादिपदार्थः। प्रतियोग्येव प्रागभावनिवृत्तिरिति वादिनं प्रति स्वनिवर्त्यपदविशिष्टेन साध्यान्तरमुच्यत इत्याह—स्वप्रागभावेति। अस्मिन्मते स्वप्रागभावस्य स्वनिवर्त्यत्वाभावात्स्वनिवर्त्यपदेनैव तद्व्या-वृत्तेराद्यविशेषणं व्यर्थमित्याशङ्क्य तदर्थं वदन् तस्योपयोगमाह—स्वसमानेति। अभावा-न्यत्वात् स्वप्रागभावान्यत्वस्य भिन्नत्वान्न स्वप्रागितिवैयर्थ्यमिति मन्तव्यम्। स्वदेश-गतपदस्य स्वाधिकरणे गतं अवगतं साक्षात्कृतमित्ययमर्थोऽवगन्तव्य इत्याह—स्वदेशेति। अदृष्टादिभिरित्यादिपदेन स्वजनकनिर्विकल्पकं स्वनिवर्त्यघटादिश्च गृह्यते॥

इदानीं सर्वविशेषणविशिष्टैकसाध्योक्तावपि न दोष इत्याह—अथ वेति।

अत्रापि स्वदेशगतेत्येतदतिरिक्तविशेषणानां पूर्वोक्त एवार्थः। तैश्च यथाक्रम-मिच्छादिप्रागभावः स्वजनकादृष्टं आत्मत्वादीनि स्वयश्च व्यावर्त्यन्ते। परिशिष्टस्वदेश-गतपदस्यार्थं वदन् तद्व्यावर्त्यमाह—अत्र चेति। संयोगादीति। तन्तुसंयोगपटादिकार्य-प्रागभावानां चिकीर्षादिद्वारा संयोगादिकार्योत्पादकतन्त्वादिज्ञाननिवर्त्यत्वात्तत्पूर्वकत-

विशेषणानीत्यभिप्रायः। येन विशेषणेन विना स्वाभिमतार्थो न सिध्यति तस्यैव साध्यविशेषणत्वात्। अन्यथाऽर्थान्तरतानिवृत्तये विशेषणं नोपादीयेत। नह्युपादानापरोक्षज्ञानजन्यत्वसाध्येऽदृष्टप्रागभावेत्यादि विशेषणं विना कार्यत्वमप्रयोजकं भवति। उद्देश्यासिद्धेः प्रकृतेऽपि तुल्यत्वात्।

नीलधूमप्रतिबन्दी त्वतितुच्छा। तेन विनापि तत्साध्यवह्नेः सिद्धत्वात्। हेतुरपि स्वसमानाधिकरणविशिष्टज्ञानध्वंसोत्पत्तिसमयानाधारस्थितिकचाक्षुषसविकल्पकप्रथमालोकान्यान्यत्वादिति विवक्षितः।

---

याऽर्थान्तरतावारणाय—स्वदेशगतपदमित्यर्थः। एवं तावत् सर्वविशेषणव्यावर्त्यसत्त्वान्न कस्यापि वैयर्थ्यमित्युक्तम्। इदानीं तु एकेनापि विनोद्देश्यप्रतीत्यसिद्धेः सर्वमर्थवदित्याह—अथ वेति। यदुक्तं येन विशेषणेन विना हेतुरप्रयोजकः तेनैव साध्यं विशेषणीयमिति, तत्राह—येनेति। हेत्वप्रयोजकत्वनिवारकस्यैव साध्यविशेषणत्वे जीवो ब्रह्मप्रतियोगिकधर्मिसमानसत्ताकभेदवान् इत्यादित्वदीयप्रयोगे धर्मिसमानसत्तेत्यादिविशेषणोपादानं न स्यात्। तेन विनाऽसर्वज्ञत्वादिहेतोरप्रयोजकत्वाभावादित्याह—अभ्यथेति। किं च हैतुकैरपि क्षित्यादिकमदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोग्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं कार्यत्वादिति प्रयोगेऽदृष्टप्रागभावेत्यादि जीवातिरिक्तसिद्धय एवोपात्तं तत्तु हेतोरप्रयोजकत्वाभावायेत्याह—न हीति। तस्मात् तत्र विशेषणाभावे उद्देश्यासिद्धिमात्रं तत्तु प्रकृतेऽपि तुल्यमित्याह—उद्देश्येति। यदप्युक्तं नीलधूमजन्यवह्निप्रतीतेरुद्देश्यत्वाद्धेतावपि व्यर्थविशेषणता न स्यादिति तद् दूषयति—नीलेति।

व्याप्तिपक्षधर्मताबलेनैव हेतोर्गमकत्वात् तदनुपयुक्तविशेषणं विनाऽप्यभिमतसाध्यसिद्धेस्तद् व्यर्थमित्यर्थः। अप्रकाशितार्थप्रकाशकत्वादित्यत्र विवक्षितहेतुमाह—हेतुरपीति। स्वं पक्षीकृतज्ञानं तत्समानाधिकरणं यद्विशिष्टज्ञानं तद्ध्वंसोत्पत्तिसमयोऽनाधारो यस्याःस्थितेः तादृशस्थितिकं यच्चाक्षुषं सविकल्पकं तच्च प्रथमालोकश्च तदन्यान्यत्वादित्यर्थः; अन्धकारनिवर्तकालोकः प्रथमालोकः तदनिवर्तकालोके व्यभिचारवारणाय—प्रथमेति। असिद्धिसाधनवैकल्यपरिहाराय निर्विकल्पके व्यभिचारवारणाय च—सविकल्पकेत्यादि। अन्यान्यत्वस्य तदुभयानुगताखण्डधर्मत्वान्न व्याप्यतावच्छेदकगौरवम्। न चोपाधेरखण्डत्वे तदतिरिक्तजात्यसिद्धिरिति वाच्यम्। इष्टापत्तेः। पराभिमतसुखत्वनिर्विकल्पकजन्यसुखविषयकसविकल्पके व्यभिचारवारणाय—चाक्षुषेति।

धारायां द्वितीयादिज्ञाने व्यभिचारवारणाय ज्ञानेत्यादि। द्वितीयादिज्ञानस्य नियमेन प्रथमादिज्ञानध्वंसोत्पत्तिसमयाधारस्थितिकत्वान्न तत्र व्यभिचारः। न चैवमपीच्छाव्यवहितघटज्ञानविनाशकालोत्पन्नतद्घटज्ञाने व्यभिचार इति वाच्यम्। चाक्षुषपदेन विजातीयाव्यवधानेन चक्षुःसन्निकर्षजन्यत्वस्य विवक्षितत्वादस्य चातथात्वात्। पक्षीभूत-

**एतज्ज्ञानविषयदेशीयान्धकारस्थितिसमयास्थितिकप्रत्यक्षत्वे सति एतज्ज्ञानोत्पत्तिसमये एतद्विषयसम्बन्धित्वात् ।**

**एतद्विषयावारकनिवर्तकत्वादिति वा घटादिविषयान्धकारनिवर्तकालोको दृष्टान्तः । न चाप्रयोजकत्वम् । उक्तप्रमाणज्ञानस्य भावरूपाज्ञानविषयविषयत्वाभावे धारावाहिकद्वितीयादिज्ञानस्येवाप्रकाशितार्थप्रकाशत्वाभावप्रसङ्गात् ।**

---

ज्ञानस्यापि निर्विकल्पकध्वंसोत्पत्तिकालीनस्थितिकत्वादसिद्धिवारणाय विशिष्टेति । एवमपि पुरुषान्तरीययत्किञ्चिद्विशिष्टज्ञानध्वंसोत्पत्तिकालीनस्थितिकत्वादसिद्धिः स्यात्तद्वारणाय—स्वसमानाधिकरणेति ।

विवक्षान्तरमाह—एतज्ज्ञानेति ।

एतज्ज्ञानं पक्षीकृतज्ञानं तस्य यो विषयः तद्देशीयान्धकारस्थितिसमये अस्थितिः स्थित्यभावप्रयोजकं रूपं यस्य तत्तथा । तच्च तत्प्रत्यक्षं च तत्त्वे सति एतस्य ज्ञानस्योत्पत्तिसमये एतस्य ज्ञानस्य यो विषयः तत्संबन्धित्वादित्यर्थः । देशान्तरीयद्वितीयादिप्रमायां व्यभिचारवारणायैतद्विषयसंबन्धित्वादिति । धारागतद्वितीयादिज्ञानव्यावृत्तये एतज्ज्ञानोत्पत्तिसमय इति । न चैवमप्येतदुत्पत्तिसमय एतद्विषयसम्बन्धिपरकीयधारायां व्यभिचार इति वाच्यम् । परकीयप्रथमज्ञानस्यापि पक्षत्वेन तदुत्पत्तिकाले परकीयद्वितीयादिज्ञानस्य तद्विषयसम्बन्धित्वाभावात् । एतज्जनकनिर्विकल्पकादिनिवृत्तये प्रत्यक्षेति । एतद्विषयविषयकपरकीयानुमित्यादौ व्यभिचारवारणाय—अन्धकारेति । परकीयद्वितीयादिज्ञानस्य एतद्विषयज्ञानसमकालीनैतद्विषयविषयपरकीयानुमितिविशेषस्य तादृशान्धकारस्थितिसमयास्थितिकत्वेऽपि चाक्षुषज्ञानालोकवत्तत्प्रयोजकरूपवत्त्वाभावान्न तत्र व्यभिचारः । पक्षीकृतज्ञानस्यापि देशान्तरीयान्धकारकालीनत्वादसिद्धिवारणायैतज्ज्ञानविषयदेशीयेति । न च प्रथमालोकस्य द्वितीयाद्यालोकजन्यज्ञानकाले तद्विषयसम्बन्धित्वाभावात्साधनवैकल्पमिति वाच्यम् । प्रथमालोकजन्यज्ञानस्यैव पक्षत्वात् । यदा द्वितीयसाध्यं प्रत्युक्तहेत्वोः प्रयोगः तदा न तयोर्धाराव्यावर्तकविशेषणमुपादेयम् । तेन विनापि तत्र पूर्वज्ञाननिवर्तकतया तत्साध्यस्य सत्त्वेन व्यभिचाराभावात् ।

विवक्षान्तरमाह—एतद्विषयेति ।

इदं विशेषणमन्ययोगव्यवच्छेदपरम् । तथा च एतस्य पक्षीकृतचाक्षुषज्ञानस्य यो विषयो रूपविशिष्टद्रव्यं तन्मात्रस्य यदावारकं तन्निवृत्तौ तदन्यकारणत्वादित्यर्थः । अदृष्टेश्वरादेरन्यावारकनिवृत्तावपि हेतुत्वान्न तत्र व्यभिचारः । एतद्विषयावरकस्य स्वनिवृत्तौ कारणत्वेऽपि तदन्यत्वाभावान्न तत्रापि व्यभिचारः । एतद्विषयावारकपदेनैतद्विषयो नास्तीत्यादिव्यवहारयोग्यताप्रयोजकमुच्यते । तच्चैतज्ज्ञानप्राक्काले नियतम् । एतज्ज्ञानादेतदज्ञानं निवृत्तमित्येवमनुभूयमानमज्ञानं तन्निवर्त्तकज्ञानप्रतिबन्धकान्धकारश्च ।

**स्वप्रागभावसमानकालीनविषयविषयत्वस्योक्तद्वितीयादिबुद्धिसाधारणत्वात्, लाघवेनाप्रकाशब्दस्य प्रकाशप्रतियोगिभावविषयत्वात्, अभावत्वस्य दुर्निरूपत्वाच्च ॥**

---

तथा च तदज्ञाने भावत्वविप्रतिपत्तावपि तज्ज्ञाने तन्निवर्तकत्वस्यानुभवसिद्धत्वान्नासिद्धिः; न वा दृष्टान्ते साधनवैकल्यम्। तमसोऽभावत्वस्यापि विवरणाचार्यैरेव साधितत्वात् तस्यालोकाभावत्वप्रयुक्तसाध्यवैकल्यशङ्कापि न कार्येत्यभिप्रेत्याह—घटादीति। विपक्षे बाधकतर्काभावादप्रयोजको हेतुरित्युक्तं निरस्यति—न चेति। पक्षीभूतज्ञानस्याज्ञातार्थविषयत्वमुभयवादिसम्मतम्। तद्विषयेऽज्ञातत्वं च चिदंशे भावरूपाज्ञानविषयत्वं जडांशे तु तदवच्छेदकत्वम्। अन्यस्यानिरूपणात्। ततो भावरूपाज्ञानाभावे तदनुपपत्तिरित्यर्थः।

ननु स्वप्रागभावकालीनत्वमेव स्वविषयस्याज्ञातत्वमित्यत आह—स्वप्रागभावेति।

ननु स्वप्रतियोगिसमानाधिकरणतत्समानविषयज्ञानासमानकालीनस्वविषयज्ञानप्रागभावकालीनत्वं विषयस्याज्ञातत्वमिति चेत् न। अतीतादेरज्ञातताऽभावप्रसङ्गात्। न च तादृशप्रागभाव एवाज्ञातत्वमिति वाच्यम्। प्रमेयतया ज्ञाते घटत्वाकारेणाज्ञातताऽभावप्रसङ्गात्। न च समानविषयेऽत्र समानप्रकारकत्वमपिविवक्षितमिति वाच्यम्। तथापि प्रमेयवानिति ज्ञाते घटे तदभावप्रसङ्गात्।

ननु प्रमेयवानिति ज्ञाने घटत्वं प्रमेयतया प्रकारो न घटत्वत्वाकारेणेति चेत् न। घटत्वनिर्विकल्पकजन्यघटसविकल्पकेपि तदभावेन तदाऽप्यज्ञाततापसङ्गात्। प्रमेयवानिति ज्ञाने घटत्वविशेषणतया घटत्वताया अपि प्रतीतेश्च।

किं चाशोकग्रन्थोक्तविधया परोक्षतो ज्ञानेऽपि चन्द्रादौ न जानामीत्यनुभूयमानमज्ञातत्वं न स्यात्। न च स्वप्रतियोगिसमानाधिकरणतत्समानविषयप्रकारकप्रत्यक्षज्ञानासमानकालीनस्तज्ज्ञानप्रागभावस्तदज्ञाततेति वाच्यम्। नित्यातीन्द्रियेष्वज्ञातत्वाभावप्रसङ्गात्। किञ्च भावरूपाज्ञानविषयत्वे लघुशरीरे ऽज्ञाततापदार्थे सम्भवति, त्वदुक्तं गुरुशरीरं न तदर्थ इत्याह—लाघवेनेति। किञ्च ज्ञानप्रागभावस्याज्ञानत्वरूपत्वे यस्य यत्र पक्षेऽपि न विशेषज्ञानं तं प्रति तत्राज्ञातता न स्यात्। न च तत्र पुरुषान्तरीयज्ञानात्यन्ताभाव एवाज्ञाततेति वाच्यम्। अतिप्रसङ्गस्योक्तत्वात्। किञ्च परमते सुषुप्त्यादौ ज्ञानप्रागभावस्याज्ञानत्वनिर्वाहाय तद्विषयज्ञानतत्प्रागभावावावश्यकौ। एवं तत्प्रागभावस्यापि तन्निर्वाहाय तद्विषयज्ञानान्तरतत्प्रागभावावित्यनन्ताप्रामाणिकज्ञानतत्प्रागभावाद्यापत्तिः। किञ्च सति प्रागभावेऽयं प्रलापोऽर्थवान् सएवडुलिदुग्धप्राय इत्युक्तमित्याह—अभावत्वस्येति। प्रागभावत्वस्येत्यर्थः।

ननु प्रमाणजन्यावृतिस्तदवच्छिन्नचैतन्यं वा प्रमाणज्ञानं तत्र चक्षुर्जन्यवृत्ते रूपादिरहितविषयावच्छिन्नचैतन्यविषयत्वायोगात्कथं ततस्तद्विषयाज्ञाननिवृत्तिः वृत्त्यवच्छिन्न-

प्रमाणज्ञानस्याज्ञाननिवर्तकत्वप्रकारः

**न च प्रमाणज्ञानस्य घटतदवच्छिन्नचैतन्याविषयस्य कथमज्ञाननिवर्तकत्वं वृत्त्यवच्छिन्नचैतन्ये विषयस्यानारोपितत्वेन तदसंबन्धादविषयत्वात्, चैतन्यस्य च रूपादिहीनस्याविषयत्वादिति वाच्यम्। विषयाधिष्ठानचैतन्यस्यैव वृत्तिप्रतिबिम्बिततया तदभेदेन तत्संबन्धस्यैव तत्संबन्धत्वात् रूपादिहीनस्यैव चैतन्यस्य घटादिसत्तारूपेण सर्वप्रमाणविषयत्वात्। अत एव वृत्त्यज्ञानयोः समानाश्रयत्वमपि।**

चित्सुखाचार्यप्रोक्तं अज्ञानेप्रमाणं

**एवं चित्सुखाचार्यानुमानमपि तत्र प्रमाणम्। तत्र च जन्यसविकल्पकाजन्यदेवदत्तघटचाक्षुषप्रमाणज्ञानं पक्षः। अतो न सुखादिप्रत्यक्षे बाधः।**

**साध्ये च देवदत्तस्थत्वं प्रमाप्रागभावस्य विशेषणम्। उक्तप्रमाया देवदत्तपदार्थान्तःकरणनिष्ठत्वेन तत्प्रागभावस्यापि तत्र सत्त्वात्। प्रमात्वमेव हेतुः। न**

---

चैतन्यस्य विषयेणाध्यासिकसम्बन्धस्याप्यभावात् ततः कथं तत्प्रकाश इति चोद्यमपवदति—न चेति।

तत्र तावद् वृत्त्यवच्छिन्नचैतन्यस्य विषयासम्बन्धोऽसिद्ध इत्याह—विषयेति। विषयदेशंव्याप्योत्पन्नया वृत्त्या विषयाधिष्ठानचैतन्यस्याप्यवच्छिन्नत्वेन तदा प्रमातृप्रमाणप्रमेयचैतन्यानामेकोपाध्याक्रान्तत्वेनाभेदाद्विषयस्याधिष्ठानचैतन्येनाध्यासिकतादात्म्यवत्त्वात्तद्द्वारा प्रमात्रव्यवहितत्वादपरोक्षतया प्रकाशोपपत्तिरित्यर्थः। अनवच्छिन्नचैतन्यस्य चाक्षुषवृत्तिविषयत्वाभावेऽपि अविच्छिन्नस्यतस्य सर्वप्रमाणगम्यतया वक्ष्यमाणत्वात्तद्विषयवृत्त्या तदज्ञाननिवृत्त्युपपत्तिरित्याह—रूपादीति। वृत्त्याश्रयप्रमातृचैतन्यस्याज्ञानाश्रयाधिष्ठानचैतन्यस्य चैकोपाधिसम्बन्धेनाभेदात्तयोर्निवर्त्यनिवर्त्तकभावप्रयोजकसामानाधिकरण्यमप्युपपन्नमित्याह—अतएवेति। देवदत्तप्रमा देवदत्तगतप्रमाप्रागभावातिरिक्तानादेर्निर्वातिका प्रमात्वात् सम्मतप्रमावदित्यनुमानेऽपि परोक्तदोषोद्धारायाह—एवमिति। तत्र विवक्षितं पक्षमाह—तत्र चेति। अत्रापि धारायां द्वितीयादिज्ञाने बाधवारणाय सविकल्पकाजन्येति। असम्भववारणाय जन्येति। उत्तरविशेषणकृत्यमाह—अत इति।

यदुक्तं देवदत्तगतत्वं प्रमातत्प्रागभावयोरन्यतरस्य विशेषणम्, उत तदतिरिक्तानादेरिति तत्राह—साध्ये चेति।

यदप्युक्तं चिद्रूपदेवदत्ते प्रमातत्प्रागभावयोरसंभव इति तत्राह—उक्तेति। देवदत्तः करोति देवदत्तो भुंक्त इत्यादिप्रयोगेषु कर्तृभोक्तृरूपस्यैव तच्छब्दार्थत्वेनावगमात्कर्तृत्वादेश्च चित्तादात्म्यापन्नान्तःकरणधर्मतया तत्प्रयोजकप्रमातृत्वमपि तस्यैवेति नोक्तदोष

**च धारावाहिकद्वितीयादिबुद्धौ व्यभिचारः। तत्रापि पक्षप्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्तकतया साध्यसत्त्वात्। न च प्रमापदं व्यर्थम्। देवदत्तदुःखप्रागभावातिरिक्तस्वप्रागभावनिवर्तकतयाऽर्थान्तरत्वपरिहारार्थत्वात्। प्रमापदेन च पक्षीभूतप्रमाव्यक्तेरेव ग्रहणान्न पुनरप्यर्थान्तरता।**

**न चाप्रयोजकः। तर्काणामुपन्यस्तत्वात्। अत एव नाभाससमानता। यच्च चैत्रप्रमा चैत्रगतस्याभावातिरिक्तस्यानादेर्न निर्वर्त्तिकेत्यादि सत्प्रतिपक्षत्वं, तच्चैत्रप्रमा चैत्रगतप्रागभावनिर्वर्तिका न भवतीत्याभाससमानतयाऽनुकूलतर्काभावेन च निरस्तम्। "अविद्यायामन्तरे वर्तमानाः" "अज्ञानेनावृतं ज्ञानम्"**

---

इत्यर्थः। इदं च साध्यं प्रागभावनिवृत्तिः प्रतियोग्यतिरिक्तैवेति मते। ततश्च नेच्छाप्रागभावादिनाऽर्थान्तरता। अत्र हेतुर्यथाश्रुत एवेत्याह—प्रमात्वमेवेति। तर्हि धारायां परोक्षप्रमायां च व्यभिचार इत्यत आह—न चेति। प्रमापदस्य पक्षमात्रपरत्वात् धारादौ पक्षीकृतप्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्त्तकत्वस्य सत्त्वान्न व्यभिचार इत्यर्थः। देवदत्तगतप्रागभावातिरिक्तेत्येतावतापीष्टसिद्धेः प्रमेति व्यर्थमित्युक्तं दूषयति—न चेति। नन्वेवमपि देवदत्तगतपटप्रमाप्रागभावातिरिक्तस्वप्रागभावनिवर्तकत्वेनार्थान्तरता किं न स्यादित्यत आह—प्रमापदेनेति। पक्षीकृतप्रमाव्यक्तिष्वेकव्यक्तेरितरव्यक्तिप्रागभावातिरिक्तस्वप्रागभावनिवर्तकत्वात्। एवमितरव्यक्तिष्वप्युक्तसाध्यसंभवादर्थान्तरतेति न शङ्कनीयम्। एकप्रमाव्यक्तेरेव पक्षीकरणादित्यभिप्रेत्योक्तं - व्यक्तेरेवेति। न चैवं देवदत्तगतत्वविशेषणं व्यर्थमिति वाच्यम्। पक्षीकृतप्रमाया अधिष्ठानरूपस्वप्रागभावातिरिक्तान्तःकरणगतप्रागभावनिवर्तकत्वेनार्थान्तरतापरिहारार्थत्वात् देवदत्तगतप्रमानिवर्त्याज्ञाने देवदत्तगतत्वस्यावश्यकत्वात्तस्य चाज्ञानस्य स्वनिवृत्तिप्रागभावरूपत्वाच्च पक्षीकृतप्रमायां देवदत्तगतप्रागभावातिरिक्तनिवर्त्तकत्वं बाधितमिति प्रमापदमिति वा द्रष्टव्यम्।

पूर्वानुमानोक्तविपक्षबाधकतर्काणामत्रापि प्रसङ्गात् परोक्ताप्रयोजकत्वमपि नास्तीत्याह—न चेति।

यदुक्तं देवदत्तप्रमा देवदत्तगतप्रमाप्रागभावातिरिक्ताऽनाद्यभावनिर्वर्तिका प्रमात्वादित्याभाससाम्यमिति तदप्ययुक्तम्। तर्कोपोद्बलितत्वेन ततो वैषम्यान्निरस्तमित्याह—अत एवेति। आभाससाम्यम् अप्रयोजकत्वं च परोक्तप्रतिपक्षानुमानस्यैव, ततश्च नास्य सत्प्रतिपक्षत्वमपीत्याह—यच्चेति। भावरूपाज्ञाने श्रुतिस्मृती अपि प्रमाणयति—अविद्यायामिति। अविद्यारूपावरणे वर्त्तमानास्तदावृता अन्यल्लौकिकश्रेयोविलक्षणं स्वप्रकाशस्व स्वरूपनित्यनिरतिशयानन्दरूपश्रेयो न जानन्तीति श्रुत्यर्थः। अनिर्वचनीयाज्ञानं विनाऽन्यस्य स्वरूपतः प्रकाशतश्च प्राप्तावरकत्वायोगात्। तदेवात्राविद्यादिपदार्थः। अज्ञानेनावृतं ज्ञानमित्यत्रापि स्वप्रकाशस्वरूपभूतज्ञानावरकत्वेनोक्तमनिर्वनीयाज्ञान-

**इत्याद्यागमोऽपि तत्र प्रमाणम्। एवं त्रिगुणात्मकपरिणामिज्ञाननिवर्त्यादिविषयमायाश्रुतिरपि भावरूपज्ञाने प्रमाणम्। तस्य तदात्मकत्वात्।**

अविद्याया अनिवर्चनीयत्वम्

**तथा हि—अविद्या तावत् ज्ञाननिवर्त्याऽनिर्वचनीया सतोऽसतो वा ज्ञानानिवर्त्यत्वात्। सतोऽपि ज्ञाननिवर्त्यत्वे पटादेरपि तन्त्वादिज्ञाननिवर्त्यत्वप्रसङ्गात्। असतश्च ध्वंसाप्रतियोगित्वात्। ननु स्वाश्रयगतस्वाभावप्रमा निर्वर्तिका। अन्यथा रजताभावभ्रमादपि तन्निवृत्त्यापातात्। अभावज्ञानस्यैव भावविरुद्धत्वाच्च। न चैवं सत्यरजतस्यासत्यत्वाभावात् न निवृत्तिरिति वाच्यम्। विरोधिज्ञानमात्रस्य निवर्तकत्वे ज्ञानमात्रनिवर्त्यत्वस्यैव मिथ्यात्वप्रयोजकत्वेच तस्यापि तदापत्तेः। पटाद्याश्रयतन्त्वादौ च न पटाभावप्रमा संभवति इति चेत् न। रजताद्याश्रयशुक्तिकादावपि तदसंभवेन रजतस्यापि ज्ञानादनिवर्त्यत्वप्रसङ्गात्।**

---

मेवेति भावः। 'देवात्मशक्तिं स्वगुणैर्निगूढाम्'' ''मायां तु प्रकृतिं विद्यात्'' ''भूयश्चान्ते विश्वमायानिवृत्तिः' ''इन्द्रो मायाभिः पुरुरूप ईयते'' ''मायया ह्यन्यदिवेत्यादिश्रुतिमभिप्रेत्याह—एवमिति। अपिशब्देन ''दैवी ह्येषा गुणमयी मम माया दुरत्यया'' 'यो माययेदं पुरुरूपयाऽसृजत्'' ''त्वय्युद्भवाश्रयति यः त्रिविधो विकारो मायान्तराऽऽपतति नाद्यपवर्गयोर्यत्'' ''तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते। योगी मायाम्'' इत्यादिस्मृतिः सङ्गच्छते। मायाविद्ययोर्भेदान्मायाश्रुतिरविद्यायां न मानमित्यत आह—तस्येति। अज्ञानस्य ज्ञाननिवर्त्यत्वेनानिर्वचनीयत्वान्मायाया अपि तथात्वात्तयोरेकलक्षणवत्त्वादभेद इत्यर्थः।

तत्र तावदविद्याया ज्ञाननिवर्त्यत्वेनानिर्वचनीयत्वमुपपादयति—तथा हीति।

ज्ञाननिवर्त्येति। ज्ञानेनाज्ञानं निवृत्तमित्यनुभवात्।

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।

''तरत्यविद्यां विततां हृदि यस्मिन्'' इत्यादि वचनाच्चेत्यर्थः। सतः किं स्वविषयज्ञानान्निवृत्तिः उत स्वाश्रयज्ञानात्?। नाद्यः। आत्मनोऽपि तत्प्रसङ्गादित्यभिप्रेत्य द्वितीयं दूषयति—सतोऽपीति। सत्त्वे ज्ञाननिवर्त्यत्वानुपपत्तिश्चेत्तर्ह्यज्ञानमसदेवास्त्वित्याशङ्क्याह—असतइति। सतोऽपि ज्ञानविशेषनिवर्त्यत्वमिति शङ्कते—नन्विति। निवर्तिकेति। स्वस्येति शेषः। तत्र प्रमापदकृत्यमाह—अन्यथेति। सत्यरजताश्रये तदभावज्ञाने सत्यपि तदनिवृत्तेस्तत्प्रमैव निवर्त्तिकेत्यर्थः। अन्यज्ञानस्यान्यनिवर्त्तकत्वेऽतिप्रसङ्ग इत्याशङ्क्याह—अभावेति। ननु सत्यरजतस्य स्वाश्रये स्वाभावभ्रमादनिवृत्तिर्न तस्य प्रमात्वाभावप्रयुक्ता, किं तु स्वस्यासत्यत्वाभावादेव। तथा च स्वाश्रये स्वाभावज्ञानमात्रमेव स्वनिवृत्तौ कारणमिति चेत् न। तथा सति सत्यरजतस्यापि

नन्वसत्यस्याश्रयेऽभावप्रमा संभवतीति चेत् न। ज्ञाननिवर्त्यस्यासत्यत्वनियमाभावे शुक्तिरजतस्यापि तदसिद्धेः। किञ्च कार्याभावप्रमा नाविद्यानिवर्तिका। रजताभावप्रमायां सत्यामपि शुक्तित्वाद्यदर्शनात्। अन्यथा रजतमिदं नेति प्रत्यक्षावगते किमिदमिति जिज्ञासाविरहप्रसङ्गात्, अज्ञानाभावस्य च पूर्वमप्रतीतेः। किन्तु स्वाश्रयविशेषशुक्तित्वाद्यवच्छिन्नचैतन्यज्ञानमेव। सत्यस्याप्याश्रयज्ञानान्निवृत्तौ तत्त्वाद्विज्ञानादपि पटादिनिवृत्तिप्रसङ्गस्तदवस्थ एव॥

ननु सुहृज्ज्ञानं सत्यस्य दुःखस्य कपिलादिदर्शनं च सत्यस्य पापस्य निवर्तकमित्यन्वयव्यतिरेकाभ्यां स्मृतेश्चावगतमिति चेत् न। उत्पन्नानुत्पन्नदुःखयोः

---

तादृशज्ञाननिवर्त्यत्वापातेन तत्प्रयुक्तासत्यत्वस्याप्यापातात्। ततश्चासत्यत्वाभावादिति हेतोरसिद्ध्यापात इत्याह—न चेत्यादिना। अभावप्रमैव निवर्तिकेति पक्षे नातिप्रसङ्ग इत्याह—पटेति। ज्ञाननिवर्त्यस्यासत्यत्वनियमाभावे शुक्तिरजतस्यापि तदसिद्ध्यापाताच्छुक्तौ तदभावप्रमाया अप्यभावापातात् ततस्तन्निवृत्त्यसंभव इति दूषयति—न रजतेति।

ननु रजतस्य दोषजन्यत्वादिप्रयुक्तमेव मिथ्यात्वं, ततो नोक्तदोष इत्यभिप्रेत्य शङ्कते—नन्विति।

न तावद्दोषजन्यत्वं मिथ्यात्वप्रयोजकम्। सत्यत्वेऽपि घटादेर्दण्डादिजन्यत्ववत्तदुपपत्तेः। नाप्यर्थक्रियाऽभावप्रयुक्तं तत्। कोमलदण्डादौ तत्सत्त्वेऽप्यसत्यत्वाभावात्, ज्ञानाद्यर्थक्रियायाः शुक्तिरजतादावपि सत्त्वाच्च। नापि प्रतिपुरुषमसाधारणत्वं तत्प्रयोजकम्। द्वित्वसुखादौ तत्सत्त्वेऽप्यसत्यत्वाभावात्। नापि दाहच्छेदादिस्वोचितकारणाभावात् तन्मिथ्यात्वं तृणजन्यवन्हौ मण्यादेरिव शुक्तिजन्यरजते तस्याकारणत्वात्। तस्मात् ज्ञाननिवर्त्यत्वमसत्यस्यैवेति तदेव तत्प्रयोजकम्। ततश्च ज्ञाननिवर्त्याज्ञानस्याप्यावश्यकमसत्यत्वमित्यभिप्रेत्याह—न ज्ञाननिवर्त्यस्येति। किं चाज्ञानमपि स्वाभावप्रमयैव निवर्त्यते उत स्वकार्याभावप्रमया?। न द्वितीयः। शुक्तौ रजताभावज्ञानेऽपि शुक्त्यज्ञानस्य क्वचित्तदवस्थत्वादित्याह—किं चेति। आद्ये दोषमाह—अज्ञानेति। अज्ञानस्य यावत्सत्त्वमुपलभ्यमानत्वेन तन्निवृत्तेः पूर्वं तदभावप्रतीत्ययोगात्, तस्य सत्यत्वे तत्काले तदाश्रये तदभावप्रतीतेः प्रमात्वायोगाच्चेत्यर्थः। उक्तरीत्याऽभावज्ञानस्याज्ञानादिनिवर्तकत्वायोगादधिष्ठानज्ञानमेव तन्निवर्तकमिति परिशेषयति—किं त्विति। तर्हि तदेव सत्यस्यापि निवर्तकमस्त्वित्याशङ्क्याह—सत्यस्यापीति। सिद्धान्ते नु तत्त्वादिज्ञानस्य पटाद्युपादानभूताज्ञानाविरोधित्वान्न तन्निवर्तकनेति भावः।

ननु ज्ञाननिवर्त्यत्वं निवर्त्यस्यासत्वं नापेक्षते सत्यस्यापि तद्दर्शनादिति शङ्कते—नन्विति।

सुहृद्दर्शनानिवर्त्यत्वात् । सुखं प्रत्येव तस्य हेतुत्वात् । 'अग्निचित्कपिला सत्री' इति स्मृतेश्च न ज्ञानमात्रात्पापनिवृत्तिरर्थः । पश्यतामपि म्लेच्छानां तन्निवृत्त्यभावात्, किं तु श्रद्धाद्यङ्गविशिष्टादेव । एतेन ब्रह्मज्ञानमात्रं नाज्ञाननिवर्त्तकम् । अध्ययनश्रवणादिनियमविशिष्टस्यैव तस्य निवर्तकत्वात् । भाषाप्रबन्धादिनाऽनधीतवेदान्तजन्येनासंभावनादिप्रतिबद्धेन ज्ञानेन तदनिवृत्तेरिति नवीनोक्तं प्रत्युक्तम् ।

अध्ययनादिनियमस्य ज्ञानोत्पादहेतुत्वेनोत्पन्नज्ञानस्य तदनपेक्षणात् । अन्यथा "ज्ञानादेव तु कैवल्यम्" "नान्यः पन्था" इत्यादिमुक्त्युपायावधारणश्रुति-

---

स्मृतेरिति ।

अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्यत नित्यशः ॥

इति स्मृतेः कपिलादिदर्शनं पापनिवर्त्तकमित्यवगतमित्यर्थः । ज्ञानैकनिवर्त्त्यत्वं निवर्त्यस्यासत्त्वेन नियतम् । ज्ञानैकनिवर्त्यत्वं च ज्ञाननिवर्त्यातिरिक्तभावविशेषकारणानपेक्षज्ञानजन्यध्वंसप्रतियोगित्वं, स्वाश्रयप्रमाकालनियतध्वंसप्रतियोगित्वं वा । तथा च नासंभवः । न चेच्छादौ व्यभिचार इत्यभिप्रेत्याह—नेति । तत्र तावत् सुहृद्दर्शनं दुःखनिवर्तकमेव न भवति उत्पन्नदुःखस्य स्वज्ञाननिवर्त्त्यत्वादनुत्पन्नस्य केनापि निवर्त्तयितुमशक्यत्वादित्याह—उत्पन्नेति । सुहृद्दर्शनस्य दुःखाभावेऽन्वयादिकमपि नेत्याह—सुखमिति । पापस्याप्यग्निचिदादिज्ञानैकनिवर्त्यत्वं नोक्तस्मृत्यर्थः, किंतु विशेषकारणमपेक्ष्य तन्निवर्त्यत्वमित्याह—अग्निचिदिति । "तस्मात्पश्येत नित्यशः" इति पापनिवृत्तिकारणत्वेन दर्शनस्य विहितत्वात् विहितकरणस्याङ्गापेक्षाया आवश्यकत्वात्, विहितस्याज्ञानत्वाच्चेति भावः । मूलाज्ञाननिवृत्तेरपि विशेषकारणाधीनत्वात् ज्ञानैकनिवर्त्यत्वमसंभवीति परोक्तचोद्यमपवदति—वेदेति । एतेनेति ।

एतच्छब्दार्थमाह—अध्ययनादीति ।

विविदिषावाक्येनाध्ययनादिनियमानां विविदिषाद्वारा पुरुषार्थपर्यवसानमपि सत्तावधारणात्मकज्ञान एव विनियुक्तत्वाच्छ्रवणादीनामपि ज्ञानोद्देशेनैव विहितत्वात्, उत्पन्नज्ञानस्याविद्यानिवृत्तौ न तदतिरिक्तकारणापेक्षेत्यर्थः । तदुक्तम्—

सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते, इति । ननु "मद्भक्तः संगवर्जितः" निर्वैरः सर्वभूतेषु यः स मामेति" इत्यादिवचनाद्भक्तिरपि मोक्षहेतुरिति चेत् न । "प्रियो हि ज्ञानिनोऽत्यर्थम्" इत्यादिनाऽद्वैतज्ञानस्यैव परमभक्तित्वाभिधानात्तदन्यभक्तेर्मोक्षहेतुत्वं श्रुत्यादिविरुद्धमित्याह—अन्यथेति । अध्ययनादिनियमस्य मोक्षेऽनुपयोगे हेत्वन्तरमाह—स्त्रीशूद्रयोरिति ।

विरोधात्, स्त्रीशूद्रयोर्भाषाप्रबन्धज्ञानादप्यविद्यानिवृत्तेः वेदाधिकारिणां च तस्य निषेधाददहेतुत्वात् ।

ज्ञानस्याज्ञाननिवर्तकत्वविचारः

एवमनधीतवाक्यजज्ञानमप्यध्ययननियमविधिसामर्थ्यादेव तत्र न हेतुः । असंभावनाद्यभावः प्रतिबन्धकाभावतया ज्ञानेनापेक्ष्यते न स्वकार्यहेतुतया । प्रतिबन्धकाभावस्याहेतुत्वात् । यच्च निदिध्यासनमदृष्टद्वाराऽज्ञाननिवर्त्तकं न ज्ञानमिति, तन्न । तस्यापि "ततस्तु तं पश्यते निष्कलं ध्यायमानः" इति ज्ञानोद्देशेन विधानात्, लोके चाज्ञानस्य विनापि निदिध्यासनं ज्ञानादेव निवृत्तिदर्शनात् । "तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः" इति ध्यानस्यापि तन्निवर्तकत्वं श्रूयत इति चेत् । न, ध्यानस्य योजनाख्यसाक्षात्कारमात्रहेतुत्वेन श्रुतत्वात्, ध्यानस्यैवाज्ञाननिवर्तकत्वे योजनस्य वैय्यर्थ्यप्रसङ्गात्,

---

"स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्" ।

इत्यादिना स्त्र्यादीनामपि मुक्त्यवगमात् । तेषां च वेदश्रवणादेर्निषिद्धत्वेन तद्विचारासंभवाद्भाषाप्रबन्धादिजन्यतत्त्वज्ञानेनैवाविद्यानिवृत्तिरिति नाध्ययननियमादेस्तत्रोपयोगः । ज्ञानेन तु विविदिषाद्वारा तस्य हेतुत्वाज्जन्मान्तरीयादपि तस्मात्तदुपपत्तिरिति भावः । तर्हि त्रैवर्णिकानामपि भाषाप्रबन्धजज्ञानान्मुक्तिः किं न स्यादित्यत आह—वेदेति । "न म्लेच्छितवै नापभाषितवै" इत्यादिना वैदिकस्य भाषाप्रबन्धादिपरिशीलननिषेधात्तस्य तत्राप्रवृत्तेर्निषेधमतिक्रम्य प्रवृत्तस्य तज्जनितदुरितेन प्रतिबन्धात्सम्यक्ज्ञानानुदयादिति भावः ।

तर्ह्यनधीतवेदवाक्यश्रवणे निषेधाभावात्तज्जन्यज्ञानादपि मोक्षः स्यादित्यत आह – एवमिति ।

'व्रीहीनवहन्यात्' इत्यादिनियमविधिसामर्थ्याद्यथा तद्रहितव्रीहिभिरनुष्ठितो यागो न फलहेतुः, एवमाचार्याधीनो वेदमधीष्व इत्यादिनियमविधिसामर्थ्यात्तद्रहितवेदवाक्यजन्यं ज्ञानं न मोक्षहेतुरित्यर्थः । ननु श्रवणादिसाध्यासंभावनाद्यभावसहकृतज्ञानस्यैवाविद्यादिनिवर्त्तकत्वात् सोऽपि तत्र हेतुरित्यत आह—असंभावनेति ।

एवं मूलाज्ञानस्यापि ज्ञानैकनिवर्त्यत्वमुक्तं तदनङ्गीकुर्वाणस्यैकदेशिनो मतमनूद्य दूषयति—यच्चेत्यादिना । व्यतिरेकव्यभिचारादपि निदिध्यासनं नाज्ञाननिवृत्तौ हेतुरित्याह—लोके चेति । निदिध्यासनस्य मायानिवर्त्तकत्वश्रवणान्मायाज्ञानयोरभेदात्तदेवाज्ञाननिवर्तकमिति शङ्कते- तस्येति । अभिध्यानादित्यस्याव्यवहितपदार्थसाक्षात्कारेणान्वये संभवति व्यवहितमायानिवृत्त्यन्वयो न कल्प्य इति दूषयति—न ध्यानस्येति ।

**ध्यानस्योक्तसाक्षात्कारहेतुत्वश्रुतिविरोधप्रसङ्गाच्च सत्यपि ध्याने लोके साक्षात्कारं विनाऽज्ञानानिवृत्तेश्च । तथा च यत् ज्ञानमात्रनिवर्त्यं तदज्ञानमसत्यमेव ।**

**किञ्च परोक्षज्ञानादपरोक्षादपि स्वरूपज्ञानादपरोक्षप्रमाणज्ञानादप्यन्यविषयादविद्यानिवृत्तिर्नेत्यधिष्ठानविषयापरोक्षप्रमाणज्ञानमविद्यानिवर्तकमिति न तन्निवर्त्यस्याविद्यात्वव्यभिचारः ।**

**अथ वा ज्ञानत्वपुरस्कारेण यत् ज्ञाननिवर्त्यं तदज्ञानमेव । अज्ञानं च "न जानामि" इत्यनुभवात् तथा । पापादिकं च ज्ञानविशेषेणैव निवर्त्यमिति न व्यभिचारः । एतेन परमेश्वरविग्रहदर्शनसेतुदर्शनशाब्दब्रह्मज्ञानादेः पापनिवर्तकत्वान्न ज्ञानस्याविद्यानिवर्तकत्वनियम इति प्रत्युक्तम् । सर्वत्रापि श्रद्धादिविशिष्टस्यैव निवर्तकत्वात् ज्ञानमात्रस्यैव निवर्तकत्वे मानाभावात् ।**

---

उक्तार्थानङ्गीकारे बाधकमाह—ध्यानस्यैवेति । न केवलं योजनश्रुतिवैयर्थ्यं किं तु "ततस्तु तं पश्यते निष्कलं ध्यायमान" इत्यस्या अपि विरोधापात इत्याह—ध्यानस्येति। अन्वयव्यभिचारमप्याह–सत्यपीति । अत्राप्यव्यभिचारात् ज्ञानैकनिवर्त्यत्वस्यासत्यत्वेन नियमः सिद्ध इत्याह–तथा चेति ।

अज्ञानपदव्याख्या—असत्यमिति । अधिष्ठानविषयापरोक्षप्रमाणज्ञानत्वेन शुक्त्यादिज्ञाननिवर्त्यस्य रजतादेर्मिथ्यात्वदर्शनादज्ञानस्याप्यन्यादृशज्ञानानिवर्त्यत्वेन तादृशज्ञानेन निवर्त्यत्वान्मिथ्यात्वमित्यनयाऽपि रीत्या ज्ञानमज्ञानस्यैव निवर्तकमिति नियममुपपादयति—किं चेत्यादिना ।

ज्ञानत्वेन यत् ज्ञाननिवर्त्यं तदज्ञानमेवेति वा नियम इत्याह—अथ वेति नन्वपरोक्षज्ञानस्यैवाज्ञाननिवर्तकत्वात्कथं ज्ञानत्वेन तन्निवर्तकत्वमित्याशङ्क्य वस्तुतोऽपरोक्षवृत्त्युपहितचैतन्यस्यैव प्रतीतिबलात् ज्ञानसामान्यात्मनैवाविद्यानिवर्तकत्वमुपपादितमित्यभिप्रेत्याह—अज्ञानं चेति । पापदुःखादेः कपिलादिज्ञानत्वेनैव तन्निवर्त्यत्वान्न तत्रोक्तदोष इत्याह—पापादिकं चेति । ननु

आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् ।
पातकान्याशु नश्यन्ति किं पुनश्चोपपातकम् ॥
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ।
परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ।
न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ।

इत्यादिवचनैः पापस्यापि ज्ञाननिवर्त्यत्वावगमान्न तन्निवर्त्यस्याज्ञानत्वनियम इत्यत आह—एतेनेति ।

ज्ञाननिवर्त्यत्वस्य मिथ्यात्वप्रयोजकत्वे शङ्का परिहारौ

नन्वस्तु अज्ञानस्य ज्ञानैकनिवर्त्यत्वं तथापि न ज्ञाननिवर्त्यस्य मिथ्यात्वनियमः। मिथ्यात्वं विनाऽप्यज्ञानत्वादेव तस्य ज्ञाननिवर्त्यत्वात्। विरोधो हि निवर्त्यनिवर्तकयोरपेक्ष्यते, न तु निवर्त्यस्य मिथ्यात्वम्। प्रकाशनिवर्त्यतमसस्तदभावात्। विरोधश्च ज्ञानत्वाज्ञानत्वकृत एव। अन्यथा रजतादेरपि साक्षाज्ज्ञाननिवर्त्यत्वप्रसङ्गात्। सत्यस्य कुत्रापि प्रकाशनिवर्त्यत्वं न दृष्टमित्यपि निरस्तम्। अज्ञानादन्यत्रासत्यत्वेऽपि तददर्शनात्, अज्ञानत्वप्रयुक्तज्ञाननिवर्त्यत्वस्य सत्यत्वासत्यत्वयोस्तुल्यत्वात्। अत एव सत्यस्य ज्ञाननिवर्त्यत्वे आत्मनोऽपि ज्ञाननिवर्त्यत्वापत्तिः श्रुतोपपत्त्यर्थं बन्धस्याविद्यात्मकत्वं वर्णनीयमित्यप्यत एव निरस्तम्। सत्यस्याप्यज्ञानस्याज्ञानत्वादेव ज्ञानान्निवृत्तौ तत्कार्यबन्धस्यापि कारणनिवृत्त्यैव निवृत्तेः।

न च अज्ञानमसत्यं ज्ञाननिवर्त्यत्वात् शुक्तिरजतवदिति साध्यम्। दृष्टान्ते हेतोरभावात्। न च स्वाश्रयप्रकाशकालनियतध्वंसप्रतियोगित्वं हेतुरिति वाच्यम्।

---

अज्ञानस्य ज्ञानैकनिवर्त्यत्वमसत्यत्वाभावेऽपि स्वरूपविशेषादेवोपपद्यत इत्याशङ्कते— नन्विति।

सत्यस्यापि ज्ञानान्निवृत्तौ पटादेरपि तदापात इत्यत आह—विरोधो हीति। विरोधे सत्यस्यापि निवृत्तावुदाहरणमाह—प्रकाशेति। सत्यस्यापि ज्ञानविरुद्धत्वे पटादेरपि तद्विरुद्धत्वं किं नस्यादित्याशङ्क्याह-विरोधश्चेति। अज्ञानत्वं नाम कश्चिदखण्डो धर्मः, तत्प्रयुक्त एव ज्ञानेन विरोध इत्यर्थः। मिथ्यात्वस्यैव प्रयोजकत्वे साक्षादज्ञानस्य ज्ञानान्निवृत्तिः। तद्द्वारा रजतादेरिति विभागो न स्यादित्याह—अन्यथेति। विरोधस्याज्ञानत्वप्रयुक्तत्वादेव सत्यस्यान्यत्र ज्ञाननिवर्त्यत्वमप्रसिद्धं कथमज्ञाने कल्प्यत इति चोद्यमनवकाशमित्याह—सत्यस्येति। अज्ञानस्य सत्यत्वपक्षेऽपीदं चोद्यं तुल्यमित्याह—अज्ञानादिति। शुक्तिरजतादेरज्ञाननिवृत्त्यैव निवृत्तेरिति भावः। ज्ञाननिवर्त्यत्वस्याज्ञानत्वप्रयुक्तत्वेन तस्यासत्यत्वाद्यसाधकत्वादन्यतस्तन्निर्णयो वाच्यः, तथा च सत्ताग्राहितत्प्रत्यक्षानुरोधेन सत्यमेव तदित्यभिप्रेत्याह—अज्ञानेति। ज्ञाननिवर्त्यत्वस्याज्ञानत्वप्रयुक्तत्वादेव चोद्यान्तरमपि निरस्तमित्याह—अत एवेति। श्रुतोपपत्त्यर्थमिति। : "तथा विद्वान्नामरूपाद्विमुक्तः" "तदा विद्वान् पुण्यपापे विधूय" इति श्रुतं यद्बन्धस्य ज्ञाननिवर्त्यत्वं तदुपपत्तये इत्यर्थः। ज्ञानानन्तरं बन्धस्य निवृत्तिमात्रं श्रुतं तद्बन्धतत्कारणयोरुभयोः सत्यत्वेऽप्युपपद्यत इत्याह—सत्यस्यापीति।

प्रमाणज्ञाननिवर्त्यत्वानुपपत्त्या मिथ्यात्वसिद्धावपि तदनुमीयत इत्याशङ्कामपनुदति—न चेति।

व्यर्थविशेषणत्वेनाव्याप्यत्वादिति चेत्, उच्यते । ज्ञानं स्वसमानविषयमज्ञानं निवर्तयति । भिन्नविषययोस्तयोर्निवर्त्यनिवर्त्तकताया अदृष्टेरिति ब्रह्मज्ञाननिवर्त्यमज्ञानं तावत् ब्रह्मविषयं वक्तव्यम् । ब्रह्म च नित्यप्रकाशात्मकप्रत्यगभिन्नं भेदे प्रमाणाभावाच्छ्रुत्यादिनिषेधाच्चेत्युक्तम् । न च नित्यप्रकाशमानस्यात्मनोऽप्रकाशविषयत्वं अज्ञानविषयत्वं वास्तवंप्रभवति समानसत्ताकयोर्विरुद्धयोरेकदा एकत्रायोगात्, तथा च सद्विलक्षणमविद्याविषयत्वं वक्तव्यम् । अविद्या च यदि परमार्थः, तदा तद्विषयत्वं न मिथ्या विषयविषयिणोः सतोः विषयत्वस्य तदयोगात् । तथाचाविद्याया ज्ञाननिवर्त्यत्वसिद्धय एव तन्मृषात्वमपेक्ष्यते ।

किञ्च ब्रह्मज्ञानं विहितक्रियात्वेन नादृष्टद्वाराऽज्ञानं निवर्त्तयति । लोकेऽदृष्टं विनापि ज्ञानादज्ञाननिवृत्तेः । प्रमाणज्ञानस्य ज्ञातुरिच्छातिपातिनोऽविधेय-

---

हेतोरभावादिति । अज्ञाननिवृत्त्यैव रजतादेर्निवृत्तेरित्यर्थः । दृष्टान्ते सम्प्रतिपन्नहेतुमपि दूषयति—न च स्वाश्रयेति । व्यर्थेति । तव मते ध्वंसप्रतियोगित्वमात्रस्यासत्यत्वेन व्याप्तेरतन्मात्रस्य चाप्रयोजकत्वादित्यर्थः । 'तरति शोकमात्मवित्' "तथा विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुतिभिः बन्धस्यापि ज्ञानैकनिवर्त्यत्वावगमान्न तदज्ञानत्वप्रयुक्तमित्यभिप्रेत्याह—उच्यत इति । अस्तु तर्हि जडत्वमेव तत्प्रयोजकमित्याशङ्क्याज्ञाननिवर्तकज्ञानेन समानविषयत्वं तावदावश्यकमित्याह—ज्ञानमिति । ब्रह्मणि वास्तवमज्ञानविषयत्वमसंभवीति वक्तुं तस्य स्वप्रकाशप्रत्यग्रूपत्वमाह—ब्रह्म चेति । निषेधादिति । नान्योऽतोऽस्ति इत्यादि श्रुतिभिः अनुमानैश्च भेदस्य निषेधादित्यर्थः । ततः किमित्यत आह—न चेति । अज्ञानविषयत्वमित्यस्य व्याख्या अप्रकाशविषयत्वमिति । प्रकाशमानत्वं हि प्रकाशप्रयुक्तसंशयाद्यगोचरत्वमज्ञानविषयत्वं चाज्ञानप्रयुक्तसंशयादियोग्यत्वं तयोश्चान्यतरमिथ्यात्वमन्तरेणैकत्र समावेशोऽनुपपन्न इत्यर्थः । तत्र प्रकाशमानत्वस्याविद्यकत्वे ब्रह्मणः स्वप्रकाशत्वायोगाज्जगदान्ध्यप्रसङ्गादप्रकाशमानत्वमेवारोपितमिति वक्तव्यमित्याह—तथा चेति । अविद्याविषयत्वस्य मिथ्यात्वेऽप्यविद्यायाः किमायातमित्यत आह-अविद्येति । विषयविषयिभावस्य स्वरूपसंबन्धात्मकत्वेन संबन्धिनोरुभयोरपि सत्यत्वे तस्य मिथ्यात्वायोगादविद्याया मिथ्यात्वमावश्यकं तथा च तस्याज्ञाननिवर्त्यत्वे च तदेव प्रयोजकमित्याह—तथा चेति ।

निवर्तकज्ञानपर्यालोचनयापि निवर्त्याज्ञानस्य मिथ्यात्वं वक्तव्यमित्याह—किंचेत्यादिना ।

अद्वितीयब्रह्मणो जीवाभेदप्रमात्वेनैव ब्रह्मज्ञानं मूलाज्ञाननिवर्तकमिति वक्तुं तस्य प्रकारान्तरेण तन्निवर्तकत्वं निराकरोति—ब्रह्मज्ञानमिति । प्रमाणज्ञाने विधेरप्यसभवान्न तस्यादृष्टद्वारा निवर्तकतेत्याह—प्रमाणेति । विधिजन्यपुरुषेच्छाधीननिष्पत्तिकस्यैव विधेयत्वात्, प्रमाणज्ञानस्य च दुर्गन्धादौ तदभावेऽप्युत्पत्तेर्न तद्विधेयमित्यर्थः । किञ्च "यश्चा-

त्वात्, इच्छाजत्यस्यैव विधेयत्वात् । साक्षात्कारविधिं विनापि श्रवणादौ प्रवृत्तस्य भुञ्जानस्य तृप्तिरिव साक्षात्कारोपपत्तेश्च ब्रह्मज्ञानं न विधेयम् । तर्हि ज्ञानमेव सत्यमज्ञानं निवर्त्तयत्विति चेत् न । तत्रापि भेदविशिष्टब्रह्मज्ञानं नाद्वितीयब्रह्मणो जीवैक्याज्ञानं निवर्तयति । भिन्नविषयत्वात् । नाप्यभेदभ्रमादैक्याज्ञाननिवृत्तिः । भ्रमस्याज्ञानानिवर्त्तकत्वात्, अभेदाज्ञानस्य तद्विरुद्धभेदभ्रमजनकत्वेनाभेदज्ञानस्य भ्रमत्वायोगाच्च ।

अतोऽद्वितीयब्रह्मजीवाभेदप्रमैवाविद्यानिवर्तिका वाच्या । न च भेदादेर्वास्तवत्वे तदभेदज्ञानस्य तन्निवृत्तितः पूर्वमुत्पन्नस्य प्रमात्वं संभवति । तदा तद्विषयस्य तत्रापहृतत्वात् । न चाविद्यायाः सत्यत्वे तन्निमित्तो भेदादिरसत्योभवति । ततश्च ब्रह्माज्ञानस्य तज्ज्ञानान्निवर्त्यत्वसिद्धये मिथ्यात्वं वर्णनीयम् । एवं लोकेऽपि शुक्तिज्ञानप्रमात्वाय रजतस्य मिथ्यात्वं कल्पनीयमिति तदेव दृष्टमज्ञानादेः कल्पनीयम् । एतदेवाभिप्रेत्योक्तम्—"श्रुतोपपत्त्यर्थमेव बन्धस्याविद्यात्मकत्वं वर्णनीयम्" इति । एतेन ज्ञाननिवर्त्यत्वे लाघवादज्ञानत्वं प्रयोजकं न तु सदसद्विलक्षणत्वमिति नवी-

---

र्थादर्थो न स चोदनार्थः" इति न्यायेन श्रवणादिविधिसामर्थ्यादेवापरोक्षज्ञानसिद्धेर्न तत्र विधिरित्याह—साक्षात्कारेति । विध्यभावेनादृष्टाभावेऽपि साक्षादेव सत्यमज्ञानं निवर्त्तयत्विति शङ्कते—तर्हीति । किं सविशेषब्रह्मज्ञानं सत्याज्ञाननिवर्तकमुत निर्विशेषब्रह्मणो वा जीवाभेदज्ञानम् ? । नाद्यः । ज्ञानस्य स्वसमानविषयाज्ञाननिवर्तकत्वेन सविशेषब्रह्माविषयकमूलाज्ञाननिवर्त्तकत्वायोगादित्याह—न तत्रापीति । द्वितीयेऽपि किं तज्ज्ञानं भ्रमः उत प्रमा ? । आद्यं दूषयति—नापीति । अज्ञानस्य स्वविषयभ्रमजनकत्वात् स्वसमानविषयाभेदज्ञानस्याजन्यत्वासंभवाद् भ्रमत्वमेवानुपपन्नमित्याह—अभेदेति ।

द्वितीयं परिशेषयति—अत इति ।

ततः किमित्यत आह—न चेति । अज्ञानतत्कार्यनिवृत्तेः पूर्वं निष्प्रपञ्चब्रह्मात्माभेदज्ञानस्य तन्मिथ्यात्वं विना प्रमात्वानुपपत्तेः तत्प्रमात्वं विना ततस्तन्निवृत्त्यनुपपत्तेस्तदर्थमेवाज्ञानादेर्मिथ्यात्वमावश्यकमित्यर्थः । एवं तावदज्ञानस्य स्वप्रकाशब्रह्मविषयत्वाय तन्निवर्त्तकज्ञानप्रमात्वाय च मिथ्यात्वमावश्यकमित्युक्तम्, इदानीं विमतं मिथ्या ज्ञानैकनिवर्त्यत्वात् शुक्तिरूप्यवत् । न च साधनवैकल्यम् । स्वतन्त्रान्वयव्यतिरेकाभ्यां रजतनिवृत्तेः शुक्तिप्रमाजन्यत्वात् । नापि साध्यवैकल्यम् । शुक्तितादात्म्यापन्नरजतस्यासत्यत्वे तन्निवृत्तेः पूर्वं केवलशुक्तिप्रमाऽसंभवेन ततस्तन्निवृत्त्ययोगात् । न च हेतौ विशेषणवैयर्थ्यम् उक्तप्रकारेण मिथ्यात्वाभावे ज्ञाननिवर्त्यत्वानुपपत्तिरिति बाधकप्रदर्शनार्थत्वादित्यभिप्रेत्याह—एवमिति । उक्तन्यायमभिप्रेत्यैवाचार्यैरपि ज्ञाननिवर्त्यबन्धस्य मिथ्यात्वमुक्तमित्याह—एतदेवेति । उक्तप्रकारेण ज्ञाननिवर्त्यतयैव मिथ्यात्वस्यावश्यकत्वादि-

**नोक्तं निरस्तम् । माया च ज्ञाननिवर्त्या । "तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय"इत्यादिस्मृतेः ।**

मायायाः ज्ञाननिवर्त्यत्वाक्षेपः परिहारश्च

**नन्वत्र मायायास्तरणमात्रं प्रतीयते न तु निवृत्तिः । तरणं च सत्यां मायायां तत्कार्य्यनिवृत्तिः । न च सत्यां मायायां तत्कार्यनिवृत्तिर्न युक्तेति वाच्यम् । सत्यपि तन्तौ पटाभाववत्संसारनिमित्तकर्माभावे केवलमायाया अकिञ्चित्करत्वात् । ईश्वरानुगृहीतपुरुषेतरपुरुषेष्वेव मायाया बन्धजनकत्वादिति चेत् । न । मायाशब्देन तत्कार्य्यलक्षणानुपपत्तेः, मुक्तौ मायायां प्रमाणाभावाच्च । किमेकमुक्तिकाले परसंसारो मायायां प्रमाणं, किं वाऽनादिभावत्वम्, अथवा श्रुतिः, उत तर्तव्यत्वाभिधानानुपपत्तिः ? । नाद्यः । सर्वमुक्तौ तदभावात् । तदनङ्गीकारे च मुक्त्यर्थिप्रवृत्त्यनुपपत्तेः । न द्वितीयः । अप्रयोजकत्वात् अनादिप्रागभावस्येवा-**

---

वार्वाचीनप्रलापोऽकिञ्चित्कर इत्याह—एतेनेति । एवमविद्यायाः ज्ञाननिवर्त्यत्वेनानिर्वचनीयत्वं प्रसाध्य मायाया अपि ज्ञाननिवर्त्यत्वं तावदाह—माया चेति ।

मायाया ज्ञाननिवर्त्यत्वं न स्मृत्यर्थ इति शङ्कते—नन्विति ।

मायायां मुख्यतरणासंभवान्नाश एव तदर्थ इत्याशङ्क्याह—तरणं चेति । ननु बदरीद्रुमे च्छिन्ने पुनस्तन्मूलात्तदङ्कुरोत्पत्तिवत् मूलकारणस्य ज्ञानादनिवृत्तौ ततः पुनः संसारो भवेदित्यत आह—न चेति । किं च ईश्वरवशवर्तिन्या मायायास्तदुपेक्षितपुरुषेषु बन्धकत्वात् तदनुग्रहान्मुक्तेषु न तत्कृतो बन्ध इत्याह—ईश्वरेति । अत्र मायाकार्योपस्थापकपदाभावान्मायापदमेव लक्षणया तदुपस्थापकं वाच्यम् । तदनुपपन्नम् । मुख्यार्थपरिग्रहे बाधकाभावादिति दूषयति—न मायेति । मायाया नित्यत्वान्नाशोऽनुपपन्न इत्याशङ्क्याह—मुक्ताविति । प्रमाणाभावमेवोपपादयितुं तत्र संभावितं मानं विकल्पयति—किमेकेति । सर्वमुक्त्यनन्तरं कस्यापि संसाराभावात्स मायाया नानिवर्त्यत्वगमक इत्याह—नाद्य इति । केषां चिन्नित्यसंसारित्वात्सर्वमुक्तिरेव नेत्याशङ्क्य तथात्वे स्वस्यापि नित्यसंसारित्वशङ्कया न कोऽपि मुक्त्यर्थं प्रवर्तेतेत्याह—तदनङ्गीकार इति । अनादिभावस्यापि विरोधिसंनिपाते निवृत्त्युपपत्तेर्न तत्त्वं नित्यत्वगमकमित्याह—न द्वितीय इति । अनादिभावस्य विरोधिसन्निपात एवायुक्तः मानाभावादित्याशङ्क्याह—श्रुतिबोधितादिति । "भूयश्चान्ते विश्वमायानिवृत्तिः" इत्यादिश्रुतिबोधितात् ज्ञानादित्यर्थः । श्रुतेरभावादिति । "अक्षरात्परतः परः" इत्यत्रापि मायायाः सुषुप्तिप्रलययोरक्षरार्थत्वमनूद्यते न तु नित्यत्वं, श्रुत्यन्तरविरोधादिति भावः । परेणापि स्मृत्यन्तरे मुक्तौ मायानिषेधाङ्गीकारात् "तरत्यविद्याम्" इत्यत्रापि तन्निषेध एव ग्राह्य इत्यभिप्रेत्याह—न तत्रेति ।

नादिभावस्यापि श्रुतिबोधितान्निवृत्त्युपपत्तेः । न तृतीयः । मुक्तो मायासद्भावा-वेदकश्रुतेरभावात् । "न तत्र माया" इत्यादिस्मृत्या त्वयाऽपि वैकुण्ठे मायानिषेध-स्योक्तत्वात् ।

न तुरीयः । "तरति ब्रह्महत्याम्" इत्यादाविव विनाशेऽपि तरतिपद-प्रयोगोपपत्तेः "भूयश्चान्ते विश्वमायानिवृत्तिः" इति तन्निवृत्तिश्रुतेश्च । माया ध्वंसप्रतियोगिनी जडत्वात् । शुक्तिरजतवत् । न चासिद्धिः । "दैवी ह्येषा गुणमयी मम माया दुरत्यया" । "माययाऽपहृतज्ञाना" इत्यादिस्मृतौ तस्या गुणमयत्वादिप्रतिपादनात्, श्रुतौ च मायामुपन्यस्य 'तदेतज्जडं मोहात्मकम्' इति जडत्वप्रतिपादनात् । नन्वस्तु मायाया निवृत्तिः, सा ज्ञानादिति कुतः ? अनुमा-नस्य निवृत्तिमात्रे प्रमाणभावात् । भक्त्याऽपि तन्निवृत्तेरुपपत्तेरितिचेत् न "यस्य देवे परा भक्तिः" इत्यादिश्रुत्या—"भक्त्या मामभिजानाति" इत्यादिभगवद्वचनेन च भक्तेर्ज्ञानसाधनत्वे विनियोगात् भक्तिसाध्यज्ञानस्यैव "ततो मां तत्त्वतो ज्ञात्वा" इत्यादिना मायानिवृत्तिरूपमुक्त्युपायत्वावधारणात् "तस्याभिध्याना-द्योजनात् तत्त्वभावात्" इत्यादिश्रुतौ निदिध्यासनसाध्यसाक्षात्कारस्यैव मायानिवर्तकत्वश्रवणाच्च । तस्मात् ज्ञाननिवर्त्यत्वान्मायायाः सत्यत्वनिवृत्ता-वसत्यात्मिका साऽज्ञानान्न भिद्यते ।

"एषा माया स्वाव्यतिरिक्ताऽस्ति" इत्युपक्रम्य "माया चाविद्या च स्वयमेव भवति" इति श्रुतौ मायाविद्ययोरभेदश्रवणात् "तरत्त्यविद्यां विततात्म्" इति

---

अश्वमेधनिवर्त्यपापे तर्तव्यत्वाभिधानवत् ज्ञाननिवर्त्यमायायां तदुपपत्तेर्न चतुर्थ इत्याह—न तुरीय इति ।

तरतिप्रयोगस्यान्यथाप्युपपत्तेस्तदनित्यत्वेऽपि न मानमित्याशङ्क्याह—भूय इति । "माया प्रज्ञा तथा मेधा" इत्यादिना मायाया ज्ञानरूपत्वोक्तेर्जडत्वमसिद्ध-मित्याशङ्कायामाह—न चेति । तत्र हिरण्यगर्भबुद्धिरेव प्रज्ञादिपदैरुक्ता । मूलकारण-मायाया जडरूपसत्त्वादिगुणात्मकत्वाज्जडत्वमेवेति भावः । उक्तमानेन मायाया विनाशमात्रसिद्धेस्तस्येश्वरभक्त्याऽपि संभवान्न तस्या ज्ञाननिवर्त्यतया मिथ्यात्वसिद्धि-रित्यभिप्रेत्य शङ्कते—नन्विति । श्रुत्यादिना भक्तेर्ज्ञाने विनियोगात्तत्तो मायानिवृत्तेर-योगात् परिशेषात्सा ज्ञानादेवेत्याह—न यस्येति । किं च मायानिर्वातिका भक्तिः किं ज्ञानातिरिक्ता उत तदेव ? नाद्यः । ज्ञानस्य मुक्त्युपायत्वावधारकस्मृत्यादिविरोधा-दित्याह—भक्तिसाध्येति । द्वितीये नाममात्रविवादेऽपि मायाया ज्ञाननिवर्त्यतया मिथ्या-त्वस्यावश्यकत्वाल्लक्षणभेदाभावान्न मायाविद्ययोर्भेद इत्याह—तस्मादिति ।

उत्तरतापनीयश्रुतिरपि मायाविद्ययोरभेदे मानमित्याह—एषेति ।

"अविद्यां मायां तरति" इति मायाविद्ययोः समानाधिकृतत्वादपि तयोरभेद

स्मृतौ च मायाविद्ययोर्भेदभ्रमनिरासाय सामानाधिकरण्याच्च । भगवता नारदेन--

"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका ।
अनिर्वाच्या ततो ज्ञेया भेदबुद्धिप्रदायिनी ॥
मायैवाज्ञानशब्देन शब्द्यते मुनिसत्तम" ।

इत्यादिना मायाया अनिर्वाच्यत्वाज्ञानशब्दवाच्यत्वप्रतिपादनाच्च । तस्मात् ज्ञाननिवर्त्त्येऽनिर्वाच्ये च प्रयुज्यमानो मायाशब्दोऽज्ञानस्यैव वाचकः । एवं--

"दैवी ह्येषा गुणमयी मम माया दुरत्यया" ।

इति स्मृतौ गुणमयत्वेनावगता माया "प्रकृतेः क्रियमाणानि गुणैः कर्माणि इति स्मृतौ च प्रकृतिर्गुणात्मिकैवावगम्यते । सा चोपादानमज्ञानं न ततोऽतिरिक्ता। श्रुत्यवगतब्रह्मोपादानत्ववादे स्वतन्त्रायाः प्रकृतेरसत्त्वात् । न च गुणमयत्वान्मायैव प्रकृतिरज्ञानं तु न गुणमयमिति वाच्यम् । उपादानाज्ञानस्यापि गुणमयत्वात् ।

एवमनादिमायया सुप्त इति स्वरूपावारकत्वं मायायां श्रूयते । अज्ञानं चावारकमित्यनुभवे स्मृतौ च प्रसिद्धम् । अत आवारकविषयो मायाशब्दोऽप्यज्ञानविषय एव । अन्यथा पदार्थद्वयस्यावारकत्वकल्पने गौरवात् । एवं मिथ्या-

---

इत्याह—तरतीति । बृहन्नारदीये नारदवचनमप्युक्तार्थे प्रमाणयति—भगवतेति । मायाविद्ययोरभेदाच्छ्रुत्यादिषु मायाशब्दो भावरूपाज्ञान एव मानमिति परमप्रकृतमुपसंहरति—तस्मादिति । गुणमयत्वरूपलक्षणैक्यादपि मायाविद्ययोरभेद इत्याह—एवमिति । ननु स्मृतौ प्रकृतेरेव गुणात्मकत्वमवगम्यते न त्वज्ञानस्येत्यत आह--सा चेति । सांख्याभिमतप्रधानमेव सा किं न स्यादित्यत आह--श्रुत्यवगतेति । "यतो वा इमानि भूतानि जायन्ते" "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" इत्यादिश्रुतिस्मृतिषु ब्रह्मणो जगदुपादानत्वोक्तेः स्वतन्त्रप्रकृत्यङ्गीकारे तदसंभवात्तस्याः श्रुत्यादिबाह्यत्वेनासत्त्वमेवेत्यर्थः । पराभिमतप्रधानस्यासत्त्वेऽप्यज्ञानं न प्रकृतिः तस्य गुणात्मकत्वाभावात् किं तु गुणात्मकत्वाविशेषान्मायैव सेत्याशङ्क्याह— न चेति । अज्ञानकार्येषु गुणकार्यस्य वैचित्र्यस्य दर्शनात्तदुपादानाज्ञानस्य गुणात्मकत्वमावश्यकमित्याह—उपादानेति ।

मायाविद्ययोः स्वरूपावरकत्वसाम्यादप्यभेद इत्याह—एवमिति ।

स्मृतांविति । "अज्ञानेनावृतं ज्ञानम्" इति स्मृतावित्यर्थः । गौरवादित्युपलक्षणं स्वप्रकाशस्वरूपावरकत्वस्यानिर्वचनीयाज्ञानादन्यस्यासंभवाच्चेति द्रष्टव्यम् । अविद्याया एव मिथ्यापरिणामित्वान्मायाशब्दस्यापि तत्रैव प्रयोगात् सैव तदर्थ इत्याह--एवमिति ।

**परिणामिनि प्रयुज्यमानो मायाशब्दोऽप्यज्ञानस्यैव वाचकः। तथा हि—प्रसिद्ध-मिथ्यात्वधर्मिण्यैन्द्रजालिकक्लृप्तकरिनरतुरगादौ सार्वलौकिकः मायाशब्दप्रयोगो दृश्यते। 'माया मया सृष्टा' 'मायामसृजन्मायावी' इति प्रयोगात्। तत्र च मायाशब्दो न गजादिविषयः प्रसिद्धगजादौ तदप्रयोगात्। गजतुरगादीनां व्यावृत्तत्वाच्चानुगतमायाशब्दानभिधेयत्वात्। संभवत्यैकार्थ्ये अनेकार्थताया अन्याय्यत्वात्। तस्मात् घटादौ मृच्छब्द इव मिथ्यागजादौ तत्कारणस्वरूपविषयो मायाशब्दः मिथ्यागजादौ मायामयशब्दप्रयोगादपि तदनुगतकारणविषयो मायाशब्दः।**

मन्त्रादेः मायात्वनिरासः

**ननु मन्त्रौषधादिविशिष्टे मायाविशब्दप्रयोगान्मन्त्रादिरेव मायेति चेत्। न, तस्मिन्मायाविशब्दस्य मायाक्षोभकत्वनिमित्तत्वात्। मिथ्यागजाद्यदर्शन-दशायां मण्यादिवैशिष्ट्यदर्शनेऽपि तस्मिन्मायाविशब्दाप्रयोगात्, मायाक्षोभक-त्वज्ञानदशायां च तत्प्रयोगात्। किं च मण्यादिरननुगतो नानुगतमायाशब्दार्थः मिथ्योपादानं चाज्ञानमेव लोके क्लृप्तमिति तदेव लौकिकमायाशब्दविषयः।**

---

लोके मिथ्यापरिणामिन्येव मायाशब्दप्रयोग इत्येतदुपपादयति—तथा हीति। ननु मायावि-सृष्टहस्त्यादावेव मायापदप्रयोगात् स एव तदर्थो न तत्परिणामीत्यत आह—तत्र चेति। गजतुरगादावनुगतप्रवृत्तिनिमित्ताभावादपि तद्वाच्यतेत्याह–गजेति। अस्तु तर्हि गवादि-शब्दवदनेकार्थत्वमतआह—संभवेतीति। ननु कार्ये प्रयुज्यमानस्य कारणवाचकत्वमप्य-युक्तमित्याशङ्क्य तयोस्तादात्म्यान्न दोष इति सदृष्टान्तमाह—तस्मादिति। घटादौ मृन्मयपदप्रयोगाद्यथा तदुपादानमृच्छब्दार्थः, एवं मिथ्यावस्तुषु मायामयपदप्रयोगात्तत्प-रिणाम्येव मायापदार्थ इत्याह—मिथ्येति।

दण्डविशिष्टे 'दण्डी'तिशब्दवदौषधादिविशिष्टे मायाविशब्दप्रयोगादौषधादिरेव मायेति शङ्कते—नन्विति।

अगृहस्थे यज्ञोपवीतादिविशिष्टे 'गृही' इति प्रयोगवत् अमायाविशिष्टेऽपि माया-वीति प्रयोगोऽन्यथोपपन्न इति दूषयति—न तस्मिन्निति। यदि मन्त्रादिरेव माया तर्हि गजाद्यदर्शनेऽपि तत्र मायाविपदप्रयोगः स्यादित्याह—मिथ्यागजेति। गजादाविव मन्त्रादा-वप्यननुगमदोषस्तदवस्थ इत्याह—किं चेति। मिथ्यापरिणामिन एव मायापदार्थत्वेऽपि तदज्ञानादन्यदेवेत्याशङ्क्य मिथ्यारजतादिपरिणामित्वेनाज्ञानस्य क्लृप्तत्वान्मिथ्याहस्त्या-दावपि तदेवोपादानमित्याह—मिथ्योपादानमिति। भगवता बादरायणेनापि मिथ्यास्वप्ने मायातादात्म्याभिधानात्तदुपादानाविद्यैव मायेत्याह—सूत्रकारोऽपीति। "अथ रथान् रथयोगान्पथः सृजते" इत्यादिना स्वप्नेऽपि सृष्टिश्रवणात्स परमार्थ इति शङ्कायामाह—

**सूत्रकारोऽपि--"मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्" इति मिथ्यास्वप्ने मृद्घटन्यायेन मायाशब्दं प्रयुञ्जानो मिथ्यापरिणाम्यज्ञानमेव मायां दर्शयति। ज्ञाने च मायाशब्दोऽन्य एव। "मायावयुनं ज्ञानम्" इति निघण्टुस्मरणात्। कार्ये कारणोपचारो वा।**

**पुराणेषु तत्र तत्र मन्त्रादौ मायाशब्दप्रयोगोऽघटितकार्यजनकत्वगुणयोगात्, लोके निघण्टे च तत्र मायाशब्दाप्रयोगात्। न चैवं शुक्तिरजतादिपरिणामिन्यपि मायाशब्दप्रयोगो लौकिकानां स्यादिति वाच्यम्। साधारणासाधारणभ्रमानुकूलशक्तिनिमित्तेनैकस्मिन्नप्यज्ञाने मायाऽज्ञानशब्दयोर्व्यवस्थया प्रयोगात् धर्म्यभेदेन मायिकं रजतमित्यादिप्रयोगदर्शनात्। प्रयोगश्च ऐन्द्रजालिकप्रदर्शितो गजादिः स्वप्नोपलम्भोवाऽज्ञानोपादानकः मिथ्यात्वात् शुक्तिरजतवत्। न च हेत्वसिद्धिः। समुद्राकर्षणादेः सत्यत्वे तद्देशवर्तिप्राणिनां मरणप्रसङ्गात्। स्वप्नकृतब्रह्महत्यादेश्च सत्यत्वे तस्यैवोत्थितस्य कर्मानधिकारप्रसङ्गात्। मिथ्या-**

---

मायामात्रमिति। तत्र हेतुः कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादिति। परमार्थकार्यं प्रति क्लृप्तदेशकालादिसामग्रीपौष्कल्यं कात्स्न्र्यं तेनानभिव्यक्तस्वरूपत्वात्—क्लृप्तकारणं विना भवतः कार्यस्य सत्यत्वायोगात्। न तत्र रथा इत्यादिना तत्रैव तदभावस्योक्तत्वाच्चेति सूत्रार्थः। न चाज्ञानमेव कथं मायापदार्थः?, हिरण्यगर्भबुद्ध्यादावपि तत्प्रयोगादित्याशङ्क्य तत्र शक्त्यन्तरमेवेत्याह—ज्ञान इति। घटादौ मृच्छब्दस्येव वा वृत्तिज्ञाने मायाशब्दप्रयोग इत्याह—कार्य इति।

कथं तर्हि मन्त्रविशेषे देवताविशेषे च मायापदप्रयोग ऋषीणामित्यत आह—पुराणेष्विति।

तत्रापि शक्त्यन्तरमेव किन्न स्यादित्यत आह—लोक इति। लौकिकस्य नैघण्टकस्य वा प्रयोगस्य शक्तिकल्पकत्वात्तदुभयस्य तत्राभावाद्गौणत्वमित्यर्थः। मिथ्यापरिणामिनो मायापदार्थत्वेऽतिप्रसङ्गमपवदति—न चेति। वृक्षादौ सत्यपि पृथिवीत्वे यथा न पृथिवीपदप्रयोगः किं तु निमित्तान्तरेण वृक्षादिपदप्रयोगः एवमत्रापीत्यभिप्रेत्याह—साधारणेति। वृक्षादौ पार्थिवपदप्रयोगात्तत्कारणे पृथ्वीत्ववत् रजतादौ मायिकपदप्रयोगात् तत्कारणाज्ञानस्य मायात्वमावश्यकमित्याह—धर्मीति। तर्कितेऽर्थेऽनुमानमाह—प्रयोगश्चेति। ऐन्द्रजालिकप्रदर्शितस्य स्वप्नस्य च सत्यत्वं वदन्तं प्रत्याह—न चेति। कर्मानधिकारप्रसङ्गादिति। न च जाग्रत्कृतैव ब्रह्महत्या कर्मानधिकारहेतुः, न स्वप्नकृता। इतरथा सिद्धान्तेऽपि मिथ्यात्वाविशेषाज्जाग्रत्यपि संपादिता साऽनधिकारहेतुर्न स्यादिति वाच्यम्। स्वप्नप्रपञ्चस्य सत्यत्वे तस्य तत्रत्येन्द्रियग्राह्यत्वस्यापि तथात्वात्तस्यापि जाग्रदवस्थात्वापातात्। न च निन्द्रादिदोषजन्यत्वमेव ततो भेदकमिति वाच्यम्। सत्यत्वे

शुक्तिरजतादिकं प्रति क्लृप्ताज्ञानस्यैव तदुपादानत्वे लाघवमिति नाप्रयोजकत्वमपीति।

अनृतेन प्रत्यूढा इति श्रुतिः मानम्

एवम् "अनृतेन हि प्रत्यूढा" इति श्रुतिरपि भावरूपाज्ञाने मानम्। ऋतं सत्यं न भवतीत्यनृतमनिर्वचनीयम्। तदपि "एतं ब्रह्मलोकं न विन्दन्ति" इति पूर्ववाक्यावगतस्वापकालीनब्रह्मालाभनिमित्तमज्ञानमेव, तदन्यस्य तदा तदलाभनिमित्तत्वायोगादित्यज्ञानमनृतशब्दार्थः। न च ऋतं सत्कर्म अनृतं पापमिह विवक्षितम् "ऋतं पिबन्तौ" इत्यत्र सुकृते ऋतशब्दप्रयोगादिति वाच्यम्। सत्यवाचिनो हि ऋतशब्दस्य कर्मणि सत्यावश्यकत्वाभिप्रायेण श्रुतौ कर्मफले प्रयोगः न तु कर्मणि, सुकृतस्य लोक इति कर्मणः पृथग् ग्रहणात्। सुषुप्तावपि प्रत्यक्स्वभावात्मनः कर्मनिमित्तालाभासंभवात्। न च कर्म प्राप्तावारकम्। अज्ञानं तु विद्यमानमेवावृणोतीति तदेवानृतशब्दार्थः। उभयत्रानृतशब्दप्रयोगेऽपि 'अज्ञानेनावृतं ज्ञानम्" इत्यादिशास्त्रसिद्धावरणस्वभावस्याज्ञानस्यैव "न किञ्चिदवेदिषम्" इति परामर्शेनापि सिद्धस्य स्वप्रकाशात्मावरणयोग्यतया प्रकृते तदर्थत्वात्।

---

तस्यैवासंभवात्। सिद्धान्ते तु जाग्रत्यनुष्ठितदुरितस्याविद्यातिरिक्तदोषाजन्यत्वादर्थक्रियासमर्थत्वात् स्वप्नानुष्ठितस्य चातथात्वाद्वैषम्यमिति भावः।

अत एवाप्रयोजकताऽपि नेत्याह—मिथ्येति।

अनृतस्यावारकत्वप्रतिपादकच्छन्दोगश्रुतिरपि भावरूपाज्ञाने मानमित्याह—एवमिति।

नन्वत्रानृतं किञ्चिदावारकं प्रतीयते न त्वनिर्वचनीयाज्ञानमित्यत आह—ऋतमिति। असत्यवचनरूपानृतस्य सुषुप्तावसंभवादज्ञानादन्यस्य पूर्ववाक्योक्तप्रत्यगभिन्नब्रह्मालाभनिमित्तस्यानृतेन हीति सिद्धवन्निर्द्देशायोगाच्चेत्यर्थः। अनृतशब्देन पापस्यापि वक्तुं शक्यत्वात् तस्यावारकत्वसंभवाच्चात्रापि तदेवोक्तमित्याशङ्कामपवदति—न चेति। 'ऋतं पिबतौ' इत्यत्र ऋतशब्दो यदि सुकृतकर्म्माभिधायकः स्यात् तर्ह्यनृतशब्दः पापाभिधायकः स्यात्, न त्वेतदस्ति। तत्र सुकृतस्य स्वशब्दोपात्तत्वेन ऋतपदस्य जघन्यवृत्त्या तत्फलपरत्वादित्याह—सत्यवाचिन इति। स्वप्रकाशप्रत्यगभिन्नब्रह्मालभस्य वास्तवस्यासंभवादनिर्वचनीये च तस्मिन् सत्यस्य कर्मणो निमित्तत्वासंभवान्न कर्मणस्तदावारकत्वमपीत्याह—सुषुप्ताविति। अज्ञानस्य तु प्राप्तकण्ठचामीकराद्यावारकत्वदर्शनात्तदेवावारकत्वेनानृतपदोक्तमित्याह—अज्ञानमिति। पापस्यानृतपदार्थत्वमङ्गीकृत्यापि प्रकृते तन्न ग्राह्यं किं तु योग्यतयाऽनिर्वचनीयाज्ञानमेवेत्याह—उभयत्रेति।

**एवमजा-नीहारादिशब्दैश्च विचित्रगुणमयमावरणस्वभावमज्ञानमभिधीयते। लौकिकाजादेस्तत्रासंभावत्। ब्रह्मोपादानत्वश्रुतौ सांख्यकल्पितायाः प्रकृतेरप्यसंभवात्। अत एव "प्रकृतिं पुरुषं चैव" इत्यादिस्मृतिरपि भावरूपाज्ञाने प्रमाणम्। एवं मिथ्यार्थानुपपत्तिरपि भावरूपाज्ञाने मानम्। भावकार्यस्य रजतादेरुपादानान्तरासंभवात्। न चानिर्वचनीयस्य भावविलक्षणत्वान्न भावत्वमिति वाच्यम्। सद्विलक्षणत्वेऽपि पराभिमताभावव्यावृत्तभावत्वस्य पृथिव्यादिवद्रजतेऽपि सत्त्वात्।**

नवीनमतवर्णनम्

**एतेन सोपादानत्वे भावत्वमेव तन्त्रं न त्वभावविलक्षणत्वं गौरवात्, प्रत्युत रजतादेर्मम मतेऽसत्त्वेन त्वन्मते च सद्विलक्षणत्वेन निरुपादानत्वमेव।**

**एवमज्ञानं च सद्विलक्षणं नोपादानम्। मिथ्यारजतज्ञानमपि सद्विलक्षणम्, त्वन्मते निरुपादानम्। अस्मन्मते च सत्त्वादात्माऽन्तःकरणं वोपादानम्। एवं सोपादानत्वे कार्यस्य कदाचित्सत्त्वं प्रयोजकं, न त्वसद्विलक्षणत्वं कदाचित्सदिति**

---

"अजामेकां लोहितशुक्लकृष्णां, नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति, यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते, आकाशे तदोतं च प्रोतं च" इत्यादिश्रुतयोऽपि भावरूपाज्ञाने मानमित्याह—एवमिति।

गुणत्रयात्मकस्वतन्त्रप्रकृतिरेवाजादिपदार्थ इत्याशङ्क्याह—ब्रह्मेति। स्वतन्त्रप्रकृतेः श्रुतिबाध्यत्वादेव स्मृतिष्वपि प्रकृतिशब्दो भावरूपाज्ञानपर इत्याह—अत एवेति। अर्थापत्तिमप्याह—एवमिति। सत्यस्य मिथ्यारजतादिपरिणामितयोपादानत्वायोगाच्छुक्त्यादेरननुगतत्वेनानुपादानत्वात्-तस्यापि सत्यत्वे तत्कार्ये मिथ्यात्वायोगाच्च शुक्त्यादेरपि मिथ्यात्वे तदुपादानतयाऽनिर्वचनीयाज्ञानस्यावश्यकत्वात्ततः परिशेषोपवृंहिता मिथ्यारजतादिभावकार्यानुपपत्तिरूपार्थापत्तिर्भावरूपाज्ञाने मानमित्यर्थः। भावाभावविलक्षणत्वस्यैवानिर्वचनीयत्वान्मिथ्यारजतादेर्भावकार्यत्वमेव नेति चोद्यं सिद्धान्तानवबोधविजृम्भितमिति दूषयति—न चेति। मिथ्यारजताद्युपादानत्वेनानिर्वचनीयाज्ञानं कल्प्यमित्यत्र परोक्तचोद्यमनूद्यापवदयति—एतेनेत्यादिना। गौरवादिति। तथा च मिथ्यारजतादेर्नोपादानापेक्षेति भावः। न केवलं सोपादानत्वे प्रयोजकाभावः किं तु मतद्वयेऽपि निरुपादानत्वे प्रयोजकमस्तीति तदेव युक्तमित्याह—प्रत्युतेति।

अज्ञानस्याप्युपादानत्वयोग्यताऽभावात्तत्त्वेन तन्न कल्पनीयमित्याह—एवमिति।

तर्हि रजतज्ञानोपादानतयाऽज्ञानं कल्प्यत इत्याशङ्क्याह—मिथ्यारजतेति। मिथ्यारजतादेर्निरुपादानत्वमेवेत्यभिप्रेत्य सोपादानत्वे प्रयोजकान्तरमाह—एवमिति। सदिति

प्रतीयमानत्वं वा गौरवात् । तुच्छस्यापि शब्दाभासादिना प्रतिभाससंभवाच्च । न च रजतादिज्ञानस्य सत्यत्वेऽर्थस्यापि तथात्वप्रसङ्गः । चरमसाक्षात्कारस्य मिथ्यात्वेऽपि ब्रह्मणः सत्यत्ववत्साक्षिणः सत्यत्वेऽपि साक्ष्यस्य मिथ्यात्ववच्चोपपत्तेः । किं च यद्यदनुविद्धतया प्रतीयते तत्तदुपादानम् । न च रूप्यं तत् ज्ञानं वाऽज्ञानमिति भाति इति नवीनोक्तं निरस्तम् । किमबाधितत्वापरपर्य्यायास्तित्वात्मकं भावत्वं कार्यस्य सोपादानत्वे प्रयोजकम्, उतान्यादृशम् ? नाद्यः । तस्यात्ममात्रधर्मत्वात् । पुष्पादिषु प्रतीयमानशैत्यस्यापि लाघवाज्जलधर्मत्ववत् घटादिषु प्रतीयमानास्तित्वस्य तदधिष्ठानात्मगतत्वात् ।

"अस्तीत्येवोपलब्धव्य" इति श्रुतेरात्मनोऽस्तित्वावधारणात् "यस्मात्परं नापरमस्ति किं चित्" "न ह्यस्ति द्वैतसिद्धिः" इत्यादिश्रुत्या भेदप्रपञ्चस्यास्तित्वनिषेधाच्च । त्वदभिमतध्वंसस्यापि सोपादानत्वप्रसङ्गात् । द्वितीयमपि किं सत्ताजात्याश्रयत्वं स्वरूपविशेषसत्तावत्त्वं वा, अस्तीतिप्रतीयमानत्वं वा,

---

प्रतीयमानत्वस्य प्रयोजकत्वेऽतिप्रसङ्गमाह—तुच्छस्येति । स्वमते रजतज्ञानस्य सत्यत्वादात्मादिरुपादानमित्युक्तं, तदयुक्तम् ज्ञानस्य सत्यत्वे विषयस्यापि सत्यतापातः अन्यत्र तथा दर्शनादित्याशङ्क्य ज्ञानज्ञेययोरन्यतरमिथ्यात्वेऽप्यन्यतरसत्यत्वं तवापि संमतमिति परिहरति—न च रजतेति । अज्ञाने उपादानलक्षणाभावादपि न तद्रजताद्युपादानमित्याह—किं चेति । यदुक्तं सोपादानत्वे भावत्वमेव तन्त्रमिति, तत्तावद्विकल्पयति—किमिति । बाधाभावात्मकभावत्वस्यात्ममात्रता कार्यमात्रेऽभावान्न तत्सोपादानत्वे प्रयोजकमित्याह —नाद्य इति । अस्तित्वस्यात्ममात्रधर्मत्वे घटादिषु कथं तत्प्रतीतिरित्याशङ्क्य तस्या अन्यथोपपत्तिमाह—पुष्पादिष्विति । पुष्पेषु शैत्यकल्पने गौरवात् तत्र प्रतीयमानं शैत्यं यथा तदनुगतजलधर्म एवेति कल्प्यते, एवं घटादिषु पृथक् सत्त्वाङ्गीकारे गौरवात् तदनुगतात्मसत्तैव तत्तादात्म्याद्घटादिषु प्रतीयत इत्यर्थः ।

वस्तुतः तत्सत्तैवात्मनि भ्रान्त्या प्रतीयत इति किं न स्यादित्याशङ्क्य श्रुतिविरोधमाह—अस्तीति ।

अबाध्यत्वरूपास्तित्वस्य सोपादानत्वप्रयोजकत्वेऽतिप्रसङ्गमप्याह—त्वदभिमतेति । अन्यादृशमित्येतदपि विकल्पयति—द्वितीयमपीति । सत्ताजातिमत्त्वमेव भावत्वमित्येतदव्याप्त्या दूषयति—नाद्य इति । न च भावत्वस्य लक्षणतया नैतद्विवक्षितं किं तु कार्यस्य सोपादानत्वप्रमापकतयेति वाच्यम् । अनिर्वचनीयरजतादेरपि पारिभाषिकसत्ताजातिमत्त्वसंभवेनेष्टापत्तेरिति भावः । स्वरूपविशेषरूपत्वस्यास्तीति प्रतीयमानत्वस्य च कार्यध्वंसेऽपि सत्त्वात्तस्यापि सोपादानत्वापात इत्याह-द्वितीयेति । किं च स्वरूपविशेषसत्त्वं नाम बाधायोग्यत्वमेव तदन्यद्वा ? । न द्वितीयः । तदनिरूपणादित्याह—बाधेति । नाद्यः । कार्यमात्रे तदभावादिति भावः । अस्तीतिप्रतीयमानत्वस्य तन्त्रत्व इष्टापत्तिमप्याह—

**नञर्थानुल्लिखितधीविषयत्वं वा, द्रव्याद्यन्यतमत्वं वा ? । नाद्यः । सामान्यादेरभावत्वप्रसङ्गात् द्वितीयतृतीययोर्ध्वंसस्यापि सोपादानत्वप्रसङ्गात् । बाधायोग्यत्वव्यतिरिक्तस्वरूपसत्ताभावाच्च, शुक्तिरजतस्याप्यस्तीति प्रतीयमानत्वाच्च । इतरद् द्वयमभावविलक्षणत्व एव पर्यवस्यति । अन्यथाऽपि नास्माकमनिष्टम् ।**

**एवं कारणस्याप्युपादानत्वे तदेव प्रयोजकम् । रजतादेः सद्विलक्षणत्वेन निरुपादानत्वमित्यप्यत एव निरस्तम् । भावकार्यत्वस्यैव सोपादानत्वे प्रयोजकत्वात् । सद्विलक्षणत्वस्यैव निरुपादानत्वप्रयोजकत्वे परमते सतो ध्वंसस्य सोपादानत्वप्रसङ्गात् । एवं कारणस्यानुपादानत्वेऽपि न सद्विलक्षणत्वं प्रयोजकं किं त्वभावत्वमेव । अन्यथा प्रागभावस्याप्युपादानत्वप्रसङ्गात् । न च कार्यस्य सोपादानत्वे कदाचित्सत्त्वं प्रयोजकमिति वाच्यम् । परमते ध्वंसस्यापि कदाचित्सत्त्वात् । कदाचित्सत्त्वे सति भावत्वं प्रयोजकमिति चेत् । न, भावत्वस्यैव लाघवेन प्रयोजकत्वात् ।**

---

शुक्तीति । नञर्थानुल्लिखितधीविषयत्वमित्यत्र नञर्थानुल्लेखिधीविषयत्वं च तद्विलक्षणस्वरूपमेव अतिरिक्तविषयताया अनिरूपणात्, एव द्रव्याद्यन्यतमत्वमित्यत्रादिपदेन परिगृहीते अभावातिरिक्ते गुणादौ द्रव्ये वाऽभावान्यत्वातिरिक्तस्यानुगतस्यान्यतमत्वस्यानिरूपणादुभयत्राप्यभावान्यत्वमेव तन्त्रमिति पर्यवस्यति । तथा च त्वयैव गौरवमुररीकृतमित्यभिप्रेत्याह—इतरदिति । अभावान्यत्वातिरिक्तभावत्वस्य कथञ्चिन्निरूपणेऽपि तस्य शुक्तिरजतादावपि संभवादिष्टापत्तिरित्याह—अन्यथाऽपीति ।

यदुक्तमज्ञानं सत्त्वरहितत्वान्नोपादानमिति, तत्राह—एवमिति ।

तदेवेति । अभावव्यावृत्तभावत्वमेवोपादानत्वे प्रयोजकं न तु सत्त्वम्, तस्योक्तप्रकारेणानिरूणादित्यर्थः । यदप्युक्तं-मतद्वयेऽपि सत्त्वाभावाद्रजतादेर्निरुपादानत्वमेव युक्तमिति, तद्दूषयति—रजतादेरिति । ननु निरुपादानत्वप्रयोजकसद्विलक्षणत्वस्यापि सत्त्वाद्रजतादेर्निरुपादानत्वं किन्न स्यादिति चेत् न अभावत्वस्यैव तत्प्रयोजकत्वेन तस्य तत्प्रयोजकत्वासिद्धेरित्यभिप्रेत्य तदङ्गीकारे बाधकमाह—सद्विलक्षणत्वस्येति । सोपादानत्वप्रसङ्गादिति । कार्यस्य निरुपादानत्वप्रयोजकाभावे सोपादानत्वस्याऽऽवश्यकत्वादित्यर्थः । अनुपादानत्वे सद्विलक्षणत्वस्य प्रयोजकत्वात्ज्ञानस्यापि तथात्वान्नोपादानत्वमित्याशङ्क्याह—एवमिति । सद्विलक्षणत्वस्यैवानुपादानत्वप्रयोजकत्वे पराभिमतप्रागभावे तदभावादनुपादानत्वायोगात्स्वकार्यं प्रत्युपादानता स्यादित्याह—अन्यथेति । सोपादानत्वे परोक्तप्रयोजकान्तरमपि निराकरोति—न चेति ।

ननु भावत्वमात्रस्याऽऽत्मादावपि सत्त्वात्तावन्मात्रं न सोपादानत्वप्रयोजकं किं तु कार्यत्वमपि । तथा च सत्तावत्त्वे सति कार्यत्वमेव तत्प्रयोजकं किं न स्यादित्यत आह—न च सत्तेति ।

न च सत्ताश्रयत्वे सति कार्यत्वं सोपादानत्वप्रयोजकमिति वाच्यम्। आत्मस्वरूपातिरिक्तघटादिसत्ताया निरस्तत्वात्। अन्यथा सत्ताश्रयत्वं सत्ताश्रयत्वे सति कार्यत्वं च निमित्तत्वे सनिमित्तत्वे च प्रयोजकमिति ध्वंसोऽपि निमित्तं निमित्तजन्यो वा न स्यात्। किंचित्कालं सतः सर्वदा सत्त्वनियमस्योक्तत्वाच्च। तस्माच्छुक्तिरजतादेरभावविलक्षणभावकार्यत्वान्यथानुपपत्त्योपादानकारणं सिद्ध्यति। तच्चोपादानं नात्मा। सन्मात्रोपादानत्वे कार्यस्यापि सत्त्वप्रसङ्गात्, तस्य निरवयवत्वेन परिणामायोगाच्च। शुक्तिशकलकाचादेरननुगतत्वेनानाश्रयत्वेन चोपादानत्वायोगात्। तच्च लाघवादनादीति परिशेषादज्ञानमेव। तदुक्तम्—यच्चानादि स्वयं मिथ्या मिथ्योपादानं तदज्ञानमिति।

यच्च—यद्यदनुविद्धतया प्रतीयते तत् तदुपादनमिति, तदसत्। लाघवेन यद्धि यदनुविद्धं तत्तदुपादानं न तु प्रतीतिपर्य्यन्तमपेक्षितम्। गौरवात्। रजतादिकं चानुगतजडात्मिकाविद्यानुविद्धमिति तदुपादानम्। अन्यथाऽऽरम्भवादे त्र्यणुके द्व्यणुकस्य परिणामवादे दध्नि क्षीरस्य पृथिव्यादौ च प्रकृतेरनुपादानत्वप्रसङ्गात्।

---

कार्यस्य सोपादानत्वे सत्ताश्रयत्वस्य प्रयोजकत्वे कारणस्य निमित्तत्वे कार्यस्य सनिमित्तत्वे च तस्य प्रयोजकत्वापातेन तवानिष्टं स्यादित्याह—अन्यथेति। सतः कार्यत्वमप्यनुपपन्नमित्याह - किंचिदिति। शुक्तिरजतादेरुपादानं विनाऽनुपपत्तिमुक्तां निगमयति—तस्मादिति। तदुपादानं परिशेषादज्ञानमेवेति वक्तुं संभावितोपादानान्तरमपवदति—तच्चेति। किमात्माऽधिष्ठानतयोपादानं परिणामितया वा?। आद्ये परिणामितयोपादानान्तरमावश्यकमित्यभिप्रेत्य द्वितीयं दूषयति—सन्मात्रेति। परिणामस्य परिणामिसमसत्ताकत्वनियमादित्यर्थः। कूटस्थात्मनः परिणाम एवायुक्त इत्याह—तस्येति। तर्हि सावयवं शुक्तिः काचादि वोपादानमित्यत आह—शुक्तीति। शुक्त्यादेरननुगतत्वात्काचादेः चक्षुराद्याश्रयस्य रजताद्यनाधारत्वाच्च न तदुपादानतेत्यर्थः। तथाऽप्यनिर्वचनीयं किं चित्कार्यमेव तदुपादानमस्त्वित्याशङ्क्याह—तच्चेति। मिथ्यारजताद्युपादानतया यत् क्लृप्तमनाद्यनिर्वचनीयं तदज्ञानमेवेत्यत्राचार्यसंमतिमाह—तदुक्तमिति।

यदुक्तं रजतादेरज्ञानानुविद्धतया प्रतीत्यभावान्न तदुपादानमिति, तदनूद्य दूषयति—यच्चेत्यादिना।

नन्विति। यद्यदनुविद्धं तत्तत्कारणमुपादानमित्येतावत एवोपादानलक्षणत्वात् प्रतीयत इत्येतद् व्यावर्त्याभावाद् व्यर्थमित्यर्थः। रजताद्युपादानाज्ञाने च तल्लक्षणमस्तीत्याह—रजतादिकमिति। अज्ञानत्वाकारेणानुगता जडात्मिका या अविद्या तत्परिणामतया तदनुविद्धमित्यर्थः। ननु तदनुविद्धतया प्रतीयमानत्वं तदुपादानत्वव्यापकं, रजतादौ च तदभावान्नाज्ञानोपादानत्वमिति चेत् न अप्रयोजकत्वेनोक्तव्याप्त्य-

यत्तु रजतज्ञानस्यात्माऽन्तः करणं वोपादानमिति, तन्न। अन्तःकरणस्य केवलस्य जडत्वेन ज्ञानानाश्रयत्वात्, इन्द्रियसंप्रयोगासहकृतत्वाच्च। न च मिथ्यार्थे ज्ञानमात्रसमयवर्तिनि चक्षुरादिसंयोगोऽस्ति। एवमात्मनोऽभ्रान्तत्वप्रसङ्गात्, अन्तःकरणगतभ्रान्तेरात्मन्यारोपेऽपि, तस्याप्यारोपस्यान्तःकरणगतत्वादात्मन्यवभासायोगात्। आत्मनश्च ज्ञानात्मनो ज्ञानसमवायित्वस्य साक्षिविवेके निरस्तत्वात्।

रजतज्ञानसत्यत्वनिरासः

यत्तु रजतज्ञानस्य सत्यत्वेऽपि नार्थस्य सत्यत्वमिति, तदसत्। अर्थस्यासत्यत्वे तत्संप्रयोगाजन्यस्य जन्यप्रत्यक्षरजतज्ञानस्य सत्यत्वायोगात्। क्लृप्तकारणं विना भवतः कार्यस्य स्वप्नरथादिवन्मिथ्यात्वनियमात्। न च—एवं शुक्तिरजतस्य सोपादानत्वे सकर्तृकत्वापत्तिः। न च तत्रेश्वरः कर्ता। वियदादेरिव साधारणत्वप्रसङ्गात्। न च जीवः। तस्य तदुपादानगोचरकृत्यभावात्, इति

---

भावादित्यभिप्रेत्य तदभ्युपगमे बाधकमाह—अन्यथेति। एवं स्वमतमुपपाद्य परमतं दूषयितुमनुवदति—यत्त्विति। तत्र तावदन्तःकरणं न ज्ञानाश्रयः जडत्वाद्घटवत्, इतरथा तस्य करणत्वानुपपत्तेरित्यभिप्रेत्याह—अन्तःकरणस्येति। भ्रान्तिज्ञाने कारणाभावेन तदसम्भवादपि नान्तःकरणं तदुपादानमित्याह—इन्द्रियेति। संप्रयोगाभावमेवाह—न चेति। ज्ञानमात्रसमयवर्तिनीति सिद्धान्तमभिप्रेत्योक्तम्। परमतेऽप्यसति देशान्तरादिस्थिते वा रजतादौ संप्रयोगो न संभवतीति भावः। भ्रान्तेरन्तः करणगतत्वे आत्मनि तदभावेन तदधीनबन्धोऽपि तत्र न स्यादित्यभिप्रेत्याह—एवमिति। आत्मनि वस्तुतो भ्रान्त्यभावेऽपि तदारोपोऽस्तीत्याशङ्क्य तदारोपस्यान्यथाख्यातिरूपस्यान्तःकरणगतत्वेनात्मनो भ्रान्तता न स्यादित्याह—अन्तःकरणेति। तर्ह्यात्मैव भ्रान्तिसमवायिकारणमित्याह—आत्मनश्चेति।

रजताद्यर्थस्यासत्यत्वेऽपि तद्विषयचाक्षुषज्ञानं सत्यमिति यदुक्तं, तदनूद्य दूषयति—यत्त्वित्यादिना।

अर्थाभावात्संप्रयोग एवासत्य,ः ज्ञानं तु सत्यं किन्न स्यादित्याशङ्क्यैन्द्रियकप्रत्यक्षत्वावच्छेदेनेन्द्रियसन्निकर्षस्य कारणत्वेन क्लृप्तत्वात्तदसत्यत्वे तत्कार्यस्याप्यसत्यत्वमावश्यकमित्याह—क्लृप्तकारणमिति। ननु यत्सोपादानं तत्सकर्तृकमिति नियमाच्छुक्तिरजतादेरपि सोपादानत्वे सकर्तृकत्वं स्यात्। न चेष्टापत्तिः। तत्रेश्वरस्य जीवस्य वा कर्तृत्वानुपपत्तेः, इति चेत् न। उभयकर्तृत्वस्यापि संभवादित्याह—न चैवमिति। तत्रेश्वरकर्तृकत्वपक्ष उक्तदोषं परिहरति—तव मत इति। नवीनेन स्वप्नसृष्टेः परमार्थत्वेनाङ्गीकारात् जीवस्य तदा तदनुकूलकृत्यभावादीश्वरकर्तृकत्वेऽपि प्रतिपुरुषमसाधारण्यवत्तार्किकमते सुखादेरिष्टज्ञानादिमात्रजन्यस्य जीवकर्तृकत्वायोगादीश्वर-

**वाच्यम् । तव मते स्वप्नस्येव वैशेषिकादिमते सुखादेरिव सिद्धान्तेऽन्तःकरणस्ये-श्वरकर्तृकस्याप्यसाधारणत्वाविरोधात्, सुखादेरिव रजतादेरपि वृत्तिमदन्तः-करणावच्छेदेन प्रमातृचैतन्याभिन्नचैतन्यगतत्वाच्च ।**

**जीवकर्तृकत्वेऽपि न दोषः । अविद्याकार्ये कृतिर्न हेतुरिति न तदुपादान-गोचरकृत्याश्रयत्वं किं तु कार्यानुकूलोपादानेक्षितृत्वम् । तच्चाधिष्ठानसामान्य-ज्ञानाश्रये जीवेऽप्यस्तीति ।**

ब्रह्मणो जगतुपादानत्वेनाज्ञानकल्पनम्

**एवं ब्रह्मणो जगदुपादानत्वं श्रुतं भावरूपाज्ञानं कल्पयति । निरवयवस्य निर्विकारस्य ब्रह्मणः स्वतस्तदसंभवात् । न च प्रकृतिरेवोपादानं न ब्रह्मेति वाच्यम् । ब्रह्मोपादानत्वस्योपपादयिष्यमाणत्वात् । स्वतन्त्रप्रकृतौ मानाभावाच्च ।**

**अस्तु ब्रह्म उपादानम्, अविद्या किं करिष्यति ? । न च निष्कलस्य ब्रह्मणो विकारानुपपत्तिः । तात्त्विकविकाराभावेऽपि कल्पितविवर्त्ताधिष्ठानत्वोपपत्तेरिति चेत् । न, सन्मात्रब्रह्मकार्यस्य कल्पितत्वानुपपत्तेः । कार्यस्य परिणामिसमान-**

---

कर्तृकत्वेऽप्यसाधारण्यवच्छुक्तिरजतादेरपीश्वरकर्तृकत्वेऽपि तदुपपत्तिरित्यर्थः । स्वमतेऽ-प्यसाधारण्यमुपपादयति—सुखादेरिवेति । दुःखादेर्यथा तत्तदन्तःकरणोपहितासाधारण-प्रमातृचैतन्येऽध्यासादसाधारण्यम्, एवमिदमाकारवृत्तिरूपेण परिणतान्तःकरणोप-हितत्वेन प्रमातृचैतन्याभेदेनाभिव्यक्ते विषयावच्छिन्नचैतन्ये रजतादेरध्यासाद-साधारण्यमित्यर्थः ॥

जीवकर्तृकत्वपक्षमभ्युपपादयति—जीवेति ।

तदनुकूलकृत्यभावात् जीवो न कर्त्तेत्युक्तं दूषयति—अविद्येति । चेष्टावत्कृतिरपि कार्यविशेषे हेतुः न तु तद्वत्त्वं कर्तृत्वमिति तृतीये वक्ष्यते इति भावः । किन्तर्हि कर्तृत्वमित्यत आह—किं त्विति । कार्यानुकूलं यदुपादानेक्षितृत्वं तदेव कर्तृत्वमित्यर्थः । इदं च कर्तृत्वं जीवस्यापि रजतादावस्तीत्याह—तच्चेति । श्रुतार्थानुपपत्तिरपि भाव-रूपाज्ञाने मानमित्याह—एवमिति । अविद्यां विना ब्रह्मण उपादानत्वानुपपत्तिं स्फोरयति—निरवयवस्येति । स्वतस्तदसंभवादिति । परिणामितयोपादानत्वासंभवादित्यर्थः । अधिष्ठान-तयोपादानत्वं तु मिथ्यापरिणाम्यविद्यां विनाऽनुपपन्नमिति भावः । "यतो वा इमानि भूतानि जायन्ते" इत्यादेर्ब्रह्मस्तुत्यर्थत्वात् स्मृतिप्रसिद्धा प्रकृतिरेव जगदुपादानमित्यत आह—न चेति । श्रुतावजामायाऽव्यक्तादिशब्दानामविद्यापरत्वात्स्मृतेश्च मूलप्रमाणसापेक्ष-त्वेन स्वातन्त्र्येण कस्य चिदर्थस्यासाधकत्वात् स्वतन्त्रप्रकृतिरेवाप्रामाणिकी, कुतस्तस्या जगदुपादानत्वमित्याह—स्वतन्त्रेति ।

ब्रह्मोपादानत्वमभ्युपेत्याविद्यायास्तत्रोपयोगाभावात्तदर्थं सा न कल्पनीयेति चोदयति—अस्त्विति ।

**सत्ताकत्वात्। ब्रह्मणो निर्विकारत्वश्रुतिविरोधप्रसङ्गात्। चिदानन्दरूपस्य ब्रह्मणोऽविद्यां विना जडदुःखात्मकप्रपञ्चतादात्म्यानुपपत्तेश्च, ब्रह्ममात्रकार्यत्वे जडत्वस्याऽऽकस्मिकत्वप्रसङ्गाच्च। न च विकारस्याविद्यापरिणामत्वे ब्रह्मोपादानत्वभङ्गप्रसङ्ग इति वाच्यम्। तस्याप्युपादानत्वात्। सत्यानृतात्मकप्रपञ्चस्य सत्यानृतोपादानकत्वनियमात्। द्विविधमुपादानत्वं परिणामित्वं तत्सत्ताप्रदत्वं च। तत्राद्यमज्ञानस्य द्वितीयं तु सत्यज्ञानानन्दात्मकब्रह्मणः। यद्यदनुविद्धं जायते तत्तदुपादानं वियदादिकार्यवर्गश्चैतन्यसत्तानुविद्धो जडानुविद्धश्च जायत इत्युभयस्याप्युपादानलक्षणलक्षितत्वाच्च।**

**अत एव कार्यस्य ब्रह्मोपादानत्वे ब्रह्मसमानसत्ताकत्वं स्यादिति निरस्तम्। परिणामस्य परिणामिसमानसत्ताकत्वस्यैव वक्तव्यत्वात् तदुभयसत्ताया ब्रह्मात्मकत्वाच्च। एवमात्मनः स्वप्रकाशब्रह्मस्वरूपानवभासानुपपत्तिरपि भावरूपाज्ञाने**

---

ब्रह्मणः स्वत उपादानत्वे विकारित्वापातेन कौटस्थ्यहानिरित्याशङ्क्य तद्विकारस्यापारमार्थिकत्वात् तदुपादाने न निर्विकारत्वहानिरित्याह—न चेति। मिथ्यापरिणाम्यज्ञानाभावे भावकार्यस्य परिणामिनं विनाऽनुपपत्तेः ब्रह्मण एव तत्परिणामित्वं वाच्यम्। ततश्च परिणामस्य परिणामिसमसत्ताकत्वाद्विकारस्य पारमार्थिकत्वापातात् ब्रह्मणो निर्विकारत्वश्रुतिपीडा स्यादिति परिहरति—न सन्मात्रेति। किं च सन् घट इति सदभेदानुभवात्कार्यकारणयोः संबन्धान्तरानिरूपणाच्च तयोस्तादात्म्यमावश्यकम्। तस्य च वास्तवस्यासंभवादनिर्वचनीयमेव तदिति तदुपपादकतयाऽपि तादृश्यविद्याऽभ्युपेयेत्याह—चिदानन्देति। स्वप्रकाशब्रह्ममात्रोपादानत्वे प्रपञ्चे जडत्वमपि न स्यादित्याह—ब्रह्मेति। अविद्याया जगदुपादानत्वे तयैव तदुत्पत्तिसंभवात्तत्र ब्रह्मणोऽप्युपादानत्वं गौरवादयुक्तमित्याशङ्क्य ब्रह्मोपादानत्वस्यापि श्रुत्यादिप्रमितत्वेन प्रामाणिकत्वान्नोक्तदोष इत्याह—न चेति। अविद्याकार्येऽपि सत्तादात्म्यानुभवात्तदुपादानत्वमावश्यकमित्याह—सत्यानृतेति। अविद्यावद् ब्रह्मणोऽप्युपादानत्वे तद्वदेव विकारित्वापात इत्याशङ्क्य परिणामिन एव सर्वत्र विकारित्वं न त्वधिष्ठानस्येत्यभिप्रेत्योपादानद्वैविध्यमाह—द्विविधमिति। किं चाविद्याब्रह्मणोरुभयोरप्युपादानलक्षणवत्त्वात् उपादानत्वमावश्यकमित्याह—यद्यदनुविद्धमिति। यत्कारणतादात्म्यापन्नमित्यर्थः। तथा च न रूपादावतिव्याप्तिः।

प्रपञ्चस्य मिथ्याज्ञानोपादानत्वेन मिथ्यात्वं चेत् सत्यब्रह्मोपादानतया सत्यत्वं किं न स्यादिति चोद्यमप्ययुक्तमित्याह—अत एवेति।

अतःशब्दार्थमाह—परिणामस्येति। शुक्तिरजतादेरधिष्ठानसमसत्ताकत्वाभावादित्यर्थः। ब्रह्मस्वरूपसत्ताया एवाज्ञानतत्कार्ययोरवभासादज्ञानवत्तत्कार्यमपि मिथ्यैवेत्यभिप्रेत्याह—तदुभयेति। जीवस्य स्वप्रकाशब्रह्मस्वरूपाभेदसंशयाद्यन्यथाऽनुपपत्तिरूपार्था-

**मानम्। प्रतिबन्धकेन विना स्वप्रकाशात्मकब्रह्मस्वरूपानवभासायोगात् । न च ब्रह्मणो जीवभेदादेव तदनवभासः । तस्य निरस्तत्वात् । अविद्यातिरिक्तेन प्राप्तावरणायोगात्। आवरणस्वरूपं च वक्ष्यते। एवं मोक्षशास्त्रोपदेशानुपपत्तिरपि भावरूपाज्ञाने मानम् । तन्निवृत्त्यतिरिक्तोपदेशसाध्यप्रयोजनाभावादित्युक्तम् । तस्मात्प्रत्यक्षानुमानागमार्थापत्तिभिर्भावरूपाज्ञानं सिद्धम्।**

व्यावहारिकत्वनिर्वचनम्

**एतच्चाज्ञानं व्यावहारिकं न प्रातीतिकम् । स्यादेतत्--किमिदं व्यावहारिकत्वं प्रातीतिकत्वं वा ? । न तावत् स्वसत्ताव्यापकज्ञानविषयत्वं स्वज्ञानव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वं वा प्रातीतिकत्वं, स्वसत्ताकालीनाभावप्रतियोगिज्ञानविषताकत्वं व्यावहारिकत्वम् । आद्ययोरज्ञानसुखादावतिव्याप्तेः द्वितीयस्य तत्रैवाव्याप्तेः। सुखादेः साक्षिणा ज्ञायमानस्यैवोत्पत्तेः।**

---

पत्तिरपि तत्र मानमित्याह--एवमिति। अनुपपत्तिमेवोपपादयति--प्रतिबन्धकेनेति। आवारकेणेत्यर्थः। स्वप्रकाशस्यापि ब्रह्मणो वस्तुतो जीवभिन्नत्वादनवभास इत्यन्यथोपपत्तिं निराकरोति—न चेति। प्रत्यगभिन्नस्यापि ब्रह्मणस्तमोगुणादिनाऽऽवृतत्वादनवभास इत्याशङ्क्याविद्यातिरिक्ततमोगुणे मानाभावात्कर्मणश्च प्राप्तावारकत्वनिरासादित्यभिप्रेत्याह—अविद्येति। नन्वविद्याया वा कथमावारकत्वं तत्कृतावरणस्य दुर्निरूपत्वादित्याशङ्क्यात्रैवान्त्यवादे वक्ष्यत इत्याह—आवरणेति। मोक्षशास्त्रजन्यज्ञानस्य सप्रयोजनत्वानुपपत्तिरूपार्थापत्तिरपि तत्र मानमित्याह—एवमिति। दुःखध्वंसादिरेव ज्ञानफलमित्याशङ्क्य तद्बहुधा निरस्तमित्याह—तन्निवृत्तीति। इयता प्रबन्धेनोपपादितं भावरूपाज्ञानं निगमयति--तस्मादिति।

अनिर्वचनीयाज्ञानस्य व्यावहारिकत्वादिसन्देहे निर्णयमाह—एतच्चेति।

अत्र व्यावहारिकत्वं प्रातीतिकत्वं च न सत्त्वान्तरं, किं तु स्वतः सत्ताशून्यानामधिष्ठानसत्तयैव सद्वदवभासमानानां जडानामिदं व्यावहारिकम्, इदं प्रातीतिकमिति व्यवस्थितपरीक्षकव्यवहारायावान्तरवैलक्षण्यमात्रम्। तच्च वैलक्षण्यं स्वभिमतमेवेति वक्तुं तत्र स्वयूथ्येन संभावितं तत्पूर्वपक्षिमुखेनोद्भाव्य दूषयितुमुपक्रमते—स्यादेतदित्यादिना। स्वसत्तेति। यदा स्वसत्ता तदा स्वविषयज्ञानमित्येवं व्यापकज्ञानविषयत्वमित्यर्थः। स्वज्ञानेति। यद्विषयज्ञानाभावो यदा तदा तद्विषयाभाव इत्येवं व्यापकाभावप्रतियोगित्वं रजतादेः प्रातीतिकत्वमित्यर्थः। स्वसत्तेति। स्वसत्ताकाले यदा कदाचिद्विद्यमानाभावप्रतिप्रतियोगि यत् ज्ञानं तद्विषयत्वयोग्यत्वं घटादेर्व्यावहारिकत्वमिति नेति पूर्वेणान्वयः। तत्र हेतुमाह—आद्ययोरिति। उक्तप्रातिभासिकत्वलक्षणयोरित्यर्थः। अज्ञानादिसाक्षिणस्तत्सत्ताव्यापकत्वात्स्वविशेषितसाक्ष्यभावकाले स्वस्याप्यभावाच्चेत्यर्थः। व्यावहारिक-

ननु सुखादिरपि प्रातीतिक एवेति चेत् न । तथा सति रजतादेरिवेच्छादेरपि स्वोचितकार्याजनकत्वप्रसङ्गात् । सुखार्थं यागाद्यननुष्ठानप्रसङ्गाच्च । शुक्तिरजतादाविव कस्यापि तत्र मिथ्यात्वबुद्ध्यभावाच्च । न च ज्ञाननियतसत्ताकत्वं प्रातीतिकत्वव्याप्तम् । अप्रयोजकत्वात्, उक्तप्रतिकूलतर्कपराहतत्वाच्च । नापि व्यवहारकाले बाध्यत्वं प्रातीतिकत्वं, तत्कालेऽबाध्यत्वम् व्यावहारिकत्वम् । स्वप्नेऽव्याप्त्यतिव्याप्तेः, प्रातीतिकस्यापि ब्रह्मज्ञानजन्यस्य तस्य व्यवहारकालेऽबाध्यत्वात् । स्वप्नस्यानवच्छिन्नचैतन्याधिष्ठानस्य मूलाज्ञानकार्यत्वात् ।

न च स्वप्नस्य गजाद्यभाववद्देशावच्छिन्नमधिष्ठानमिति व्यवहारकाले एव तज्ज्ञानसंभवाद्बाध इति वाच्यम् । बाह्यदेशसामान्यस्य स्वप्ने ग्रहणासंभवेन

---

लक्षणस्यापि दोषमाह—द्वितीयस्येति । अव्याप्तिमुपपादयति—सुखादेरिति । स्वसत्ताकाले कदापि स्वविषयाज्ञानाभावादित्येवकारार्थः ।

आज्ञानसुखादेरपि प्रातीतिकत्वान्नोक्तातिव्याप्त्यव्याप्ती इति शङ्कते—नन्विति ।

स्वगतधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छिन्नं कार्यं स्वोचितकार्यं तदजनकत्वं प्रति प्रातीतिकत्वस्य व्याप्यत्वादिच्छादेरपि प्रातितिकत्वे तद्व्यापकमपि स्यादित्याह—न तथेति । किं च प्रातीतिकस्य क्रियासाध्यत्वाभावात् सुखादेरपि तथात्वे तन्न स्यादित्याह—सुखार्थमिति । प्रातिभासिकस्य श्रुतिमनपेक्ष्यैव मिथ्यात्वनिश्चयदर्शनादज्ञानादेश्च तदभावनियमान्न प्रातीतिकत्वमित्याह—शुक्तीति । ननु स्वविषयज्ञानकाले एव सत्त्वं रजतादौ प्रातीतिकत्वेन व्याप्तम् । ततश्च व्याप्यवत्यज्ञानादौ व्यापकं प्रातीतिकत्वमावश्यकमित्याशङ्क्यानुकूलतर्काभावात् प्रतिकूलतर्कबाधादुत्पन्नविनष्टे तादृशे घटे व्यभिचाराच्च नैवं व्याप्तिरित्याह—न चेति । व्यवहारकाल इति । अज्ञानादेर्व्यवहारकाले बाधाभावान्नोक्तातिव्याप्त्यादिरिति भावः । अत्र किं सविलासाऽविद्यानिवृत्तिर्बाधः । मिथ्यात्वनिश्चयो वा ? । आद्ये आह—स्वप्नेति । प्रातीतिकलक्षणस्याव्याप्तेर्व्यावहारिकलक्षणस्यातिव्याप्तेरित्यर्थः । तदुभयमुपपादयति—प्रातीतिकस्येति । अबाध्यत्वादिति । स्वप्नरूपेण परिणताज्ञानानिवृत्तेरित्यर्थः । ननु जाग्रत्कालात्स्वप्नमूलमज्ञानमपि निवर्त्ततामित्याशङ्क्य मूलाज्ञानस्यैव स्वप्नोपादानत्वात्, तस्य ब्रह्मज्ञानादन्यतो निवृत्त्ययोगादित्यभिप्रेत्याह—स्वप्नस्येति ।

ननु स्वप्नस्य नानवच्छिन्नचैतन्यमधिष्ठानं येन मूलाज्ञानं तदुपादानं स्यात्, किं तु यत्र देशे स्वप्नगजादिरनुभूयते तदवच्छिन्नचैतन्यमेव तदधिष्ठानम् । तथा च तद्गतावस्थाज्ञानमेव गजाद्युपादानमिति जाग्रति तज्ज्ञानात्सविलासाज्ञाननिवृत्तिरुपपद्यत इति शङ्कामपवदति—न चेति ।

स्वप्नेऽनारोपितबाह्यदेशस्यैवाभावादिति भावः । उक्तमङ्गीकृत्याप्याह—बाह्येति । सामान्यतो गृह्यमाणस्यैवाधिष्ठानत्वाद्बाह्यदेशस्य स्वप्ने तथा ग्रहणासंभवान्न तदवच्छिन्न-

**तस्यानधिष्ठानत्वात् । अथ वाऽन्तःकरणोपहितसाक्ष्येवाधिष्ठानं, भेदावभासस्त्वारोपितभेदविषय इति न विरोधी । विच्छिन्नदेशत्वादिकं तु तत्रारोप्यत इति न विरुध्यते । तत्रापि स्वप्नो मूलाज्ञानजन्य एव । अन्तःकरणाधिष्ठानचैतन्यस्याज्ञानाविषयत्वात् ।**

**ननु मिथ्यात्वनिश्चयो बाधः, न तु सविलासाविद्यानिवृत्तिः, स च स्वप्नस्येदानीमस्तीति चेत् । न, वियदादिप्रपञ्चेऽपि तत्सत्त्वात् । न च युक्त्यनुसन्धानं विना बाध्यमानत्वं तत् । नभोनीलिमचन्द्रप्रादेशिकत्वादौ तदभावात् । अत एव प्रमातरि सत्यबाध्यमानत्वं व्यावहारिकत्वं, तस्मिन् सति बाध्यमानत्वं प्रातीतिकत्वमिति प्रत्युक्तम् । नापि त्रिचतुरकक्ष्याविश्रान्तत्वं व्यावहारिकत्वं, व्यावहारिकातिरिक्तजडत्वं प्रातीतिकत्वम् । त्रिचतुरकक्ष्याविश्रान्तिर्यदि त्रिचतुरक्षणसत्ता तदा स्वप्नगजादावतिव्याप्तिः । इच्छादावव्यावहारिकत्वाप्तिश्च । यदि त्रिचतुरयुक्तिसहत्वं तदा शुक्तिरजतादेरनिर्वचनीयत्वादिविषयबहुयुक्तिसहत्वादतिव्याप्तिः । यदि त्रिचतुरैः पुरुषैस्तथा गृह्यमाणत्वम् । सुखादावव्याप्तेः, प्रतिपुरुषप्रपञ्चभेदवादे**

---

चैतन्यमधिष्ठानमित्यर्थः । स्वप्ने देशान्तरादावपि गजाद्युपलम्भादुत्थितस्य तद्विषयापरोक्षज्ञानाभावात्तदज्ञाननिवृत्तिरप्यनुपपन्नेति द्रष्टव्यम् । अनवच्छिन्नचैतन्यस्य स्वप्नाधिष्ठानत्वे तस्याऽऽवृतत्वेन तद्गतगजादेर्मेर्वादिवदस्मदपरोक्षता न स्यात् । अन्यथा पुरुषान्तरीयस्वप्नस्यापि पुरुषान्तरं प्रत्यपरोक्षता स्यादित्यरुच्या पक्षान्तरमाह—अथ वेति । अहङ्कारोपहितचैतन्यस्यैवानावृतस्वभावत्वेन जीवसाक्षित्वात् सुषुप्तावपि सूक्ष्मरूपेणाहङ्कारस्य सत्त्वात्तत्राध्यस्तगजादेः स्वतः साक्षिसम्बन्धात्तं प्रत्यपरोक्षत्वं, पुरुषान्तरीयस्वप्नस्य तु तत्साक्षिसंबन्धाभावात् न तं प्रत्यपरोक्षतेति भावः । प्रमातृचैतन्ये गजाद्यारोपेऽहं गज इत्यवभासः स्यादित्याशङ्क्य तद्भेदस्यापि तत्रारोपितत्वान्नैवमित्याह—भेदेति । तर्हि मयि गज इति प्रतीयात् नायं गज इत्याशङ्क्य बाह्यदेशस्य तद्भेदस्य तत्स्वातन्त्र्यस्य तद्गजसंसर्गस्य च तत्र मायाविजृम्भितत्वान्नैवमित्याह—विच्छिन्नेति । अस्मिन् पक्षेऽन्तःकरणावच्छिन्नेऽवस्थाज्ञानाभावाद् दुःखादिवन्मूलाज्ञानपरिणाम एव स्वप्न इत्याह—तत्रापीति ।

द्वितीयं शङ्कते—नन्विति ।

व्यवहारकाले स्वप्नस्य मिथ्यात्वनिश्चयान्नोक्तातिव्याप्त्यादिरित्याह—स चेति । किं मिथ्यात्वनिश्चयमात्रं बाधः, उत युक्त्यनुसन्धानं विना तन्निश्चयः ? । आद्ये दृश्यत्वादिहेतुभिर्वियदादेरपि व्यवहारसमये मिथ्यात्वनिश्चयसत्त्वात्तत्रातिव्याप्तिरव्याप्तिश्चेति दूषयति—न वियदादीति । द्वितीयं दूषयति—न चेति । तत्प्रातीतिकत्वं नभोनीलिमादेर्युक्त्यनुसन्धान विना मिथ्यात्वनिश्चयाभावात्तत्राव्याप्तिरित्यर्थः । उक्तयुक्त्यैव लक्षणा-

घटादावसंभवाच्च । नापि जीवकर्तृकत्वं प्रातीतिकत्वं, ईश्वरकर्तृकत्वं व्यावहारिकत्वम् । घटादावतिव्याप्तेः, शुक्तिरूप्यादेरपि सर्वशक्तीश्वरकर्तृकत्वाच्च ।

नापि स्वाश्रयाविरोधिज्ञाननिवर्त्यं प्रातीतिकं, तदन्यत् जडं व्यावहारिकम् । सुखादावतिव्याप्तेः, चन्द्रप्रादेशिकत्वादावव्याप्तेश्च । प्रपञ्चस्यापि स्वाश्रयीभूतब्रह्माविरोधिसाक्षात्कारनिवर्त्यत्वाच्च । नाप्यर्थक्रियाकारित्वं व्यावहारिकत्वं, तदन्यजडत्वं प्रातीतिकत्वम् । भयादिलक्षणार्थक्रियाकारित्वस्य रज्जुसर्पादावपि सत्त्वात् स्वध्वंसजनकत्वस्य जडमात्रे सत्त्वात् स्वविषयज्ञानजनकत्वस्यातीन्द्रियेऽभावात् तदतिरिक्तार्थक्रियायाः सुखादावभवात् । नापि स्वसमानकालीनस्वाश्रयनिष्ठात्यन्ताभावाप्रतियोगित्वं व्यावहारिकत्वम् । यदि चैतन्यमाश्रयस्तदा घटादिरपि तादृशात्यन्ताभावप्रतियोग्येव । अन्यथाऽऽरोपितत्वानुपपत्तेः । यद्यनात्मा मृदादिस्तदा रजतादिरपि नैतादृशात्यन्ताभावप्रतियोगी तस्य शुक्तिकादावनारोपेण तत्र तदत्यन्ताभावाभावात् । नापि प्रमाणायोग्यत्वं प्रातीतिकत्वं तद्योग्यं जडमितरत् ।

---

न्तरमपि निरस्तमित्याह—अत एवेति । यदि सविलासाविद्यानिवृत्तिरत्र बाधस्तर्हि स्वप्नेऽतिव्याप्त्यव्याप्ती, यदि मिथ्यात्वनिश्चयस्तर्हि वियदादावव्याप्त्यतिव्याप्ती इत्यादिदोषस्य तुल्यत्वादित्यर्थः । नापि त्रिचतुरेत्यारभ्येश्वरकर्तृकत्वाच्चेत्यन्तो ग्रन्थः स्पष्टार्थः ।

स्वाश्रयेति । स्वस्य रजतादेर्य आश्रयः शुक्त्यादिस्तदविरोधि यज्ज्ञानं तन्निवर्त्यं प्रातीतिकमित्यर्थः । आत्मन्यतिव्याप्तिवारणाय—जडमिति । अत्र पररीत्या दोषमाह—सुखादाविति । स्वमतेऽपि ज्ञानपूर्वकमुद्गरप्रहारादिनिवर्त्यघटादावतिव्याप्तिरिति भावः । चन्द्रप्रादेशिकत्वादेस्तदाश्रयचन्द्राद्यविरोधिज्ञानेन कदाप्यनिवृत्तेस्तत्राव्याप्तिरित्याह—चन्द्रेति । किं चात्र यावत्स्वाश्रयाविरोधित्वं विवक्षितमुत यत्किञ्चिदाश्रयाविरोधित्वम्?। नाद्यः । रजतादेरपि स्वाश्रयाज्ञानविरोधिशुक्तिज्ञाननिवर्त्यत्वेनाव्याप्तेरित्यभिप्रेत्य द्वितीयेऽतिव्याप्तिमाह—प्रपञ्चस्येति । किं कार्यमात्रमर्थक्रिया उत स्वविषयज्ञानं, किं वा यत्नसाध्यं कार्यम् ? । न सर्वथापीति क्रमेण दूषयति—भयादीति । घटादेः स्वोत्पत्तेः पूर्वं मृदादिनिष्ठात्यन्ताभावप्रतियोगित्वस्योक्तत्वात् तत्राव्याप्तिवारणाय—स्वसमानकालीनेति । असंभववारणाय—स्वाश्रयेति । अत्राश्रयपदेनाधिष्ठानं विवक्षितम्, उत परिणामि ? । आद्येऽसंभव इत्याह -यदीति । विपक्षे बाधकमाह—अन्यथेति । स्वसमानकालीनस्वसमानाधिकरणात्यन्ताभावप्रतियोगिन एवाऽऽरोपितत्वादित्यर्थः । द्वितीयमनूद्यातिव्याप्त्या दूषयति—यद्यनात्मेति । अधिष्ठानस्यैवारोप्यात्यन्ताभाववत्त्वाच्छुक्त्यादेस्तदज्ञानस्य च रजताद्यनधिष्ठानत्वान्न तदभाव इति तत्रातिव्याप्तिरित्यर्थः ।

यथार्थज्ञानस्य प्रमाणत्वे शुक्तिरजतादिज्ञानस्यापि प्रमाणत्वात्। अबाधितज्ञानस्य प्रमाणत्वे बियदादिज्ञानस्याप्यप्रमाणत्वात्। चक्षुरादिजन्यज्ञानस्य प्रमाणत्वे सुखादौ तन्न स्यात्। नापि प्रतीतिमात्रसत्ताकं प्रातीतिकं तद्व्यतिरिक्तं व्यावहारिकम्। वृत्तेः प्रतीतित्वेऽसंभवात्। न हि वृत्तिरेव रजतादेः सत्ता। अधिष्ठानचैतन्यं चेद्वियदादेरपि तुल्यम्। वियदादिसत्ताया अपि चैतन्यमात्रत्वात्। नाप्यज्ञातचैतन्यावच्छेदकत्वं व्यावहारिकत्वं, तदन्यत्प्रातीतिकम्। सुखादावव्याप्त्यतिव्याप्तेः। नापि ब्रह्मज्ञानातिरिक्तज्ञानाबाध्यं व्यावहारिकं, तादृशज्ञानबाध्यं प्रातीतिकम्। स्वप्नादावुक्तदोषात्। नाप्यविद्याया व्यावहारिकत्वे मानम्। न चाज्ञानं व्यावहारिकम् उपादानत्वात्, तन्त्वादिवदिति वाच्यम्। अविद्याया व्यावहारिकत्वे प्रातीतिकरजताद्युपादानत्वानुपपत्तिलक्षणप्रतिकूलतर्कपराहतत्वात्। तन्त्वादावपि तदसिद्धेश्चेति।

व्यावहारिकत्वादिनिर्वचनम्

उच्यते। प्रातीतिकत्वं व्यावहारिकत्वमिति च न सत्त्वभेदः। सर्वस्यापि जडस्याऽऽत्मसत्तामात्रसत्ताकत्वात्। तस्याश्चैकरूपत्वात्। अन्यथा व्यावहारिकत्वप्रातीतिकत्वान्यतरस्वभावाज्ञानस्य स्वविलक्षणसत्ताककार्यपरिणामित्वासंभवात्।

---

किं यत्र यद्विद्यते तत्र तद्विषयज्ञानं प्रमाणम्, उताबाधितार्थज्ञानं, किं वा चक्षुरादिजन्यज्ञानम्? न सर्वथाऽपि, आद्येऽतिव्याप्तेः, इतरयोस्त्वव्याप्तेरिति क्रमेणाह—यथार्थेत्यादिना।

नापि प्रतीतिमात्रसत्ताकमित्यारभ्य स्वप्नादावुक्तदोषादित्यन्तो ग्रन्थः स्पष्टार्थः। एवं व्यावहारिकत्वादिलक्षणं निराकृत्याविद्याया व्यावहारिकत्वे मानमपि निराकरोति पूर्ववादी—नाप्यविद्याया इति। तत्र संभावितं मानं दूषयति—न चेत्यादिना। परिणामस्य परिणामिसमसत्ताकत्वनियमात् अविद्याया व्यावहारिकत्वे तत्परिणामस्य रजतादेरपि व्यावहारिकत्वापातादिदमनुमानमयुक्तमित्यर्थः। व्यावहारिकत्वस्य दुर्निरूपत्वाद् दृष्टान्तः साध्यविकलश्चेत्याह—तन्त्वादाविति।

अधिष्ठानसत्तातिरेकेण जडे सत्त्वान्तरानभ्युपगमात्तत्र लक्षणाद्यभावो न दोषायेति सिद्धान्तयति—उच्यत इति।

प्रातीतिकत्वादिसत्त्वान्तरमप्यात्मसत्तैवेत्याशङ्क्याह—तस्याश्चेति। आत्मनि बाधायोग्यतातिरिक्तसत्त्वाभावादित्यर्थः। अज्ञानादौ सत्त्वान्तराभ्युपगमे बाधकमाह—अन्यथेति। किं सर्वमज्ञानमेकसत्ताकम्, उत किंचिद्व्यावहारिकसत्ताकं, किंचित्प्रातिभासिकसत्ताकम्?। आद्ये ब्रह्माज्ञानाद्व्यावहारिकं कार्यशुक्त्याद्यज्ञानात्प्रातीतिकमिति वैषम्यं न स्यात्, कारणे विशेषाभावादित्यर्थः। द्वितीयं शङ्कते—व्यावहारिकेति। किमेतन्मूलाज्ञानमेव रजताद्युपादानमिति मते उतावस्थाज्ञानं तदुपादानमिति मते?। आद्यं

व्यावहारिकपरिणाम्यज्ञानं व्यावहारिकं प्रातीतिकपरिणाम्यज्ञानं च प्रातीतिकमिति चेत्। न, एकाज्ञानवादे तदनुपपत्तेः। 'ब्रह्म न जानामि' 'शुक्तिं न जानामि' इत्यनुभूयमानाज्ञानयोः सत्ताभेदाननुभवाच्च। अधिष्ठानात्मसत्तयैव निखिलप्रपञ्चकृतसद्व्यवहारोपपत्तौ तदतिरिक्तसत्ताभेदकल्पने गौरवात्, प्रमाणाभावाच्च। न चैवं शुक्तिरजतादेरिव घटादेरपि नियमेव प्रतीत्या भवितव्यम्, अविशेषादिति वाच्यम्। सत्त्वाविशेषेऽपि प्रमातृव्यवधानादेव तदप्रतीत्युपपत्तेः।

न च शुक्तिरजतादेरपि घटादिवदिन्द्रियग्राह्यत्वप्रसङ्गः। स्वविषयज्ञानात्पूर्वमसतस्तस्य तज्जनकेन्द्रियासन्निकृष्टत्वेन तदगोचरत्वात्। अनुमित्यादिग्राह्यत्वं च घटादिना शुक्तिरजतस्यापि समानम्। न चैवं शुक्तिरजतस्य घटादिसत्तातुल्यसत्ताकत्वे 'दुष्टाक्षैरेव गृह्यते' इति नियमोऽनुपपन्न इति वाच्यम्। न हि प्रागविद्यमानस्य रजतस्य ग्रहणे दोषस्योपयोगः येनायं दोषो भवेत्, किं तु मिथ्यारजतस्योत्पत्तौ। न चैवं घटादेरुत्पत्तावपि दोषो हेतुः स्यादिति वाच्यम्। तत्राप्यविद्याया एव दोषत्वात्। अविद्या च ब्रह्मस्वरूपप्रकाशाच्छादकत्वाद्विपरीतकार्यजनकत्वाच्च ब्रह्मणि दोषः। काचादेरप्यनेन रूपेणैव

---

दूषयति—एकाज्ञान इति। द्वितीयेऽज्ञानगतसत्त्वभेदे मानाभावात् तदङ्गीकारे गौरवाच्च नोक्तव्यवस्थेत्याह—ब्रह्मेति। अत्र चार्थो गौरवम्। ननु कार्यगतसत्त्वभेदानुपपत्त्या कारणेऽपि सत्त्वभेदः कल्प्यते इत्याशङ्क्य कार्येऽप्युक्तहेतुभ्यां स नास्तीत्याह—अधिष्ठानेति। शुक्तिरजतघटयोः सत्त्वभेदाभावे रजतवदेव घटादेरप्यज्ञातसत्त्वं न स्यादिति न वाच्यम्। घटादेरावृतचैतन्येऽध्यस्तत्वेन यावदनावृतप्रमातृचैतन्यतादात्म्यमज्ञातत्वोपपत्तेरित्याह—न चैवमित्यादिना। न च घटादेरावृतचैतन्याध्यास एव सत्त्वभेदप्रयुक्त इति वाच्यम्। दुःखादौ तदभावादिति भावः।

रजतादेर्घटादितः सत्त्वभेदाभावे तद्वदेव मानग्राह्यत्वं स्यादित्याशङ्क्य किमिन्द्रियग्राह्यत्वमनुमानादिग्राह्यत्वं वा?। आद्यमनुपपन्नमित्याह—न चेति।

द्वितीयमिष्टमित्याह—अनुमित्यादीति। ननु शुक्तिरजतादिग्रहो नियमेन दोषापेक्षः, घटादिग्रहस्तु नैवमित्येतत्सत्त्वभेदं विनाऽनुपपन्नमिति चेत्, न। दोषस्य रजताद्युत्पत्तावेवोपयुक्तत्वेन तद्ग्रहस्यापि तदनपेक्षत्वादित्याह—न चैवमित्यादिना। तर्हि घटादेरपि रजतादिवद्दोषजन्यत्वं स्यात्सत्त्वविशेषाभावादिति न शङ्कनीयमित्याह—न चैवमिति। किं घटादेर्दोषजन्यत्वमात्रमापाद्यते उत काचादिरूपदोषजन्यत्वम्?। आद्यस्त्विष्ट इत्याह—तत्रापीति। अविद्याया उपादानत्वात्कथं दोषत्वमित्यत आह—अविद्या चेति। नन्वनुपादानस्यैव काचादेर्दोषत्वं दृष्टमित्याशङ्क्य न तस्यानुपादानत्वं दोषत्वे प्रयोजकम्, अतिप्रसङ्गात्; किं त्वधिष्ठानप्रतिभासप्रतिबन्धकत्वादिकमेव। तद् अविद्यायामपि तुल्यमित्याह—काचादेरिति। द्वितीयं दूषयति—न हीति। काचकामलपित्तादीनां

दोषत्वात् । न हि मिथ्याभूतस्य सर्वस्य काचादिजन्यत्वमिति नियमोऽस्ति, क्वचित्कश्चिद्दोष इत्यभ्युपगमात् । न च शुक्तिरजतस्य वन्ह्यादेरिवानुमितिगोचरत्वेऽनुमितवन्हाविव तदर्थिनः शुक्तिरजतेऽपि प्रवृत्तिः स्यादिति वाच्यम् । याबद्बाधं स्वदृष्टे तस्मिन्प्रवृत्तेरिष्टत्वात् । अन्यदृष्टे चान्यस्याभावनिश्चयात् प्रवृत्तेरभावात् ।

न चैवमेकस्य शुक्तौ रजतानुभवकालेऽपरस्य तत्र तदभावानुभवोऽप्रमा स्यादिति वाच्यम् । वैशेषिकादिमते एकस्य द्वित्वानुभवकालेऽपरस्य तत्र तदभावानुभववत् प्रातीतिकरजतवादे वा परस्य तदभावानुभववत् स्वीयतदभावविषयतया प्रामाण्योपपत्तेः । न चैवं स्वसत्ताकाले समीचीनरजतस्येव शुक्तिरजतस्यापि स्वोचितार्थक्रियाप्रसङ्गः । तस्य ज्ञायमानत्वप्रयोज्यसखादिकार्यस्य ध्वंसस्य बन्धस्य च दृष्टत्वात्, तदतिरिक्तार्थक्रियाकाले चाधिष्ठानज्ञानेन वाऽन्येव वा निवृत्तस्य तद्योगात्, विनष्टघटवत् । किं च सत्त्वाविशेषेऽप्यविद्यातिरिक्तदोषाजन्यत्वेन

---

यथा न परस्परकार्ये हेतुत्वम्, एवमविद्याकार्येऽपि न हेतुतेत्यर्थः । रजतादेः पूर्वमनुमानगोचरत्वमुक्तम् । तत्र बाधकमाशङ्क्य परिहरति—न चेत्यादिना ।

ननु घटरजतयोः सत्त्वभेदाभावे यथैकेन घटवत्तया निश्चिते भूतलेऽपरस्य तत्र तदभावानुभवोऽप्रमा, एवमेकेन रजतवत्तया निश्चिते शुक्त्यादावपरस्य तदभावानुभवोऽप्रमा स्यादिति चेत् न । शुक्तिरजतादेः सत्त्वभेदाभावेऽपि परमते द्वित्वादिवत् प्रातीतिकसत्त्वान्तरमस्तीति मते तदाश्रयवच्च प्रतिपुरुषं व्यवस्थितत्वात् । तदनुपलब्ध्या तदभावस्यैव प्रमीयमाणत्वादित्याह—न चैवमेक इत्यादिना ।

सत्त्वभेदाभावे बाधकान्तरमाशङ्क्यापवदति—न चैवमिति । किं स्वज्ञानाधीनं कार्यं स्वोचितार्थक्रिया उत स्वस्वरूपाधीनम् ?, उभयमपीष्टमित्याह—तस्येति । ननु कटकमुकुटक्रयविक्रयादिकार्यमेव रजतोचितार्थक्रिया, तच्छुक्तिरजतस्य सत्त्वभेदाभावे स्यादित्यत आह—तदतिरिक्तेति । अन्येन वेति । कारणनाशेन वा भ्रमान्तरेण वेत्यर्थः । समीचीनरजतस्य ब्रह्मज्ञानेतराबाध्यत्वात् इदानीमन्यस्यापि तन्नशहेतोरभावात्ततः कटकादिकं जायते, शुक्तिरजतं तु नैवमिति न ततस्तदुत्पत्तिरित्यर्थः । किं च सर्वस्य जडस्याधिष्ठानसत्तातिरिक्तसत्त्वाभावेऽपि कस्यचिद्दोषविशेषाजन्यस्वरूपविशेषादर्थक्रिया, कस्यचित्तु दोषविशेषजन्यस्वरूपविशेषान्नार्थक्रियेति च व्यवस्था घटते इत्याह—किं चेति । नन्वर्थक्रियाकारित्वं व्यवस्थितं चेत्तर्हि तदेव तस्य सत्त्वान्तरमित्याशङ्क्य तथात्वे क्षणिकवादप्रसङ्गान्न तत्सत्त्वमित्याह—न चेति । तर्हि तत्प्रयोजकतया सत्त्वान्तरमावश्यकमित्याशङ्क्य पूर्वक्षणे विद्यमानस्वरूपविशेषेणैव तदुपपत्तेर्न तदर्थमपि तदपेक्षेत्याह—किं त्विति । विद्यमानत्वमेव तर्हि सत्त्वान्तरमित्याशङ्क्य स्वाधिकरणसंसर्गित्वमात्रस्यैव तत्त्वात्तस्य शुक्तिरजतसाधारणत्वान्नैवमित्याह—विद्यमानता चेति ।

घटादेः स्वोचितार्थक्रिया शुक्तिरजतादेस्तु तत्रज्जन्यत्वेन तदभाव इति व्यवस्था। न च बौद्धस्येवार्थक्रियाकारित्वं किन्तु, विद्यमानत्वप्रयोज्याऽर्थक्रिया विद्यमानता च न सत्त्वम्।

ननु शुक्तिरजतस्य घटादितुल्यत्वे कथमविद्यातिरिक्तदोषजन्यत्वमिति चेत। न, क्वचित्कश्चिद् दोष इत्यनेनोक्तोत्तरत्वात्। परमते च रजतज्ञानस्य सत्त्वेऽपि तस्य दोषजन्यत्ववद्यथार्थप्रवृत्त्यजनकत्ववच्च रजतस्याप्यविरोधात्। न चैतदेव प्रातीतिकसत्त्वं तदितरज्जडत्वं व्यावहारिकसत्त्वमिति वाच्यम्। सद्विलक्षणस्याप्येतत्संभवेन सत्त्वभेदस्याप्रयोजकत्वात्। केचित्त्वविद्यातिरिक्तदोषाजन्यावच्छिन्नसत्त्वं स्वोचितव्यवहारोपयुक्तत्वाद् व्यावहारिकं सत्त्वम्, अविद्यातिरिक्तदोषजन्यावच्छिन्नसत्त्वं प्रातीतिकसत्त्वम्। तस्य प्रतीतिमात्रकाल एव विद्यमानत्वात्। सत्त्वं चात्मसत्त्वैवेत्याहुः। तत्त्वविरुद्धम्। जडसत्त्वयोर्विशेषाभावात्। तस्मान्न जडे सत्त्वभेदः।

प्रातीतिकव्यावहारिकव्यवहारस्तु वृद्धानां सत्त्वाभेदेऽप्यविद्यातिरिक्तदोषजन्यतदजन्यावच्छिन्नसत्ताकत्वेनेति द्रष्टव्यम्। कथं तर्ह्यज्ञानस्य प्रातीतिकत्वं

---

रजतादेरविद्यातिरिक्तदोषजन्यत्वान्नार्थक्रियेत्युक्तं तत्र सत्त्वान्तराभावे तदेवानुपपन्नमिति शङ्कते—नन्विति।

सत्त्वान्तरास्तित्वमतेऽप्येकसत्ताकानामप्यन्यान्यदोषजन्यत्वस्यावश्यकत्वान्नेयमनुपपत्तिरित्याह—न क्वचिदिति। सत्त्वभेदाभावेऽपि दोषविशेषजन्यत्वं स्वोचितार्थक्रियाऽभावश्च परमतेऽपि दृष्ट इति न तदर्थं सत्त्वान्तरं कल्प्यमित्याह—परमते चेति। नन्वविद्यातिरिक्तदोषजन्यत्वतदजन्यत्वयोरेव सत्त्वान्तरलक्षणत्वान्न तदभाव इत्यपि न शङ्कनीयम्। अधिष्ठानसत्तयैव सद्बुद्धिगोचराणां पृथक् सत्त्वाभावेऽपि घटत्वादिवदनयोर्व्यवस्थोपपत्तेः, सत्त्वात्मकताकल्पनाया अदृष्टार्थत्वादित्याह—न चैतदेवेत्यादिना। नन्वेवं सति कथमाचार्यैः पारमार्थिकव्यावहारिकप्रातीतिकभेदेन सत्त्वत्रैविध्यमुक्तमित्याशङ्क्य तदभिप्रायमाह—केचित्त्विति। अविद्यातिरिक्तदोषाजन्यावच्छिन्नसत्त्वं व्यावहारिकपदप्रवृत्तिनिमित्तमाह—स्वोचितेति। सत्त्वान्तरे प्रातीतिकपदप्रवृत्तिनिमित्तमाह—तस्येति। आत्मसत्त्वातिरेकेणाविद्यातिरिक्तदोषाजन्यावच्छिन्नतज्जन्यावच्छिन्नसत्त्वान्तराभ्युपगमे न विवाद इत्याशङ्क्यात्मसत्त्वमेव तत्तदवच्छिन्नं तथोक्तं, न तदतिरिक्तं तदित्याह—सत्त्वं चेति। ननूक्तरीत्याऽपि जडे सत्त्वविशेषसिद्धिरित्याशङ्क्यावच्छेदकजडस्वरूपविशेषव्यतिरेकेण सत्त्वे न विशेष इत्याह—तत्त्वविरुद्धमिति। सत्त्वभेदनिराकरणमुपसंहरति—तस्मादिति।

कथं तर्हि वृद्धानां तत्र शुक्तिरजतादौ प्रातीतिकत्वव्यवहारः, घटादौ च व्यावहारिकत्वव्यवहार इत्याशङ्क्याह—प्रातीतिकेति।

निषिध्य व्यावहारिकत्वं विधीयते इति चेत् । न हि तेन सत्त्वभेदो विधीयते किं तु गगनादिसाम्यमात्रम् शुक्तिरजतादिसाम्यं च निषिद्धयते । अविद्यातिरिक्तदोषाजन्यत्वात् । एतेनाज्ञानस्यानुमानादिवेद्यत्व आत्मवदनिवृत्तिप्रसङ्ग इति प्रत्युक्तम् । कल्पितस्यापि घटादितुल्यतया तदुपपत्तेः । आचार्यास्तु व्यावहारिकमप्यज्ञानं साक्षिमात्रप्रमेयम् । अनुमानादिभिस्तु न तत्स्वरूपसिद्धिः, किं तु तस्याभावव्यावृत्त्यादि बोध्यत इत्याहुः । न च नित्यनिर्दोषसाक्षिवेद्यत्वेऽज्ञानस्यात्मवत्परमार्थत्वापत्तिरिति वाच्यम् । मिथ्यारजतादौ व्यभिचारात् ।

अबाधितत्वस्यैव परमार्थत्वप्रयोजकत्वात्साक्षिणः स्वसंसृष्टार्थमात्रप्रकाशस्यासद्विलक्षणतामात्रे निमित्तत्वात् । न चोक्तानुमाने अभावव्यावृत्तिर्न प्रतीयत इति वाच्यम् । केषुचिदनुमानेषु स्वप्रागभावव्यतिरिक्तत्वादिशेषणेनान्यत्र च विषयपरिशोधकतर्केण तदवगमात् । न चाभावव्यावृत्तिरित्यासत्त्वनिवृत्तिरिति

---

एवं चेदेतच्चाज्ञानं व्यावहारिकं न प्रातिभासिकमिति सत्त्वभेदः कथमुक्तः पूर्वमिति शङ्कते—कथं तर्हीति । तदर्थानवबोधविजृम्भितमेतच्चोद्यमिति परिहरति—न हि तेनेति । व्यावहारिकमित्यनेन गगनादिसाम्यं विधीयते न प्रातिभासिकमिति शुक्तिरजतादि साम्यं निषिध्यत इत्यर्थः । उभयत्रापि हेतुमाह—अविद्येति । अविद्याया वियदादिसमानत्वात् परोक्तचोद्यमयुक्तमित्याह—एतेनेति । विवरणाचार्यैरज्ञानस्यप्रमाणवेद्यत्वमनङ्गीकृत्यैवैतच्चोद्यं निरस्तम् । तदाह—आचार्या इति । तैरेवाज्ञानेऽनुमानादीनां प्रमाणानामप्युपन्यस्तत्वात्कथं तत्साक्षिमात्रगम्यमित्यत आह—अनुमानादिभिस्त्विति । अनादित्वज्ञाननिवर्त्यत्वे अभावव्यावृत्त्यादीत्यादिपदार्थः । अज्ञानं परमार्थसत् दोषाजन्यज्ञानगम्यत्वादात्मवदित्याशङ्कां व्यभिचारेण दूषयति—न चेति । न च शुक्तिरजतादेर्दोषजन्याविद्यावृत्तिविषयत्वान्न व्यभिचार इति वाच्यम् । तस्य सुखादिवदनावृतसाक्षिण्यध्यासेन तत्र तदाकारवृत्तिकृतचिदुपरागावरणभङ्गयोरसंभवेन तस्या अप्रामाणिकत्वात् । रजतसंस्कारस्यापि यद्वृत्त्यवच्छिन्नचैतन्ये इद् भासत इति कथितन्यायेनेदमाकारवृत्तिनाशादेव संभवादित्यादि तृतीये वक्ष्यत इति भावः ।

अबाधितत्वेन सोपाधिकतामप्याह—अबाधितत्वस्येति ।

अज्ञानस्यापरमार्थत्वे शशशृङ्गवत्तस्य साक्षिभास्यत्वानुपपत्तिरित्याशङ्क्य असद्वैलक्षण्यमात्रेणापि तदुपपत्तेर्मैवमित्याह—साक्षिण इति । ननु ज्ञानातिरिक्तप्रत्यक्षनिवर्त्तकमित्यादिसाध्येष्वज्ञानेऽभावव्यावृत्तेरप्रतीतेः तस्याः कथमनुमानप्रमेयत्वमिति चेत् न । आचार्यानुमाने मुखत एव तत्प्रतीतेः । अन्यत्रापि पक्षादिविशेषणमहिम्ना पर्यनसानात्तत्प्रतीतेरित्याह—न चेत्यादिना । अज्ञानस्याभावव्यावृत्तिरनुमानादिभिर्बोध्यत इत्याचार्यवाक्येऽभावव्यावृत्तिपदेनासत्त्वनिवृत्तिरुच्यत इति कैश्चित्प्रतिपन्नं तद् दूषयति—न चाभावेति । तत इति । उक्तानुमानादित्यर्थः । अनुमानान्मुखतोऽप्रतीतावपि तत्तात्पर्य-

भ्रमितव्यम्। तस्यास्ततोऽप्रतीतेः। अनुमानस्य च तात्पर्यानिपेक्षणात्, प्रत्यक्षेणैव तस्यासत्त्वनिवृत्तिसिद्धेश्च। न चानुमानादिप्रमाणस्याज्ञानस्वरूपाविषयत्वे कथं ततोऽभावव्यावृत्तिः प्रतीयेत, तद्विषयत्वे वा कथमज्ञानस्य प्रमाणागोचरत्वमिति वाच्यम्। भ्रमविषयस्य रूप्यादेरनुव्यवसायप्रमाणगम्यत्वेऽप्यप्रामाणिकत्ववद्व्यावृत्तिप्रमाणगम्यत्वेऽप्यज्ञानस्याप्रामाणिकत्वाविरोधादिति केचित्। रजतस्य इदं रजतं न इति प्रमाणविषयत्वेऽप्यप्रामाणिकत्ववदज्ञानेऽपि तथात्वमित्यपरे।

यत्त्वज्ञानस्य स्वातन्त्र्येणादृष्टवदनुमित्यादिप्रमाणगोचरत्वात् प्रामाणिकत्वं शुक्तिरजतादेर्ज्ञानविषयतयाऽभावप्रतियोगित्वेन वा प्रमाविषयत्वान्न तथात्वम्। स्वातन्त्र्येण प्रमागोचरस्यैव प्रामाणिकत्वात्, अनुव्यवसायादेःसिद्धान्ते साक्षिमात्रत्वाच्चेति, तदसत्। येन विना यस्यासत्त्वशङ्का न निवर्तते, सति च तस्मिन् निवर्तते तत्तस्मिम् प्रमाणम्। यथा-रूपे चक्षुः, धर्मब्रह्मणोर्वेदः। अन्यथाऽतिप्रसङ्गात्। अज्ञानस्य चासत्त्वशङ्का "अहमज्ञ" इत्यादिप्रत्यक्षेणैव निवर्तते इति

---

विषयतया तत्प्रतीतिरित्याशङ्क्य तात्पर्यस्य शब्दमात्रधर्मत्वान्नैवमित्याह—अनुमानस्येति। किं चाहमज्ञ इत्याद्यनुभवेनैवाज्ञानेऽसत्त्वशङ्कानिवृत्तेस्तदर्थं मानान्तरं व्यर्थमित्याह—प्रत्यक्षेणैवेति। ननूक्तप्रमाणैरभावव्यावृत्तिमत्तयाऽज्ञानमपि प्रतीयते न वा? । अन्त्ये तस्य नाभावव्यावृत्तिसिद्धिः, आद्येऽज्ञानस्य प्रामाणिकत्वापात इत्याशङ्क्य न वाच्यमित्याह—न चानुमानादीति। तत्राद्यपक्षमङ्गीकृत्यानुमानादेः साक्षिसिद्धाज्ञानस्वरूपांशेऽनधिगतार्थताभावान्न तत्र प्रामाण्यमिति केषांचित्परिहारमाह—भ्रमेति। अज्ञानस्य प्रमाणजन्यप्रतीतिविषयत्वमात्रेण प्रामाणिकत्वमापादयितुं न शक्यते व्यभिचारादित्यपरेषां परिहारमाह—रजतस्येति।

ननु स्वातन्त्र्येण प्रमाणगोचरस्य प्रामाणिकत्वनियमात् शुक्तिरजतस्य च ज्ञानान्तरोपनीतत्वेनोपसर्ज्जनतयाऽनुव्यवसायादिविषयत्वान्न प्रामाणिकत्वम्, अज्ञानस्य तु स्वातन्त्र्येणैव प्रमाणगोचरत्वात्प्रामाणिकत्वमावश्यकमिति चोद्यमनुवदति—यत्त्विति।

किं च प्रमाणगोचरत्वमेव प्रामाणिकत्वेन नियतम्। न चानुव्यवसायगम्ये शुक्तिरजतादौ व्यभिचारः। तव मतेऽनुव्यवसायादेः साक्षिमात्रतया प्रमाणत्वाभावादित्याह—अनुव्यवसायेति। साक्ष्युपनीतस्यैवाज्ञानस्यान्योपसर्जनतयैवानुमानादिभिः प्रतीतेः स्वातन्त्र्येण प्रमागोचरत्वमेव नेत्यभिप्रेत्याह—तदसदिति। प्रमागोचरस्य प्रामाणिकत्वनियममभ्युपेत्याप्यनुमानादेरज्ञानांशे न प्रामाण्यमित्यभिप्रेत्य तत्प्रयोजकमाह—येनेति। तद्विति तत्प्रकारकज्ञानकरणत्वमात्रेण तत्र प्रमाणत्वम्। मीमांसकमते "अग्निर्हिमस्य भेषजम्" इत्याद्यर्थवादानां स्वार्थे प्रामाण्यापातात्तार्किकाणामपि मते चक्षुरादेः शब्दादिषु प्रमेयत्वादिप्रकारकज्ञानजनकस्य तत्रापि प्रामाण्यापातात्। न चेष्टापत्तिः। व्यवस्थितवृद्धव्यवहारविरोधादित्यभिप्रेत्याह—अन्यथेति। एवं च सत्यनुमानादेरज्ञाने प्रामा-

प्रत्यक्षमेव साक्ष्यात्मकं तत्र प्रमाणं, नानुमानादि । तेन विनाऽपि तन्निवृत्तेः। अभावव्यावृत्तिरपि यद्यप्युपपत्तिसहितप्रत्यक्षेण विषयीक्रियते तथापि प्रत्यक्षेण सहकार्य्युपपत्त्यप्रतीतिदशायामज्ञानमात्रे सा निवर्त्तते न तु तद्भावत्वे इति प्रत्यक्षं तत्र न मानं किं त्वनुमानादि ।

'तम आसीत्'' इति चाज्ञानस्य स्वाधिकरणप्रतियोगिकसंबन्धाश्रयत्वमात्रमुच्यते न त्वासीदिति सत्वमुच्यत इति न तस्य प्रामाणिकत्वनिराकरणमनिष्टम् । नो सदासीत्'' इति तस्य सत्त्वनिषेधात् । तस्मात्साक्षिमात्रगम्यमज्ञानमिति । एतेनेदं परोक्तं निरस्तम् । अविद्यायाः साक्षिभास्यत्वे मोक्षेऽपि सा प्रतीयात् । तच्छरीरे साक्षिणि सति तदनिवृत्तेरिति । ज्ञानातिरिक्तानिर्वचनीयज्ञेयाभ्युपगमादित्युक्तत्वात् । न चैवं साक्षिणोऽज्ञानावृतत्वात्कथं ततस्तदवगम इति वाच्यम् । राहोरिवावृतेनापि प्रकाशत्वादिति केचित् । चैतन्यमात्रमनावृतमिति च वक्ष्यते ।

---

ण्यमेव नेत्याह--अज्ञानस्येति । तेनेति । अनुमानादिकं विनैवाज्ञानासत्त्वशङ्कानिवृत्तेरित्यर्थः। एवं तर्ह्यज्ञानस्याभावव्यावृत्तिरपि तर्कोपनीतप्रत्यक्षेण निश्चेतुं शक्यत इति तत्राप्यनुमानादेः प्रामाण्यं न स्यादित्याशङ्क्योपपत्त्यननुसन्धानदशायां सत्यपि प्रत्यक्षेऽज्ञान इव तद्भावत्वेऽसत्त्वशङ्काऽनिवृत्तेर्न तत्तत्र मानं, किं त्वनुमानाद्येवेत्याह— अभावेति ।

ननु ''तम आसीत्'' इति श्रुत्यैवाज्ञानसत्त्वस्योक्तत्वात् सतश्च ब्रह्मवत्प्रामाणिकत्वनियमात् तस्याप्रामाणिकत्वमयुक्तमित्याशङ्क्य सृष्टिपूर्वकाले विद्यमानत्वमात्रं तमसः श्रुत्योच्यते, न तु सत्त्वम् । इतरथा ''नोसदासीत्'' इति पूर्ववाक्यविरोधादित्याह—तम इति ।

तर्हि साक्षिप्रमाणगम्यत्वादेवाज्ञानस्य प्रामाणिकत्वमक्षतमित्याशङ्क्य साक्षिणः क्लृप्तकारणाजन्यस्य कुत्रापि प्रमाणत्वायोगादज्ञानासत्त्वशङ्कानिवर्तकत्वमात्रेणोपचारात् तत्र प्रमाणत्वोक्तिरित्यभिप्रेत्योपसंहरति--तस्मादिति । अज्ञानस्य साक्षिमात्रभास्यत्वे नवीनोक्तं चोद्यमनूद्य निराकरोति--एतेनेति ।अज्ञानस्य साक्षिभास्यत्वमप्यनुपपन्नं तस्याज्ञानेनावृतत्वात् आवृतस्यापि भासकत्वेऽतिप्रसङ्गादित्याशङ्क्यावृतस्यावारकातिरिक्तभासकत्वाभावेऽप्यावारकभाकत्वस्य लोके दर्शनान्मैवमिति केषांचित्परिहारमाह—न चैवमित्यादिना । चिदानन्दात्मके ब्रह्मणि कल्पितानादिभेदेन चैतन्यांशोऽनावृतः निरतिशयानन्दांश एवावृत इति अनावृतचैतन्यात्मकसाक्षिणाऽज्ञानावभासोपपत्तिरिति मतान्तरमाह--चैतन्येति । अज्ञानाश्रयस्यापि विप्रतिपन्नत्वात् तन्निरूपयितुमुपक्रमते—तच्चेति । तर्हि जीवस्याकल्पितत्वात् जीवनिष्ठमेवाज्ञानमित्याशङ्क्याह—ब्रह्मविषयमिति ।

अज्ञानाश्रयनिरूपणम्

तच्चाज्ञानं शुद्धचिन्मात्रनिष्ठम् । तदन्यस्य सर्वस्य कल्पितत्वेन तदाश्रयत्वायोगात् । ब्रह्मविषयमज्ञानमेकाश्रयविषयं तमस्त्वात्, आवरकत्वाच्च, बाह्यतमोवदित्यनुमानात् तस्य ब्रह्माश्रयत्वसिद्धिः ।

अत्र नवीनः—स्यादेतत् । स्वविषयप्रकाशात्मके ब्रह्मस्वरूपचैतन्ये कथं तद्विषयमज्ञानम् । एकस्यैकविषयप्रकाशाप्रकाशयोस्तमः प्रकाशवद्विरोधात् । अथ सौरप्रकाशदिवाभीतान्धकारयोरिव सत्यत्वमिथ्यात्वाभ्यां न विरोध इति चेत् न । सौरप्रकाशविरुद्धतत्समसत्ताकतमोऽन्तरस्यैव चित्समसत्ताकाज्ञानान्तराभावेन मिथ्याज्ञानस्यैव चैतन्यविरुद्धत्वात् । अन्यथा न जानामीति ज्ञप्तिविरुद्धत्वानुभवबाधात् ।

किं चाहमज्ञ इति धर्मिग्राहकसाक्षिबाधाच्च नाज्ञानस्य चैतन्यमात्राश्रयत्वम् । न चायं भ्रमः दोषाजन्यस्याहमज्ञ इति साक्षिज्ञानस्याभ्रमत्वात् । धर्मिग्राहकविरोधेन बाधकानामेवाऽऽभासत्वात् । एवं शुक्त्यज्ञानस्याहमर्थ एवाश्रयः न तु शुक्त्यवच्छिन्नं चैतन्यम् । अहमिदं न जानामीत्यनुभवात् ।

किं चाज्ञानं स्वकार्येण भ्रान्तिसंस्कारादिना स्वनिवर्तकेन तत्त्वज्ञानेन च सामानाधिकरण्याय ज्ञात्रात्मनिष्ठं, न तु ज्ञानमात्राश्रितम् । चैतन्येऽपि ज्ञातृत्वा-

---

स्वप्रकाशे ब्रह्मणि स्वविषयाज्ञानाभ्युपगमे ब्रह्म स्वयं प्रकाशते, न प्रकाशते चेति स्यात्, तदनुपपन्नम् । एकस्य प्रमातुरेकविषयप्रकाशाप्रकाशयोर्विरोधेन यौगपद्यासंभव इति चोदयति—स्यादेतदिति ।

नन्वप्रकाशात्मकाज्ञानस्यारोपितत्वादनारोपितप्रकाशेन न विरोधः । नभसि विस्तृतसवितृप्रकाशे सत्यप्युलूकारोपिततमसोऽनुवृत्तिदर्शनादिति शङ्कते—अथेति । किमज्ञानं चित्प्रकाशविरोधि न वा ? । आद्ये सौरप्रकाशसमसत्ताकशार्वरतमोवच्चित्प्रकाशसमसत्ताकाज्ञानान्तरस्याभावादारोपितमेवाज्ञानं तद्विरोधीति वाच्यम् । तथा च कथं नविरोध इति दूषयति—न सौरेति । द्वितीयेऽनुभवविरोध इत्याह—अन्यथेति । उक्तानुमानस्य तर्कविरोधमुक्त्वा धर्मिग्राहकप्रमाणविरोधमप्याह—किं चेति । अहमज्ञ इत्यनुभवेऽज्ञानस्याहमर्थाश्रितत्वांशे भ्रमत्वान्न ब्रह्माश्रितत्वसाधकानुमानबाध इत्याशङ्क्य भ्रमत्वप्रयोजकदोषजन्यत्वाभावान्नायं भ्रम इत्याह—न चायमिति । अज्ञाने अहमर्थाश्रितत्वस्यानुमानादिबाधितत्वात्तत्प्रत्यक्षं भ्रम इत्यत आह—धर्मीति । एवं मूलाज्ञानस्याहमर्थाश्रितत्वमुक्त्वाऽवस्थाज्ञानानामपि तदाह—एवमिति । एवकारव्यावर्त्यमाह—न त्विति ।

यस्याज्ञानं भ्रमस्तस्य भ्रान्तिः सम्यक्त्वमेव वेति न्यायादपि भ्रान्त्याद्याश्रयाहमर्थनिष्ठमेवाज्ञानमित्याह—किं चेति ।

ध्यासोऽस्तीति चेत्, न। तस्यादिह्याधीनत्वेनान्योन्याश्रयात्, देहादावपि ज्ञातृत्वाध्याससंभवाच्च, बुद्ध्यवच्छिन्न एव तद्धर्माणां ज्ञातृत्वादीनामध्यासेन चिन्मात्रे तदभावाच्च। अन्यथा संसारस्य चिन्मात्राश्रयत्वप्रसङ्गात् ब्रह्मापि संसारि स्यात्। विशेष्यविशिष्टभावस्यैव तन्त्रत्वात्। विशेष्यस्थमज्ञानं विशिष्टे जीवे संसारहेतुः तद्गततत्त्वबोधः विरुद्धश्चेति चेत्, न। विशिष्टस्य ततोऽन्यत्वे जडतया संसारानाधारत्वात्। अनन्यत्वे च ब्रह्मैव संसारि स्यात्। शुद्धचैतन्यस्यैवाविद्याश्रयत्वे तस्य च तत्कार्यविशिष्टतयाऽहमर्थे संसाराननुभवप्रसंगाच्च। देहविशेष्याहंकारकर्तृत्वेन देहविशिष्टे भोक्तृत्वापाताच्च विशेष्यस्थमुक्तेः विशिष्टस्थसंसारविरोधित्वप्रसङ्गाच्च। एतेन विशेष्यविशिष्टयोरध्यस्तमैक्यं तन्त्रमिति प्रत्युक्तम्।

ननूपाधेः प्रतिबिम्बपक्षपातस्वाभाव्याज्जीवे संसारः। न च मरुमरीचिकोदके आदित्यस्याप्रतिबिम्बवदारोपिताज्ञानेऽपि चैतन्यस्य प्रतिफलनं न स्यादिति

---

ननु स्फटिकलौहित्यन्यायेन चिन्मात्रस्यापि भ्रान्त्याद्याश्रयत्वात्त ब्रह्माज्ञानस्य तत्सामानाधिकरण्योपपत्तिरिति शङ्कते—चैतन्येऽपीति। चिन्मात्राश्रिताज्ञाने सिद्धे ततस्तत्र ज्ञातृत्वाद्यध्याससिद्धिः, तत्सिद्धौ च तत्समानाधिकरणाज्ञानसिद्धिरिति परस्पराश्रयता इति दूषयति—न तस्येति। अज्ञानाध्यासस्य चिन्मात्रेऽनादित्वान्नित्यसाक्षिमात्रभास्यत्वाच्चोक्तपरस्पराश्रयो न दोषायेत्याशङ्क्याध्यासिकज्ञातृत्वाश्रयत्वेनाज्ञानाश्रयत्वेऽतिप्रसङ्गमाह—देहादाविति। आध्यासिकज्ञातृत्वादेरप्यवच्छिन्नचैतन्यनिष्ठत्वाच्चिन्मात्रे कथमपि न ज्ञातृत्वादिसंभव इत्याह—बुद्ध्यवच्छिन्न इति। अज्ञानभ्रान्त्यादेश्चिन्मात्राश्रयत्वे तत्प्रयुक्तसंसारोऽपि तत्रैव स्यादित्याह—अन्यथेति। चैतन्यस्याज्ञानाश्रयत्वं न संसारित्वप्रयोजकं किं त्वज्ञानकार्याहङ्कारविशिष्टत्वम्। तच्च जीव एवेति न ब्रह्मणि संसारः। विशेष्यगताज्ञाननिवृत्तौ विशिष्टगतज्ञानमेव हेतुरिति न तन्निवृत्त्यनुपपत्तिरिति शङ्कते—विशेष्येति। किं विशिष्टं विशेष्याद्भिन्नमुताभिन्नम्?। उभयथाऽपि न युक्तमिति परिहरति—न विशिष्टस्येति। किं च चिन्मात्रस्याज्ञानाश्रयत्वे तत्रैव तत्कार्यस्याप्यध्यासात् तद्विशिष्टमपि तदेवेति तन्निष्ठसंसारोपि चिन्मात्रस्यैव स्यादित्यहमर्थे तदनुभवो न स्यादित्याह—शुद्धेति। विशेष्यविशिष्टभावस्तन्त्रमित्येतदतिप्रसङ्गेन दूषयति—देहेति। विशेष्यगताज्ञानाद्विशिष्टे संसारे तयोरध्यस्तमैक्यं प्रयोजकं, ततश्चाहमर्थेऽपि तदनुभवोपपत्तिरिति शङ्कामुक्तातिप्रसङ्गेन दूषयति—एतेनेति।

मुखमात्रसंबन्धिना दर्पणाद्युपाधिना प्रतिबिम्बमुखे एव श्यामत्वादिविकारदर्शनादुपाधेः प्रतिबिम्बपक्षपातित्वं स्वभावः। तथा च चिन्मात्राश्रितमज्ञानमपि स्वस्मिंश्चित्प्रतिबिम्बस्वरूपजीव एव संसारहेतुर्न बिम्बात्मके ब्रह्मणीति शङ्कते—नन्विति।

अज्ञाने चित्प्रतिबिम्ब एवानुपपन्नः तस्यारोपितत्वेन मरीचितोयवत्प्रतिबिम्बोपाधित्वायोगादित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या दूषयति—न चेत्यादिना। किंचाज्ञानस्य

वाच्यम्। मरीचिकातोयेऽपि तद्देशस्थवृक्षादेः प्रतिबिम्बभ्रमदर्शनात्, अविद्याया अर्थक्रियाकारित्वेन ततो विलक्षणत्वाच्च। अविद्याया उपाधेराकाशाद्यात्मना परिणामे प्रतिबिम्बापायः स्यादिति चेत्। न, कार्यदशायामपि कारणस्वरूपानपायात्। न हि घटादिदशायां मृदादिस्वरूपमपैति, विशेषतश्च रजतादिभ्रमदशायामपि पुरोवर्तिनि शुक्तिं न जानामीत्यनुभवादज्ञानस्य तदवस्थत्वात्। न च मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्रव्यक्त्यन्तरस्येव जीवब्रह्मानुगतचित्वातिरिक्तचिन्मात्ररूपस्याभावात् कथं तस्याज्ञानाश्रयत्वमिति वाच्यम्। प्रतिबिम्बभ्रमे भेदमात्रस्यैव कल्पितत्वेन कल्पितभेदवच्चन्द्रद्वयस्वरूपभूततद्भेदाधिष्ठानचन्द्रव्यक्तिवत् जीवेश्वरस्वरूपभूततद्भेदनिमित्ताज्ञानाधिष्ठानचैतन्यव्यक्तेरपि सत्वात्।

अन्यथा कल्पितभेदवच्चन्द्रयोरचन्द्रत्वानुभवप्रसङ्गात्, व्यक्त्यतिरिक्तजातेरभावात्। जीवेश्वरयोश्चिद्रूपता न स्याच्चैतन्यातिरिक्तचित्वजातेरभावात्। परमते गगनादिप्रतिबिम्बस्थले गगनत्वजातेरभावाच्चेति चेत्। न, अज्ञानस्य स्वाश्रय एव भ्रमजनकत्वनियमात् अनादिभावरूपो न ज्ञाननिवर्त्य इति सामान्यव्याप्तेरज्ञानं ज्ञाननिवर्त्यमिति विशेषव्याप्तेर्बलीयस्त्ववदुपाधेः प्रतिबिम्बपक्षपातित्वमितिव्याप्तेरज्ञानं स्वाश्रये भ्रमं जनयतीति विशेषव्याप्तेर्बलवत्त्वात्। उपाधेः प्रतिबिम्बपक्षपातित्वमपि किं तत्र स्वधर्मप्रतिभासकत्वं, स्वकार्यप्रतिभासकत्वं वा, स्वकार्यष्ठिधर्मप्रतिभासकत्वं वा, प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा ?।

---

दर्पणादिवदविद्यातिरिक्तदोषाजन्यतयाऽर्थक्रियाहेतुत्वात्सत्त्वगुणप्रयुक्तस्वाच्छत्वाच्च प्रतिबिम्बोपाधित्वं युक्तमित्याह—अविद्याया इति। अज्ञानस्याकाशादिरूपेण परिणामे पूर्वरूपस्य नाशात् तदा चित्प्रतिबिम्बो न स्यादिति शङ्कते-अविद्याया इति। हेत्वसिद्ध्या दूषयति—न कार्येति। अज्ञानस्य स्वकार्यसमये विशिष्यानुभूयमानत्वादपि न तत्स्वरूपापाय इत्याह—विशेषत इति। ननु बिम्बप्रतिबिम्बमुखानुगतमुखत्वातिरिक्तमुखमात्रस्य बिम्बादिभावात्पूर्वसत्त्वान्मुखमात्रसंबन्धित्वं दर्पणादेर्युज्यते, अज्ञानस्य तु जीवब्रह्मभावरहितचिन्मात्रस्यानादिकालेऽसत्त्वात्तदाश्रितत्वमनुपपन्नमिति, नेत्याह—न चेति। बिम्बादिभावस्य भेदस्य चानादित्वेऽपि मिथ्यात्वाद्वस्तुतः तद्रहितं तदधिष्ठानचिन्मात्रमावश्यकमिति सदृष्टान्तमाह—प्रतिबिम्बेति।

ययोर्भेदः कल्पितः तयोस्तद्रहिततदधिष्ठानमात्रत्वाभावे बाधकमाह—अन्यथेति।

कल्पितभेदवच्चन्द्रयोरधिष्ठानचन्द्राद् भेदेऽपि चन्द्रत्वजातिमत्त्वाच्चन्द्रत्वानुभव इत्याशङ्क्याह—व्यक्तीति। जीवेश्वरयोरपि वस्तुतो भेदाधिष्ठानचिन्मात्रत्वाभावे जडत्वापत्तिरित्याह—जीवेश्वरयोरिति। चिद्भिन्नयोरपि चित्त्वजातिमत्त्वाच्चिद्रूपत्वमित्याशङ्क्य चिद्व्यक्तेरेकत्वाच्चित्वजातिरेवायुक्तेत्याह—चैतन्येति। किं च बिम्बादिभेदभ्रमे बिम्बाद्यतिरिक्तं तज्जातिमदेवाधिष्ठानमिति नियमे परमते गगने प्रतिबिम्बभ्रमो न

नाद्यः । मालिन्यादेर्दर्पणनिष्ठत्ववदविद्यारूपस्याविद्यावच्छिन्नत्वस्याविद्याप्रतिविम्बितत्वस्य कर्तृत्वादेर्वा बन्धस्याज्ञानाधर्मत्वात् । अविद्यास्तमयो मोक्ष इति मते अविद्याया बन्धत्वं, बन्धकत्वंवा, न तु बद्धत्वम् । न द्वितीयः विच्छेदादेरुपाधिकार्यस्य बिम्बे प्रतिबिम्बे च दर्शनात् । संसारस्यानादित्वेनोपाध्यकार्यत्वाच्च ।

न तृतीयचतुर्थौ । दर्पणादावदृष्टेः । एवं बुद्धिरूपोपाधेरपि न प्रतिबिम्बपक्षपातित्वं तस्या बिम्बपक्षपातिजपाकुसुमस्थानीयत्वेन प्रतिबिम्बपक्षपात्यादर्शस्थानीयत्वाभावात् । अस्तु तर्हि चैतन्यमात्रे संसारः, नित्यमुक्तत्वश्रुतिश्च बिम्बस्थानीयब्रह्मविषयेति चेत् । न अवच्छिन्नः प्रतिबिम्बो वा जीव इति मतद्वयेऽपि श्यामत्ववर्तुलत्वादीनां मुखमात्रमहाकाशयोरसत्त्वदर्शनेन तद्वत् चिन्मात्रे संसारायोगात् जीवेपि संसाराभावेन जीवेश्वरयोर्बन्धमुक्तिश्रुतिव्यवस्थाविरोधाच्च ।

अथ जीवो नावच्छिन्नचैतन्यं न वा प्रतिबिम्बितं किं तु ब्रह्मैव स्वाविद्यया राजपुत्र इव व्याधगृहीतो व्याधभावनया संसरति, तत्वमादिवाक्यजन्यसाक्षा-

---

स्यादित्यभिप्रेत्याह—गगनेति । एवं सिद्धान्तमतमनूद्य तन्निराकरोति—न अज्ञानस्येति । चैत्रगताज्ञानेन मैत्रे भ्रमादर्शनादज्ञानं स्वाश्रय एव भ्रमजनकं तथा चाज्ञानाश्रयचिन्मात्रस्यैव बिम्बादिरूपत्वे बिम्बभूतेश्वरेऽपि तत्कार्यभ्रमादिः स्यादित्यर्थः । ननूक्तमुपाधेः प्रतिबिम्बपक्षपातित्वमित्याशङ्क्य तदपि दुर्निरूपमित्यभिप्रेत्य विकल्पयति—उपाधेरिति । आद्येऽज्ञानादेरज्ञानाधर्मत्वात् प्रतिभासनियमो न स्यादिति दूषयति—नाद्य इति । बन्धस्त्वज्ञानधर्म एवेत्याशङ्क्याह—अविद्येति । यदि बन्धोऽज्ञानधर्मः स्यात् तर्ह्यज्ञानमेव बद्धं स्यात्ततश्च तन्निवृत्तिर्मोक्षो न भवेदिति भावः । प्रतिबिम्ब एव स्वकार्यप्रतिभासकत्वपक्षो दर्पणादावज्ञाने चासंभवीति दूषयति—न द्वितीय इति । आदिपदेन बिम्बत्वश्यामत्वादीनां वियदादीनां च परिग्रहः । जीवगतसंसारस्याग्न्यौष्ण्यवत्स्वाभाविकत्वात् तस्योपाधिकार्यत्वमप्यसिद्धमित्याह—संसारस्येति ।

स्वकार्यनिष्ठधर्मप्रतिभासकत्वं प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वेत्येतत्पक्षद्वयं निराकरोति—न तृतीयेति ।

अज्ञानस्य प्रतिबिम्बपक्षपातित्वाभावेऽप्यन्तःकरणस्य तदस्त्वित्याशङ्क्य तदभाववत्त्वेन संमतजपाकुसमस्थानीयत्वाङ्गीकारात्तदयुक्तमित्याह—एवमिति । चिन्मात्रमेवाज्ञानाश्रयस्तत्कार्यभ्रान्त्यादिरपि तस्यैव । न चैव "मन्यत्र धर्मादन्यत्राधर्मात्" ,'योऽशनायापिपासे शोकं मोहम्" इत्यादिश्रुतिविरोधः, तस्या बिम्बभूतेश्वरविषयत्वादिति मतान्तरमनुवदति—अस्तु तर्हीति । अस्मिन्मते किमुपाध्यवच्छिन्नो जीवः, उत तत्र चित्प्रतिबिम्बः ?; उभयथाऽप्यौपाधिकधर्माणां चिन्मात्रेऽसंभव इति सदृष्टान्तमाह—न अवच्छिन्न इति । चिन्मात्रस्यैव संसारित्वे बिम्बवत् प्रतिबिम्बात्मकजीवेऽपि तदभावात् 'तयारन्यः पिप्पलं स्वाद्वत्ति" इत्यादिश्रुतिविरोधश्च स्यादित्याह—जीवेऽपीति । वस्तुतो

त्कारेण राजत्वेन बोधितः कुमार इव व्याधभावात् संसारान्मुच्यते। न च नित्यमुक्तत्वश्रुतिविरोधः। तस्या वस्तुनः संसाराभावपरत्वादिति, तन्न। प्रतीयमानसंसारास्पृष्टत्वस्यैव तदर्थत्वात् जीवातिरिक्तब्रह्मानङ्गीकारे तद्विरोधस्यापरिहाराद् "यः सर्वज्ञः" इत्यादिश्रुतिविरोधश्च स्यात्।

अज्ञानस्य चिन्मात्राश्रयत्वे पूर्वपक्षः

किं चाज्ञानं शुद्धचितः स्वाभाविकं चेत् न निवर्तेत। औपाधिकं चेद् अन्योपाधिस्वीकारेऽन्योन्याश्रयाद्यापत्तेः, ब्रह्मण्यज्ञानस्वीकारे तस्य निरवद्यत्वश्रुतिविरोधश्च। तमस्त्वमपि हेतावन्धकारसाधारणं दुर्निरूपम्। आवारकत्वं च पटादौ व्यभिचारीति। अत्रोच्यते। अस्ति तावज्जीवस्य वेदान्तप्रतिपाद्याशनायादिरहितस्वप्रकाशस्वरूपविषयाज्ञानम्। अत्राज्ञानाभावे मम तादृशस्वरूपमस्ति न वेति संशयाद्ययोगात्। अनावृतप्रकाशे तदयोगात्। तादृक् स्वरूपं च तस्य निरूपितमेव।

ततश्च विषयाश्रयमज्ञानं सिद्धम्। अहमज्ञ इति प्रतीतिरपि अज्ञानस्यचैतन्यमात्राश्रयत्वविषयैव अहमनुभवगोचराश्रयत्वविषयत्वे तदप्रामाण्यप्रसङ्गात्। अज्ञानस्यानात्माश्रयत्वाभावात् अहमनुभवगोचरानात्मत्वस्य निरूपितत्वात्। तदुपहितचैतन्याश्रयत्वमज्ञानस्याहमज्ञ इत्यनुभवविषय इति चेत्। न, तदुपहित-

---

नित्यमुक्तं ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते इति सदृष्टान्तं मतान्तरमनुवदति—अथेत्यादिना। "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इत्यादिश्रुतौ वस्तुत इति पदाभावात् प्रतीयमानसंसारास्पर्शित्वमेव तदर्थः। स च जीवब्रह्मविभागानङ्गीकारे विरुध्येतेत्याह—तन्नेति। किं च ब्रह्मण एवाज्ञत्वादिमत्त्वे जगत्कारणस्य सर्वज्ञत्वपरश्रुतिपीडा स्यादित्याह—यः सर्वज्ञ इति।

किं च चिन्मात्रस्याज्ञानं किं स्वाभाविकमौपाधिकं वा?, नोभयथाऽपीत्याह—किं चेत्यादिना।

पूर्वोक्तहेतुद्वयमपि दूषयति—तमस्त्वमपीति। पटादाविति। तन्त्वाश्रितस्य पटस्य देशान्तरवर्तिवस्त्वावारकत्वेऽप्येकाश्रयविषयत्वाभावादित्यर्थः। जीवे तात्त्विकस्वरूपविषयाज्ञानस्यानुभवसिद्धत्वादेकाश्रयविषयत्वं तस्याऽऽवश्यकमिति समाधत्ते—अत्रोच्यत इति। तादृशस्वरूपे प्रमाणवैकल्यादेव संशयादि, न त्वज्ञानावृतत्वादित्याशङ्क्य स्वप्रकाशस्य स्वतः संशयविरोधित्वादावरणाभावे संशयादि न स्यादित्याह—अनावृतेति। जीवस्य वेदान्तवेद्यमशनायाद्यतीतं स्वरूपमेव नास्ति कुतस्तद्विषयाज्ञानमित्याशङ्क्य तस्य साक्षिविवेके निरूपितत्वान्नैवमित्याह—तादृगिति। यदुक्तमहमज्ञ इत्यहमर्थाश्रितमज्ञानमनुभूयत इति तत्राहमर्थस्य द्विरूपत्वाच्चिदंशस्यैवाज्ञानाश्रयत्वविषयोऽयमनुभव इत्याह—अहमिति। जडांशस्यैवाज्ञानाश्रयत्वं तद्विषयत्वं च किं न स्यादित्यत आह—अहमनुभवेति।

चैतन्याश्रयत्वमात्रस्य चिन्मात्राश्रयत्वपक्षेऽपि सत्त्वात्। तदाश्रयचैतन्यस्याहंकारेणाप्युपहितत्वात्। न ह्याकाशमात्रे वर्त्तमानं तमोऽपवरकाकाशे न वर्त्तते।

तदुपहितचैतन्यमात्राश्रितत्वं त्वज्ञानस्य न 'अहमज्ञः' इति प्रतीतिविषयः। अहमेवाज्ञः अहंकारावच्छिन्नमेवाज्ञानमिति वाऽनुभवाभावात्। अज्ञोऽहमीश्वरो न भवामीत्यनुभवेऽज्ञानाश्रयस्येश्वराद्भेदः प्रतीयत इति चेत्, सत्यम्। न ह्येतावता चिन्मात्राश्रयत्वविरोधोऽस्ति। अज्ञोऽहं चिद्रूपो न भवामीत्यनुभवस्यैव चिद्रूपमात्राश्रयत्वे बाधकत्वात्, तस्य चासत्त्वात्। तस्माद्वेदान्तप्रतिपाद्यं मामहं न जानामीत्यनुभवादेकाश्रयविषयमेवाज्ञानम्। प्रयोगश्च अहमितिप्रकाशविषयो न ब्रह्मविषयाज्ञानाश्रयः, तदाश्रयतावच्छेदको वा, कार्यत्वात् जडत्वात् घटादिवत्। अहमज्ञ इति प्रतीतिश्चाबाधिकेत्युक्तम्। कथं तर्हि चिन्मात्राश्रयमज्ञानं जीवेऽनुभूयते तदाश्रयस्य जीवचैतन्याभिन्नत्वादिति चेत् तर्हि ईश्वरस्याप्यज्ञत्वमहमज्ञ इति प्रतीतिश्च स्यादिति चेत्—

---

अनात्मनोऽहंकारस्याज्ञानाश्रयत्वाभावेऽपि तदुपहितचैतन्यमेव तदाश्रयोऽस्तु, न तु चिन्मात्रमिति शङ्कते—तदुपहितेति। किमज्ञानस्योपहितचैतन्याश्रितत्वमात्रं तदनुभवविषय इत्युच्यते, उतानुपहितानाश्रितत्वमपीति ?। आद्ये न विरोध इत्याह—न तदुपहितेति। चिन्मात्राश्रिताज्ञानस्य कथमुपहिताश्रितत्वमित्याशङ्क्याकाशमात्राश्रितपरिमाणान्धकारादेरुपहिताकाशेऽपि वृत्तिवदविरोध इत्याह—तदाश्रयेति।

द्वितीयं दूषयति—तदुपहितेति।

अज्ञानाश्रयस्य चिद्रूपेश्वराद् भेदावगमात्कथमज्ञानस्य चिन्मात्राश्रयत्वमिति शङ्कते—अज्ञोऽहमिति। अत्राज्ञानस्येश्वरभेदेन सामानाधिकरण्यमात्रं प्रतीयते तत् आत्मत्ववदज्ञानस्य चिन्मात्राश्रयत्वेऽपि न विरुद्ध्यते इति परिहरति—सत्यमिति। कीदृशस्तर्ह्यनुभवश्चिन्मात्राश्रयत्वविरोधीत्याकाङ्क्षायामाह—अज्ञोऽहमिति। अहङ्कारवादिनो मम तादृशोऽनुभवोऽस्तीत्याशङ्क्यान्येषां तदभावात् त्वदनुभवो वटयक्षानुभववन्निर्मूल इत्याह—तस्य चेति। मामहं न जामामीत्यनुभवस्य बाधकाभावात्तत एकाश्रयविषयत्वमज्ञानस्यावश्यकमित्याह—तस्मादिति। चिन्मात्राश्रितत्वेऽनुमानमप्याह—प्रयोगश्चेति। शुक्त्यवच्छिन्नचैतन्यनिष्ठाज्ञानानाश्रयत्वेनार्थान्तरतादारणाय ब्रह्मविषयेत्युक्तम्। तदाश्रयतावच्छेदको वेति। नेत्यनुषज्यते। अहङ्कारातिरिक्तजडानाश्रितस्याज्ञानस्याहङ्कारतदवच्छिन्नचैतन्याश्रितत्वनिषेधे चिन्मात्राश्रितत्वमेव पर्यवस्यतीति भावः। उक्तानुमानस्याहमज्ञ इति प्रत्यक्षबाधमाशङ्क्य तस्याहमर्थैकदेशचिदंशगाम्यज्ञानविषयत्वोपपादनान्नैवमित्याह—अहमज्ञ इति। उक्तानुमानस्य तर्कविरोधं शङ्कते—कथं तर्हीति। चिन्मात्रस्यैवाविद्यया जीवभावेन स्थितत्वात् तत्र तदनुभव इत्याशङ्क्य तर्हि चिन्मात्रस्यैव ब्रह्मभावेनापि स्थितत्वात्तत्रापि तदापात इत्याह—तदाश्रयस्येत्यादिना।

यद्यप्यज्ञानाश्रयश्चैतन्यं, ईश्वरेऽप्यज्ञानमस्त्येव तथापि न तेनेश्वरस्याज्ञत्वम्। तथा हि–किमज्ञानाश्रयस्यैव चैतन्यस्य जीवपरभावेन विभागे जीववदीश्वरोऽप्यनादिजीवज्ञाननिवर्त्याश्रयः स्वात्मनि तद्वैशिष्ट्यं च प्रतीयादित्युच्यते, किं वा जीव इव भ्रान्त्यादिमानहमज्ञ इति प्रतीतिमांश्च स्यात् ?। आद्ये इष्टापत्तिः। न हि सर्वज्ञेश्वरो जीवस्य स्वरूपावारकं तज्ज्ञाननिवर्त्यमनाद्यज्ञानपदाभिधेयमप्यस्तीति न जानाति। न चैतादृशं ज्ञानं तस्य सार्वज्ञ्यविरुद्धम्। न द्वितीयः। अज्ञानस्य तं प्रति स्वरूपावारकत्वाभावेन तस्य व्यामोहादेरसंभवात्। स्वरूपावारकस्यैवाज्ञो न जानामीत्यनुभवविषयत्वात्। अन्यथा त्वदभिभूतेश्वरेऽपि सर्वाधारे त्वदभिमतमज्ञानमस्तीति तस्य न जानामीत्यनुभवप्रसङ्गः। कथमेकमज्ञानं जीवस्य स्वरूपावारकं नेश्वरस्येति चेत्। न, त्वदभिमतमायाया इव पुरुषभेदेनैकस्याप्यज्ञानस्यावारकत्वानावारकत्वस्याविरुद्धत्वात् कार्यदर्शनस्य श्रुतिप्रमाणस्य चोभयत्र तुल्यत्वात्।

---

अज्ञानाश्रयचिन्मात्रस्यैव जीवेश्वरभावापत्त्यैश्वररूपचैतन्यस्याप्यज्ञानाश्रयत्वेऽपि न जीववदज्ञत्वमिति प्रतिजानीते–यद्यपीति।

तदुपपादयितुं ब्रह्मण्यापाद्यमानमज्ञत्वादि विकल्पयति–तथा हीति। अनादीति। अनादित्वे सति जीवगतब्रह्मविषयज्ञानेन निवर्त्यं यत् तदाश्रय इत्यर्थः। स्वात्मनीति। जीवं प्रति यत्स्वरूपावरकमज्ञानं चिन्मात्रे मयि वर्तत इति प्रतीयादित्यर्थः। ''मायिनं तु महेश्वरम्'' इति श्रवणादीश्वरस्याविद्याश्रयत्वमिष्टमित्याह–आद्य इति। ईश्वरस्य सर्वज्ञत्वादेव तस्मिंस्तद्वैशिष्ट्यप्रतीतिरपीष्टैवेत्याह–न हीति। जीवस्येति कर्मणि षष्ठी जीवं प्रतीत्यर्थः। जीवव्यामोहकरमज्ञानमप्यस्तीति ज्ञानमीश्वरस्य सर्वज्ञत्वानुगुणमेव न तद्विरुद्धमित्याह–न चैतादृशमिति। ईश्वराश्रितमप्यज्ञानं तं प्रति न किंचिदप्यावृणोतीति न तस्याज्ञत्वभ्रान्तत्वादिदोषप्रसङ्ग इत्याह–न द्वितीय इति। अज्ञानाश्रयत्वमात्रेणाज्ञत्वानुभवापादने बाधकमाह–अन्यथेति। अज्ञानस्य जीवं प्रत्येव स्वरूपावारकत्वं स्वभावश्चेदीश्वरं प्रत्यपि तथा स्यान्न चेत्तथा जीवं प्रत्यपि तन्न स्यादिति शङ्कते–कथमिति। अज्ञानस्य जीवं प्रत्येव स्वरूपावारकत्वं स्वभावो नेश्वरं प्रति, यथा परमते मायाया ईश्वरतदनुगृहीतपुरुषातिरिक्तपुरुषमात्रव्यामोहकत्वं तद्वदित्याह–न त्वदभिमतेति। पुरुषविषय एव व्यामोहकार्यस्य संसारस्य दर्शनादीश्वरस्य च नित्यमुक्तत्वश्रवणात् परमते तथा व्यवस्थेत्याशङ्क्याज्ञानावरणानावरणव्यवस्थायामप्ययं हेतुस्तुल्य इत्याह–कार्येति।

ईश्वरस्य स्वाभाविकसर्वज्ञत्वविरोधान्न व्यामोह इत्येतदपि तुल्यमित्याह—तस्येति।

तस्य स्वभावसर्वज्ञत्वान्न मायावरणमित्यपि तुल्यम्। न चेश्वरस्याज्ञानाश्रयत्वे निरवद्यत्वश्रुतिव्याकोपः सर्वाधारे तस्मिन्सार्वज्ञ्यविरुद्धावद्यस्यैव व्यामोहादेः श्रुत्या निषिद्धत्वात्। अन्यथा "मायिनं तु महेश्वरम्" "मम माया" इत्यादिश्रुतिस्मृति-विरोधात्, मायाज्ञानाभेदात् मायाया अपि दोषत्वाच्च।

यत्त्वज्ञानस्य चिन्मात्राश्रयत्वे बन्धोऽपि तत्रैव स्यान्न जीव इति, तन्न। अज्ञानाश्रयस्यैव जीवरूपत्वात्। न हि जीवेश्वरविभागानाक्रान्तं किं चिदिदानीं चैतन्यमस्ति। ईश्वरे तु त्वन्मत इव बन्धककर्माभावात्संसारभ्रमहेत्वावरणाभावाच्च न बन्धः।

ननु धर्मिद्वये सति व्यवस्था युज्यते नैकधर्मिणीति चेत्। न यथा हि दर्पणाद्युपाधिनैकस्मिन्नेव मुखे आरोपितभेदे प्रतिबिम्ब एव श्यामत्वादिसंबन्धो न बिम्बे, एवमज्ञानेनापि प्रतिबिम्बजीव एव बन्धो जायते न बिम्बे भ्रमविशेषस्य प्रतिबिम्बनैयत्यमे ोपाधेः प्रतिबिंबपक्षपातित्वगिरोच्यते।

---

ईश्वरेऽज्ञानलक्षणदोषाङ्गीकारे तस्य निरवद्यत्वश्रुतिविरोध इत्याशङ्क्याज्ञानस्य जीवं प्रत्येव दोषत्वेनेश्वरं प्रत्यदोषत्वान्नैवमित्यभिप्रेत्याह—न चेश्वरस्येति। निरवद्यश्रुत्येश्वरेऽज्ञानस्वरूपस्यापि निषेधे बाधकमाह—अन्यथेति। न चोक्तश्रुत्यादिनेश्वरे मायासंबन्ध एव प्रतीयते न चाज्ञानसंबन्ध इत्याशङ्क्य तयोरभेदस्योपपादितत्वादित्यभिप्रेत्याह—मायेति। ननु मायिनमितीश्वरस्याज्ञानविषयत्वमेतोच्यते न तु तदाश्रयत्वमिति चेत्। न, तस्य स्वाश्रयाव्यामोहकत्वेनैव मायाशब्दार्थत्वात् जीवमात्राश्रितत्वे तदयोगादिति भावः। मायाऽविद्ययोर्भेदाङ्गीकारेणेश्वरस्य मायामात्राश्रयत्वाभ्युपगमेऽपि निरवद्यत्वश्रुतिविरोधस्तुल्य इत्यभिप्रेत्याह—मायाया इति। परोक्तंबाधकान्तरमनुवदति दूषयितुम्—यत्त्विति। अज्ञानाश्रयचिन्मात्रस्यैव जीवभावेनावस्थाने जीवाश्रितसंसारस्याज्ञानसामानाधिकरण्यमक्षतमित्याह—तन्नेति। अविद्यादशायां जीवेशविभागानाक्रान्तचिन्मात्राप्रतीतेर्जीवेश्वरभिन्नं चिन्मात्रमेव नास्ति कुतस्तत्र संसार इत्याह—न हीति। अज्ञानाश्रयचिन्मात्रस्यैव जीवेशभावेनावस्थाने जीववदीश्वरेऽपि संसारः स्यादित्युक्तं परिहरति—ईश्वर इति। परमते जीवेशभेदस्य सत्त्वादुक्तव्यवस्था घटते, सिद्धान्ते तु तदभावात्सा न युक्तेति शङ्कते—नन्विति। सत एव भेदाद्विरुद्धधर्म्मव्यवस्थेत्यत्र निदर्शनाभावाद् व्यवस्थासमानसत्ताक एव भेदस्तत्प्रयोजकः सिद्धान्तेऽपि जीवेश्वरयोस्तादृग्भेदाभ्युपगमात्तत एव तद्धर्माणां व्यवस्थोपपत्तिरिति सदृष्टान्तरमाह—न यथेति। दर्पणाद्युपाधेः प्रतिबिम्बमुखे मालिन्यवक्रत्वाद्यनिष्टप्रतिभासप्रयोजकत्वदर्शनादुपाधेः प्रतिबिम्ब एवानिष्टप्रतिभासप्रयोजकत्वं प्रतिबिम्बपक्षपातित्वं ततश्चाज्ञानप्रयुक्ताज्ञत्वाद्यनिष्टभ्रमो जीव एव प्रतिबिम्बात्मके न त्वीश्वरे बिम्बात्मनीत्यभिप्रेत्याह—भ्रमविशेषस्येति। प्रतिबिम्बपक्षपातित्वशब्दस्यार्थान्तरमाह—अथ वेति।

**अथ वोपाधिः स्वधर्मं प्रतिबिम्ब एवारोपयतीति नियमस्तदर्थः। कर्तृत्वादिबन्धे चान्तःकरणमेवोपाधिर्न त्वज्ञानमात्रं सुषुप्तौ तस्मिन्सत्यपि कर्तृत्वाद्यदर्शनात्। उपपादितं चैतत्साक्षिविवेके। कर्तृत्वादिकं चान्तःकरणधर्म इति तत्प्रतिबिम्ब एव एव बन्धो न ब्रह्मणि।**

**अन्तःकरणं च प्रतिबिम्बोपाधिरिति दर्पणस्थानीयमपि न जपाकुसुमस्थानीयमेव तत्र प्रमाणाभावात्। बुद्धौ प्रवेशरूपप्रतिबिम्बभावस्यतत्र तत्र श्रूयमाणत्वात्। एवं ब्रह्माकारवृत्यभिव्यक्तं तदाश्रयचैतन्यं तन्निवर्तकमिति न चैतन्याश्रयाज्ञानस्य निवृत्त्यनुपपत्तिः। ननु विषयाश्रयं चेदज्ञानं कथं प्रतीयेत। आवृतस्य प्रकाशकत्वानुप-**

---

अत्रापि दर्पणधर्मस्य मालिन्यादेः प्रतिबिम्बमुख एवारोपवदज्ञानधर्म्मस्य जाड्यादेरपि जीव एवारोप इति व्यवस्थोपपत्तिः। नन्वेवं वियदादेरप्यज्ञानोपाधिपरिणामत्वेन तद्धर्मत्वात् प्रतिबिम्बनैयत्यापात इति चेत् न। उक्तनियमस्योपाधिसन्निकर्षकालनियततद्धर्मविषयत्वाद्वियदादेस्त्वतथात्वात्। ननु बिम्बप्रतिबिम्बयोरुभयोरप्यौपाधिकभेदवत्त्वात्कथमयं नियम इति चेत्। न, उपाधिर्हि ग्रीवास्थमुखप्रतियोगिकं स्वनिष्ठभेदं प्रतिबिम्बमुख एवारोपयति न तु ग्रीवास्थमुखे। तस्य स्वस्माद् भेदाप्रतीतेः। यस्तु प्रतिबिम्बमुखात्तस्य भेदः प्रतीयते न स पूर्वंदर्पणधर्मः सन् तदुपाधिना तत्रारोप्यते दर्पणग्रीवास्थमुखयोर्युगपदेव प्रतिबिम्बभेदेनान्वयात्। तस्मात् बिम्बे प्रतिबिम्बप्रतियोगिको भेदो बिम्बत्ववदुपाधिप्रयुक्त एव न तूपाधिधर्मः। एवमनाद्युपाधिनिष्ठोऽपि भेदः प्रतिबिम्ब एवारोप्यते इति दृष्टानुरोधेन कल्पनीयमिति भावः। कथं तर्ह्यज्ञानाधर्मस्य कर्तृत्वादिबन्धस्य प्रतिबिम्बनैयत्यमित्याशङ्क्य तदुपाध्यन्तरप्रयुक्तमित्याह—कर्तृत्वादीति। एवकारार्थमाह—नत्विति। अज्ञानस्यात्मनि कर्तृत्वाद्यारोपकान्तः करणोपादानत्वात्तत्प्रयोजकत्वमात्रं न तु साक्षात्तदुपाधित्वं सत्यप्यज्ञानेऽन्तः करणाभावे तददर्शनादित्यर्थः। ननु जलादेश्चलनादिवदज्ञानस्यैव कर्तृत्वादिकं कादाचित्कधर्मः किन्न स्यादिति तटस्थशङ्कानिराकरणायाह—उपपादितमिति। कर्तृत्वादेरहमनुभवविषयधर्मत्वानुभवादन्तःकरणस्यैव तथात्वात्तद्धर्मत्वमेवेत्येतदकर्त्रात्मवादे निरूपितमित्यर्थः। फलितमाह—कर्तृत्वादिकमिति। अज्ञाने चित्प्रतिबिम्बात्मकजीवस्यैवान्तः करणे प्रतिबिम्बितत्वात्तदुपाधिकबन्धोऽपि तत्रैव व्यवस्थित इत्यर्थः।

यदुक्तमन्तः करणस्य जपाकुसुमस्थानीयत्वात् प्रतिबिम्बोपाधित्वमेव नेति तद्दूषयति—अन्तःकरणमिति।

अतःकरणस्य प्रतिबिम्बोपाधित्वेऽपि मानं नेत्याशङ्क्याह—बुद्धाविति। "आत्मानमन्विच्छ गुहां प्रविष्टं" "गुहाहितं गह्वरेष्ठं पुराणम्"। 'सदा जनानां हृदये सन्निविष्टः"-'कोशांश्च सृष्ट्वा प्रविश्य" इत्येवमादौ परस्य जीवरूपेण बुद्ध्यादिप्रवेशश्रवणादपरिच्छिन्नस्य तस्य तत्प्रतिबिम्बभावव्यतिरेकेण प्रवेशासंभवाद् बुद्ध्यादेरपि प्रतिबिम्बोपाधित्वमित्यर्थः। यदुक्तं चिन्मात्राश्रिताज्ञानसमानाधिकरणज्ञानासंभवात् तस्य निवृत्त्यनुपप-

पत्तेः;प्रकाशमानस्यैव प्रकाशकत्वात् । न चाज्ञानसाक्ष्यंशचैतन्यं नावृतमिति वाच्यम् । आवृतानावृतांशभेदाभावादिति; मैवम् । आवृतस्यापि प्रकाशस्य प्रकाशत्वानपायात् तस्याज्ञानप्रकाशकत्वोपपत्तेः ।

आवृतत्वे प्रकारान्तरम्

अथ वा प्रकाशोऽनावृत एव, चैतन्यं नास्ति न प्रकाशत इति व्यवहाराभावेन चैतन्ये तद्विषयत्वयोग्यतालक्षणावृतत्वाभावात् । न चैवं तदावृतं न स्यादिति वाच्यम् । मय्यानन्दो नास्ति न प्रकाशत इत्यादिव्यवहारदर्शनेन तद्विषयत्वयोग्यतालक्षणावृतत्वस्यापि सत्त्वात् । न चावृतानावृतभेदप्रसङ्गः आवृतत्वस्य कल्पितत्वेनाविरोधेऽपि कल्पितावरणं चैतन्येऽपि स्यादिति वाच्यम् । चैतन्य आवरणकृत्याभावेनावृतत्वानुपपत्तेः । चैतन्यानन्दयोरत्यन्ताभेदस्यापि श्रुतिन्यायसिद्धत्वात्

---

त्तिरिति । तत्राह—एवमिति । कर्तृत्वादिबन्धस्येव ब्रह्माकारान्तः करणवृत्तेरप्यज्ञानाश्रयजीवचैतन्यमधिष्ठानतयाऽऽश्रय इत्यज्ञानसामानाधिकरण्यम् । तद्वद् वृत्या तदभिव्यक्ताधिष्ठानचैतन्येन चाऽज्ञाननिवृत्त्युपपत्तिरिति भावः । अज्ञानावृतस्यैवाज्ञानविषयत्वात्तस्यैव तदाश्रयत्वे ततोऽज्ञानप्रथा न स्यादिति शङ्कते—नन्विति । प्रकाशमानस्यैवेति । इतरथा घटादिकमप्यावृतस्वाधिष्ठानचैतन्येन प्रकाशेतेति भावः । चिन्मात्रस्यैकोंऽशोऽज्ञानावृतः अपरोंऽशोऽनावृतोऽज्ञानसाधक इत्याशङ्क्य तत्रांशभेदाभावान्मैवमित्याह—न चेति । अज्ञानावरणेन चैतन्यस्य प्रकाशरूपत्वानपायात्तस्येतराप्रकाशकत्वेपि स्वावारकाज्ञानसत्ताप्रकारकसंशयादिविरोधित्वरूपं तत्प्रकाशकत्वमविरुद्धम् । राह्वावृतसौरप्रकाशस्य स्वावारकप्रकाशकत्वदर्शनादित्यभिप्रेत्य परिहरति—मैवमिति ।

अज्ञानाश्रयचिन्मात्रस्यानन्दादिरूपेणावृतत्वादज्ञानविषयत्वं चिद्रूपेणानावृतत्वात्तदवभासकत्वं चाविरुद्धमिति पक्षान्तरमाह—अथ वेति ।

स्वप्रकाशत्वेन "अस्ति प्रकाशत" इति व्यवहारयोग्ये नास्ति न प्रकाशत इति व्यवहारयोग्यत्वमविद्याधीनावरणमित्यनन्तरवादे वक्ष्यते। ततश्च "चैतन्याभेदो मयि नास्ति न प्रकाशत" इतिव्यवहारदर्शनेन चैतन्यात्माभेदस्यावृतत्वमपि । मयि चैतन्यं नास्तीत्यादिव्यवहारादर्शनान्न तेन रूपेणावृतत्वं वृत्तिविशेषाभावदशायामानन्दो नास्ति न प्रकाशत इति व्यवहारदर्शनेन तेन रूपेणावृतत्वमात्मन इत्यर्थः । ननूक्तावरणानावरणे विरुद्धेऽविरुद्धे वा ? । आद्ये तदाश्रययोरानन्दचैतन्ययोर्भेदापातेनात्मनश्चिदानन्दरूपत्वं न स्यात् । द्वितीये चिद्रूपेऽप्यावरणापातः । तस्यावरणाविरोधादिति न शङ्कनीयम् । अविरुद्धस्याप्यावरणस्य चैतन्ये कल्पकाभावादेवाभावादित्याह—न चेत्यादिना । चैतन्यस्यावृतानन्दभेदादेवानावरणं किं न स्यादित्यत आह—चैतन्येति । "विज्ञानमानन्दं ब्रह्म" "सदानन्दचिन्मात्रम्" इत्यादिश्रुत्या चिद्भिन्नस्यानन्दस्य दृश्यतया कल्पितत्वेनापुरुषार्थ-

कल्पितावृतत्वस्य स्वाश्रये तदभावाविरुद्धत्वात्। आवृतत्वानावृतत्वयोः कल्पितधर्मिभेदादविरोध इति केचित् ॥

न चावरणसिद्ध्यनन्तरं भेदारोप इत्यन्योन्याश्रयः। उभयोरप्यनादित्वात्। न चानादित्वे कल्पितत्वानुपपत्तिः। मिथ्यात्वपर्यायकल्पितत्वस्यानादित्वेऽप्यविरोधात्। तस्माद् ब्रह्मविषयमज्ञानं चैतन्यमात्राश्रयमिति रजतादिभ्रमहेत्वज्ञानमपि शुद्धचैतन्यविषयं तदाश्रयं च तस्यैव तद्भ्रमहेतुत्वात्। शुक्तिकावच्छिन्नचैतन्येऽज्ञानान्तराभावात्। न चैवं शुक्त्याकारवृत्त्या तदनवभासप्रसङ्गः, तदवच्छिन्नचैतन्यस्यावृतत्वात् तदावरणस्य ततोऽनिवृत्तेरिति वाच्यम्। अज्ञानस्य तत्तदाकारवृत्तिसंसृष्टचैतन्याविषयस्वभावतया सत्यपि तस्मिन् वृत्त्या तदवभाससंभवात्। सोऽयं वृत्तेरावणाभिभवो नाम। अस्तु वाऽज्ञानान्तरं घटं जानामीति घटज्ञानविरो-

---

त्वापातादित्यादियुक्त्या च तयोर्भेदाभावसिद्धेरुक्तावरणानवरणे न धर्मिभेदप्रयुक्ते इत्यर्थः। नन्वनावृतचिन्मात्रत्व आनन्दस्याप्यावृतत्वं न स्यात् वास्तवानावरणसमसत्ताकावरणान्तराभावेन कल्पितावरणस्यैव तद्विरोधित्वादिति, तत्राह—कल्पितेति। कल्पितस्य शुक्तिरूप्यादेः स्वाभावेन सहावस्थानदर्शनादभावस्य स्वाश्रये प्रतियोगिसत्त्वेनैव विरोधो न प्रतियोगिनेत्यसकृदुक्तत्वादनावृतत्वमावरणसत्वाभावेऽपि तदुपपद्यत इति भावः। चिदानन्दयोर्वास्तवाभेदेऽप्यनिर्वचनीयभेदादावरणानावरणव्यवस्थेति मतान्तरमाह—आवृतत्वेति।

अनावृते भेदारोपाभावादावरणाधीनो भेदारोपः। आवरणस्य तदधीनत्वेऽन्योन्याश्रय इति चेत् न। उभयोरप्यनादित्वात्साक्षिमात्रभास्यत्वाच्चोत्पत्तिज्ञप्त्योः परस्परापेक्षाभावात्। प्रयुक्तौ तु परस्परापेक्षा न दोष इत्यभिप्रेत्याह—न चेति।

ननु दोषजन्यस्यैव कल्पितपदार्थत्वाद् भेदादेरनादित्वे कल्पितत्वानुपपत्तिरिति चेत् न। परमते भ्रमस्य दोषजन्यत्वेऽपि कल्पितत्वाभावान्मिथ्यात्वमेव कल्पितत्वम्। तच्च बाध्यत्वं तदनादित्वेन न विरुद्धमित्याह—न चानादित्वे इत्यादिना। मूलाज्ञानस्यैकाश्रयविषयत्वमुपसंहरति—तस्मादिति। अज्ञानमेकमेवेति मते रजतादिभ्रमहेत्वज्ञानस्य मूलाज्ञानादभेदात्तदप्येकाश्रयविषयमित्याह—रजतादीति। मूलाज्ञानावृतचिन्मात्रस्यैव शुक्तिकाद्यवच्छिन्नत्वे शुक्त्याद्याकारवृत्या तदावरणनिवृत्त्ययोगाच्छुक्त्यादेरापरोक्ष्यं न स्यादित्याशङ्कामपवदति—न चेति। हेतुमाह—अज्ञानस्येति। अन्तःकरणवृत्त्यवच्छिन्नचैतन्यातिरिक्तचैतन्यावरणस्वभावत्वादज्ञानस्य शुक्त्याद्याकारवृत्त्यावच्छेददशायां तदवच्छिन्नचैतन्यमज्ञानेनानावृतमिति ततः शुक्त्यादेरपरोक्षतयाऽवभासोपपत्तिरित्यर्थः। अज्ञानस्य वृत्त्यवच्छिन्नचैतन्यानावरकत्वमेव वृत्तेर्हेतोरावरणाभिभव इति तत्र तत्रोच्यते, न त्वज्ञाननिवृत्तिरित्यभिप्रेत्याह—सोऽयमिति। रजतादिभ्रमहेत्वज्ञानं मूलाज्ञानादन्यदेवेति मतान्तरमाह—अस्तु वेति। घटाद्यज्ञानस्य घटादिज्ञानविरोधित्वानुभवात्

धितया तदनुभवात्, ब्रह्मज्ञानस्य तदयोगात्। शुक्तिकादिज्ञानेन तदज्ञाननिवृत्त्यनुभवाच्च तदपि समानाश्रयविषयम्।

अवस्थाज्ञानस्य विषयनिष्ठत्वे अनुभवविरोधः

नन्वेवं विषयचैतन्यगताज्ञानान्तरस्य कथमहमिदं न जानामीति प्रतीतिरिति चेत्। न, अवस्थावस्थावतोरभेदादवस्थावतो मूलाज्ञानस्यात्मगतत्वात् तथानुभव इति केचित्। अन्ये तु चैतन्यैक्यादित्याहुः। अपरे तु शुक्तिमहं न जानामीत्यनुभवो मूलाज्ञानविषयः शुक्त्यादेरपि तद्विषयाभिन्नतया तद्विषयत्वानुभवात् रजताद्युपादानमज्ञानन्तु कार्य्यानुपपत्तिगम्यमित्याहुः। अथ वा मूलाज्ञानस्याश्रयविषयाभेदानुभवात् तदविरुद्धागमानुमानाभ्यामस्तु चैतन्यमात्रमाश्रयो विषयश्च। शुक्त्याद्यज्ञानस्याहमिदं न जानामीतितद्भेदानुभवात् अहमर्थचैतन्यमाश्रयः। शुक्त्याद्यवच्छिन्नचैतन्यं विषयः।

न चावारकत्वादिना तदभेदानुमानम्। अनुभवविरोधे तस्याभासत्वात्। अन्याश्रिताज्ञानेनापि अन्यत्र विपरीतव्यवहारालम्बनयोग्यत्वस्यावरणस्य कर्त्तुं शक्यत्वात्। करणाश्रितेनापि विषयसंयोगेन कर्त्तरि ज्ञानदर्शनादिति। अविद्या-

---

सति घटादिज्ञाने तन्निवृत्त्यनुभवाच्च तन्मूलाज्ञानादन्यदेवेत्यर्थः। साक्षिगतावस्थाज्ञानस्य शुक्त्याद्यवच्छिन्नचैतन्यमेवाश्रयो विषयश्चेति तदप्येकाश्रयविषयमित्याह—तदपीति।

अवस्थाज्ञानस्य विषयचैतन्यनिष्ठत्वे तस्य प्रमातृसंबधितयाऽनुभवायोग इति शङ्कते—नन्विति।

अवस्थाज्ञानस्य मूलाज्ञानधर्मत्वाद्धर्मधर्मिणोरभेदान्मूलाज्ञानस्य चाहंकारसमानाधिकरणत्वादवस्थाज्ञानमपि तदनुरक्ततया भातीति केषांचित्परिहारमाह—अवस्थेति। स्वमतमाह—अन्येत्विति। यथा मैत्रादेः देवदत्तान्तः करणावच्छिन्नसाक्षिसम्बन्धाभावेऽपि वस्तुतस्तदभिन्नचैतन्येऽध्यासमात्रेण तेनाज्ञाततयाऽनुभूयते, एवं घटावच्छिन्नचैतन्यस्थाज्ञानस्याहंकारावच्छिन्नचैतन्येन विशिष्य संबधाभावेऽपि वस्तुतोऽज्ञानाश्रयचैतन्यस्य तेनाभेदमात्रेणाहमिदं न जानामीति प्रतीतिरुपपद्यते। घटादेरज्ञाततयाऽनुभव इवाज्ञानानुभवेऽपि तदधिष्ठानचैतन्यप्रमातृचैतन्ययोर्वास्तवाभेदस्यैव प्रयोजकत्वात्। विषयचैतन्याश्रितस्याप्यज्ञानस्य तन्निवर्तकज्ञानाश्रयप्रमात्रेतरव्यावृत्तस्वरूपसम्बन्धविशेषाच्छाखाग्रे चन्द्रमा इतिवन्मय्यज्ञानमित्यादिप्रतीतिरुपपद्यत इति भावः। सर्वत्र न जानामीति मूलाज्ञानस्यैवानुभूयमानत्वादवस्थाज्ञानानामननुभव इष्ट इति मतान्तरमाह—अपरेत्विति। मूलाज्ञानं प्रति शुक्त्यादेर्विषयत्वतदवच्छेदकत्वयोरभावात्कथं शुक्तिं न जानामीत्यादिप्रतीतिरित्याशङ्क्याह—शुक्त्यादेरिति। अज्ञानविषयब्रह्माभिन्नसत्ताकतया शुक्त्यादेरपि तद्विषयत्वानुभव इत्यर्थः। एवं तर्हि मानाभावादवस्थाज्ञानमेव न सिद्ध्येदित्या-

प्रतिबिम्बिते जीवेऽविद्या वर्तते न ब्रह्मणि ब्रह्मणो निरवद्यत्वश्रुतेः। मायाविच्चश्रुते-र्मायाविषयत्वेनाप्युपपत्तेरिति केचिन। न चान्योन्याश्रयः अविद्याजीवत्वयोरना-दित्वात्। केवलसाक्षिवेद्यत्वाच्च। ननु जीवत्वमविद्याप्रयुक्तम्। अविद्या च जीवा-श्रयैवेति च प्रयुक्तावितरेतराश्रयः; तदाह नवीनः—

अविद्याजीवयो र्यत्र ह्यपेक्षा तन्निरोधकः।
अन्योन्यसंश्रयो नोचेदन्योन्याधीनताक्षतिः॥

इति चेत्।

अविद्याया जीवनिष्ठत्वे परस्पराश्रयत्वदोषपरिहारः

न ह्यविद्याया जीवत्वप्रयोजकत्वं तत्कारणत्वेन तदवच्छेदकत्वेन वा। तस्यानादित्वात्। किं त्वविद्योपहिते जीवत्वम्। उपाधिश्च यद्यपि तटस्थ एव तथापि तदधीनपृथक्त्वाश्रयचैतन्ये जीवत्वमिति तदाश्रयतावच्छेदकत्वेन जीवत्व-व्यतिरेकव्याप्यव्यतिरेकप्रतियोगिनीति सा तत्प्रयोजिका। आश्रयतावच्छेदकं त्व-न्योन्यसापेक्षमन्यमतेऽपि दृष्टम्। यथा द्रव्यत्वगुणत्वयोः प्रमेयत्वाभिधेयत्वयोर्वेति

---

शक्त्य व्यवहारदशायां बाध्यमानकार्यानुपपत्त्या तत्सिद्धिरित्याह—रजतेति। रजतादिक-मज्ञातचैतन्यविवर्तो न त्वज्ञानविवर्त्त इति मतेन मूलाज्ञानस्यैवैकाश्रयविषयत्वं न त्व-वस्थाज्ञानानामित्याह—अथवेति। अभेदानुभवादिति। वेदान्तवेद्यं मामहं न जानामी-त्यर्थः। "मायिनं तु महेश्वरम्" इत्यागमपदार्थः। अहमिति प्रकाशविषयो न ब्रह्मविष-याज्ञानाश्रयस्तदवच्छेदको वा इत्याद्यनुमानपदार्थः। अवस्थाज्ञानमेकाश्रयविषयम् आवारकत्वात् मूलाज्ञानवदित्यनुमानं शुक्तिमहं न जानामीत्याद्याश्रयविषयभेदविषय-धर्मिग्राहकानुभवविरोधेन दूषयति—न चेति।

अज्ञानस्य प्रमातृचैतन्यगतत्वे ततः कथमन्यत्रावरणं अपवरकान्तः स्थेन तमसा बाह्यप्रदेश आवरणादर्शनादित्याशङ्क्य हेतुहेतुमतोरेकाश्रयत्वनियमाभावान्न तदिति सदृष्टान्तमाह—अन्येति। वाचस्पतिना मूलाज्ञानस्याप्याश्रयविषयभेदोऽभ्युपगतः। तमु-पपादयितुमाह—अविद्येति। ब्रह्मणो मायात्मकाज्ञानानाश्रयत्वे "मायिनं तु महेश्वरम् इति श्रुतिविरोध इत्याशङ्क्याह—मायाविच्चेति। ननु चैतन्यस्य वस्तुतो जीवत्वाभावा-दविद्याधीनं जीवत्वं तदवच्छिन्नाश्रयाऽविद्येति मतेऽविद्याऽपि तदधीनेति परस्पराश्रय इत्यत आह—न चेति। किमविद्याजीवत्वयोरुत्पत्तावन्योन्यापेक्षा उत ज्ञप्तौ प्रयुक्तो वा?। नाद्यः। तयोरुत्पत्तेरेवाभावादित्याह—अविद्येति। न द्वितीयः। तज्ज्ञानस्य नित्य-तयाऽन्यानपेक्षत्वादित्याह—केवलेति। तृतीयं शङ्कते—नन्विति। प्रयुक्तावितरेतराश्रयत्वे नोक्तदोष इत्याशङ्क्य तस्य दोषत्वं परोक्तश्लोकेन दर्शयति—तदाहेति।

अविद्याजीवत्वयोर्यद्यन्योन्यं प्रति कारणत्वेन कारणतावच्छेदकत्वेन वा प्रयोज-

न दोषः। न चाज्ञानाजन्यत्वेजीवत्वादेः कथं मृषात्वमिति वाच्यम् अज्ञानस्येवानादिधर्मस्यापि स्वभावप्रयुक्तमिथ्यात्वस्याज्ञानजन्यत्वम् विनाप्यविरोधात्। नचैवं जीवत्वादेः कथमज्ञानप्रयुक्तत्वं वैपरीत्यस्यापि सुवचत्वादिति वाच्यम्। ज्ञानकालनियतव्यतिरेकप्रतियोगिजीवत्वादेरज्ञानप्रयोज्यत्वात्। अन्यथा तन्निवृत्तौ तदनिवृत्तिप्रसङ्गात्। न च ज्ञानेनैव तन्निवृत्तिरिति वाच्यम्। सत्यज्ञाने तदयोगात्। श्रुतौ स्मृतौ च जीवत्वादेः अज्ञानाधीनत्वस्य सिद्धत्वाच्च।

एवमीश्वरत्वमप्यविद्याप्रयुक्तम्। "जीवेशावाभासेन करोति" इति श्रुतेः। तत्प्रयुक्तिमात्रेण करोतिश्रुतिः। प्रयुक्तिश्चोक्ता। जीवेश्वराभ्यामेव तयोः कल्पने आत्माश्रयः। अन्योन्यकल्पने वाऽन्योन्याश्रय इति नवीनोक्तमप्यत एवासत्। अनादित्वात्। वस्तुतस्तु ब्रह्मवादे आत्माश्रयत्वादिर्न दोषः। अतो मतद्वयेऽपि न दोष इति।

---

कता स्यात्तह्यु भयोरप्यसिद्ध्यापातेनान्योन्यप्रयुक्तिरपि न स्यान्न त्वेतदस्ति, किं तु मुखप्रतिबिम्बे श्यामत्वव्यवस्थापकभेदोपाधितया दर्पणं तत्प्रयोजकमितिवच्चित्प्रतिबिम्बे जीवत्वव्यवस्थापकभेदोपाधित्वादविद्याभावे जीवत्वस्याप्यभावादविद्या जीवत्वप्रयोजिकेत्युच्यते जीवत्वमप्यविद्याश्रयतावच्छेदकत्वात्तत्प्रयोजकमित्युच्यते। आश्रयतावच्छेकतया च परस्परापेक्षा परैरपीष्यत इति न दोष इत्यभिप्रेत्याह--न ह्यविद्याया इत्यादिना।

जीवत्वस्याज्ञानाकार्यत्वे चैतन्यवन्मिथ्यात्वं न स्यादित्याशङ्क्य न मिथ्यात्वमविद्याकार्यत्वप्रयुक्तं तदभावेप्यज्ञानस्य मिथ्यात्वात् किं तु जडत्वप्रयुक्तम्, तच्च जीवत्वस्यानादित्वेऽप्युपपद्यत इत्याह--न चाज्ञानेति। ननु जीवत्वजीवेशभेदादेरनादित्वे कथं तस्य तत्र तत्राज्ञानप्रयुक्त्वाभिधानं तत्समानाधिकरणत्वमात्रेण तत्प्रयुक्तत्वेऽज्ञानमपि जीवत्वादिप्रयुक्तं स्यादिति चेत् न। अज्ञानव्यतिरेकस्य जीवत्वादिव्यतिरेकप्रयोजकत्वात् तत्प्रतियोग्यज्ञानं तत्प्रतियोगिजीवत्वादिप्रयोजकमित्याह—न चैवमित्यादिना। अज्ञाननिवृत्तेर्जीवत्वादिनिवृत्त्यप्रयोजकत्वे दोषमाह—अन्यथेति। ज्ञानादेव साक्षाज्जीवत्वादिनिवृत्तिर्भवत्वित्याशङ्क्य जीवस्य स्वस्वरूपब्रह्माज्ञाने सति जीवत्वादिनिवृत्त्ययोगात्तत्पूर्वमज्ञाननिवृत्तेरावश्यकत्वान्नैवमित्याह—न च ज्ञानेति। एषा माया "जीवेशावाभासेन करोति" इति श्रुतेः "विभेदजनकेऽज्ञाने" इति स्मृतेश्च जीवत्वादेरविद्याप्रयुक्तत्वमभ्युपेयमित्याह—श्रुताविति। प्रतिबिम्बचैतन्यस्य जीवत्वमिव बिम्बचैतन्यस्येश्वरत्वमप्यविद्याप्रयुक्तमित्याह—एवमिति।

आभासेनेति। प्रतिबिम्बादिभावेनेत्यर्थः। जीवेशयोरनादित्वात्कथं मायाकृतत्वमित्यत आह—तत्प्रयुक्तीति। तदधीनोत्पत्तिरेव तत्प्रयुक्तिः साऽप्यसंभविनीत्याशङ्क्याह—प्रयुक्तिश्चेति। मायाव्यतिरेकाधीनव्यतिरेकप्रतियोगित्वात् जीवत्वादेस्तदधीन-

अज्ञानविषयनिरूपणम्

तच्चाज्ञानं चैतन्यमात्रमावृणोतीत्युक्तम् । अत्र नवीनः--अज्ञानं न चैतन्यविषयं तत्रावरणकृत्यानिरूपणात् । न तावदावरणं प्रकाशविनाशः तदनुत्पादो वा । स्वरूपप्रकाशस्य तदयोगात् । आत्मन आगन्तुकप्रकाशावेद्यत्वात् । नापि सत एव प्रकाशस्य विषयसंबन्धाभावः प्रकाशस्यात्मस्वरूपत्वात् ।

नापि फलानुत्पत्तिः ज्ञातताख्यफलस्य ज्ञानजन्यस्यानभ्युपगमात् । अविद्यानिवृत्तावविद्यायाः प्रतिबन्धकत्वेऽनिर्मोक्षप्रसङ्गात् । नापि नास्ति न प्रकाशत इति व्यवहारः । अभिलापलक्षणव्यवहारस्य रजतादिभ्रमवदावरणसाध्यत्वात् । अभि-

---

स्थितिकत्वमेव तत्प्रयुक्तिः, सा चानादेरप्यविरुद्धेति भावः । जीवत्वेश्वरत्वयोः कल्पितत्वे परोक्तानुपपत्तिमनुवदति--जीवे ते । जीवत्वादेः कल्पितत्वं यदि जन्यत्वं स्यात्तर्ह्युक्तो दोषः स्यात् । न चैवम् । तस्यानादित्वात् । किं तु तन्मिथ्यात्वम् । तच्चानादेरप्यविद्यासम्बन्धस्येवाविद्याप्रयुक्तत्वादेवोपपद्यत इत्यभिप्रेत्याह—अनादित्वादिति । किं चात्माश्रयादेः प्रतीयमानजीवत्वादेर्मिथ्यात्वापादकत्वात्स नाद्वैमते दोष इत्याह—वस्तुतस्त्विति । अज्ञानं चिन्मात्राश्रयविषयं जीवाश्रयं ब्रह्मविषयं वेति मतद्वयस्य निरवद्यत्वं निगमयति--अत इति । अज्ञानाधीनावरणं निरूपयितुं तस्य प्रसङ्गमाह—तच्चेति । आवरणस्वरूपस्याधस्तादुक्तत्वात् पुनस्तन्निरूपणं किमर्थमित्याशङ्क्य तत्र परोक्तदोषापवादायायमारम्भ इत्यभिप्रेत्य तदुक्तमनुवदति--अत्रेति । आवरणं च तत् कृत्यं चेत्यावरणकृत्यं तदनिरूपणादित्यर्थः । किमावरणं प्रकाशविनाशः, प्रकाशानुत्पादो वा सतः प्रकाशस्य विषयसंबन्धाभावो वा, फलानुत्पत्तिर्वा, नास्ति न प्रकाशत इति व्यवहारो वा, अस्ति प्रकाशत इति व्यवहाराभावो वा, नास्तीत्यादिव्यवहारयोग्त्वं वा, अज्ञानविशेषितापरोक्षव्यवहारयोग्यत्वं वा, अज्ञानस्य जीवं प्रति शुद्धचैतन्यावच्छेदकत्वं वा ? । नाद्यावित्याह—न तावदिति । किमत्र प्रकाशपदेनाऽऽत्मस्वरूपप्रकाश उच्यते, तद्विषयागन्तुकप्रकाशो वा ? । उभयथाऽप्यनुपपत्तिमाह--स्वरूपेति । तृतीयं दूषयति--नापीति । स्वप्रकाशात्मनः सदा प्रकाशसंबद्धत्वात्तदभावोऽसंभवीत्यर्थः ।

चतुर्थमपवदति—नापीति ।

फलशब्देन ज्ञातता विवक्षिता अविद्यानिवृत्तिर्वा ? । आद्य आह--ज्ञाततेति । द्वितीयेऽविद्यायाः स्वनिवृत्त्यनुत्पत्तिप्रयोजकतया तत्प्रतिबन्धकता स्यात् । ततश्च स्वनिवृत्तेः पूर्वं स्वाभावायोगेन स्वनिवृत्तिरेव न स्यादिति मोक्षो न भवेदित्याह--अविद्येति । पञ्चमं निराकरोति—नापीति । व्यवहारपदेनाभिलापरूपो व्यवहारो विवक्षितः, अभिज्ञारूपो वा ? । आद्ये तस्याऽऽवरणसाध्यत्वेन ततोऽन्यदेवावरणं वाच्यमित्यभिप्रेत्याह—अभिलापेति । अभिलापो ज्ञानसाध्यो न त्वावरणसाध्य इत्याशङ्क्याह—अभिवदनस्येति ।

वदनस्यापि भ्रमजन्यस्य तद्धेत्वावरणापेक्षत्वात्, सुषुप्त्यादौ व्यवहाराभावाच्च। नाप्यस्ति प्रकाशत इति व्यवहाराभावः। अभिज्ञारूपस्वरूपप्रकाशस्याभावायोगात्। वृत्तिरूपाभिज्ञाव्यवहारस्य मोक्षेऽप्यसत्वात्। नापि नास्तीत्यादिव्यवहारयोग्यत्वं तस्याप्यारोपितत्वादावरणाधीनत्वात्। तस्यावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वलक्षणस्वप्रकाशत्वविरोधित्वादात्मन्ययोगाच्च।

न चाज्ञानावच्छेदकतया आत्मनोऽपरोक्षव्यवहारयोग्यत्वं स्वरूपेण तु नेति न विरोध इति वाच्यम्। स्वरूपस्यास्वप्रकाशत्वापातात् नित्यातीन्द्रियस्याप्यज्ञानावच्छेदकतया तद्योग्यत्वात् स्वप्रकाशत्वप्रसङ्गाच्च। एतेनाज्ञानविशेषितापरोक्षव्यवहारयोग्यत्वमावरणकृत्यमित्यपि निरस्तम्। न चोक्तयोग्यत्वस्य मिथ्यात्वान्न विरोध इति वाच्यम्। सुखादिप्रकाशे सुखं न जानामीत्यनुभवाभावेन कल्पितस्याप्यज्ञानविषयत्वस्य तत्रायोगात्। वन्हाववह्नित्वारोपेऽपि वह्निकार्यस्येवात्मन्यप्रकाशारोपेऽपि प्रकाशकार्यप्रसङ्गाच्च। ननु कल्पितभेदं जीवचैतन्यं प्रति शुद्धचैतन्यमाच्छादयतीति चेत् न, आवरणं विना भेदकल्पनायोगात्। न च साक्षिणा प्रकाश

---

अयथाव्यवहारहेतुज्ञानस्य भ्रमत्वात्तद्धेत्वावरणमन्यदेव वाच्यमित्यर्थः। अनेनैव द्वितीयोऽपि कल्पो निरस्त इति द्रष्टव्यम्। सुषुप्तिप्रलयादावावरणसत्त्वेऽपि व्यवहाराभावादपि न तदावरणमित्याह—सुषुप्तीति। षष्ठमपवदति—नापीति। अत्रापि व्यवहारपदेनाभिज्ञा विवक्षिता, उताभिलापः ?। आद्येऽपि स्वरूपप्रकाशोऽभिज्ञा उत वृत्तिः ?। आद्येऽसंभवमाह—अभिज्ञेति। द्वितीयेऽतिव्याप्तिमाह—बृत्तीति। अभिलापपक्षोऽप्यनेन निरस्त इति द्रष्टव्यम्। सप्तमं निषेधति—नापीति। आवराणाधीनत्वादिति। आरोपितस्य शुक्तिरजतादिवदधिष्ठानावरणाधीनत्वनियमात्तदतिरिक्तमेवावरणं वक्तव्यमिति भावः। आत्मनः स्वप्रकाशत्वायास्तीत्यादिव्यवहारयोग्यताया आवश्यकत्वात् तद्विरोधान्नास्तीत्यादि व्यवहारयोग्यत्वं तत्रासंभवि चेत्याह—तस्येति। नन्वपरोक्षव्यवहारयोग्यत्वमात्रमेव स्वप्रकाशत्वोपयोगि, ब्रह्मणस्तु विपरीतव्यवहारयोग्यतया स्वरूपेण तद्रहितत्वेऽप्यज्ञातत्वाकारेण तद्वत्त्वमस्तीति न स्वप्रकाशत्वविरोध इत्याशङ्क्य तथा सत्यज्ञातत्वेनैव ब्रह्मणः स्वप्रकाशत्वं स्यान्न स्वरूपेणेत्याह—न चाज्ञानेति।

किं च धर्मादि न जानामीति धर्मादावप्यज्ञाततयाऽपरोक्षव्यवहारदर्शनात्तद्योग्यत्वस्य फलाव्याप्यत्वलक्षणवेद्यत्वस्य च सत्त्वात् तत्र स्वप्रकाशलक्षणमतिव्याप्तं स्यादित्याह—नित्येति। स्वप्रकाशत्वविरोधादेवाष्टमोऽपि निरस्त इत्याह—एतेनेति। ननु वस्तुतः स्वरूपेणापरोक्षव्यवहारयोग्ये ब्रह्मणि विपरीतव्यवहारयोग्त्वरूपमावरणमारोपितत्वान्न तत्स्वप्रकाशत्वविरोधीति चेत्, न। अन्यत्र प्रकाशमाने आरोपितस्याप्यावरणस्यादर्शनेन तस्यैव तद्विरुद्धत्वादित्याह—न चोक्तेति। आरोपितावरणेन प्रकाशमानत्वस्याविरोधे दोषमाह—वह्नाविति। नवममुत्थापयति—नन्विति। भेदकल्पनाया आव-

मानेऽप्यप्रकाशमानत्वं युक्तम् । तस्य तदविरोधात् त्वदुक्तमर्थं न जानामीति प्रकाशमान एवाप्रकाशमानत्वानुभवादिति वाच्यम् । अनवच्छिन्नब्रह्मानन्दाप्रकाशार्थमेवाज्ञानाभ्युपगमात् । प्रकाशमान इति विरोधात् । अनवच्छिन्नानन्दस्य प्रकाशाभावाच्च । त्वदुक्तमर्थं न जानामीत्यत्राप्यनावृतसामान्यावच्छिन्नमनुभूयते परचित्तगतार्थविशेषस्य ज्ञानासंभवात् ।

अज्ञानविषयत्वे प्रयोजकविचारः

एवं च तद्विशेषसंशयं प्रति तत्सामान्य निश्चयस्येव तद्विशेषावच्छिन्नाज्ञानज्ञानं प्रति सामान्यज्ञानमेव हेतुः । तथा दर्शनात् । न हि विशेषे ज्ञाते तदज्ञानधीर्दृष्टा । सामान्यविशेषभावश्च नियामक इति नातिप्रसङ्गः । अज्ञातज्ञानाभावेऽप्यज्ञानज्ञानमित्येतद् भूषणमेव । अन्यथाऽज्ञानाभावात् । न चैवमज्ञानस्य विषयविशेषावच्छेदो न सिद्ध्यतीति वाच्यम् । विशेषज्ञानानन्तरमेतावन्तं कालममुमर्थमित्थं नावेदिषमित्यनुभवान्तरात्तत्सिद्धेः । तस्मान्न चिन्मात्रमज्ञानगोचरः । नापि जीवपरैक्यादि । तस्य चैतन्याद् भेदेऽद्वैतहानेः । अभेदे चोक्तदोषादिति । मैवम् । नास्ति न

---

रणाधीनत्वात् कल्पितभेदं प्रत्येतदेवायुक्तमिति दूषयति--न आवरणेति । ननु साक्षिरूपप्रकाशेनाज्ञानवत्तद्धीनावरणमप्यविरुद्धम् । अन्यथा त्वदुक्तमर्थं न जानामीत्यर्थस्याज्ञाततया साक्षिणाऽनुभवायोगादित्याशङ्क्याज्ञातस्वरूपविशेषस्य साक्षिणा प्रकाशमानत्वमेयुक्तं येनाविरोधो भवेदित्याह--न चेत्यादिना । अज्ञातब्रह्मस्वरूपस्य प्रकाशमानत्वमनुपलब्धिविरुद्धं चेत्याह – अनवच्छिन्नेति । कथं तर्हि त्वदुक्तमर्थं न जानामीत्यज्ञानतद्विषययोः प्रकाश इत्याशङ्क्य नात्राज्ञानविषयो भासते किन्तु तद्गतसामान्यमेवाज्ञानविषयस्तद्विशेषणतया भातीत्याह--त्वदुक्तमिति ।

नन्वज्ञानविषयाज्ञाने कथं विषयनिरूप्योऽज्ञानानुभव इत्याशङ्क्याज्ञानानुभवेन तद्विषयज्ञानं हेतुः, किंतु तद्गतसामान्यज्ञानमेवेति सदृष्टान्तमाह—एवं चेति । न केवलं विशेषज्ञानमज्ञानाभावे न हेतुः किंतु तत्प्रतिकूलं चेत्याह—न हीति । अन्यज्ञानादन्याज्ञानानुभवे घटज्ञानात् पटाज्ञानानुभवः स्यादित्याशङ्क्याह—सामान्येति । सविषयमज्ञानं विषयज्ञानं विनैव भासत इत्येतन्न शोभते इत्याशङ्क्याह – अज्ञातेति । अज्ञानानुभवे तस्य सविषयत्वमज्ञातं चेत् तस्य सविषयत्वमेव न सिद्ध्येदित्याशङ्क्य अर्थविशेषे ज्ञाते तत्सिद्धिरित्याह—न चैवमिति । आवरणानिरूपणात् प्रकाशमाने तस्यायोगाच्च न चिन्मात्रमज्ञानविषय इत्याह—तस्मादिति । अस्तु तर्हि जीवपरैक्यमेवाज्ञानविषय इत्याशङ्क्याह—नापीति । एवं नवीनप्रलापं प्रदर्श्य तं निराकरोति—मैवमिति । तत्र तावदावरणस्वरूपमाह--नास्तीति । अत्र 'अस्ति, प्रकाशते' इति व्यवहारयोग्य इत्यपि द्रष्टव्यम् । ततश्च न जडेष्वव्याप्तिः । व्यवहारयोग्यत्वादेरारोपितत्वात्तद्धेतुतयाऽन्यदेवावरणं

प्रकाशत इत्यादिव्यवहारयोग्यत्वं अस्ति प्रकाशत् इति व्यवहारायोग्यत्वं वाऽऽवरणम्। न च तस्यारोपितत्वादावरणाधीनत्वम्। अविद्यावत् तस्याप्यनादित्वेन हेतोरनपेक्षत्वात् अविद्याधीनत्वाच्चाऽऽवरणं तत्कृत्यम्। न चैवं स्वप्रकाशत्वलक्षणविरोधः। चैतन्यावेद्यत्वस्य तस्य तदविरोधात्।

नवीननिरासः

कल्पितयोग्यताऽयोग्यत्वयोर्वास्तवापरोक्षव्यवहारयोग्यत्वाविरोधाच्च। सुखादिकं चानावृतसाक्षिण्यध्यस्तमित्युक्तम्। एकस्मिन्नप्यावृतत्वानावृतत्वेऽविरुद्धे यथानुभवं पदार्थस्वीकारादित्युक्तम्। न च स्वरूपप्रकाशकार्यप्रसङ्गः। किं तत्कार्यम् अविद्यानिवृत्तिः,नास्तीत्यादिव्यवहारविच्छेदो वा, अनवच्छिन्नानन्दोऽहमिति व्यवहारो वा, पुत्रादिक्षुद्रसुख भिलाषाभावो वा ?। न सर्वथाऽपि।

अविरोधाच्चितो नाद्यावविद्याप्रतिबन्धतः।
न तृतीयश्चतुर्थोऽपि नाऽप्राप्तत्वभ्रमो यतः।

---

वाच्यमित्युक्तं दूषयति--न चेति। आवरणस्यानादित्वेन तदविद्याकृत्यमिति कथं तत्र तत्रोक्तमित्यत आह--अविद्येति। न च तस्यानादित्वे अविद्याधीनत्वं कथमिति वाच्यम्। स्वाज्ञानकाल एव सत्त्वात् "अनादि मायया सुप्तः" "अज्ञानेनावृतं ज्ञानम्" इति शास्त्रादज्ञानाधीनत्वमिति भावः। यदप्युक्तपुक्तावरणस्य स्वप्रकाशलक्षणविरुद्धत्वादसंभवीति, तदपवदति—न चैवमिति। तत्र तावत्स्वाभिमतलक्षणेनास्याविरोधमाह--चैतन्येति।

अपरोक्षव्यवहारघटितलक्षणेनाप्यविरोधमाह—कल्पितेति।

नास्ति इत्यादिव्यवहारयोग्यत्वस्यास्तीत्यादिव्यवहारायोग्यत्वस्य वा मिथ्यात्वेन वास्तवापरोक्षव्यवहारयोग्यस्वरूपेणाविरोधादित्यर्थः। यदपि चोक्तम्-सुखादिप्रकाशे कल्पितस्याप्यावरणस्यादर्शनात तदेव तद्विरुद्धमिति, तत्राह--सुखेति। अन्तःकरणोपधानेनावरणस्य विरुद्धत्वात् तदुपहितचैतन्यात्मसुखादिप्रकाश आवरणासंभवेऽप्यनवच्छिन्नानन्दप्रकाशे तत्संभवतीति भावः। नन्वनवच्छिन्नब्रह्मणोऽप्यनावृतसाक्षिमात्रत्वात्तत्र कथमावरणमविरुद्धमित्याशङ्क्यानिर्वचनीयत्वादविरोध इत्युक्तमित्याह--एकस्मिन्निति। वह्नावविह्नित्वारोपेऽपि वह्निकार्यवदात्मन्यप्रकाशमानत्वारोपेऽपि स्वरूपप्रकाशकार्यं स्यादित्युक्तमपवदति---न चेति। तत्र हेतुं वक्तुं तत्कार्यं विकल्पयति—किं तदिति। अविद्यातत्कार्ययोः स्वसाधकचैतन्यमात्रेणाविरुद्धत्वादविद्याया नास्तीत्यादिव्यवहारस्य च न तावन्मात्रान्निवृत्तिरित्याह श्लोकेन—अविरोधादिति। अनवच्छिन्नानन्दोऽहमिति व्यवहारस्तत्प्रकाशे सत्यप्यविद्यया प्रतिबद्धत्वान्न भवतीत्याह—अविद्येति। पूर्णसुखस्वरूपप्रकाशे सत्यप्यविद्यया तदप्राप्तिभ्रमवतः सुखार्थे पुत्राभिलाष उपपद्यत इत्याह—चतुर्थोऽपीति। एत-

**एतेनाप्रकाशार्थमेवाज्ञानाभ्युपगमात्प्रकाशमान इति विरोधादिति प्रत्युक्तम्। प्रकाशमान एव तदर्थं तस्यावश्यकत्वात्।**

**यदप्यनवच्छिन्नानन्दप्रकाशाभावादिति। किं तदाकारवृत्तिप्रकाशो नास्ति किं वा तद्रूपचैतन्यप्रकाशोऽपि ?। नाद्यः। कारणाभावेन तस्येष्टत्वात्। न द्वितीयः। तस्येदानीमपि सत्त्वात्। अज्ञानात्पूर्णानन्दं जानामीति व्यवहारस्तस्य नेत्युक्तम्।**

**यत्तु त्वदुक्तमर्थं न जानामीत्यत्रापि अनावृतसामान्यावच्छिन्नमेवानुभूयत इति तत्र न तावत्सामान्यं तदवच्छिन्नो वा न जानामीत्यनुभवविषयः तयोः त्वदुक्तार्थं सामान्यतो जानामीतिज्ञानविषयत्वानुभवविरोधात्। ज्ञानविषयस्यापि न जानामीत्यनुभवविषयत्वे किमपराद्धं ज्ञायमानेऽज्ञायमानत्वेन।**

---

त्सर्वमानन्दवादे निपुणतरमुपपादितमिति नेह प्रपञ्च्यत इति भावः। यदुक्तम्–ब्रह्माप्रकाशार्थमेवाज्ञानाभ्युपगमात्प्रकाशमान इति विरोधादिति, तद्दूषयति—एतेनेति। एतच्छब्दार्थमाह—प्रकाशमान इति। स्वरूपतया प्रकाशमान एव हि ब्रह्मण्यनुभूयमानाप्रकाशमानत्व सिद्ध्यर्थमेवाज्ञानं कल्प्यम्। इतरथा प्रमाणवैकल्यादेव तदनवभाससिद्धेरज्ञानवैयर्थ्यादिति भावः।

पूर्णानन्दप्रकाशस्यानुपलम्भात्स नास्तीत्युक्तमनूद्य विकल्पयति यदपीति।

वेदान्तश्रवणादेरभावात्तदधीनवृत्तिरूपप्रकाशाभाव इष्ट इत्याह—नाद्य इति। स्वरूपप्रकाशानुपलम्भात्मकाज्ञानस्यैतेनैव स्फुरणान्न तदभाव इत्यभिप्रेत्याह—न द्वितीय इति। आनन्दप्रकाशोऽस्ति चेत्तद्व्यवहारोऽपि स्यादित्याशङ्क्याह अज्ञानादिति। अज्ञानेन प्रतिबद्धत्वादित्यर्थः। अन्यदपि परोक्तं दूषयितुमनुवदति—यत्त्विति। तत्र किं ज्ञायमानत्वानुभवोऽज्ञाततयाऽनुभूयमानत्वविरोधी उत न ?। आद्य आह—न तावदिति। न द्वितीयः। विशेषरूपे वस्तुनि ज्ञातत्वेनानुभूयमानेऽज्ञाततयाऽनुभवाभावेन तयोर्विरोधात्। तथापि तयोरविरोधममन्वानं प्रत्याह—ज्ञानविषयस्येति। अज्ञानविषय एव ज्ञातत्वाज्ञातत्वानुभवो विरुद्धो न तदविषये सामान्य इति शङ्कते—नन्विति। अज्ञानानुभवे यदज्ञानविशेषणतया भासते, स एव ज्ञानविषयः। ज्ञानवदज्ञानस्यापि विषयनिरूप्यत्वात्। तत्र सामान्यमेव भासते चेत् स एवाज्ञानविषयः स्यान्न विशेष इत्याह—न न जानामीति। अज्ञानस्य स्वानिरूपकविषयत्वे बाधकमाह—अन्यथेति। सामान्यरूपिताज्ञानस्य विशेषो विषयः ततो नोक्तातिप्रसङ्ग इति शङ्कते—नन्विति। विशेषशब्दार्थं विकल्पयति—किमिति। परोक्तार्थव्यक्तेः प्रमेयत्वादिरूपेण ज्ञातत्वात् तस्या अज्ञानविषयत्वविरोधवादिनस्तवायुक्तमित्याह—नाद्य इति। व्यक्तेरज्ञानानुभवविषयत्वादप्यज्ञानविषयत्वमयुक्तमित्यभिप्रेत्याह—इदमिति।

ननु ज्ञायमानस्य स्वाज्ञानविषयानुभवगोचरत्वं विरुद्धं न त्वन्याज्ञानानुभवगोचरत्वमिति चेन् । न, न जानामीत्यनुभवगोचरस्यैव तद्व्यावर्तकतया तदज्ञानविषयत्वात् । अन्यथा अन्यविषयानुभवगोचरस्याज्ञानस्यान्यविषयत्वे वह्निं न जानामीत्यनुभूयमानाज्ञानस्यापि धूमविषयत्वप्रसङ्गात् । ननु सामान्यविशेषभावो नियामकः, अतो नातिप्रसङ्ग इति चेत् किमज्ञानविषयविशेषो व्यक्तिः, किं वा तन्निष्ठासाधारणधर्मः ? । नाद्यः । त्वदुक्तार्थं सामान्यतो जानामीति तस्याः ज्ञानविषयत्वानुभवात् । इदं न जानामीत्यादौ च व्यक्तेर्ज्ञानविषयत्वात् ।

न द्वितीयः । व्याप्यव्यापकभावातिरिक्तस्य सामान्यविशेषभावस्य तयोरभावात् । तत्र चोक्तोऽतिप्रसङ्गः । द्रव्यं न जानामीत्यनुभूयमानाज्ञानस्यापि शब्दाश्रयत्वादिविषयत्वप्रसङ्गाच्च । किं चाज्ञानविषयस्य तदा ज्ञानमात्रनिषेधः ? किं वा विशेषाकारेण ? । नाद्यः । तज्जिज्ञासाऽसंभवात् । इच्छायाः स्वविषयज्ञानजन्यत्वात् । न च जिज्ञासा ज्ञानजन्या न भवति, तथा सति जिज्ञासायोगादिति वाच्यम् । इच्छामात्रस्य स्वविषयज्ञानजन्यत्वात्, अनुपस्थिते जिज्ञासाऽदर्शनाच्च । न च ज्ञाते जिज्ञासाया असम्भवः अविद्याविरोधिनः प्रवृत्त्यादिसमर्थप्रमाणज्ञानस्येष्यमाणत्वात् । न चेच्छाया ज्ञानजन्यत्वमेव न स्वविषयज्ञानजन्यत्वं तच्चात्रापि सामान्यज्ञानमस्तीति वाच्यम् । भोजनज्ञानात्सुषुप्तीच्छाऽदर्शनेन तयोः सामान्यविषययोरेव

---

द्वितीयेऽज्ञानानुभवविषयसामान्यस्य व्यक्तिगतासाधारणधर्मस्य च व्याप्यव्यापकभावातिरिक्तसंबन्धादर्शनात्स एव सामान्यविशेषभावः । ततश्च व्यापकावच्छिन्नाज्ञानं प्रति व्याप्यो विषय इति वह्निं न जानामीति बह्निविशेषिताज्ञानस्य धूमोऽपि विषयः स्यादित्याह--न द्वितीय इति ।

ननु सामान्यविशेषयोरेव व्याप्यव्यापकभावः सामान्यविशेषभावः, अतो नोक्तातिप्रसङ्ग इत्याशङ्क्यातिप्रसङ्गान्तरमाह—द्रव्यमिति । शब्दाश्रयत्वादीत्यादिपदेन पृथिवीत्वादि गृह्यते । न च द्रव्यं न जानामीत्यज्ञानविषयत्वमिष्टमिति वाच्यम् । गन्धाश्रये पृथिवीत्वमित्यादिज्ञानादपि तन्निवृत्तिप्रसङ्गादिति भावः । यदप्युक्तं ज्ञानाभावेऽप्यज्ञानमित्येतद्भूषणमित्यादि तत्राह—किं चेति । अज्ञानविषयस्य प्रमेयत्वादिरूपेण ज्ञायमानत्वान्न ज्ञानमात्रनिषेधो युक्त इत्यभिप्रेत्याह--नाद्य इति । दूषणान्तरमाह--तज्जिज्ञासेति । अज्ञानविषयज्ञानाभावे तद्विषयज्ञानस्य दुर्ज्ञेयतया तदिच्छाऽनुपपत्तिरित्यर्थः । इष्यमाणज्ञाने सतीच्छायाः असम्भवात् जिज्ञासितज्ञानं न जिज्ञासाहेतुरिति शङ्कामपवदति—न चेति । इच्छायाः स्वविषयज्ञानजन्यत्वमन्वयव्यतिरेकाभ्यामावश्यकमित्याह—इच्छामात्रस्येति । अनुपस्थिते—अत्यन्ताज्ञाते । यदुक्तं ज्ञाते जिज्ञासाऽयोगादिति, तदयुक्तम् । आपातज्ञास्येच्छाहेतुत्वादन्यादृशज्ञानस्येष्यमाणत्वादित्याह--न चेति । नन्विच्छाज्ञान-

**कार्यकारणभावावश्यंभावात् । अन्यथा वह्निज्ञानादज्ञातधूमस्य धूमे जिज्ञासाप्रसङ्गात् ।**

**वह्निः सामान्यं धूमस्य न भवतीति चेत् न तस्यापि व्यापकत्वात् । न द्वितीयः । इन्द्रियसन्निकृष्टचन्द्रादिविशेषे तज्ज्ञानाभावस्य वक्तुमनचितत्वात्, त्वयाऽप्यभ्युपेतत्वाच्च । तत्रापि न जानामीत्यज्ञानानुभवजिज्ञासयोर्दर्शनात् । अन्यथा वाच्यत्वाद वपि संशयादि न स्यादिति वाक्यार्थविवेके वक्ष्यमाणत्वाच्च । एतावत्कालमपिदमित्थं नावेदिषमित्यज्ञाततानुसधानदर्शनाच्च । न च परबुद्धिस्थः सविशेषः कथं ज्ञातुं शक्यत इति वाचयम् । अज्ञाततया साक्षिविषयत्वेऽज्ञानातिरिक्तर-**

---

जन्यतयेव नियमो न स्वसमानविषयज्ञानजन्येति गौरवात् । ततश्च सामान्यसाज्ञादपि तदुपपत्तिरित्याशङ्क्यान्वयव्यतिरेकाभ्यां तयोः समानविषयत्वमावश्यकमित्याह—नचेत्यादिना । विपक्षे दण्डमाह—अन्यथेति ।

सामान्यज्ञानमेव विशेषजिज्ञासाहेतुरिति नोक्तातिप्रसङ्ग इति शङ्कते —वह्निरिति ।

तव मते व्यापकताव्यतिरेकेण सामान्यताया दुर्निरूपत्वाद्वन्हेरपि सामान्यता किमिति न स्यादित्यभिप्रेत्याह-–तस्यापीति । विशेषाकारेण ज्ञानं निषिध्यत इति पक्षं दूषयति—न द्वितीय इति । व्यक्तितदसाधारणधर्मातिरिक्तविशेषाभावात्तयोश्च विशेषत्वे दोषस्योक्तत्वादिति भावः । किं च चन्द्रव्यक्तेस्तदसाधारणधर्मप्रकृष्टप्रकाशत्वस्य च चक्षुषा ग्रहणेऽप्युपदेशजनितप्रत्यक्षाभावे चन्द्रं न जानामीति तदज्ञानस्याप्यनुभवादज्ञाने ज्ञानं नास्तीत्येतदयुक्तमित्याह—इन्द्रियेति । नन्वत्रापि चक्षुषा यज्ज्ञातं न तदज्ञानविषयः किं तु चक्षुषाऽनुपस्थितं चन्द्रपदवाच्यत्वाद्येव, तत्राह—अन्यथेति । चन्द्रत्वादिविशिष्टेऽज्ञानाभावे चन्द्रत्वं नाम काचिज्जातिस्तद्विशिष्टश्चन्द्रपदवाच्य इत्याप्तोपपदेशादिना वाच्यत्वस्यापि निश्चितत्वात् तत्राप्यज्ञानसंशयाद्यनुपपत्तिरिति चतुर्थे वक्ष्यत इत्यर्थः । किं चाज्ञाननिवृत्त्यनन्तरं तद्विषयस्याज्ञातत्वेन परामर्शो दृश्यते । तस्य च स्वसमानविषय पूर्वानुभवाभावादनुपपत्तेः पूर्वमज्ञाततानुभव आवश्यकः इत्यभिप्रेत्याह—एतावदिति । न च नेदं स्मरणं किन्त्विदानीमेव पूर्वकालीनाज्ञानानुभव इति वाच्यम् । विशिष्टाज्ञानस्येदानीं प्रत्यक्षेणानुभवायोगात् । अनुमितौ च लिङ्गाभावात् । न तावदिदानीं ज्ञातत्वं तत्र लिङ्गं तस्य पूर्वमज्ञानत्वाधिगमं विना दुर्ज्ञानत्वात् । न च पूर्वकालीनतयाऽस्मर्यमाणत्वेनाज्ञानं कल्प्यत इति वाच्यम् । तस्यान्यथोपपत्तिप्रतिसंधानदशायामपि पूर्वकालीनाज्ञातताप्रतिसन्धानदर्शनादिति भावः ।

यदप्युक्तं--परबुद्धिस्थविशेषस्य ज्ञापकाभावात्तज्ज्ञानमसंभवीति, तन्निराकरोति—न चेति । नित्यसाक्षिणो ज्ञापकानपेक्षस्याज्ञाततयाऽर्थप्रकाशनेऽज्ञानातिरिक्तापेक्षाभावादित्यर्थः । परबुद्धिस्थोऽपि विशेषोऽज्ञाततया साक्षिगम्य एवेत्यत्राचार्यसम्मतिमाह—तदुक्तमिति ।

यानपेक्षत्वात्। तदुक्तं सर्ववस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय इत्यादि।

तस्मात्--

चिन्मात्रविषयाधारमज्ञानं भेदविभ्रमे।
हेतुर्दर्पणवत्तस्य निवृत्तौ कृतकृत्यता ॥१॥

यन्मायया पृथग्भूतः सदानन्दैकविग्रहः।
हरिरप्यहमीशानं तं भजे पुरुषोत्तमम् ॥ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवज्जगन्नाथाश्रमश्रीचरणशिष्यश्रीमन्नृसिंहाश्रमकृताद्वैतदीपिकायां विभागप्रक्रियाख्यो द्वितीयः परिच्छेदः समाप्तः।

---

परिच्छेदप्रमेयं संहरति श्लोकेन—चिन्मात्रेति।

भेदभ्रमादिसकलानर्थहेतावनिर्वचनीयाज्ञाने सिद्धे फलितमाह—तस्येति। अनर्थहेतोरज्ञानस्य तत्त्वज्ञानेन निवृत्तावप्रतिबद्धस्वाभाविकब्रह्मभाव एव परिशिष्यते इत्यर्थः। एतादृशाज्ञाननिर्वतकज्ञानमीश्वरभजनेन विना न भवति। जीवस्य वस्तुत ईश्वरात्मत्वेऽपि मायिकभेदेनानीश्वरत्वाभिमानात्तद्भजनोपपत्तिः। तथा च स्मृतिः—

भयं द्वितीयाभिनिवेशतः स्यादीशत्वमेतस्य विपर्ययः स्मृतिः।
तन्माययाऽतो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मा॥

इत्येतद् द्योतयन् ईश्वरं भजते—यन्माययेति। वस्तुतः सच्चिदानन्दविग्रहो हरिरप्यहं यन्मायया पृथग्भूतस्तं भजे इत्यर्थः।

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवन्नृसिंहाश्रमपूज्यपादशिष्यनारायणाश्रमविरचितेऽद्वैतदीपिकाविवरणे द्वितीयः परिच्छेदः समाप्तः।



# औपनिषदात्मदीपो नाम

## तृतीयः परिच्छेदः

उपनिषदवबोधं बोधमानन्दकन्दं
निजगुणगणकान्तं कान्तमम्भोजयोनेः ।
परिहृतपरसत्त्वं सत्त्वमेतस्य मूलं
नरहरिवपुरैशं धाम कामं प्रपद्ये ॥१॥

---

यः संशुद्धगुहाहिताद्वयवपुर्यो वादिदैत्यद्विप-
स्वान्तत्रासनगर्जितैर्निजजनानन्दाब्धिसंबर्द्धकः ।
योऽखण्डं भजतेऽनिशं हरिपदं मूढा न यज्जानते
सोऽस्मान् सत्कविभिः प्रगीतमहिमा पायान्नृसिंहो गुरुः ॥

तत्पदार्थपरिशोधनाय परिच्छेदान्तरमारभमाणस्तदर्थं संक्षेपतो दर्शयन् परमेश्वरं प्रणमति—उपनिषदिति । ऐशमीश्वररूपं मुमुक्षुभिः काम्यत इति कामं, धाम ज्योतिः, प्रपद्ये प्रणौमीति प्रथममन्वयः । तस्य भौतिकज्योतिष्ट्वं व्यावर्तयितुं तस्य चिद्रूपतामाह—बोधमिति । तस्य मुमुक्षुभिः काम्यत्वे हेतुमाह—आनन्देति । आनन्दस्यास्मदादिनिष्ठस्य मूलं बिम्बभूतमिति यावत् । किमेतस्यापि मूलमानन्दात्मकमस्ति नेत्याह—निजेति । निजैः स्वाभाविकैर्गुणवत्प्रतीयमानैर्ज्ञानानन्दादिभिः कान्तं कमनीयं श्रेष्ठमानन्दादीनाँ स्वरूपत्वेऽपि प्रतिभासतो धर्मत्वमुक्तं टीकाकृद्भिः "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त" इति । किमेतादृशं नमस्कार्यं हिरण्यगर्भाख्यं जगत्कारणं नेत्याह—कान्तमिति । अम्भोजयोनेर्जगत्स्रष्टुर्हिरण्यगर्भस्यापि कान्तं पतिं नियन्तारम् । एवं तर्हि भेदः प्राप्त इत्यत आह—परिहृतेति । परिहृतं निराकृतं परस्य स्वातिरिक्तस्य सत्वं येन तत्तथा । भेदादेर्जडस्य स्वतः सत्त्वाभावेन नाद्वैतक्षतिरिति भावः ।

नन्वेवं सति घटः सन्नित्याद्यनुभवविरोधः, तत्राह—सत्त्वमिति । एतस्य जगत उपादानगतं सत्वम्, तथा च घटः सन्नित्यादिरूपेण उपादानसत्तैव प्रतीयते न तदतिरिक्ता जडसत्तेति भावः ।

ननु चिदानन्दादिरूपेश्वरस्याद्वितीयत्वे कथं नमस्कार्यतेत्याशङ्क्य घृतकाठिन्यन्यायेन नरसिंहाकारलीलाविग्रहमापन्नस्य नमस्कार्यता घटत इत्याह—नरहरीति । उक्तरूपेश्वरे किं मानमित्यत आह—उपनिषदवबोधमिति । उपनिषद्भिरेवाववोधो यस्य धाम्नः तत्तथा । तथाहि "तं त्वौपनिषदं पुरुषं पृच्छामि" । नावेदविन् मनुते तं बृहन्तं"

गुरुचरणकृपा मे कञ्चुकीकुर्वती मां
नरहरिचरणेच्छां चारयत्यात्मदुर्गे ।
अहमिति विगताधिः सञ्चराम्यात्मयोग्यं
कपटमतिविलासैर्भेदिभिर्भिन्नमार्गे ॥२॥

---

"विज्ञानमानन्दं ब्रह्म"। "एषोऽस्य परम आनन्दः" "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" 'सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्," "वाचारम्भणं विकारो नामधेयम्" नेह नानास्ति किञ्चन" 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै", "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति", "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः", "तद्देवा ज्योतिषां ज्योतिः" 'आत्मन्येव नृसिंहे देवे परे ब्रह्मणि वर्तेत" इत्याद्युपनिषद्भिरुक्तार्थसिद्धिरिति भावः।

अथवा यथा सुप्तस्य राज्ञो वन्दिभिरवबोधः एवमुपनिषद्भिरवबोधो यस्य योगनिद्रागतस्य धाम्नः तत्तथा, बोधरूपा या मा लक्ष्मीस्तस्या अप्यानन्दस्य कन्दं मूलम्। तत्र हेतुः—निजेति। निजं स्वकीयो यो गुणः शुद्धसत्वं ये च स्वकीया गुणाः पार्षदाः सत्त्वप्रधानाः सनकादयस्तैर्जुष्टत्वात् कान्तं कमनीयम्, एवं पूर्णानन्दस्यापि भक्तरक्षणपारवश्यमाह—परिहृतेति। परः शत्रुर्हिरण्यकशिप्वादिस्तस्य सत्त्वं बलं परिहृतं नाशितं येन तत्तथा। स्वकीयग्रन्थकरणव्यापारस्य मूलं नृसिंहरूपं धामैवेत्याह—सत्त्वमिति। एतस्य जनस्य ग्रन्थकर्तुर्ममापीत्यर्थः॥ १॥

ननु 'शृण्वन्तोऽपि बहवो यन्न विद्युरि'त्यादिनेश्वरस्य दुर्विज्ञेयत्वाभिधानात्, तत्राप्रतिपत्त्यन्यथाप्रतिपत्त्यादेः संभवात्, कथं तन्निरूपणार्थं प्रवृत्तिरित्याशङ्क्याचार्यवान् पुरुषो वेद" यस्य देवे पराभक्तिरि"त्यादिना गुरुदेवताप्रसादवतां तत्त्वज्ञानश्रवणात् ममापि गुरुदेवताप्रसादवत्त्वात् प्रवृत्तिर्युक्तेत्यभिप्रेत्याह—गुरुचरणेति। गुरुणैव कृता कृपा तच्चरणयोर्भक्तिवशाद् गुरुचरणकृपेत्युक्ता।

अथापि सा मे आत्मदुर्गे संचाराय प्रवृत्तस्य मम नरहरिचरणेच्छा नरसिंहपादविषयिणी प्रेमलक्षणा भक्ति कंचुकीकुर्वती मामात्मदुर्गे चारयति प्रेरयतीति यतः अतोऽहं विगताधिर्विगतचित्तज्वरः सन्नात्मयोग्यं मद्बुद्धेरनुगुणं यथामति तथा संचारयामीति संबन्धः। आत्मनो दुर्गसाम्यमाह—कपटेति। भेदिभिर्भेदवादिभिः स्वमतकल्पितकुतर्कैर्भिन्नो दूषितो मार्गः स्वप्राप्त्युपायो वेदलक्षणो यस्य तस्मिन् प्रसिद्धदुर्गमार्गोऽपि कपटबुद्धिभिर्निषादादिभिः कण्टकादिभिर्दूष्यत इति दुर्गसाम्यम्॥ २॥ अस्य परिच्छेदस्यौपनिषदात्मदीप इति नाम कुर्वन् तस्य दीपसाम्यमाह—निरवधीति। अपरिच्छिन्ननिर्दोषरूपेण वर्तनशीलं यद् ब्रह्म तत्प्रकटनशीला तत्प्रकाशनेऽविद्यानिवृत्तिरूपे समर्था वृत्तिरूपप्रभा यस्मात् स तथा। प्रसिद्धो दीपो निर्मलवर्त्या रूपादिप्रकाशनशीलप्रभाहेतुर्भवति। अत्र सहकारिणमाह—गुरोः स्नेहादिति। गुरोः कृपाबलाद् दीपपक्षे बहुतैलादित्यर्थः॥ ३॥

निरवधिनिर्मलवर्तिप्रकटनशीलप्रभो गुरोस्स्नेहात् ।
औपनिषदात्मदीपः कुरुतात् कल्याणकारिणीं दिव्याम् ।।

तत्पदार्थनिरूपणप्रतिज्ञा

**अथ महावाक्यगततत्पदार्थो ब्रह्म निरूप्यते तदवाप्तेरेव मुमुक्ष्वाकाङ्क्षितपुरुषार्थतया तदवगमं विना जिज्ञासाऽनिवृत्तेः । प्रकृतवाक्यार्थ-ज्ञानायोगाच्च, नहि तेन विना पुरुषार्थः सिद्ध्यति तस्य तदेकोपायत्वात्, तदाह भगवान्नारदः—तत्त्वमस्यादिवाक्योत्थं-ज्ञानं मोक्षस्य साधनम् । ज्ञाने त्वनाहते सिद्धे सर्वं ब्रह्ममयं भवेत् ।। इति । तच्च तं त्वौपनिषदमित्यादि-श्रुतेरुपनिषदवसेयमपि वादिनां स्वरूपप्रकारविप्रतिपत्तिः तत्रेति तात्पर्यावगमाय तन्निरूपणमर्थवत् औपनिषदत्वविशेषणकीर्तनं च ब्रह्मणो न स्वरूपख्यापनम्, किन्तु मानान्तरगोचरत्वव्यावृत्तिपरम् ।**

---

प्राधान्येनैतत्परिच्छेदप्रतिपाद्यमाह —अथेति । प्रतिपत्तृस्वरूपभूतत्वंपदार्थनिरूप-णानन्तरमित्यर्थः । ननु "आत्मज्ञानान्न [लाभान्न] परं विद्यते" इति स्मरणात् त्वंपदार्थ-निश्चयेनैवापेक्षितसिद्धेः, किमर्थं तत्पदार्थनिरूपणमित्यत आह—तदवाप्तेरिति । 'ब्रह्मविदाप्नोति परं" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिना ब्रह्मावाप्तिरूपमोक्षस्य ब्रह्मज्ञानाधीनत्वश्रवणात् तज्जिज्ञासायास्तन्निश्चयं विना निवृत्त्यभावात् तन्निरूपणमर्थव-दित्यर्थः ।

किञ्च तत्पदार्थानिरूपणे तत्त्वमस्यादिवाक्यार्थज्ञानमपि न स्यात्, पदार्थज्ञानस्य वाक्यार्थज्ञानहेतुत्वेन तदभावे तदयोगादित्याह—प्रकृतेति। वाक्यार्थज्ञानं वा किमर्थमित्यत आह—नहीति । प्रत्यग्ब्रह्मैक्याविद्यानिवृत्तिलक्षणस्य मोक्षस्य तद्विषयवृत्त्येकसाध्यत्वात् तदभावे मोक्षो न स्यादित्यर्थः । वाक्यार्थज्ञानस्यैव मोक्षहेतुत्वे वृहन्नारदीयवचनमुदा-हरति—तदाहेति । उपनिषदेकगम्यब्रह्मनिश्चयस्योपनिषन्मात्राधीनत्वात् तवाऽऽयासो वृथेत्याशङ्क्याह—तच्चेति । ईश्वर एव नेति मीमांसकास्तत्स्वरूपे विप्रतिपन्नाः वैशेषि-कादयस्तु सगुणस्तत्राप्यष्टगुण इति प्रकारे विप्रतिपन्नाः, अर्वाचीनास्त्वानन्दाद्यनेकगुणक इति । तत एषां विप्रतिपत्तिनिरासेन सच्चिदानन्दात्मकनिर्विशेषब्रह्मणि उपनिषदां तात्पर्यावगमसंभवेन ताभिस्तन्निश्चयाद् वादिविप्रतिपत्तिनिरासेनोपनिषदां निर्विशेषे ब्रह्मणि तात्पर्यवर्णनायास्मत्प्रवृत्तिर्युचतेति भावः ।

ननु मानान्तरादपि ब्रह्मनिश्चयोपपत्तेरुपनिषत्तात्पर्यावगमो वा किमर्थ इत्या-शङ्क्य तस्य मानान्तरगोचरत्वं श्रुत्यैव निवारितमित्याह—औपनिषदत्वेति । ब्रह्मणो मानान्तरागोचरत्वमुपपादयितुं तत्र तावत् प्रत्यक्षं निराकरोति—न तावदिति । सिद्धान्ते

ब्रह्मणि प्रमाणविचारः ईश्वरानुमाननिरासश्च

तथाहि—न तावत् प्रत्यक्षं तत्र प्रमाणम्, रूपस्पर्शहीनतया बाह्यप्रत्यक्षागोचरत्वात्। मनसः केवलस्य भोक्तृतद्धर्ममात्रग्राहकत्वात्। ब्रह्मापि भोक्त्रभिन्नमिति चेत्? न, सर्वज्ञ--सर्वात्म-ब्रह्मणस्तद्विपरीतभोक्तृतावन्मात्रत्वानुपपत्तेः।

नन्वहमनुभवे प्रकाशः साक्षिण उक्तस्स एव ब्रह्मेति चेत्, सत्यं, अहमनुभवस्याप्यज्ञानत्वात्, तेन तत्स्वरूपनिर्द्धारणाभावाच्च।

ननु कार्यत्वहेतुः कर्तृजन्यत्वनियतः क्षित्यादिकर्त्तारमनुमापयतीति चेत्? न तावत् कार्यमात्रे कृतिमतः कारणत्वग्रहः संभवति, घटादेः कृतिजन्यत्वेऽवधृते हि तत्र कार्यत्वेन तद्व्याप्तिग्रहः। तत्र च तदवधारणमन्वयव्यतिरेकाभ्यां चेत् कस्तर्हि कार्यव्यतिरेकप्रयोजकः कृतिव्यतिरेकः। संसर्गाभाव इति चेत्? न, कृत्यत्यन्ताभावस्य कार्यव्यतिरेकाप्रयोजकत्वात्। आत्माधिकरणककृतिव्यतिरेक एव हि तत्प्रयोजकः तथैव नियमेनानुभवात्। अनात्मनि तद्व्यतिरेकस्य कार्यपूर्वकालेऽपि सत्वात्।

---

भोक्तृब्रह्मणोरभेदात्, ब्रह्मापि मनोग्राह्यमिति शङ्कते—ब्रह्मेति। जीवस्याशनायाद्यतीतरूपेणैव ब्रह्माभेदो न भोक्तृरूपेण ततश्च न भोक्तृग्राहकमनसो ब्रह्म विषय इत्यभिप्रेत्याह—न सर्वज्ञेति। अहमनुभवस्य साक्षिविवेके चिदचिद्गोचरत्वाभिधानात् तत्र चिदंशस्य ब्रह्मत्वात् कथं तस्य प्रत्यक्षागम्यत्वमिति शङ्कते—नन्विति। अहमनुभवे साक्षिप्रकाशमङ्गीकरोति—सत्यमिति। तर्हि ब्रह्मणो मानान्तरगम्यत्वमित्यत आह—अहमनुभवस्येति। अहमाकारवृत्तेः क्लृप्तप्रमाकरणाजन्यत्वेन ज्ञानत्वाभावादित्यर्थः तस्य ज्ञानत्वेऽपि जडात्मतया चिद्विषयत्वेन भ्रान्तित्वान्न तेन ब्रह्मस्वरूपसिद्धिरित्याह—तत्स्वरूपेति। प्रत्यक्षतोऽस्यासिद्धावपि अनुमानादीश्वरसिद्धिरिति शङ्कते—नन्विति। कार्यत्वस्य कृतिमज्जन्यत्वेन व्याप्तिग्रह एव तावदनुपपन्न इति दूषयति—न तावदिति। असंभवमेवोपपादयितुं घटादौ कर्तृजन्यत्वज्ञानं विना तेन कार्यत्वस्य व्याप्तिग्रहायोगात् तदर्थं तस्य कृतिजन्यत्वग्रह आवश्यक इत्याह—घटादेरिति। कृतौ सत्यां घटादीतरथा नेत्यन्वयव्यतिरेकाभ्यां घटादेः कृतिजन्यत्वनिश्चय इष्ट इति शङ्कते—तत्रेति। कृतेर्व्यतिरेको नाम तदभावः स कीदृशः कार्यव्यतिरेकप्रयोजक इति पृच्छति—कस्तर्हीति। कृत्यन्योन्याभावे सत्यपि घटादिकार्यदर्शनात् तत्संसर्गाभावमात्रं तदभावप्रयोजकमिति शङ्कते—संसर्गेति। मृदादौ कृत्यत्यन्ताभावसत्वे कार्यदर्शनात् न कृतिसंसर्गाभावः कार्यव्यतिरेकप्रयोजक इत्याह—न कृतीति। तर्हि कीदृशः कृतिव्यतिरेकः कार्यव्यतिरेकप्रयोजक इत्याकाङ्क्षायामाह—आत्मेति। एतच्च

मृदादिषु कार्योत्पत्तेः पूर्वं कृतिसद्भावशङ्कानिरासौ

**यत्तु कार्यपूर्वसमये मृदादिषु स्वरूपसंबन्धेन कृतिरेवास्ति न तदत्यन्ताभाव इति। तन्न। तदापि मृदि कृतिर्नास्ति मृत्कृत्याधारो नेति कृतितदधिकरणत्वसामान्याभावज्ञानस्य बाधकाभावेन प्रमात्वात्। मृदि कृत्यनुभवो बाधक इति चेत्? न, तस्यातीते ज्ञानमिति ज्ञानस्येव तद्विषयताविषयत्वात्। किं चैवं सति कृत्याधारत्वस्य लाधवावधृतात्मत्वव्याप्यत्वभङ्गप्रसङ्गः। न च तदपि स्वरूपसंबन्धेन तत्रास्तीति वाच्यम्, कदापि तत्र तद्विशिष्टप्रत्ययाभावेन तस्य तद्वृत्तौ प्रमाणाभावात्।**

**ननु कृत्यसमानकालीनतद्व्यतिरेकः कार्यव्यतिरेकप्रयोजकः। न च तस्य घटाद्युत्पत्त्यनन्तरमपि सत्त्वान्नैवमिति वाच्यम, तदा तस्य स्वेतरसकलकारणासमवहितत्वादिति चेत्? न, द्वितीयकृत्यभावस्याप्रयोजकत्वप्रसङ्गात्; तस्य कृतिकादाचित्कत्वग्रहणाधीनग्रहत्वाच्च। तस्मात् कृतितद्व्याप्येतरसकलसमवधाने यदाऽऽत्मनि कृतिविरहस्तदाऽग्रिमक्षणे कार्यव्यतिरेक इत्यबाधितानुभवात् स एव तत्र प्रयोजक इति न कृतिसंसर्गाभावः, तत्प्रयोजकः। कारणान्तरे तु यथा तथाऽस्तु; किं प्रेक्षावतां**

---

शरीरावच्छिन्नात्मपरम्—तथैवेति। शरीरावच्छिन्नात्मनि कृत्यभावे कार्याभावदर्शनात्, तन्निष्ठकृत्यभाव एव कार्याभावप्रयोजकः, तत्र च न कृत्यत्यन्ताभावः संभवतीति भावः। आत्मसमवेतकृतिर्मृदादावपि स्वरूपसंबन्धेनास्तीति कस्यचिन्मतमनूद्य दूषयति—यत्त्वित्यादिना। बाधकाभावोऽसिद्ध इति शङ्कते—मृदीति। कृतिविषत्वमेव 'मृदि कृतिरि' त्यनुभवविषयस्तस्य चाभावानुभवेनाविरोधान्न तद्बाधकतेत्याह—न तस्येति।

किञ्च कृतिसमवायितया कृत्याधारत्वापेक्षया लाघवात् कृत्याधारत्वमेवात्मत्वव्याप्यमिति वाच्यम्, तच्चानात्मनोऽपि कृत्याधारत्वे भग्नं स्यादित्याह—किञ्चेति। आत्मत्वस्य मृदादौ समवायेनाभावेऽपि स्वरूपसंबन्धेन सत्त्वात् कृत्याधारत्वस्य न तद्व्याप्यत्वभङ्ग इत्याशङ्क्याह—न च तदपीति। आत्मत्वस्य मृदादौ समवायाभावेऽपि स्वरूपसंबन्धेन सत्त्वात् कृत्याधारत्वस्य न तद्व्याप्यत्वभङ्गइत्याशङ्क्याऽऽह—न च तदपीति। आत्मत्वस्य मृदादौ स्वरूपसंबन्धवत्त्वस्य विशिष्टप्रत्ययस्य कदाप्यभावात् तयोः स्वरूपसंबन्धोऽपि नास्तीत्यर्थः। आत्मगतकृतिव्यतिरेको न कार्यव्यतिरेकप्रयोजकः। किन्तु कृत्यसमानकालीनस्तत्प्रयोजकः। स च कृतिसमये मृदादावपि नेति न कृत्यनन्तरकार्यव्यतिरेक इत्यभिप्रेत्य शङ्कते—नन्विति। एवं तर्हि कार्यस्थितिसमये मृदादौ कृत्यसमानकालीनतद्व्यतिरेकस्य सत्वात्, तदा कार्यव्यतिरेकापात इत्यत आह—न चेति। कृतितद्व्याप्येतरकारणसमवधाने सति हि कृतिव्यतिरेकः कार्यव्यतिरेकप्रयोजकः कार्यस्थितिसमये च कारणसमवधानाभावान्न

तत्परीक्षया। एवं च कृतिप्रागभावे घटो नेति व्यतिरेकनियमावधारणार्थं कृतेः प्रथमं प्रागभावप्रतियोगित्वमवसेयम्।

अत्रैव युक्त्यन्तरम्, कृतित्वावच्छेदेन जन्यत्वग्रहश्च

किं च ज्ञानचिकीर्षयोर्घटजनकतासिद्ध्यर्थं कृतेस्तज्जन्यत्वं वाच्यम्, तद्द्वारत्वनिश्चयं विना तयोस्तदसंभवादिति कृतेः प्रागभावप्रतियोगित्वमग्रे ग्राह्यमेव। तत्र च कृतित्वावच्छेदेनैव तदवसेयं लाघवात्, न तु रूपान्तरेण गौरवात् कृतित्वावच्छेदेन व्यतिरेकनियमावधारणे तस्यैवोपयुक्तत्वाच्च। ततश्च सर्वा कृतिर्जन्या अनित्या चेति निश्चयबलात् जन्यकृत्यजन्यत्वेन निश्चितक्षित्यादौ कार्यत्वनिश्चय एव प्रकृतव्याप्तिग्रहविरोधी कृतित्वावच्छेदेनानित्यत्वनिश्चयवतः क्षित्यादौ कृतिजन्यो न भवतीति निश्चयस्यापि सुलभत्वात्। न चानुमानात् घटादेः कृतिजन्यत्वम्;

---

तदा कृतिव्यतिरेकात् कार्यव्यतिरेक इत्यभिप्रेत्याह—तदेति। मृदादिविषयप्रथमकृतिसमये द्वितीयकृत्यभाव एव कार्यव्यतिरेकप्रयोजको वाच्यः, स च तदा कृतिसमकालीन इति तस्य तत्प्रयोजकत्वं न स्यादित्याह—न द्वितीयेति।

किं च कृतिव्यतिरेके कृत्यसमानकालीनत्वस्य कृतिकादाचित्कत्वं विना दुर्ग्रहत्वात् कादाचित्कत्वमवश्यं ग्राह्यम्, तत्र चाग्रे दोषो वक्ष्यत इत्यभिप्रेत्याह—तस्येति।

नन्वात्मनिष्ठकृतिव्यतिरेकोऽपि न कार्यव्यतिरेकप्रयोजकः। तस्य कार्यस्थितिकालेऽपि सत्वादिति शङ्कां निराकुर्वन्नुपसंहरति—तस्मादिति।

नन्वेवं दण्डादिव्यतिरेकोऽपि घटादिव्यतिरेकप्रयोजको न स्यात्, चक्रभ्रमणादिकाले दण्डादिव्यतिरेके सत्यपि कार्यदर्शनादित्यत्राह—कारणेति। दण्डादेर्भ्रमणादिद्वारा कार्यप्रयोजकत्वेनापि घटाद्यर्थिनस्तदुपादानोपपत्तेर्न काचिद् क्षतिरिति भावः। भवतु आत्मनि कृतिव्यतिरेक एव कार्यव्यतिरेकप्रयोजकः, ततः किमित्यत आह—एवं चेति। आत्मगतकृतिध्वंसस्य कार्यव्यतिरेकप्रयोजकत्वायोगात् लाघवाच्च तत्प्रागभाव एव कार्यव्यतिरेकप्रयोजक इति कृतेः प्रागभावप्रतियोगित्वं व्याप्तिग्रहात् पूर्वमेव ग्राह्यमित्यर्थः। कृतेः पूर्वमेव प्रागभावप्रतियोगित्वग्रह आवश्यक इत्यत्र युक्त्यन्तरमाह—किञ्चेति। उपादानगोचरयोर्ज्ञानचिकीर्षयोः कृतिव्यवहितयोः कृतिद्वारकत्वनिश्चयं विना घटादिकारणत्वग्रहायोगात् तद्द्वारकत्वस्य तज्जन्यत्वग्रहं विनाऽयोगात्, तज्जन्यत्वग्रहणाय कृतेः प्रागभावप्रतियोगित्वग्रहस्तत्रावश्यक इत्यर्थः। तत्र कृतित्वावच्छेदेनैव प्रागभावप्रतियोगित्वं गृह्यते, उतानित्यकृतित्वावच्छेदेनेति वीक्षायामाद्य एव न्याय्य इत्याह—तत्र चेति।

अत्र तन्तुत्वादेः पटादिसामान्य इव कृतित्वस्यापि प्रागभावप्रतियोगित्वसामान्यानतिरिक्तदेशवृत्तित्वरूपमवच्छेदकत्वं विवक्षितम्। ततश्च सामान्यस्य प्राग-

**तस्यापि तद्व्यतिरेकग्रहणपूर्वकत्वात्। नापि शब्दाद् घटादेः कृतिजन्यत्वनिश्चयः। प्रागीश्वरात् अन्धपरम्परात्वशङ्कादुष्टत्वात्।**

तर्काभावाच्च न कृतिकार्ययोः व्याप्तिग्रहः

**किञ्च पक्षे पक्षसमे वा साधनवति साध्यसंशयोऽपि तर्कं विना व्याप्तिग्रहप्रतिबन्धक एव धूमादावपि तर्केण तन्निवृत्तावेव व्याप्तिग्रहात्, अन्यथा तर्कवैयर्थ्यात्। न चास्ति प्रकृते कश्चित् तर्कः न च कार्यत्वभङ्गप्रसङ्गात् संशयनिवृत्तिः। कार्यमात्रस्य कर्तृजन्यत्वावधारणं विना तदयोगात्। न च व्याप्यतावच्छेदकलाघवेन कार्यत्वस्य कर्तृजन्यत्वसंशयनिवृत्तिरिति वाच्यम्, क्षितेरनित्यकृत्यजन्यत्व-**

---

भावप्रतियोगितावच्छेदकत्वं न संभवतीति न शङ्कनीयम्। अथवा पराभिमतप्रागभावस्य निरस्तत्वात् कार्यप्राक्काले तत्समवायिसंसर्गितदत्यन्ताभाव एव प्रागभावः अत्यन्ताभावप्रतियोगितायां सामान्यमवच्छेदकमेवेति भावः।

किञ्च कृतित्वावच्छेदेनैव प्रागभावप्रतियोगित्वग्रहे कृतेस्तेन रूपेण कार्यव्यतिरेकग्रहो युज्यते नान्यथेत्याह--कृतित्वेति। कृतित्वावच्छेदेन प्रागभावप्रतियोगित्वनिश्चयस्यावश्यकत्वे प्रकृते किमायातमित्यत आह—ततश्चेति। कृतित्वावच्छेदेन जन्यत्वनिश्चयवतः कृतिजन्यत्वस्य जन्यकृतिजन्यत्वं व्यापकमित्यपि निश्चयसंभवात्, क्षित्यादौ जन्यकृतिजन्यत्वाभावनिश्चयेन तन्नियतकृतिजन्यत्वस्याप्यभावनिश्चयात् तत्र कार्यत्वं कृतिजन्यत्वस्य व्यभिचारीति निश्चयात् तयोर्व्याप्तिग्रहो न घटत इत्यर्थः।

विमतं कृतिजन्यं तदन्वयव्यतिरेकानुविधायित्वाद्यद्यदन्वयव्यतिरेकानुविधायि तत्तज्जन्यं यथा तन्तुजन्यः पट इत्यनुमानाद् घटादेः कृतिजन्यत्वनिश्चय इत्याशङ्क्यात्रापि प्रागभावरूपकृतिव्यतिरेकस्यावश्यग्राह्यत्वादुक्तविधया न कार्यत्वस्य कृतिजन्यत्वेन व्याप्तिग्रहसंभव इत्यभिप्रेत्याह—न चेति।

अस्तु, तर्ह्याप्तोपदेशपरंपरया घटादेः कृतिजन्यत्वनिश्चयः। न चात्र व्यतिरेकग्रहापेक्षा अतो नोक्तदोष इत्यत आह—नापीति। ईश्वरसिद्धेः पूर्वमुपदेशमूलप्रमाणाभावेन तस्यान्धपरम्पराप्राप्तत्वशङ्कया निश्चायकत्वायोगादित्याह—प्रागिति। एवं व्यतिरेकमुखेन व्यभिचारनिश्चये व्याप्तिग्रहो न संभवतीत्युक्तमिदानीं व्याप्तिग्रहप्रतिबन्धकव्यभिचारसंशयनिवर्तकतर्काभावादपि न व्याप्तिग्रह इत्याह—किञ्चेति। व्यभिचारसंशयस्याप्रतिबन्धकत्वे तस्य तर्कानिवर्त्यत्वे च बाधकमाह—अन्यथेति। व्याप्तिग्राहकमानादेव तद्ग्रहसंभवाद् गृहीतव्याप्तिकहेतोः पक्षधर्मताबलात् स्वसाध्यसाधकत्वाच्च तर्को व्यर्थः स्यादित्यर्थः। तर्ह्यत्रापि तर्काद् व्यभिचारसंशयो निवर्ततामिति तत्राह--न चेति। विपक्षे हेतूच्छित्तिप्रसङ्गरूपतर्कः प्रकृतेऽप्यस्तीत्यत आह--न चेति। कार्यमात्रस्य

निश्चयदशायां नित्यकृत्युपस्थितिं विना उपस्थितक्षितिकार्यत्वसाधारणव्याप्तिग्रहानुकूललाघवानवतारात्। तदुपस्थितौ चालौकिककृतिकल्पनागौरवेण प्रकृतलाघवानवतारात्। एतेनाङ्कुरादिकं यदि कर्तारं विनैव जायेत तर्हि न भवेदेव चेतनानधिष्ठितात् कारणात् कार्यादर्शनादिति प्रत्युक्तम्। अस्यापि तर्कस्य कार्यमात्रे कृतिमतः कारणत्वावधारणं विनाऽनवतारात्। अदर्शनस्य घटादेः कृतिमज्जन्यत्वेऽप्युपपत्तेः। अन्यथा शरीरं विना घटादिकार्यं न दृश्यत इति कार्यत्वस्य तेनापि व्याप्तिग्रहप्रसङ्गः। तस्यापि पक्षधर्मताबलान्नित्यस्यास्मदाद्ययोग्यस्य सिद्ध्युपपत्तेः।

नन्वङ्कुरादेः कार्यत्वानित्यकृत्यजन्यत्वाज्ञानदशायां घटादौ व्याप्तिग्रह इति चेत्? न, सर्वेषां तत्सामग्रीसत्त्वेन तद्विरहदशाभावात्। अन्यथा शरीरेणापि तत्प्रसङ्गात्, गृहीताया अपि पश्चात् तर्काभावाद् बाधसंभवाच्च। किञ्च नास्त्येव व्याप्तिः कृतिरनित्या शरीरजन्या च कृतिमान् शरीरी अशरीरीकृतिमान्न भवतीत्याद्यनेकप्रमाणस्य लाघवानुगृहीतस्य बाधकस्य सत्त्वात्।

---

कर्तृजन्यत्वेऽवधृते हि क्षित्यादिकार्यस्यापि तेन विनानुपपत्तिरिति तर्कः प्रवर्तते तदेवोक्तविधया दुर्ग्रहमिति कथं तदुपजीवी तर्कः प्रवर्ततेत्यर्थः।

ननु घटादौ कार्यत्वमेव कर्तृजन्यताव्याप्यं लाघवात्, न तु शरीरकार्यत्वं गौरवादिति तर्काद् व्यभिचारसंशयनिवृत्तिरित्यत आह—न च व्याप्यतेति। किं नित्यकृतावनुपस्थितायामेवोक्तलाघवाद्यवतारः, तदुपस्थितौ वा? आद्ये जन्यकृत्यजन्यतया निश्चितक्षित्यादिकार्यस्य कृतिजन्यत्वासंभवनया लाघवादिकमेव नावततीत्याह—क्षितेरिति। द्वितीयं दूषयति—तदुपस्थिताविति। तर्कान्तरं निराकरोति—एतेनेति। कार्यमात्रे कर्तुः कारणत्वे गृहीते हि कर्तुरभावे कार्याभावोऽप्यापादयितुं शक्यते। तस्यैवोक्तप्रकारेण दुर्ग्रहत्वादसावपि तर्को नावतरतीत्याह—अस्यापीति। घटादिकार्यस्य कर्तारं विनाऽदर्शनात् क्षित्यादिकार्यमपि तं विना न स्यादित्याशङ्क्याह—अदर्शनस्येति घटादिरूपकार्यविशेषस्यैवेत्यर्थः। कर्तारं विना कार्यविशेषादर्शनमात्रेण कार्यमात्रे तज्जन्यत्वग्रहेऽतिप्रसङ्गमाह—अन्यथेति।

ननु क्षित्यादौ शरीरस्य कारणत्वे तस्यापि कार्यतया शरीरान्तरं तत्कारणतयाऽऽस्थेयमेवं तस्य तस्यापीत्यनवस्था स्यादङ्कुराद्युत्पादकशरीरमनुपलब्धचरं चेत्यत आह—तस्यापीति।

न च शरीरस्यानित्यत्वनियमेन नित्यत्वानुपपत्तिरिति वाच्यम्, कृतेरप्यनित्यत्वनियमेन तस्या अपि तदनुपपत्तेरिति भावः।

अनुमाननिरासेन क्षितिकर्तुः कृतिनिरास एव तात्पर्यम्

**अत्र च क्षितिकर्तुः कृत्याश्रयत्वं निरस्यते न तु क्षितेः सकर्तृकत्वं तस्य श्रुतिसिद्धत्वात्, कृत्यघटितस्यैव कर्तृत्वस्य वक्ष्यमाणत्वात्। कृतिजन्यत्वे शरीरजन्यत्वोपाधेश्च। न च शरीरावयवक्रियायां साध्याव्यापकत्वम्, तत्रापि घटादाविव शरीरस्य निमित्तत्वात्। शरीरावयवक्रियातिरिक्तत्वस्य कृतिसाध्यत्वे वा व्यापकमस्तु अवच्छिन्नसाध्यव्यापकस्याप्युपाधित्वात्।**

**न च शरीरजन्यत्वाभावे गौरवेण न कृत्यजन्यत्वनिरूपिता व्याप्तिरिति दूषकताबीजाभावान्नायमुपाधिरिति वाच्यम्, व्यापकाभावत्वेन तस्य व्याप्यत्वात्। अन्यथा चन्दनवह्न्यभावस्यापि सुरभिधूमाभावव्याप्यता न स्यात्। व्यभिचारोन्नयने व्याप्त्यनपेक्षणाच्च। कार्यत्वहेतोरनुकूलतर्केण कृतिजन्यत्वव्याप्तिग्रहान्नायमुपाधिः साध्यव्यापकः पक्ष एव साधनवति साध्यसद्भावादिति चेत्? न, व्याप्ति-**

---

नन्वङ्कुरादौ कार्यत्वाज्ञ नदशायां व्यभिचारसंशयादेरभावात् तदा व्याप्तिग्रहो घटत इति शङ्कते—नन्विति। अङ्कुरादेरस्मदादिकृतिं विनापि जन्यतया बालगोपालसिद्धत्वेन तस्य तदज्ञानदशैव नास्तीत्याह—न सर्वेषामिति। कदाचिद् व्यभिचाराज्ञानमात्रेण व्याप्तिग्रहे दोषमाह—अन्यथेति। व्याप्तिग्रहेऽपि तस्योक्तयुक्तिभिर्भ्रत्वनिश्चयान्न व्याप्तिसिद्धिरित्याह—गृहीताया इति। एवं कार्यत्वस्य कृतिजन्यत्वेन व्याप्तिग्रहो न घटत इत्युक्तम् इदानीं प्रबलानेकव्याप्तिविरोधात् सैव नेत्याह—किञ्चेति। क्षित्यादेः सकर्तृत्वनिराकरणं सिद्धान्तविरुद्धमित्याशङ्क्याह—अत्र चेति। कृतिमत एवं कर्तृत्वात् कथं कृत्याश्रयत्वनिषेध इत्यत आह—कृत्यघटितस्येति। कार्यानुकूलज्ञानवत्वं ज्ञानवत्त्वे सति कारणता वा कर्तृत्वमिति वक्ष्यत इत्यर्थः। सोपाधिकत्वादपि न व्याप्तिरित्याह—कृतिजन्यत्व इति। शरीरावयवोपादानकक्रियायां कृतिजन्यत्वे सत्यपि शरीरजन्यत्वाभावान्न तस्य साध्यव्यापकतेत्यत आह—न च शरीरेति। पक्षधर्मावच्छिन्नसाध्यव्यापको वाऽयमुपाधिरित्याह-शरीरेति।

नन्ववच्छिन्नसाध्यव्यापकस्य सर्वत्र वक्तुं शक्यत्वात् स उपाधिरेव नेत्याशंक्य तस्यापीतरवत् तर्काभावे दूषकताबीजसाम्यादुपाधिता युक्तेत्याह—अवच्छिन्नेति।

ननु क्षित्यादिकमकर्तृकं शरीराजन्यत्वादात्मवदिति प्रतिपक्षोन्नायकतयोपाधेर्दूषकत्वं वाच्यम, तदयुक्तम्, अजन्यत्वस्यैव लाघवात्, तद्व्याप्यत्वेन शरीराजन्यत्वस्य गौरवेणाव्याप्यत्वादित्यत आह—न चेति। न ह्यस्य शरीराजन्यत्वेन व्याप्यता। किन्तु व्यापकाभावत्वेनेत्याह—व्यापकेति। व्यापकाभावत्वेन व्याप्त्यनङ्गीकारे बाधकमाह—अन्यथेति। वह्न्यभावस्यैव सुरभिधूमाभावं प्रत्यपि व्याप्यतासंभवात्, चन्दनवह्न्यभावस्य व्याप्यता न स्यादित्यर्थः। किञ्च कार्यत्वं कृतिजन्यत्वव्यभिचारि तद्व्यापकशरीरजन्यत्व-

ग्राहकतर्कस्य निरस्तत्वात्। लाघवेन कृतिजन्यत्वावच्छेदेन शरीरजन्यत्वग्रहा-दुपाधेः साध्यव्यापकत्वाच्च। न च शरीरजन्यत्वमन्यत्राप्यस्तीति न कृतिजन्यत्वं तदवच्छेदकम्। न्यूनवृत्तेरपि धूमत्वादिवदवच्छेदकत्वात्।

ननु शरीरजन्यतावच्छेदकं कृतिजन्यत्वं चेत् तत्प्रथमं ग्राह्यमिति जन्य-त्वावच्छेदेनैव प्रथमं गृह्यते। तथा चानित्यकृतिजन्यमेव शरीरजन्यमिति चेत्? न, तत्र व्याप्तितद्ग्राहकाभावयोरुक्तत्वात्। जन्यत्वसामानाधिकरण्येनापि तद्ग्रहसंभवाच्च।

चेष्टाजन्यत्वरूपोपाध्यन्तरोद्भावनम्।

एवं चेष्टाजन्यत्वमुपाधिः, तस्य चेष्टातिरिक्तकृतिजन्यत्वव्यापकत्वात्, न च चेष्टाजन्यत्वे तदतिरिक्तानित्यकृतिजन्यत्वं प्रयोजकम्, गौरवात्। न चोक्त-विधया तत्प्रामाणिकम्, चेष्टाजन्यत्वस्य प्रथमं ग्राह्यत्वात्, कृतिव्यतिरेकात् किं घटादिव्यतिरेकः चेष्टाव्यतिरेकाद्वेति संशयस्य चेष्टाद्वारत्वनिर्णयेनैव निवर्त्यत्वात् तथा च कृतिप्रयोज्यत्वावच्छेदेन चेष्टाजन्यत्वं लाघवात् ग्राह्यमिति विपरीतमेव प्राथम्यम्। एवमन्यस्यापि शङ्कितस्य दूषणमूह्यम्।

साध्यकर्तृत्वस्य दुर्वचत्वादप्युपाधेर्दुर्वारत्वम्।

किं च साध्ये कर्तृत्वं कार्यानुकूलोपादानज्ञानवत्त्वं चिकीर्षावत्त्वं कृतिमत्त्वं त्रितयमपि वा? आद्येषु तदितरजन्यत्वोपाधेर्न व्याप्तिः। न तुरीयः, अप्रयोजक-

---

व्यभिचारित्वात् प्रमेयत्ववदिति व्यभिचारोन्नायकतया दूषकत्वसंभवान्न क्षतिरित्याह—व्यभिचारेति। "अनुकूलेन तर्केण सनाथे सति साधने" इति न्यायेनोपाधेः साध्याव्यापकत्वं शङ्कते—कार्यत्वेति। कार्यमात्रे कृतिमतः कारणत्वग्रहं विना तर्क एव नावतरतीत्युक्तत्वा-न्मैवमित्याह—न व्याप्तीति। साध्यस्यैवोपाधिव्याप्यत्वे तर्कोऽपीत्याह—लाघवेनेति। अनित्यकृतिजन्यत्वापेक्षया कृतिजन्यत्वस्य लाघवेन घटादौ शरीरजन्यत्वावच्छेदक-त्वाच्छरीरजन्यत्वस्य तद्व्यापकत्वसिद्धिरित्यर्थः। कृत्यजन्ये ज्ञानादावपि शरीरजन्यत्वस्य सत्वात् तत्र कथं शरीरजन्यतावच्छेदकत्वमित्याशङ्क्य धूमत्वस्यालोकादिसाधारणव्याप्य-तावच्छेदकत्ववत् तदुपपत्तिरित्याह—न चेत्यादिना।

नन्वेवं घटादौ शरीरजन्यत्वग्रहात् पूर्वमेव कृतिजन्यत्वं ग्राह्यमवच्छेदकग्रहं विनाऽवच्छेद्यग्रहायोगात् कृतिजन्यत्वं च लाघवाज्जन्यत्वावच्छेदेनैव गृहीतमिति क्षित्या-दावपि तद्व्यापककृतिजन्यत्वस्यावश्यकत्वान्न तच्छरीरजन्यतावच्छेदकं किन्त्वनित्य-कृतिजन्यत्वमेवेति शङ्कते—नन्विति। कार्यमात्रे कृतिजन्यत्वस्य व्याप्त्यन्तरविरोधाद-

त्वादव्याप्तेः, कार्यं ह्युपादानगोचरकृतिमज्जन्यम्, न तु तद् ज्ञानादिसमुदायवज्जन्यं व्यर्थविशेषणतया कर्तुस्तद्रूपेणाजनकत्वात् ।

ननु विशिष्टं न कारणम्, किन्तु ज्ञानादित्रितयं प्रत्येकमेव कारणं तेनानुमानेन सिद्ध्यति अर्थात् तत्समाज इति चेत् ? न, कृतेर्घटादिहेतुत्वेऽपि ज्ञानेच्छयोर्घटाद्यहेतुत्वात् । कृतौ सत्यां तद्व्यतिरेकेण घटानुदयाभावात्, कृतिरेव तदुभयं विना नेति चेत् तर्हि कृतिरेव तन्निमिताऽस्तु न घटादिः । जनकजनकस्याजनकत्वात् ।

ज्ञानेच्छयोः कृतिद्वाराघटादिजनकत्वपक्षनिरासः

**अथ न ज्ञानादि जनकजनकम्, किन्तु स्मृतौ स्वर्गे च संस्कारापूर्वद्वाराऽनुभवयागाविव घटादौ कृतिद्वारा कारणमिति चेत् न, अनुभूते स्मृतिर्नाननुभूत इत्यन्वयव्यतिरेकाभ्यां श्रुत्या चानुभवादेस्तत्र कारणत्वं प्रथममवगम्य तदुपपादकतया**

---

संभवादस्यान्वयव्यतिरेकादिना दुर्ग्रहत्वस्य चोक्तत्वाज्जन्यतावच्छेदेनैव ग्रहोऽनुपपन्न इत्याह—तत्रेति ।

किञ्च जन्यत्वसामानाधिकरण्येनापि कृतिजन्यत्वग्रहसंभवान्न तस्य तदवच्छेदकतया व्याप्यत्वग्रहोऽपेक्षत इत्याह—जन्यत्वेति । तत्रैवोपाध्यन्तरमाह—एवमिति । चेष्टायां कृतिजन्यत्वेऽपि चेष्टाजन्यत्वाभावात् साध्याव्यापकोऽयमुपाधिरित्याशङ्क्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमाह—तस्येति ।

ननुचेष्टाऽन्यत्वे सत्यनित्यकृतिजन्यत्वमेव चेष्टाजन्यतावच्छेदकमित्यत आह—न चेति ।

ननु चेष्टाजन्यतावच्छेदकं चेष्टातिरिक्तकृतिजन्यत्वं चेत्प्रथमं जन्यत्वावच्छेदेनैव लाघवाद् ग्राह्यमिति क्षित्यादावपि कृतिजन्यत्वस्यावश्यकत्वादनित्यकृतिजन्यत्वमेव चेष्टाजन्यत्वप्रयोजकमित्यभ्युपेयमित्यत आह—नचोक्तविधयेति । चेष्टाजन्यत्वग्रहं विना कृतिजन्यत्वस्यैव दुर्ग्रहत्वात् तदेव प्रथमग्राह्यमित्याह—चेष्टेति । पटादेः कृतिजन्यचेष्टाजन्यत्वग्रहं विना कृतिजन्यत्वनिश्चयाभावात् तत्प्रथमं ग्राह्यमित्याह—कृतीति । फलितमाह—तथा चेति ।

ननु घटादेः कृतिजन्यचेष्टाजन्यत्वं विना कृतिप्रयोज्यत्वस्य दुर्ग्रहत्वात् कथं तदवच्छेदेन चेष्टाजन्यत्वग्रह इत्यत आह—एवमिति । यद्यपि प्रथमं घटत्वादिनैव चेष्टाजन्यत्वं गृह्यते तथापि द्वारद्वारिणोरेकावच्छेदेनैव जनकताग्रहनियमाच्चेष्टाद्वारककृतिजन्यत्वमपि तेनैव रूपेण ग्राह्यमिति चेष्टातिरिक्तकृतिजन्यत्वस्य चेष्टाजन्यत्वेन

**तत्र संस्कारोऽपूर्वं च कल्प्यत इति तत्र तदुभयं द्वारम्, इह तु प्रथममेव कृतेः कारणताग्रहः संभवति। प्रत्यक्षे चिकीर्षागोचर एव कृतिरिति कृतावेव तयोरन्वय-व्यतिरेकौ कृतिविनष्टयोस्तयोर्घटादौ कारणत्वायोगाच्च।**

**न च कृतिर्व्यापारः येन ज्ञानादेर्यागादितुल्यता स्यात्। अत एव यद्धि यज्जनयित्वैव यज्जनयति तत्तस्य व्यापार इति व्यापारलक्षणं कृतावप्यस्तीति परास्तम्। ज्ञानादेर्घटादिजनकत्वे प्रत्यक्षाद्यन्यतमप्रमाणाभावात्। तन्तुरूपादेरपि व्यापारत्वप्रसङ्गाच्च। न च तज्जन्यस्य जनकत्वविवक्षायां न दोष इति वाच्यम्, तर्हि कृतेः कारणताग्रहः प्रथममवश्यंभावीति पटं प्रत्यंशोरिव ज्ञानादेरपि कारण-**

---

नियततया तस्योपाधित्वात्। न च कृतिनिरूपितसामान्यकार्यता जन्यतावच्छेदेनैव गृह्यत इति वाच्यम् चेष्टानिरूपितसामान्यकार्यताया अपि कृतिजन्यत्वावच्छेदेनैव ग्रहप्रसङ्गेन चेष्टाऽजन्यक्षित्यादौ कृतिजन्यत्वानुमानायोगादित्यादिकमूह्यमित्यर्थः। क्षित्यादि सकर्तृक-मित्यत्र कर्तृशब्दार्थं विकल्पयन् कार्यत्वहेतोस्तेन व्याप्तिं दूषयति—किञ्चेति[१]। ज्ञानवत्व-मित्यादित्रिषु कल्पेषु ज्ञानवज्जन्यत्वे साध्ये चिकीर्षावज्जन्यत्वं कृतिमज्जन्यत्वं चोपाधिः। चिकीर्षावज्जन्यत्वे च ज्ञानवज्जन्यत्वं कृतिमज्जन्यत्वं चोपाधिः। कृतिमज्जन्यत्वे च ज्ञानवज्जन्यत्वं चिकीर्षावज्जन्यत्वं चोपाधिरिति न व्याप्तिरित्यर्थः। ज्ञानादित्रितयवज्जन्यत्वं कर्तृत्वमिति पक्षं दूषयति—न तुरीय इति[२]। अप्रयोजकत्वमुपपा-दयति—कार्यं हीति। कार्यत्वस्य घटादौ ज्ञानाद्यैकैकजन्यत्वेन व्याप्तत्वात्, तन्मते क्षित्यादावपि साध्यत्रयेण ज्ञानादित्रितयजन्यत्वं सिध्यति, ज्ञानादीनां च समानाधि-करणानामेव घटादिहेतुत्वग्रहदर्शनात् क्षितिहेतूनामपि तेषां सामानाधिकरण्यमावश्यक-मिति तदधिकरणतयेश्वरसिद्धिरिति शङ्कते—नन्विति। घटादेर्ज्ञानजन्यत्वमिच्छाजन्यत्वं चासिद्धम्। तथा च कार्यत्वस्य न ताभ्यां व्याप्तिरिति दूषयति—न कृतेरिति। इतरकारणे सति ज्ञानेच्छाव्यतिरेके घटादिव्यतिरेकादर्शनान्न तयोस्तद्धेतुतेत्याह—कृताविति। ज्ञानादेर्घटादौ व्यतिरेकाभावेऽपि तत्कारणकृतौ व्यतिरेकवत्त्वात् तद्धेतुतेति शङ्कते—कृतिरेवेति। ज्ञानाद्यभावे कृतिर्न चेत् सैव तज्जन्यास्तु न घटादिः तं प्रति ज्ञानादेः कुलाल-पितृवज्जनकजनकत्वेनाहेतुत्वादित्याह—तर्हीति।

ननु यथा स्मृतिरूपकार्येऽनुभवस्य संस्कारो व्यापारो यथा वा यागस्य स्वर्गेऽपूर्व-मेवं ज्ञानादेर्घटादिकार्ये कृतिर्व्यापार इति न तया व्यवधानमिति शङ्कते—अथेति। यागानुभवयोः स्वर्गस्मृत्योः स्वर्गकामादिवाक्यादन्वयव्यतिरेकाभ्यां च कारणत्वे निश्चिते तदुपपादकतयाऽपूर्वं संस्कारश्च द्वारतया कल्प्येते। कृतिस्तु प्रथममेवान्वयव्यतिरेकाभ्यां घटादिकारणतया निश्चिता न स्वजनकज्ञानादेर्द्वारं भवितुमर्हति। ततश्च ज्ञानादेः कृतावेव कारणता न घटादाविति न तस्यानुभवादितुल्यतेत्याह—नानुभूत इति। व्यापारलक्षणव-त्वात् कृतिर्ज्ञानादेर्व्यापार इत्याशङ्क्याह—अत एवेति। ज्ञानादि घटं जनयतीत्यत्र

---

१-२. अनयोः मूलं २२४ पृष्ठे दृष्टव्यम्।

कारणत्वेनाकारणत्वप्रसङ्गात् । ईश्वरकृतिरपि भोक्त्रदृष्टमुत्पाद्यैव भोग्यं क्षित्यादिकमुत्पादयतीति साप्यदृष्टद्वारा स्यात् । तथा च भोक्तेव सर्वज्ञोऽपि न क्षितिकर्ता स्यात् । अदृष्टाद्वारककृतिमत एव कर्तृत्वात् । अन्यथा भोक्तापि जगत्कर्ता स्यात् ।

न च घटादिचिकीर्षा घटादिविशिष्टकृतिहेतुरिति विशेषणेऽपि हेतुरिति वाच्यम्; विषयस्य ज्ञान इव कृतावप्यविशेषणत्वात्, अन्यथा रूपादेरपि चक्षुः साध्यत्वप्रसङ्गात् ।

अङ्कुरादिना कृतिमनुमाय ततः ज्ञानेच्छयोरनुमाननिरासः ।

अस्तु तर्ह्यङ्कुराद्यनुमितकृत्यैव तदुभयसिद्धिः । न चानित्या कृतिः कारणं ज्ञानाद्यनुमापयति, न तु नित्येति वाच्यम्; कृतिविषयस्य कृतिसमानाधिकरणज्ञानादिविषयत्वनियमात् ।

ननु कृतौ स्वसमानाधिकरणज्ञानविषयत्वं कार्यतावच्छेदकम्, एकविषयादन्यदीयज्ञानात् समानाधिकरणादपि भिन्नविषयात् कृत्यदर्शनात् । कार्यतावच्छेदकश्च कार्यमात्रवृत्तिधर्मएवेति न नित्यकृतेः स्वसमानाधि-

---

मानाभावात्, तज्जन्यकृतेर्व्यापारत्वमेव नेत्यभिप्रेत्याह—ज्ञानादेरिति । अतिव्याप्तत्वादेतद्व्यापारलक्षणमपि नेत्याह—तन्तुरूपेति ।

ननु यज्जनयित्वैवेत्यत्र जनकं यज्जनयित्वेति विवक्षितं तन्तुरूपादेश्च पटाजनकत्वान्न तत्रातिव्याप्तिरित्याशङ्क्य तथात्वे कृतेः कारणत्वं प्रथमं ग्राह्यमिति ज्ञानादेः कारणकारणतयाऽन्यथासिद्धेर्न घटादिकारणतेत्याह—न चेत्यादिना ।

किञ्च क्षित्यादिजनकादृष्टमुत्पाद्यैवेश्वकृतेः क्षित्यादिजनकत्वाददृष्टस्यापि तत्त्वापात इत्याह—ईश्वरेति । ईश्वरकृतेर्दृष्टवृद्वारकत्वमिष्टमित्यत आह—तथाचेति । कार्यानुकूलकृतिमत्त्वमात्रेण कर्तृत्वे बाधकमाह—अन्यथेति । ततश्च जीवातिरिक्तो जगत्कर्ता न सिद्ध्येदिति भावः । चिकीर्षाया घटविशेषितकृतिं प्रति हेतुत्वाद् घटहेतुत्वमपि आवश्यकमित्यत आह—न चेति । ज्ञानेऽपि विषयस्य विशेषणत्वे रूपज्ञानस्य चक्षुर्जन्यत्वाद्रूपमपि तज्जन्यं स्यादित्याह—अन्यथेति । कार्यत्वहेतुना क्षित्यादिकर्तरि ज्ञानचिकीर्षयोरसिद्धावपि तदनुमितकृत्यैव तयोः सिद्धिरिति शङ्कते—अस्त्विति ।

ननु अनित्यकृतेर्ज्ञानादिकार्यत्वात् ततस्तदनुमानं युक्तं नित्यकृतेश्चाकार्यत्वात् कथं तत्सिद्धिरित्यत आह—न चानित्येति । कृतिविषयमात्रस्य स्वसमानाधिकरणज्ञानविषयत्वनियमात् कृत्याश्रयस्येश्वरस्य ज्ञानादिमत्त्वसिद्धिरित्याह—कृतिविषयस्येति ।

**करणज्ञानविषयत्वमिति चेत् ? न, स्वसमानाधिकरणानित्यज्ञानसमानविषयत्वस्य स्वसमानाधिकरणज्ञानसमानविषयानित्यकृतित्वस्य वा तत्कार्यतावच्छेदकत्वात् । न चैवमनित्यकृतिविषयत्वमेव ज्ञानविषयत्वव्याप्यमिति वाच्यम्; लाघवेन कृतिविषयत्वस्यैव ज्ञानविषयत्वव्याप्यत्वात् । न चैवमलौकिकज्ञानकल्पनागौरवम्; तस्य फलमुखतयाऽदोषत्वात् ।**

जगत्कर्तरि नित्यज्ञानसाधनखण्डनम् ।

**अथैवं कृतिविषयत्वेऽनित्यज्ञानसमानविषयत्वमपि व्यापकं स्यादिति चेत् ? न, गौरवेण तस्याव्यापकत्वात् । नन्वेवं कृतेः स्वसमानाधिकरणज्ञानसमानविषयत्वमेव कार्यतावच्छेदकम्, न तु तादृशानित्यज्ञानसमानविषयत्वादि गौरवादिति चेत् ? न, कृतिकार्यतापि हि कृतिविषयत्वं ज्ञानविषयत्वं चोपस्थाप्यैव**

---

नन्विदं कृतौ ज्ञानादिकार्यतावच्छेदकतया तद्व्याप्यं नित्यकृतौ तन्निवृत्तौ निवर्तते ततश्च न तदाश्रये ज्ञानादिसिद्धिरिति शङ्कते--नन्विति । ज्ञानसमानाधिकरणत्वस्य तत्समानविषयत्वस्य च कृतौ कार्यतावच्छेकत्वं व्यतिरेकमुखेनोपपादयति—एकविषयादिति । स्वसमानविषयस्वसमानाधिकरणानित्यकृतेरेव कार्यतादर्शनात् तादृशानित्यज्ञानसमानविषयत्वादिकमपि कार्यतावच्छेदकं ततश्च नित्यकृतेरनित्यज्ञानसमानाधिकरणत्वाभावेऽपि पूर्वोक्तरीत्या ज्ञानसमानाधिकरणत्वमावश्यकमिति परिहरति--न स्वसमानेति । एवं तर्ह्यनित्यकृतिविषयत्वमेव तत्समानाधिकरणज्ञानविषयत्वेन व्याप्तं न कृतिविषयत्वम् । ततश्च नित्यकृतिविषयस्य न तत्समानाधिकरणज्ञानविषयत्वसिद्धिरित्यत आह—न चैवमिति । कृतिविषयत्वस्यैव तद्व्याप्यत्वे नित्यकृतिविषयस्यापि तत्समानाधिकरणज्ञानविषयत्वाय नित्यज्ञानकल्पनागौरवादित्याशङ्क्य व्याप्तिग्रहणकालेऽप्रतीतेर्न दोषतेत्याह—न चैवमिति ।

ननु कृतिविषयस्य तन्त्वादेस्तत्समानाधिकरणानित्यज्ञानविषयत्वदर्शनात् तदेव कृतिविषयत्वव्यापकमिति नित्यकृत्याश्रयेऽप्यनित्यज्ञानमेव सिद्ध्येदिति शङ्कते—अथेति । व्याप्य इव व्यापकेऽपि गौरवस्य दोषत्वान्नैवं व्याप्तिरित्याह—गौरवेणेति । तर्हि कृतिगतकार्यतावच्छेदकेऽपि लाघवं ग्राह्यम्, न गौरवमिति शङ्कते—नन्वेवमिति । कृतेर्ज्ञानसमानविषयत्वं चेत् कार्यतावच्छेदकं तत् प्रथमं ग्राह्यमिति तदर्थं कृतिविषयस्य ज्ञानविषयत्वं ग्राह्यम् । तत्र च लाघवात् कृतिविषयत्वेनैव ज्ञानविषयत्वग्रहणान्नित्यकृतिविषयकनित्यज्ञानसिद्धौ ज्ञानसमानविषयत्वस्य नित्यकृतावपि गतत्वादनित्यज्ञानसमानविषयत्वमेव कृतेः कार्यतावच्छेदकं वाच्यम्, इत्यभिप्रेत्याह—न कृतीति । भवेदेतदेवं यदि कृतिविषयत्वव्यापकं स्यात् तच्चायुक्तम् । लाघवेन ज्ञानविषयत्वस्यैव तद्व्यापकत्वादिति

ग्राह्येति तयोरवश्यं प्रथमोपस्थितौ तत्रैव प्रथमं व्याप्तिग्रहादिति । मैवम्, लाघवेन कृतिविषयत्वे ज्ञानविषयत्वमेव व्यापकम्, न तु तत्समानाधिकरणज्ञानविषयत्वम् । अनागतगोचरसाक्षात्कारहेतुप्रत्यासत्त्यजन्यप्रत्यक्षविषयत्वं वा गौरवात् । ज्ञानविषयत्वं च व्यधिकरणज्ञानविषयत्वमादायापीति न क्षितिकर्तरि ज्ञानसिद्धिः ।

ननु यज्ञदत्तप्रत्यक्षतन्त्वादौ न देवदत्तकृतिविषयत्वं देवदत्तानुमितपरमाण्वादौ न तस्यापि कृतिरिति समानाधिकरणप्रत्यक्षविषयत्वमेव कृतिविषयत्वप्रयोजकम् । न च तत्र कृतिविरहादेव तद्विषयत्वविरहः । अन्यगोचरतदीयकृतेः सत्त्वादिति चेत् ?

न, समानाधिकरणप्रत्यक्षविषयत्वस्य कृतिविषयत्वप्रयोजकत्वेऽतिप्रसङ्गात् स्वजनकज्ञानविषयत्वमेव प्रयोजकम्, अतोऽन्यकृतिर्न घटप्रत्यक्षजन्या । न वा घटस्तज्जनकप्रत्यक्षविषय इति न तस्या घटविषयत्वम् । क्षितिजनककृतिविषयत्वे तु न तत्प्रयोजकं तस्यानित्यतया तद्विषयस्य तज्जनकप्रत्यक्षविषयत्वासंभवात् । तथा च यत्सामान्ये यत्सामान्यं तद्विशेषे तद्विशेषः प्रयोजक इति अनित्यकृतिविषयत्व एव तत्प्रयोजकम्, तव मते तत्कृतिविषयस्य तज्ज्ञानविषयत्वादिवत् केवलान्वयितया नियामकानपेक्षत्वात् प्रयोजककल्पनाया अदृष्टार्थत्वापाताच्च । कृत्या समानाधिकरणज्ञानानुमाने कृत्याश्रयस्य दुःखादिकमपि स्यात् ।

---

दूषयति—मैवमिति । पराभिमतं गौरवान्न व्यापकमित्याह—न त्विति । एवमपि नित्यकृतिगोचरविषयकज्ञानं क्षितिकर्तृगतमेव सिद्ध्यतीत्यत आह—ज्ञानविषयत्वं चेति । कृतिसमानाधिकरणप्रत्यक्षविषयत्वरहितस्य कृतिविषयत्वाभावात् कृतिविषयत्वे तादृशप्रत्यक्षविषयत्वं प्रयोजकमिति शङ्कते—नन्विति । यज्ञदत्तप्रत्यक्षतन्त्वादेर्देवदत्तकृत्यभावादेव तद्विषयत्वविरहो न तु तत्समानाधिकरणज्ञानविषयत्वाभावादित्याशङ्क्याह—न च तत्रेति । समानाधिकरणप्रत्यक्षविषयस्यापि घटादेस्तन्तुगोचरकृत्यविषयत्वान्नैतदपि प्रयोजकम्

किन्तु कृतिजनकज्ञानविषयत्वमेव तद्विषयत्वे प्रयोजकमत्र च नातिप्रसङ्ग इति दूषयति—न समानेति । एतच्चानित्यकृतिविषयत्वं प्रत्येव प्रयोजकं नित्यकृतिविषयत्वस्यासंभावितत्वात् । कृतिविषयत्वमात्रे तु ज्ञानविषयत्वमेव प्रयोजकमित्यभिप्रेत्याह क्षितिजनकेति । किञ्च परमते नित्यकृतेः सर्वविषयत्वेन कृतिविषयत्वस्य प्रमेयत्वादिवत् केवलान्वयित्वात् प्रयोजकानपेक्षणात् तद्विचारो व्यर्थ इत्याह—न वेति । नित्या कृतिः ज्ञानेच्छासमानाधिकरणा कृतित्वादित्यनुमानादीश्वरे ज्ञानादिसिद्धिरित्याशङ्क्याभाससाम्येन दूषयति—कृत्येति । न चेश्वरे पुण्यपापादेर

कार्यत्वलिङ्गादीश्वरसिद्धिनिरासः ।

अस्तु तर्हि कार्यत्वलिङ्गान्नित्यकृतिमत एव सिद्धिरिति चेत् ? न, एवमपीश्वरस्य तदगोचरत्वात् सर्वज्ञस्यैव श्रुत्या औपनिषदत्वोक्तेः । किञ्च पक्षधर्मताबललभ्यक्षितिगोचरकृतौ कृतित्वसामानाधिकरण्येन क्लृप्तत्वात्, प्रथमोपस्थितेश्चानुमितिरनित्यत्वमेव विषयीकुर्यात्, न तु नित्यत्वं तस्य कस्याञ्चिदप्यक्लृप्ततया प्रथममनुपस्थितेः । क्लृप्तमुपस्थितं च परित्यज्यानुपस्थिताक्लृप्तकल्पने गौरवात् । अतः कृतिकारणतया जीवनयोनिप्रयत्न इवादृष्टमात्रं कल्प्यते न ज्ञानादिकमपि । तच्च भोक्तृसमवेतमिति न तदर्थमपि तद्ज्ञानं कल्पनीयम्, व्यधिकरणस्याप्यदृष्टस्य तव मते वेदकर्तुस्तदर्थं शरीरसंयोगादिहेतुत्वात् । ज्ञानासहकृतादृष्टजन्यत्वादेव तस्याः परमाण्वादिविषयत्वं न विहन्यते ।

क्षित्यादिगोचरकृतेः सर्वगोचरत्वे नानुमानप्रामाण्यम् ।

एवं क्षितिगोचरकृतेः सर्वगोचरत्वमपि नानुमानात् सिद्धयति । तस्य व्याप्तिपक्षधर्मतान्यतरालभ्यत्वात् । पक्षधर्मताबलं हि व्याप्तिमत्तया परिदृश्यमान-

---

भावात् तत्र दुःखादि बाधितमिति वाच्यम्, ज्ञानादिवत्तस्यापि नित्यत्वेन पुण्यपापाद्यनपेक्षणादिति भावः । कार्यत्वहेतुना जन्यज्ञानादेरसिद्धावपि नित्यकृतिमत्त्वेनेश्वरस्य सिद्धत्वात् तस्य कथमुपनिषदेकगम्यत्वमिति शङ्कते--अस्त्विति । नित्यकृतिमतः सिद्धावपि सर्वज्ञतया श्रुत्युक्तेश्वरस्यानुमानादसिद्धेर्न तस्य तद्गोचरतेत्याह्--एवमपीति । कार्यत्वहेतुना क्षित्यादिजनककृतेर्नित्यत्वसिद्धिमङ्गीकृत्येदमुक्तम्, सम्प्रति तदेव न सिद्धयतीत्याह्--किञ्चेति । ईश्वरे कृतिकारणशरीरादेरभावात् तत्रानित्यकृतिर्बाधितेत्याशङ्क्याह्--अत इति । यथा जीवनयोनिप्रयत्नः प्रयत्नान्तरे क्लृप्तकारणं विनाप्यदृष्टादेव जायते एवमीश्वरकृतिरपि ज्ञानादिकं च विना जायतामित्यर्थः । न च लाघवेन कृत्येकत्वसिद्धौ सा नित्येति वाच्यम्, या कृतिः सा जन्या विनाशवती चेत्याद्यनेकव्याप्तिविरोधेन लाघवानवतारादिति भावः । तर्हीश्वरेऽदृष्टहेतुतया ज्ञानमावश्यकमित्यत आह्--तच्चेति । भोक्तृगतादृष्टस्य व्यधिकरणस्य कथमीश्वरगतकृतिहेतुत्वमित्याशङ्क्याह्-- व्यधिकरणस्येति । ईश्वरकृतेरदृष्टजन्यत्वेऽस्मदादिकृतिवदतीन्द्रियविषयत्वानुपपत्तिरित्यत आह्--ज्ञानासहकृतेति । ज्ञानजन्यकृतेस्तत्समानविषयत्वाज्ज्ञानीन्द्रियविषयत्वमीश्वरकृतेस्तद्जन्यत्वादतीन्द्रियविषयत्वोपपत्तिरिति भावः ॥

क्षित्यादिजनककृतेर्नित्यत्ववत् सर्वगोचरत्वमपि पराभिमतमनुमानान्न सिद्धयतीत्याह्--एवमिति । पक्षधर्मताबलादेवेश्वरकृतेः सर्वविषयत्वलाभ इत्याशङ्क्य पक्षधर्मताबलशब्दार्थं प्रदर्शयन् तस्या न पक्षातिरिक्तविषयत्वसिद्धिरित्याह्--पक्षधर्मतेति ।

हेतोः पक्षे व्यापकं विनाऽनुपपत्तिः। अतः तेन पक्षव्यक्तौ कृतिगोचरत्वमात्रं सिद्धयति न तु तदतिरिक्तेऽपि, तेन विनाऽनुपपत्त्यभावात् अदृष्टविशेषादुत्पद्यमानस्य नित्यस्य वा प्रयत्नस्य पक्षमात्रगोचरत्वोपपत्तेः।

ननु कृतौ जन्यत्वमसर्वविषयत्वप्रयोजकम्, तन्नित्याद् व्यावर्तमानमसर्वविषयत्वमपि व्यावर्तयतीति चेत्? न, लाघवेन कृतित्वमात्रस्यैव तत्प्रयोजकत्वात्।

अथ जनकज्ञानसमानविषयत्वादसर्वविषयज्ञानजन्यकृतेरसर्वविषयत्वं नित्यकृतेः तदभावान्न तथेति चेत्? न, जीवनयोनिप्रयत्नस्यासर्वविषयज्ञानाजन्यत्वेऽप्यसर्वविषयत्ववत् क्षितिजनककृतेरपि तदुपपत्तौ गौरवेण पक्षतदतिरिक्तविषयत्वकल्पनायोगात्; कार्यानुसारेण कृतिविषयताप्रयोजकस्वरूपसंबन्धस्य तावन्मात्र एव कल्पनासंभवात्; अन्यविषयत्वकल्पनायां प्रमाणाभावात्।

कृतेः कार्यमात्राहेतुत्वोपपादनम्। चेष्टामात्रे हेतुत्वात्

किञ्च कृतिरपि न कार्यमात्रहेतुः स्वोत्कर्षानुविधाय्युत्कर्षचेष्टायामेव तस्या हेतुत्वात्। न चैवं दण्डादेरपि घटाद्यकारणत्वप्रसङ्गः, इष्टत्वात्। तत्र तदर्थिप्रवृत्तेरन्यथापि संभवात्। क्षितिकर्त्रेकत्वमपि यद्येकत्वसंख्या तदा तत्र न निवार्यते, नानात्वेऽपि तदविरोधात्।

---

नित्यस्य वेत्यङ्गीकृत्योक्तम्—नित्यकृतावसर्वविषयत्वव्यापकाभावात् सर्वविषयत्वसिद्धिरित्याशङ्कते—नन्विति। किं जन्यत्वमेव असर्वविषयत्वप्रयोजकमुत जन्यकृतित्वं वा? नाद्यः, अतिप्रसङ्गादित्यभिप्रेत्य न द्वितीय इत्याह—न लाघवेनेति। जन्यकृतिविषयत्वस्य जनकज्ञानविषयत्वप्रयुक्तत्वात्, जनकज्ञानस्यासर्वविषयत्वेन तज्जन्यकृतेरप्यसर्वविषयत्वं युक्तम्, नित्यकृतेः तदभावात् सर्वविषयत्वमिति शङ्कते—अथेति।

असर्वविषयज्ञानाजन्यत्वेन न सर्वविषयत्वसिद्धिः जीवनयोनिप्रयत्ने व्यभिचारादन्यथासिद्धकार्यविषयत्वकल्पनागौरवाच्चेति दूषयति—न जीवनेति। अस्मदादिकृत्ययोग्यस्यापि ईश्वरकृतिविषयत्वात्।

तस्याः सर्वविषयत्वे न किञ्चिद् बाधकमस्तीत्याशङ्क्य तत्र साधकमपि किञ्चिन्नेति गौरवमेव बाधकमित्याह—कार्येति। ईश्वरकृतिमङ्गीकृत्य तस्या नित्यत्वादिकमनुमानान्न सिद्धयतीत्याह—किं चेति। चेष्टायामेवेति।

तथा च क्षित्यादौ शरीरव्यापाररूपचेष्टायाः अकारणत्वान्न तद्धेतुतयाऽपीश्वरकृतिसिद्धिरिति भावः। एवं तर्हि दण्डादिरपि चक्रभ्रमणादावेव हेतुर्न घटादाविति प्रसज्येतेत्याशङ्क्य इष्टापत्तिमाह—न चैवमिति। तर्हि घटार्थिनः कथं दण्डादौ प्रवृत्तिरित्याशङ्क्य बुभुक्षितस्य पाकादाविव तदुपपत्तिरित्याह—तत्रेति।

अथ कर्तृभेदाभावः । न, ऐकात्म्यप्रसङ्गात् । अथ क्षितिकर्तृप्रतियोगिकभेदाभावः तर्हि तदनुमितिपूर्वं क्षितिकर्तृतद्भेदानुपस्थितेर्लाघवेनापि तदभावस्योपनेतुमशक्यत्वात्, स नानुमितिगोचरः तदनेकत्वेऽपि स्वस्मिन् स्वप्रतियोगिकभेदाभावसत्त्वात् । न च यावदभावो विवक्षितः तस्य तव मते बाधात् । एवं घटत्वेन कल्पान्तरघटस्य कुलालकर्तृत्वानुमाने तदेकत्वसिद्धिप्रसङ्गाच्च । तस्मान्न कार्यत्वलिङ्गमपीश्वरे मानम् । वाक्यत्वादिहेतवोऽप्येवं निराकार्याः । तस्मान्नानुमानमीश्वरे प्रमाणम्, किन्तु श्रुत्युपस्थापितक्षित्यादिजनकमात्रमुपस्थापयत् तद्गोचरासंभावनानिवर्तनद्वारा श्रुतावुपकरीति ततः तत् तत्र विषयपरिशोधकतर्कमात्रं क्षितिजनकस्वरूपविशेषसिद्धिस्तूपनिषद्भ्य एवेत्यौपनिषदं ब्रह्म ।

उपनिषदुपजीव्यनुमानेन ईश्वरसिद्ध्यङ्गीकारः

ननु मा भूत् स्वतन्त्रप्रमाणमीश्वरे अनुमानं, श्रुत्यवगतकर्त्रेकत्वादेरनुमितिदशायां लाघवेनोपस्थितेरनुमितिगोचरः कर्तैक एवेत्यनुमानं तत्र प्रमाणमिति चेत्, अस्त्वेवम् नह्युपनिषदुपजीवकानुमानगम्यत्वे ब्रह्मण औपनिषदत्वं विहन्यते उपनिषद्भिरेव भानाभावकृततदसत्वशङ्कानिवृत्तेः परमते सुखलिङ्गानुमेयस्यापि धर्मस्य चोदनालक्षणत्वात् ।

---

लाघवानुगृहीतानुमानात् कृतिकर्तुरेकत्वमपि सिद्ध्यतीति परैरुच्यते, तत्रैकत्वं किमेकत्वसंख्या, कर्तृभेदाभावो वा क्षितिकर्तुर्भेदाभावो वा तत्प्रतियोगिकयावद्भेदाभावो वा । न सर्वथाऽपीति क्रमेण दूषयति–क्षितिकर्त्रेकत्वमित्यादिना । तव मते बाधादिति ।

क्षितिकर्तृप्रतियोगिकभेदस्यैकत्वेन तत्र यावत्पदार्थस्यानेकस्याभावादित्यर्थः । लाघवतर्कानुग्रहात्, तदेकत्वसिद्धिरप्ययुक्ता अतिप्रसङ्गादित्याह—घटत्वेनेति । व्याप्त्यादेरभावात् कार्यत्वहेतुर्नेश्वरसाधक इत्युपसंहरति–तस्मादिति । वेदः सकर्तृकः, वाक्यत्वात् कालिदासवाक्यवदित्यनुमानेऽप्युक्तदोषजातमतिदिशति—वाक्यत्वादीति ।

ज्ञानं विनापि नित्यकृतित एव वेदरचनादेरुपपत्तेः शरीरादिवत् तदर्थज्ञानं विना वर्णपदज्ञानमात्रादपि तद्रचनोपपत्तेश्च न ततः सर्वज्ञेश्वरसिद्धिरिति भावः । अनुमानस्य स्वत ईश्वरासाधकत्वान्न तत् तत्र मानम् ।

न चैतावता तदानर्थक्यम् । श्रुतिप्रतिपन्नेश्वरे असंभावनादिनिरासाय तर्कविधयोपयुक्तत्वाद्, ईश्वरे प्रमाणं तूपनिषदेवेत्याह—तस्मादित्यादिना । श्रुतिप्रवृत्तेः पूर्वमनुमानस्येश्वरासाधकत्वेऽपि तदनन्तरं तस्य तत्साधकत्वात् तत्र प्रामाण्यमिति शङ्कते—नन्विति । श्रुत्युपजीवकानुमानस्य तदर्थे प्रवृत्तिमङ्गीकृत्य तस्य सापेक्षानुवादत्वात् तद्गोचरस्य ब्रह्मणो नौपनिषदत्वक्षतिरिति सदृष्टान्तमाह—अस्त्वेवमिति । अङ्गीकारं

ईश्वरे सर्वज्ञत्वसिद्धिनिरूपणम् ।

वस्तुतस्तु, अनुमानात् कर्त्रैकत्वसिद्धावपि नेश्वरसिद्धिः, ततः सर्वज्ञत्वसर्वशक्तित्वादेरसिद्धेः। नहि कार्याप्रयोजको धर्मः कार्यलिङ्गेन सिद्ध्यति। उपस्थितिमात्रेण तत्सिद्धौ धूमाद् रासभादेरपि सिद्धिप्रसङ्गात्।

अस्तु वा श्रुतिबाह्यस्य कल्पितस्य यथा कथञ्चिदनुमानात् सिद्धिः। श्रुतिप्रतिपाद्यस्य वास्तवेश्वरस्य न कार्यलिङ्गात् सिद्धिः। अद्वितीयचैतन्यानन्दात्मवपुषि ब्रह्मणि कार्यलिङ्गात् तथा बोधानुदयात्। नहि कार्यलिङ्गं ब्रह्मणोऽद्वितीयचैतन्यानन्दाभेदं विनाऽनुपपन्नं उदासीनत्वाच्च तस्य न कार्यलिङ्गात् सिद्धिः "न तस्य कार्यं करणं च विद्यते" "तदेतद् ब्रह्मापूर्वमनपरमनन्तरमित्यादिश्रुतिभ्यो ब्रह्मण औदासीन्यावगमात्। अत एव सादृश्यज्ञानजन्योपमितिरपि न ब्रह्मविषया, सकलधर्मातीतस्य तस्य सादृश्याप्रतियोगित्वात्। "न तत्समश्चाभ्यधिकश्च दृश्यत" इत्यादि श्रुतेश्च। उपमितेःनियतविषयत्वाच्च। उदासीनत्वादेवार्थापत्तिरपि न तत्र मानम्। अनुपलब्धिस्त्वभावमात्रविषया न सद्रूपब्रह्मविषया।

नन्वेवमपि पौरुषेयवाक्यादपि तथाविधब्रह्मप्रतिपत्तेर्न तदुपनिषदेकगम्य-

---

परित्यजति—वस्तुत इति। तदेकत्वतत्सर्वज्ञत्वादेरपि श्रुतित उपस्थितत्वादनुमानगोचरतेत्याशङ्क्याह—उपस्थितीति।

उक्तबाधकतर्कानवतारदशायां कार्यत्वादिलिङ्गैः प्रत्यग्भिन्नसगुणकेश्वरसिद्धिमङ्गीकृत्यापि न श्रुतितात्पर्यगम्येश्वरोऽनुमानविषय इत्याह—अस्तुवेति। तथेति। अद्वितीयचिदानन्दरूपं ब्रह्मेत्येवमाकारबोधानुदयादित्यर्थः। ब्रह्मणो वस्तुतः कारणत्वाभावाच्च न कार्यलिङ्गम्, तत्र मानमित्याह—उदासीनत्वादिति। औदासीन्ये मानमाह—न तस्येति। कार्योत्पत्त्यनुकूलो व्यापारः करणपदार्थः, न विद्यते पूर्वं कारणमस्येत्यपूर्वम्। न विद्यते परं कार्यमस्येत्यनपरम्। न विद्यतेऽन्तरं भेदोऽस्येत्यनन्तरम्। श्रुतिसिद्धब्रह्मणोऽद्वितीयचिदानन्दरूपत्वादेवोपमानगोचरतापि नेत्याह—अत एवेति।

मीमांसकमते सादृश्यस्यैवोपमितिगोचरत्वात् तार्किकमते वाच्यवाचकसंबन्धस्यैव तद्गोचरत्वात् ब्रह्मणो न तद्विषयतेत्याह—उपमितेरिति। ब्रह्मण्यर्थापत्तिरपि न मानमित्याह—उदासीनत्वादिति। अनुपपन्नार्थदर्शनप्रसूतार्थापत्तेः तदुपपादक एव गोचरः ब्रह्म चोदासीनत्वान्न कस्याप्युपपादकमिति न तद्गोचरतेत्यर्थः।

षष्ठप्रमाणस्यापि भावविरहैकस्वभावाभावमात्रविषयत्वान्न तस्यानन्दादिरूपे प्रामाण्यमित्याह—अनुपलब्धिरिति। गुरावाप्तत्वनिश्चयवतः तद्वाक्यादपि ब्रह्मप्रतिपत्तेर्न तस्योपनिषदेकगम्यतेति शङ्कते—नन्विति। पौरुषेयवाक्यस्य मूलप्रमाणं विना प्रामाण्या-

मिति चेत् ? न, तस्यापि मूलप्रमाणापेक्षया सामान्यतो विशेषतो वौपनिषदनुसन्धानं विना प्रमाणविरहकृतासत्वशङ्कायाः ततोऽनिवृत्तेः। तस्मादौपनिषदमेव ब्रह्मेति।

औपनिषदत्वे अविषयत्वव्याघातस्य परिहारः

नन्वविषयः कथं विषयःस्यात्। तदभावे वा कथमुपनिषदेकगम्यत्वात् न हि तज्जन्यज्ञानाविषयः तद्गम्य इति। न, स्वप्रकाशचिद्रूपब्रह्मणः चैतन्याविषयत्वेऽपि वेदान्तजन्यवृत्तिविषयत्वात्। औपनिषदं च ब्रह्म यथोपनिषत्तात्पर्यं वक्ष्यमाणस्वरूपमेव सिद्ध्यति, ननु परपरिकल्पिताष्टगुणकमनन्तगुणकं वेति। एतेन ध्यानपरिपाकसहकृतमनः प्रसूतसाक्षात्कारविषयत्वात् ब्रह्म नौपनिषदमिति प्रत्युक्तम्। तथापि प्रमाणविरहप्रयुक्ताया असत्त्वशङ्कायाः तत एव निवृत्तेः वस्तुतस्त्विदमेवायुक्तम्; उपनिषद्भिरेव ब्रह्मसाक्षात्कारोदयादित्याचार्याः।

शाब्दापरोक्षवादः, तत्र पूर्वपक्ष;

स्यादेतत् वेदान्तानां कथमपरोक्षधीहेतुत्वम्। तत्र प्रमाणाभावात्। न चौपनिषदश्रुतिरेव मानं तस्या अन्यथापि प्रामाण्यात्, तत्त्वमस्यादिवाक्यं नापरो-

---

योगादुपनिषदतिरिक्तमानस्य ब्रह्मागोचरतया तन्मूलत्वायोगादेतदर्थप्रतिपादकोपनिषद्वाक्यमेतस्य मूलमिति सामान्यतः तत्त्वमस्यादिवाक्यमस्य मूलमिति विशेषतो वा तदननुसंधाने पौरुषेयवाक्यमप्रामाण्यशङ्काकलङ्कितम्, न तदर्थं बोधयति, उपनिषदनुसन्धाने च तत एव तदर्थेऽसत्वशंकानिवृत्तौ पौरुषेयवाक्यं तत्रानुवादकमात्रमित्यभिप्रेत्याह— न तस्यापीति। स्वप्रकाशस्य ब्रह्मण उपनिषद्गम्यत्वमप्ययुक्तमिति शङ्कते—नन्विति। चैतन्याविषयत्वरूपस्वप्रकाशत्वस्योपनिषज्जनितजडवृत्तिविषयत्वेनाविरोधात्, ब्रह्मोपनिषद्गम्यम्। तथा चोक्तम्—"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्। ब्रह्मणोऽज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते॥" इति।

ततो नोक्तदोष इति परिहरति—न स्वप्रकाशेति। ब्रह्मण औपनिषदत्वनिरूपणफलमाह— औपनिषदं चेति।

वाचस्पतिमते ब्रह्मणो मानसप्रत्यक्षविषयत्वात् कथं तत्त्वमित्यत आह—एतेनेति।

ब्रह्मणि मानसप्रत्यक्षमङ्गीकृत्य तस्यापि श्रुतिजनितब्रह्मनिश्चयाधीनध्यानसापेक्षत्वेन पौरुषेयवाक्यवत् श्रुत्युपजीवित्वात् प्रथमश्रवृत्तस्यैव तत्र मानत्वमित्याह— तथापीति। अङ्गीकारं परित्यजति—वस्तुत इति। उपनिषदां ब्रह्मसाक्षात्कारहेतुत्वमाक्षिपति—स्यादेतदिति। औपनिषदमिति श्रुत्योपनिषदवगम्यतोच्यते तच्चोपनिषज्जन्यसाक्षात्कारविषयत्वमेवेत्यत आह—न चेति। अन्यथेति।

धर्मस्य चोदनावाच्यत्ववदुपनिषज्जनितपरोक्षज्ञानविषयत्वेनापि तदुपपत्तेरित्यर्थः। वैपरीत्ये च मानमस्तीत्याह- तत्त्वमसीति।

क्षधीजनकं वाक्यत्वात् ज्योतिष्टोमादिवाक्यवत् । न चाप्रयोजकः । इन्द्रियाणामेवापरोक्षधीहेतुत्वात् । तानि विना तदनुत्पत्तेः ।

न च परोक्षज्ञानवदपरोक्षज्ञानेऽपि विजातीयानेककरणजन्यत्वमविरुद्धमिति वाच्यम्, अनुगतकरणजन्यत्वे संभवति तदयोगात् परोक्षज्ञाने तदसंभवात् । अन्यथा लिङ्गादप्यपरोक्षज्ञानं स्यात् । किञ्च साक्षात्कारत्वं जातिः । सा च न शाब्दे शाब्दत्वेन साङ्कर्यप्रसङ्गात् ।

अत एवार्थजन्यत्वं ज्ञानस्य साक्षात्त्वं, न जातिः नियतव्यञ्जकाभावात् । तच्च शाब्देऽपि ब्रह्मज्ञानेऽविरुद्धम्, न च शाब्दज्ञानस्यार्थजन्यत्वे प्रमाणाभावः । ब्रह्मणः सर्वकारणत्वादिति निरस्तम् । अर्थजन्यत्वमात्रस्यानुमित्यादावतिव्याप्तेः । विषयत्वेन तज्जन्यत्वं तु ज्ञाने तन्निरूपकसाक्षात्त्वजातिं विना दुर्ग्रहम् । ब्रह्मणो विषयत्वेन तद्धेतुत्वे प्रमाणाभावाच्च । न च व्यञ्जकाभावः । इन्द्रियजन्यत्वस्य व्यञ्जकत्वात् । न च ज्ञाने ज्ञानाकरणकत्वमेव प्रत्यक्षत्वम्, तच्च न जातिमपेक्षते ब्रह्मज्ञानं च शब्दकरणकमिति वाच्यम्, शाब्दज्ञाने शब्दज्ञानस्यैव करणत्वात् । अन्यथा स्मृतवाक्यादर्थज्ञानानुत्पादप्रसङ्गात् ।

---

विपक्षे बाधकाभावादप्रयोजको हेतुरित्याशङ्क्य अकारणकार्योत्पत्तेरेव बाधकत्वात्, मैवमित्याह—न चेति ।

ननु परोक्षज्ञाने लिङ्गादीनि शब्दश्च यथा हेतुः, एवमपरोक्षज्ञाने इन्द्रियं शब्दश्च हेतुः, किं न स्यादित्याशङ्क्य वैषम्येण परिहरति—न चेत्यादिना । अपरोक्षज्ञानस्याप्यननुगतकरणजन्यत्वेऽतिप्रसङ्गमाह—अन्यथेति । जातिसाङ्कर्यप्रसङ्गादपि न शाब्दज्ञाने साक्षात्त्वमित्याह—किञ्चेति । साक्षात्त्वं न जातिर्व्यञ्जकाभावात्, किन्तु अर्थजन्यत्वादिरूपोपाधिरेव । तस्य च साङ्कर्यं न दोष इति चोद्यं वक्ष्यमाणया विधया निरस्तमित्याह—अत एवेति ।

किमर्थमात्रजन्यत्वं साक्षात्त्वं विषयत्वेन तज्जन्यत्वं वा ? आद्ये देहः स्वव्यतिरिक्तद्रष्टृकः दृश्यत्वादित्यनुमितेरात्मोपादानकत्वेनार्थजन्यत्वात् तत्रातिव्याप्तिरित्याह—अर्थजन्यत्वेति ।

द्वितीये जन्यतावच्छेदकतया जातिरभ्युपेया । इतरथा विषयत्वेनार्थजन्यत्वायोगादित्याह—विषयत्वेनेति । साक्षात्वस्यैतदात्मकत्वेऽपि ब्रह्मविषयशाब्दज्ञाने न तत्सिद्धिरित्यभिप्रेत्याह—ब्रह्मण इति । व्यञ्जकाभावान्न जातित्वमित्युक्तमपवदति—इन्द्रियजन्यत्वस्येति इन्द्रियत्वेनेन्द्रियजन्यत्वस्येत्यर्थः । ज्ञानाकरणकज्ञानत्वमेव साक्षात्त्वमत्र न पूर्वोक्तदोष इत्याशङ्कामपवदति—न चेति । अस्य तावत् साक्षात्वरूपत्वमङ्गीकृत्य शाब्दज्ञानेऽसंभवमाह—शाब्देति । स्मृतवाक्यादिति । वाक्यस्मरणादित्यर्थः ।

अयुक्तं चेदं लक्षणम्, अनुभूते प्रत्यभिज्ञा नतरत्रेति स्वतन्त्रान्वयव्यतिरेका-भ्यामनुभवस्य प्रत्यभिज्ञानकरणत्वात् । संस्कारस्य व्यापारत्वाच्च ।

न च तत्र तत्तास्मृतिरेव कारणम्, न पूर्वानुभव इति वाच्यम्, अन्वयव्यति-रेकविरोधात् । मध्ये स्मृतिकल्पनायां प्रमाणाभावाच्च ।

प्रत्यभिज्ञाने स्मृतिलक्षणातिव्याप्तिः

अथ प्रत्यभिज्ञानस्य संस्कारजन्यत्वे स्मृतित्वापत्तिः । न चेन्द्रियाद्यसहकृत-संस्कारजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वम्, गौरवादिति चेत् ? न, प्रत्यभिज्ञाने संस्कारस्याकारणत्वे पूर्वानुभवस्यान्वयव्यतिरेकसिद्धतद्धेतुत्वबाधप्रसङ्गात् । अजन-कव्यवहितस्य जनकत्वायोगात् । तस्मादिन्द्रियाद्यसहकृतसंस्कारत्वेन स्मृतौ संस्कारः कारणं स्मृत्यजनकसंस्कारत्वेनानुभव इति कल्प्यम्, तस्मात् संस्कारो-ऽनुभवजनकः जन्यज्ञानजन्यातीन्दियधर्मत्वात्, अदृष्टवत् । अन्यथानुभवस्य प्रत्य-भिज्ञाने अन्वयव्यतिरेकनियमयोरसति बाधकेऽन्यविषयत्वप्रसङ्गात् ।

न चानेनैव हेतुना संस्कारस्याभिज्ञाहेतुत्वमपि स्यादिति वाच्यम्, अभि-ज्ञाया अतीतानुभवेनान्वयव्यतिरेकयोरसत्वेन विशिष्य व्याप्त्यभावात् ।

---

अङ्गीकारं परित्यजति—अयुक्तमिति । प्रत्यभिज्ञाया ज्ञानकरणत्वात् तत्राव्याप्ति तावदाह—अनुभूत इति । व्यापाराभावान्नपूर्वानुभवः करणमित्याशङ्क्याह—संस्कारेति । अव्यवहितत्वात् स्मृत्यैव प्रत्यभिज्ञोपपत्तौ न व्यवहितानुभवः तत्कारणमित्याशङ्क्याह—न च तत्रेति । अनुभवान्वयव्यतिरेकौ तत्तास्मृतावुपयुक्ताविति न तद्विरोध इत्या-शङ्क्याह—मध्य इति । संस्कारजन्यस्य स्मृतित्वनियमात् प्रत्यभिज्ञायां तद्योगात् तज्जन्या तत्तास्मृतिरावश्यकीत्यभिप्रेत्य शङ्कते—अथेति ।

अनुभवस्यान्वयव्यतिरेकावगतप्रत्यभिज्ञाकारणत्वपरित्यागायोगात् तदुपपत्तये संस्कारस्य जनकत्वमावश्यकम्, अन्यथा संस्कारजनकानुभवस्य प्रत्यभिज्ञाकारणत्वायोगा-दिति परिहरति—न प्रत्यभिज्ञान इति । संस्कारस्यानुभवेऽपि कारणत्वान्न तस्य स्वरूपेण स्मृत्यादिकारणत्वम् किन्त्वन्यथेत्याह—तस्मादिति ।

तर्कितेऽर्थेऽनुमानमाह—संस्कार इति । सिद्धान्ते दुःखादौ व्यभिचारादाह—अतीन्द्रियेति । गुरुत्वादौ व्यभिचारवारणाय जन्यज्ञानजन्येति । धर्मपदं च भावपरं तेन संस्कारध्वंसादौ न व्यभिचारः । न चैवमपि स्मृतिजनकसंस्कारे व्यभिचार इति वाच्यम्, तस्याप्यनुभवजनकत्वयोग्यत्वादिति भावः । विपक्षे बाधकमाह—अन्यथेति ।

संस्कारोऽभिज्ञारूपानुभवजनकः जन्यज्ञानजन्यातीन्द्रियधर्मत्वाददृष्टवदित्याभास-साम्यमाशङ्क्यास्य विपक्षे बाधकाभावेनाप्रयोजकत्वान्नैवमित्याह—न चानेनेति ।

**किञ्च तव मते संस्कारत्वेन संस्कारजन्यत्वं स्मृतित्वे प्रयोजकमस्तु प्रत्यभिज्ञाने तु प्रत्यासत्तिविधयैव संस्कारो हेतुः, किं न स्यात् ? न च विशिष्टज्ञानेऽव्यवहितविशेषणज्ञानस्य हेतुत्वात्, प्रत्यभिज्ञायां स्मृतिः कारणं कल्प्यत इति वाच्यम्; विशिष्टज्ञाने विशेषणज्ञानस्याहेतुत्वात्; अनुमितौ विशेष्यज्ञानस्य पक्षज्ञानत्वेनेव प्रत्यभिज्ञायां तत्ताज्ञानत्वेनैव तस्य हेतुत्वात्, तव मतेऽपि स्मृताविवानुभवेऽपि विशेषणज्ञानत्वेनैव हेतुत्वोपपत्तेश्च ।**

**न च विनष्टादपि दण्डज्ञानाद् दण्डस्मरणं विना दण्डीति ज्ञानप्रसङ्ग इति वाच्यम्; अप्रमुष्टसंस्कारस्य प्रत्यभिज्ञाया इव तस्येष्टत्वात्, प्रमुष्टसंस्कारस्य सहकारिविरहादेव तद्विरहात् ।**

**न चानिवार्योऽयमनुभवकलहः, व्यतिरेकनिश्चयाभावे लाघवस्यैव कारणताग्राहकस्य नियन्तुः सत्वात् ।**

**किञ्च त्वन्मतेऽनुमितेर्मनः करणकत्वात् तत्रातिव्याप्तिः । तस्मात् साक्षात्वं जातिरेव । शब्दस्य परोक्षज्ञानजनकत्वनियमावधारणाच्च ।**

---

संस्कारस्य संस्कारत्वेनैव स्मृतिजनकत्वेऽपि न प्रत्यभिज्ञायाः स्मृतित्वापातः तस्य तत्तांशे इन्द्रियप्रत्यासत्तित्वेनैव तज्जनकत्वादित्याह—किञ्चेति ।

प्रत्यभिज्ञायाः तत्ताविशिष्टविषयत्वात् तदव्यवहितपूर्वक्षणे विशेषणज्ञानतया तत्तास्मृतेरावश्यकत्वात् सैव प्रत्यासत्तिरिति पराभिप्रायं दूषयति—न च विशिष्टेति । तत्ताज्ञानाभावे प्रत्यभिज्ञानुदयात्, तत्र कथं न विशेषणज्ञानं हेतुरित्याशङ्क्याह—अनुमिताविति तत्ताज्ञानत्वेनैवेति ।

तथा च पूर्वानुभवस्यैव तत्त्वेन हेतुत्वान्न मध्ये स्मृतिः कल्पनीयेति भावः । विशेषणज्ञानस्य हेतुत्वमङ्गीकृत्यापि तस्याव्यवहितत्वं नापेक्षितमित्यभिप्रेत्याह—तव मत इति । व्यवहितस्यापि विशेषणज्ञानस्य विशिष्टधीहेतुत्वेऽतिप्रसङ्गमाशङ्क्यापवदति—न चेति ।

किमुद्बुद्धसंस्कारवतः तादृशज्ञानमापाद्यते तद्रहितस्य वा ? आद्ये इष्टापत्तिमाह—अप्रमुष्टेति । द्वितीयं दूषयति—प्रमुष्टेति । तत्तास्मृत्यनन्तरमेव प्रत्यभिज्ञा जायत इति मयोच्यते, त्वया च तां विनापीति तत्र कथं निर्णय इत्याशङ्क्य पूर्वानुभवस्याकारणत्वानिश्चयात् तस्यैव कारणत्वकल्पने लाघवं, मध्ये स्मृतिकल्पने तु धर्मिकल्पनागौरवमिति न्यायस्यैव निर्णायकत्वान्मैवमित्याह—न चानिवार्य इति ।

ज्ञानाकरणक ज्ञानं प्रत्यक्षम्, इत्यस्यातिव्याप्तिमप्याह—किञ्चेति ।

यत्र स्मरणरूपपरामर्शादनुमितिः तत्र व्यापारवत्कारणान्तराभावेन मनस एव कारणत्वादिति भावः । साक्षात्त्वस्योपाधित्वनिरसनफलमाह—तस्मादिति । ततश्च

शब्दस्य विचारसहकृतस्य साक्षात्कारहेतुतानिराक्षः

ननु परोक्षज्ञानजनकस्यापि [विचारसहकारिबलादपरोक्षज्ञानजनकत्वं न विरुद्धयते। संस्कारस्येवेन्द्रियसाहाय्येन प्रत्यभिज्ञाहेतुत्वमिति चेत् ? न, शाब्दत्वापरोक्षत्वजात्योरेकत्रावृत्तेरुक्तत्वात्, विचारस्य सिद्धान्ते ज्ञानाहेतुत्वाच्च ।

न च विचाराधीनः प्रतिबन्धकाभावः तद्धेतुः, तस्याप्यहेतुत्वात् ।

ननु वाक्यत्वहेतुः 'दशमस्त्वमसि' इत्यादिवाक्ये व्यभिचारीति चेत् ?

शब्दापरोक्षवादे माध्वस्य पूर्वपक्षः

अत्र नवीनः। किं तत्र स्वात्मनो दशमत्वं पश्यतः शब्देनापरोक्षधीः उतापश्यतः ? नाद्यः, तस्य स्पृष्टवह्निं प्रति प्रयुक्तात् "वह्निरुष्णः" इत्यादिवाक्याद् जन्यज्ञानस्येव परोक्षत्वेऽपि प्रत्यक्षसिद्धार्थानुवादित्वमात्रेण प्रत्यक्षत्वाभिमानात्,

अन्यथोष्णत्वे शब्दात् स्पार्शनत्वजातिमज्ज्ञानं स्यात् ।

द्वितीयेऽपि यदीन्द्रियव्यापारोऽस्ति, तदा रत्नतत्त्व इवोपदेशसहकृतेन्द्रियेणैव प्रत्यक्षधीः ।

यदि तु स नास्ति तदा "धर्मवांस्त्वमसि, पर्वतोऽग्निमान्" इत्यादाविव

---

सांकर्यान्न शाब्दज्ञाने साक्षात्त्वमिति भावः। शब्दादपरोक्षज्ञानाभावे हेत्वन्तरमाह—शब्दस्येति। केवलशब्दस्य परोक्षज्ञानजनकत्वेऽपि सहकारिविशेषसहितस्यापरोक्षज्ञानहेतुत्वं संस्कारस्येव न विरुद्धयत इति शङ्कते – नन्विति। प्रत्यभिज्ञायाः संस्कारजन्यत्वे बाधकाभावात् तत्र तद्युक्तं प्रकृते तु जातिसांकर्यापाताद् मैवमित्याह – न शाब्दत्वेति। वेदान्तविचारादेरसंभावनादिप्रतिबन्धनिवृत्तिफलकत्वाभ्युपगमात् तस्य ज्ञानजनकशब्दसहकारित्वमप्ययुक्तमित्याह – विचारस्येति। तर्हि प्रतिबन्धकाभावद्वारा तस्य सहकारित्वमाशङ्क्याह—न चेति। अहेतुत्वादिति। तव मत इति शेषः। तत्त्वमस्यादिवाक्यं नापरोक्षधीजनकम् वाक्यत्वादित्यत्र व्यभिचारं शङ्कते—नन्विति। दशमस्त्वमसीति वाक्यमपि नापरोक्षधीजनकम्, अतो न व्यभिचार इति विकल्पपूर्वकमाह—किं तत्रेति।

वह्निरुष्ण इति वाक्यजज्ञानस्यापि प्रत्यक्षत्वमेव किं न स्यादित्यत आह— अन्यथेति। स्पर्शनविषयजन्यप्रत्यक्षस्य स्पार्शत्वजातिमत्वनियमादिति भावः।

अपश्यत इति कल्पे दशमत्वादाविन्द्रियव्यापारोऽस्ति न वा ? आद्ये, इन्द्रियमेव तज्ज्ञानकारणम्, शब्दस्तु सहकारिमात्रमित्याह—द्वितीयेऽपीति। द्वितीये दोषमाह—यदि त्विति। परोक्षधीरेवेति। इन्द्रियासन्निकृष्टस्य प्रमातृव्यवहितत्वेनापरोक्षत्वायोगा-

**विशेष्यस्य प्रत्यक्षत्वेऽपि विशेषणे दशमत्वे परोक्षधीरेव ।**

**न चैवं प्रतीतिकोलाहलो निरवधिकः स्यात्, तत्राप्यपरोक्षेति मदङ्गीकारादिति वाच्यम् । न तावच्छब्दस्यापरोक्षधीहेतुत्वं स्वाभाविकमतिप्रसङ्गात् । नाप्यपरोक्षविषयनिमित्तम् । एवं च शाब्दज्ञानमपरोक्षम्, अपरोक्षार्थमात्रविषयज्ञानत्वात् सुखादिज्ञानवदिति वक्तव्यम्, तन्न युक्तम्, जीवाः परमात्मनो न भिद्यन्ते आत्मत्वादित्यादिलिङ्गजन्याया अप्यापरोक्ष्यापातात् ।**

अपरोक्षार्थविषयत्वलक्षणनिरासः

**किञ्चार्थस्याप्यपरोक्षत्वं न तावदपरोक्षधीरूपत्वम्, ब्रह्मणि सत्त्वेऽपि दशमत्वादौ तदभावात्, चैत्रस्यापरोक्षज्ञाने मैत्रस्य शब्दादिना साक्षात्कारादर्शनाच्च । नाप्यपरोक्षव्यवहारविषयत्वम् । व्यवहारापरोक्ष्यस्यापरोक्षार्थविषयत्वरूपत्वेऽन्योन्याश्रयापातात् । अपरोक्षोऽयमित्येवंरूपव्यवहारविषयत्वे त्वज्ञानावृते ऐक्ये तदभावात् । तत्र न प्रकाशत इत्यादिव्यवहारार्थमेवावरणकल्पनात् । उक्तव्यवहारयोग्यत्वरूपत्वे भित्तिव्यवहिते घटे शब्दादपरोक्षधीप्रसङ्गात् । तस्मादर्थस्यापरोक्ष-**

---

दिति भावः । दशमत्वादेः प्रमातृगतत्वेन तदव्यवहितत्वात् तत्रापि वाक्योत्थधीरपरोक्षेति मयाङ्गीकारात्, त्वया कथं तत्र परोक्षधीरेवेत्युच्यत इत्याशङ्क्याह—न चेति । शब्दजन्यज्ञानस्यापरोक्षत्वं शब्दस्यापरोक्षज्ञानजनकत्वस्वभावप्रयुक्तम्, उतापरोक्षार्थविषयत्वप्रयुक्तम् ? नाद्यः, शब्दे तादृशस्वभावाभावादित्याह—न तावदिति ।

द्वितीयं दूषयति—नापीति । अत्र च शाब्दापरोक्षत्वेऽपि विप्रतिपन्नं प्रत्यपरोक्षविषयत्वेन तत्साधनीयम्, तच्चायुक्तम्, अपरोक्षविषयानुमित्यादेरप्यपरोक्षत्वापातादित्याह—एवं चेति ।

ज्ञानापरोक्ष्यप्रयोजकार्थापरोक्ष्यमेव दुर्निरूपमित्याह—किञ्चेति । किमर्थापरोक्ष्यमपरोक्षधीरूपत्वम्, उत, अपरोक्षव्यवहारविषयत्वमपरोक्षधीविषयत्वम् वा ? नाद्यः, इत्याह—न तावदिति । अतिप्रसक्तत्वादपि नैतद् ज्ञानापरोक्षत्वप्रयोजकमित्याह—चैत्रस्येति । द्वितीयमपवदति नापीति । किं व्यवहारस्यापरोक्षत्वमपरोक्षार्थविषयत्वमपरोक्षोऽयमित्येवंरूपत्वं वा ? आद्ये अर्थापरोक्षत्वसिद्धौ व्यवहारापरोक्ष्यसिद्धिः, तत्सिद्धौ चार्थापरोक्षत्वसिद्धिरिति परस्पराश्रयः स्यादित्याह—व्यवहारेति ।

द्वितीयेऽपि तादृशव्यवहारविषयत्वमर्थापरोक्ष्यं तद्योग्यत्वं वा ? आद्ये जीवपरैक्ये तादृशव्यवहारविषयत्वाभावादपरोक्षता न स्यादित्याह—अपरोक्षोऽयमिति । द्वितीयमतिप्रसङ्गेन दूषयति—उक्तेति । तृतीयं परिशेषयति—तस्मादिति ।

अत्र यज्ज्ञानस्यापरोक्षविषयत्वेनापरोक्षत्वं साध्यते तज्ज्ञानविषयत्वेन किमर्थस्या-

धीविषयत्वमेवापरोक्षत्वम् । तत्र चैतज्ज्ञानविषयत्वेन तदुक्तावन्योन्याश्रय इति ज्ञानान्तरविषयत्वेन तदास्थेयम् । तथा च केषांचिदपरोक्षे स्वर्गादौ अस्माकं शब्दादपरोक्षधीः स्यात् । एकपुरुषाभिप्राये च प्रत्यक्षगोर्लिगादितोऽपरोक्षधीप्रसङ्गात् । तस्माद् ये विरुद्धे ज्ञानत्वावांतरजाती परोक्षत्वापरोक्षत्वे तदाश्रययोर्ज्ञानयोर्भिन्नत्वात् । यश्चैको विषयः तत्र विरुद्धजात्यभावात्, विरुद्धजात्याधारज्ञानविषयत्वस्यैकस्मिन् चाक्षुषस्पार्शनविषयत्वस्यैव संभवात् । प्रत्यक्षविषयमपि शाब्दज्ञानं परोक्षमेव ।

किञ्च धर्ममात्रस्य प्रत्यक्षत्वाभिप्राये प्रत्यक्षे घटादावयं गुरुः पर्वतोऽग्निमानित्यादि शब्दादप्यपरोक्षधीप्रसङ्गः ।

अथ स्वप्रकाशाभिप्रायम्, 'दशमस्त्वमसि' इत्यादौ तदसंभवात् । वाक्यवैयर्थ्यं च । एतेनापरोक्षे ब्रह्मणि परोक्षधीः परोक्षे कामिन्यादावपरोक्षधीरिव प्रमाणं न स्यादिति निरस्तम् । स्मृतेऽनुभववदनुमितगोरिन्द्रियेणापरोक्षधीवत् परोक्षतत्ताया अपरोक्षप्रत्यभिज्ञावदपरोक्षज्ञानविषयेऽर्थे परोक्षत्वजात्याधारज्ञानोदयेऽप्यपरोक्षस्य परोक्षत्वेनानुल्लेखात् प्रामाण्योपपत्तेः । कामिनीसाक्षात्कारस्तु बाधादप्रमाणम् ।

---

परोक्षत्वम्, उत ज्ञानान्तरविषयत्वेन ? तत्राद्यम्, अन्योन्याश्रयेण दूषयन् द्वितीयं परिशेषयति—तत्र चैतदिति । तदप्यतिप्रसङ्गेन दूषयति—तथाचेति । यत्समवेतज्ञानविषयत्वप्रयुक्तमर्थापरोक्ष्यं तज्ज्ञानस्यैवापरोक्षत्वप्रयोजकत्वम्, अतो नोक्तातिप्रसङ्ग इत्याशङ्क्यातिप्रसङ्गान्तरमाह—एकेति । ज्ञानापरोक्षत्वस्योपाधित्वायोगेन जातित्वात् तस्य परोक्षत्वजात्या विरुद्धत्वेन तद्व्याप्यशाब्दत्वेनापि विरोधात्, शाब्दज्ञानं प्रत्यक्षविषयमपि परोक्षमेवेत्याह—तस्मादिति, प्रत्यक्षस्य कथं परोक्षशाब्दधीगोचरत्वमित्यत आह—यश्चेति ।

किञ्च यो यो धर्मी प्रत्यक्षः, तद्विषयज्ञानमपरोक्षमित्यभिप्रेतम्, उत स्वप्रकाशतया यत् प्रत्यक्षं तद्विषयं ज्ञानं प्रत्यक्षमिति । आद्यमतिप्रसङ्गेन दूषयति—किञ्च धर्मिमात्रस्येति द्वितीयमनूद्य दूषयति—अथेत्यादिना ।

आत्मनः स्वप्रकाशत्वे बोधकमानानपेक्षत्वात् तत्र वाक्यं व्यर्थं स्यादित्याह—वाक्येति । "यत्साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेरपरोक्षरूपे ब्रह्मणि कथं शब्दाद् परोक्षज्ञानं प्रमाणं परोक्षकामिन्यादावपरोक्षज्ञानस्येव परोक्षज्ञानस्य प्रमात्वायोगादिति चोद्यं वक्ष्यमाणविधया निरस्तमित्याह—एतेनेति । कामिन्यादावपरोक्षज्ञानस्य बाधितविषयत्वादेव अप्रमात्वम्, न तु परोक्षेऽपरोक्षज्ञानत्वात् परोक्षेऽपि बहुशोऽपरोक्षप्रमादर्शनाद् ब्रह्मणि च परोक्षज्ञानस्यापि यथार्थत्वात् प्रमात्वोपपत्तिरित्याह—स्मृत इत्यादिना ।

**अन्यथा योगजसाक्षात्कारादेरप्रामाण्यापत्तेः। एतेन प्रमातारमपेक्ष्य देशतः कालतः स्वरूपतो वा विप्रकृष्ट एव परोक्षज्ञाननियमात् स्वप्रकाशप्रमातृचैतन्येनाभिन्नत्वेनाविप्रकृष्टे प्ररोक्षधीरेव न युक्तेति निरस्तम्। प्रत्यक्षेऽर्थे लिङ्गादप्यपरोधीप्रसङ्गात्; विप्रकृष्टतत्ताव्यप्त्यादौ प्रत्यभिज्ञाव्याप्तिज्ञानयोः परोक्षत्वापाताच्च।**

**तस्मात् ब्रह्मसाक्षात्कारो निदिध्यासनसहकृतेन मनसा जायते। यन्मनसा न मनुत इति श्रुतिस्तु मनसैवानुद्रष्टव्यमिति श्रुतिविरोधेनापक्वमनोविषया। अन्यथा शब्दस्य करणत्वे "यतो वाचो निवर्तन्ते" इति श्रुतिविरोधात्, तस्मान्न वेदान्तादपरोक्षधीरिति।**

शाब्दापरोक्षसिद्धान्तः

**अत्रोच्यते--अर्थस्यापरोक्षत्वं नेन्द्रियजज्ञानविषयत्वम्, अहमर्थतद्धर्मज्ञानादेः तदभावप्रसङ्गात्, ज्ञाने स्वपरविषयत्वाभावात्, तद्ग्राहकेन्द्रियतत्संबन्धाभावाच्च।**

---

कामिनीसाक्षात्कारस्यापि परोक्षविषयत्वादेवाप्रमात्वमित्यभ्युपगमे परोक्षविषययोगजसाक्षात्कारोऽप्यप्रमा स्यादित्याह--अन्यथेति। प्रमात्रपेक्षया विप्रकृष्टत्वस्य परोक्षधीगोचरत्वप्रयोजकत्वात् स्वप्रकाशप्रत्यगभिन्नब्रह्मणो देशतः कालतः स्वरूपतो वा विप्रकृष्टत्वाभावान्न तस्य परोक्षधीगोचरतेत्याशंक्य अतिप्रसङ्गेन दूषयति—एतेनेति। स्वरूपतो वेति। अननुभूतस्वरूपे धर्मादावित्यर्थः।

शब्दस्य ब्रह्मणि साक्षात्काराजनकत्वे कथं तत्रापरोक्षधीः तदभावे वा कथमविद्यानिवृत्त्यादिपुरुषार्थसिद्धिरित्यत आह—तस्मादिति।

ब्रह्मणो मानसप्रत्यक्षगोचरत्वे "यन्मनसा न मनुते येनाहुर्मनोर्मतं तदेव ब्रह्म त्वं विद्धि" इत्यादिश्रुतेः का गतिरित्यत आह—यन्मनसेति। अपक्वमनोविषयेति। ध्यानादिपरिपाकासहकृतमनोविषयेत्यर्थः।

शाब्दसाक्षात्कारगोचरत्वपक्षे तु श्रुतिविरोधो दुष्परिहर इत्याह—अन्यथेति। पूर्वपक्षमुपसंहरति—तस्मादिति। अपरोक्षार्थविषयत्वमेव जन्याज्ञानस्यापरोक्षत्वम्।

अर्थापरोक्षत्वं च प्रमातृसंविदभिन्नत्वमिति निरूपयितुं पराभिमतमर्थापरोक्ष्यं दूषयति—अर्थस्येति। तदभावप्रसङ्गादिति। अहमर्थतद्धर्मयोः केवलसाक्षिभास्यत्वेन इन्द्रियजन्यज्ञानाविषयत्वादिति भावः।

अहमर्थगतज्ञानस्य स्वविषयत्वेनानुव्यवसायविषयत्वेन वाऽऽपरोक्ष्यमित्याशङ्क्य तयोर्निरस्तत्वात् मैवम्, इत्याशयेनाह—ज्ञान इति। अहमर्थादाविन्द्रियजज्ञानाभावे हेत्वन्तरमाह—तद्ग्राहकेति। मनसः प्रमातृत्वेनानिन्द्रियत्वादात्मनि निरवयवे तत्संयोगायोगाच्चेति भावः। मनस इन्द्रियत्वाभावादेव लक्षणान्तरमयुक्तमित्याह—अत एवेति।

**अत एवेन्द्रियत्वेनेन्द्रियजन्यं ज्ञानमपरोक्षम् तद्विषयत्वमर्थस्यापरोक्षत्वमिति निरस्तम्, अहमर्थादौ तदभावात् । अनुगतावच्छेदकज्ञानं विना तस्य दुर्ग्रहत्वाच्च । नापि जातिः । प्रकाशस्यैकव्यक्तित्वेन तदयोगात् । वृत्तिगता सेति चेत्, तर्हि वृत्त्यादेरपरोक्षत्वानुपपत्तिः। अपरोक्षज्ञानविषयत्वाभावात् । न च प्रकाशवृत्त्योरेका जातिरस्ति । सदसद्व्यक्त्योरेकजात्यनुपपत्तेः । अपरोक्षत्वजातेः प्रकाशाश्रयत्वे व्यवहितवह्न्यादेरपि सन्निहितघटादिवदपरोक्षत्वप्रसङ्गाच्च । त्वदभिमतापरोक्षज्ञानविषयत्वस्योभयत्राविशेषात् । पराभिमतजातेर्वृत्त्यनिरूपणेन दुर्निरूपणाच्च।**

**किञ्च साक्षात्कारत्वं जातिः, तदाश्रयविषयत्वमेव यद्यर्थस्यापरोक्षत्वम्,**

---

अत्र ज्ञानापरोक्ष्ये इन्द्रियत्वेनेति विशेषणं व्यर्थमित्यभिप्रेत्यार्थापरोक्ष्ये पूर्वोक्तदोषमाह--अहमर्थादाविति ।

किञ्च अनेकज्ञानेषु अनुगतावच्छेदकं विनेन्द्रियत्वेनेन्द्रियजन्यत्वमेव दुर्ग्रहं तदवच्छेदकं चान्यद् दुर्निरूपमित्यभिप्रेत्याह--अनुगतेति । ज्ञाने त्वपरोक्षत्वं नाम जातिस्तदाश्रयज्ञानविषयत्वमर्थस्यापरोक्षत्वमिति मतं दूषयति—नापीति । किमपरोक्षत्वजातिर्वृत्तिगता तदतिरिक्तप्रकाशगता वोभयगता वा ? न द्वितीय इत्याह--प्रकाशस्येति । आद्यमनुवदति--वृत्तीति। अहमर्थगतज्ञानेच्छादेरपरोक्षवृत्तिविषयत्वाभावादपरोक्षता न स्यादिति दूषयति—तर्हीति ।

तृतीयं दूषयति—न चेति ।

किञ्चास्मिन् पक्षे सर्वस्य दृश्यस्यापरोक्षत्वापात इत्याह—अपरोक्षत्वेति ।

अविद्यातिरिक्तजातेर्व्यक्तिषु वृत्त्यनिरूपणादपरोक्षत्वजात्यसंभव इत्याह--पराभिमतेति । जातिः किं कार्त्स्न्येन वर्तते एकदेशेन वा नाद्यः, व्यक्त्यन्तरे तदभावप्रसङ्गात्, न द्वितीयः संयोगादिवद् यावदाश्रयोपलम्भं विनाऽप्रत्यक्षत्वापात।ज्जातावेकदेशाभावाच्च ।

किं च जातिः स्वविशिष्टे वर्तते स्वोपलक्षिते वा ? नाद्यः; आत्माश्रयप्रसङ्गात् । न द्वितीयः; अतिप्रसङ्गात् ।

न चेन्द्रियजन्यत्वस्योपलक्ष्यतावच्छेदकत्वान्नातिप्रसङ्ग इति वाच्यम्, परमत ईश्वरज्ञाने तदभावप्रसङ्गात् ।

न च लिङ्गाद्यजन्यज्ञानत्वं तदवच्छेदकमिति वाच्यम्; अपरोक्षत्ववैशिष्ट्यं विना ज्ञाने लिङ्गादिजन्यत्वाभाववैशिष्टयस्यासंभवेनान्योन्याश्रयात् । चैतन्यातिरिक्तनित्यपदार्थे मानाभावाच्च, इत्यादियुक्तिभिः पराभिमतजातेर्दुर्निरूपत्वादित्यर्थः ।

**तर्हि सन्निहितघटादाविवासन्निहितेऽपि तस्मिन्नपरोक्षोऽयमित्यनुभवप्रसङ्गः तव तत्राप्यपरोक्षज्ञानसंभवात् ।**

**न हि काशीस्थं पदार्थं शब्देन जानन् जानामीत्यनुभवन्नपि ममेदानीं काशीस्थः पदार्थोऽपरोक्ष इत्यनुभवति, सन्निहितेऽप्यन्धादेः शब्दादिना जानतो जानामीत्यनुभवतोऽप्यपरोक्षः शुक्ल इत्यननुभवाच्च ।**

**ननु लौकिकप्रत्यक्षविषय एवापरोक्ष इत्यनुभूयते, न त्वलौकिकप्रत्यक्षविषय इति चेत् ? न, शुक्तिरजतादेरपरोक्ष इत्यनुभवात् । तव मते तत्प्रत्यक्षस्याप्यलौकिकत्वात् । लौकिकत्वमपि न जातिः, तस्याव्याप्यवृत्तित्वात्, त्वया जातेरव्याप्यवृत्तित्वानभ्युपगमात् । नापि संयोगादिजन्यत्वं सुखादिप्रत्यक्षे तदसंभवात्, निरवयवात्मना संयोगादेरसंभवात् । लौकिकालौकिकात्मकप्रत्यक्षविषयस्य सर्व-**

---

सामान्यादिप्रत्यासत्तिवादे दूषणान्तरमाह--किं चेति । ज्ञानसंभवादिति । प्रमेयत्वादिप्रकारकापरोक्षज्ञानस्य विप्रकृष्टेऽपि संभवादित्यर्थः ।

ननु सन्निहितेऽप्ययमपरोक्ष इत्यनुभवस्यापरोक्षत्वाकारेण सन्निहितविषयत्वमिष्टमेव । देशान्तरीयेऽपरोक्ष इत्याद्यनुभवस्तु देशान्तरीयत्वादेरज्ञानान्नास्तीत्याशङ्क्य तर्हि शब्दादितो देशान्तरीयत्वेनावगते वस्तुनि प्रमेयतया साक्षात्कृते तथानुभवः स्यात्, न च सोऽस्तीत्याह—नहीति । अपरोक्षोऽयमिति विशिष्यानुभवे विषयस्य सन्निहितत्वमपेक्षितमित्याशङ्क्याह-सन्निहितेऽपीति । सामान्यादिप्रत्यासत्तिजज्ञानस्य लौकिकप्रत्यक्षत्वाभावान्न तद्विषयः तादृशानुभयोग्यः । किन्तु लौकिकप्रत्यक्षविषय एव तथेति शङ्कते—नन्विति । भ्रमविषयस्य रजतादेः कस्यापि मते लौकिकप्रत्यक्षविषयत्वाभावेऽपि रजतमपरोक्षमित्यनुभवान्न तत्तत्र प्रयोजकमित्याह—शुक्तीति ।

किञ्च प्रत्यक्षे लौकिकत्वं किं जातिः संयोगादिषड्विधप्रत्यासत्त्यन्यतमजन्यत्वं वा इन्द्रियजन्यत्वं वा, अर्थजन्यत्वं वा अलौकिकप्रत्यक्षान्यत्वं वा ? नाद्यः, इत्याह—लौकिकत्वमपीति । घटादिप्रत्यक्षे सन्निहितघटाद्यंशएव लौकिकत्वम् न त्वसन्निहितांश इत्यव्याप्यवृत्तित्वान्न तज्जातिरित्यर्थः ।

न द्वितीय इत्याह—नापीति । असंभवादिति । निरवयव आत्मनि मनः संयोगासंभवादसंयोगे तस्मिन् दुःखादिसमवायासंभवाच्चेत्यर्थः । ततश्च सुखादिकमपरोक्षमित्यनुभवो न स्यादिति भावः ।

किञ्च जन्यप्रत्यक्षमात्रस्य संयोगादिजन्यत्वादलौकिकत्वेनाभिमतप्रत्यक्षविषयेऽप्यपरोक्षताऽनुभूयेतेत्याह—लौकिकेति । जन्यप्रत्यक्षस्य लौकिकांश एव संयोगजन्यत्वं न त्वलौकिकांश इति शङ्कते—अलौकिकेति । किमलोकिकांशः संयोगादिजन्यलौकिकां-

स्यापरोक्ष इत्यनुभवप्रसङ्गाच्च। अलौकिकांशे तज्ज्ञानं संयोगजन्यं न भवतीति चेत्? न, तस्य संयोगजन्यज्ञानाभिन्नत्वे तत्र तदभावासंभवात् तत्र तज्जन्यत्वस्य सत्त्वात्, औपाधिकभेदोऽस्तीति चेत्? न, तव मतेऽव्याप्यवृत्तिभेदाभावात्, तत्प्रतियोगिकतद्धर्मिकभेदस्य पारमार्थिकस्यासंभवात्।

अत एवेन्द्रियजन्यत्वमर्थजन्यत्वमलौकिकप्रत्यक्षान्यत्वं वा लौकिकप्रत्यक्षत्वमित्यपि न संभवति। एवमपरोक्षत्वमप्यव्याप्यवृत्तित्वान्न जातिः, प्रत्यभिज्ञानादेः तत्तांशे परोक्षत्वात्, तदंशे ज्ञानस्यास्मदभिमतपरोक्षत्वलक्षणयुक्तत्वात्; अपरोक्षत्वलक्षणरहितत्वाच्च। त्वदुक्तसंयोगादि षोढा प्रत्यासत्तिजन्यत्वाभावाच्च। साक्षात्कारत्वं जातिः। सा च षोढा प्रत्यासत्तिजन्येऽन्यत्राप्यस्तीति चेत् तर्ह्यनुमित्यादावपि स्यात्।

ननु तत्र साक्षात्करोमीत्यननुभवान्न साक्षात्कारत्वमिति चेत्, तर्हि 'दण्डचयमासीत्' इत्यादिज्ञानेष्वपि देवदत्ते दण्डं साक्षात्करोमीत्यननुभवात् तदंशे तदभाव एव न्याय्यः। विदुषां दण्डांशेऽपि तत्र साक्षात्कारत्वानुभवोऽस्तीति चेत्, तत् किमन्ये न विद्वांसः त्वदनुभवस्य वटयक्षानुभववदप्रमाणत्वात्, विदुषाम-

---

शादभिन्नो भिन्नोवा? आद्ये नोक्तव्यवस्थासंभव इत्याह—न तस्येति।

द्वितीयं शङ्कते—औपाधिकेति। किमौपाधिकोऽनिर्वचनीयः पारमार्थिको वा? नाद्यः, परैस्तदनङ्गीकारादित्यभिप्रेत्याह—तवेति। द्वितीये दोषमाह—तत्प्रतियोगिकेति। पारमार्थिकभेदस्य प्रतियोगिवृत्तित्वे वस्तुनो द्वैरूप्येणानैकान्तवादप्रसङ्गात्, न तस्य प्रतियोगिवृत्तित्वमिति भावः। एकस्मिन् ज्ञाने लौकिकालौकिकांशभेदाभावेनोत्तरकल्पत्रयमुक्तदोषादसंभवाच्चायुक्तमित्याह—अत एवेति। लौकिकत्वस्य जातित्वे यद्बाधकं तदपरोक्षत्वेऽपि तुल्यमिति तदपि न चार्वित्याह—एवमिति। अपरोक्षत्वस्याव्याप्यवृत्तित्वे हेतुमाह—प्रत्यभिज्ञानादेरिति। आदिपदेन सुरभिचन्दनमित्यादिज्ञानं गृह्यते। मतद्वयेऽपि प्रत्यभिज्ञानादेः तत्तांशे परोक्षत्वमेव युक्तमित्याह—तदंश इति। प्रमातृचैतन्यव्यवहितविषयत्वं परोक्षत्वं तस्य तत्तांशे सत्वादव्यवहितविषयत्वरूपापरोक्षत्वस्य चाभावादित्यर्थः।

षड्विधप्रत्यासत्तिजन्यत्वस्य मन्मते साक्षात्वजात्यनियामकत्वात् तदन्यत् तत्ताद्यंशेऽपि साऽस्तीति शङ्कते—साक्षात्कारत्वमिति। संयोगादिजन्यत्वस्यानियामकत्वेऽतिप्रसङ्ग इत्याह—तर्हीति। 'साक्षात्करोमि' इत्यनुभवस्यैव तन्नियामकत्वादनुमित्यादौ च तादृशानुभवाभावात्, तत्रापि तदभावो युक्त इति शङ्कते—नन्विति। अलौकिकप्रत्यक्षांशे प्राकृतानां तथाऽनुभवाभावेऽपि विदुषां तदनुभवोऽस्तीति शङ्कते—विदुषामिति। वेदव्याख्यातॄणां तीर्थकरणामपि तादृशानुभवाभावात्, मैवमित्याह—तत् किमिति। वेदार्थविदुषां

**विदुषामपि तदंशे विषयसत्वे ज्ञानत्व इवापरोक्षत्वेऽप्यनुभवप्रसङ्गात्। न हि विद्यमानार्थानुभवे विद्वत्तापि हेतुः।**

**अत एवानुमितेरिन्द्रियप्रत्यासत्त्यभावेन तदजन्यत्वात् न प्रत्यक्षत्वम्। 'दण्डचयमासीत्' इति ज्ञानस्य दण्डांशे ज्ञानलक्षणाप्रत्यासत्तिसत्त्वादिन्द्रियं जनकमिति तत्र तत् प्रत्यक्षमिति निरस्तम्। मन इन्द्रियजन्यत्वेप्यनुमितेः तव परोक्षत्ववच्चक्षुरादिजन्यस्यापि तदविरोधात्। दण्डाद्यंशे 'साक्षात्करोमि इत्यनुव्यवसायाभावेन मनसोऽनुमिताविव मनआदेरिन्द्रियत्वेनाजनकत्वात्।**

**न च चक्षुर्जन्यत्वमपरोक्षत्वव्याप्यमिति नियमः, मनोजन्यत्वस्येवाप्रयोजकत्वात्, व्यभिचारप्रमाणस्योभयत्रापि तुल्यत्वात्।**

**न च परोक्षज्ञानस्य ज्ञानकरणकत्वनियमः, मनः करणकानुमितौ तदभावात्।**

**अन्यथाऽनुमितेरपि ज्ञानलक्षणप्रत्यासत्तिजन्यत्वसंभवेनापरोक्षत्वप्रसङ्गात्। तत्र चेन्न ज्ञानं प्रत्यासत्तिः कल्पकाभावात्, तर्हि प्रकृतेऽपि तुल्यम्।**

**न चैवं चक्षुषो जनकत्वानुपपत्तिः। परोक्षज्ञानेऽसन्निकृष्टस्यापि सहकारि-**

---

तदनुभवाभावेऽपि वैशेषिकादिमते व्युत्पन्नस्य मम तादृशानुभवोऽस्तीयत आह—त्वदनुभवस्येति।

किञ्च प्राकृतैरप्यलौकिकांशे विद्यमानत्वस्यानुभवात्, तत्रापरोक्षत्वमप्यस्तीति चेदनुभूयेतेत्याह—विदुषामिवेति। नन्विन्द्रियजन्यत्वमेव ज्ञानेऽपरोक्षत्त्वजातिनियामकं तच्चालौकिकांशेऽपीति तत्रापि सा जातिरस्ति अनुमित्यादौ च तदभावान्नातिप्रसंग इत्यत आह—अत एवेति। अतः शब्दार्थमाह—मनइति। इन्द्रियत्वेनेन्द्रियजन्यत्वमपरोक्षत्वनियामकं अनुमित्यादेश्च नेन्द्रियत्वेन मनोजन्यत्वं किन्तु मनस्त्वेनैवेत्याशङ्क्याऽऽह—दण्डाद्यंश इति। अनुमित्यादौ साक्षात्त्वानुभवाभावेन मनस इन्द्रियत्वेन तज्जनकत्वाभावो वक्तव्यः स चालौकिकांशे चक्षुरादेरपि.तुल्य इत्यर्थः।

चक्षुर्जन्यत्वस्यापरोक्षत्वेन व्याप्यत्वात् अलौकिकांशे व्याप्यवति व्यापकेनापि भवितव्यमित्याशङ्क्याह—न चेति। व्यभिचारप्रमाणस्येति। मनोजन्ये सर्वत्र साक्षात्करोमीत्यनुभवाभावात् यथा तज्जन्यत्वस्य साक्षात्त्वेन व्यभिचारः, एवं चक्षुर्जन्ये सर्वत्र तादृशानुभवाभावात् तज्जन्यत्वस्यापि साक्षात्त्वे नव्यभिचार इति भावः। ज्ञानकरणकत्वस्य परोक्षत्वव्याप्यत्वात् इन्द्रियजन्यालौकिकांशेऽपि तदभावात् परोक्षत्वाभाव इत्याशङ्क्याह—न च परोक्षेति। अलौकिकप्रत्यासत्तिजन्यापरोक्षत्वेऽतिप्रसङ्गमाह—अन्यचेति। अनुमितेः पूर्वं वह्न्यादिज्ञाने सत्यपि न तस्येन्द्रियप्रत्यासत्तित्वं मानाभावादित्याशङ्क्य तुल्यमुत्तरमित्याह—तत्र चेदिति।

बलाज्जनकत्वात्, विषयजन्यं हि ज्ञानं विषयस्येन्द्रियसन्निकर्षमपेक्षते तेन विना तदभावात्। न च परोक्षज्ञानं विषयजन्यम्। अतो न चक्षुःसन्निकर्षमपेक्षते।

वस्तुतस्त्वतीते दण्डे "इदानीं चक्षुषा दण्डं जानामि" इत्यननुभवात्, न तदंशे चक्षुर्जन्यत्वम्, किन्तु संस्कारजन्यत्वात्, स्मृतिरेव। 'दण्डं स्मरामि' इति चानुभवदर्शनात्। एवं प्रत्यभिज्ञापि तत्तांशे स्मरणमेव तदुपलक्षितैक्यांशे प्रत्यक्षं तस्येन्द्रियसन्निकृष्टत्वात्। तस्मान्न ज्ञानं प्रत्यासत्तिः

एवं सामान्यमपि न प्रत्यासत्तिः। घटादेः कल्पान्तरीयत्वे प्रमाणान्तरेणोपस्थिते कल्पान्तरीयघटं चक्षुषा 'साक्षात्करोमि, जानामि' इति वाऽनुभवाभावात्। सामान्यलक्षणप्रत्यासत्तौ व्युत्पन्नानां तथा ज्ञानमस्तीति चेत्, तत् किमन्येषां तद्विषयं ज्ञानमेव नास्ति। अस्ति चेत्, तर्हि सन्निकृष्टपटप्रत्यक्षमिव सर्वैरेवानुभूयेत तत्सामग्रीसत्वात्। तथा च योग्यानुपलब्ध्या अभाव एव निश्चीयते। "घटं जानामि, घटं साक्षात्करोमि" इत्यनुभवस्तु सन्निकृष्टघटविषय एव, न तु कल्पान्तरीयविषयः। कल्पान्तरीयं घटं न जानामीत्यनुभवाच्च।

यदि च प्रमेयमिति ज्ञानं सर्वविषयं स्यात्, तर्हि कदाचित् तद्ज्ञाने घटादिसंशयो न स्यात्।

न च समानविषयप्रकारनिश्चयादेव संशयनिवृत्तिः लाघवेन समानविषयस्यैव निवर्तकत्वात्। अपि चैवं पुरस्थितरजत इव रजतत्वप्रकारकज्ञानात् पृष्टदेशस्थरजतेऽपि प्रवृत्तिप्रसङ्गः, ज्ञानस्य स्वविषये प्रवृत्तिजनकत्वात्, पृष्ठदेशस्थरजत-

---

तत्तादावविन्द्रियस्य संयोगादेरभावाद् ज्ञानस्यापि तत्राप्रत्यासत्तित्वे तदंशज्ञानस्येन्द्रियजन्यत्वानुपपत्तिरित्याशङ्क्य तदंशे ज्ञानस्य परोक्षत्वात् तस्य प्रत्यासत्तिं विनापि संस्कारादिसहकारि बलादिन्द्रियजन्यत्वोपपत्तेर्नैतदित्याह—न चैवमिति। तत्ताद्यंशे ज्ञानस्य परोक्षत्वेऽपि कथं प्रत्यासत्तिं विनेन्द्रियजन्यत्वमित्यत आह—विषयजन्यमिति। असन्निकृष्टविषयांशेऽपि ज्ञानस्य चाक्षुषत्वमङ्गीकृत्यैतदुक्तम्।

वस्तुतस्तु तदेव नास्ति तदंशे संस्कारजन्यत्वेन स्मृतित्वादित्याह—वस्तुतस्त्विति। न चैतत् परस्योत्प्रेक्षामात्रं तदंशे स्मृतित्वस्यानुभवसिद्धत्वादित्याह—दण्डमिति। प्रत्यभिज्ञापि संस्कारजन्यत्वादिन्द्रियजन्यत्वाच्च स्मृतिप्रत्यक्षरूपैवेत्याह—एवमिति। साधकाभावाद् बाधकसद्भावाच्च न ज्ञानं प्रत्यासत्तिरित्याह—तस्मादिति। परोक्षे कुत्रापि नापरोक्षज्ञानमित्यभिप्रेत्य सामान्यस्यापीन्द्रियप्रत्यासत्तित्वं निराकरोति—एवमिति। सामान्यस्य प्रत्यासत्तित्वे यथा मानान्तरेण देवदत्तीयत्वेनावगते घटे चक्षुषा ज्ञाते देवदत्तीयं घटं चक्षुषा साक्षात्करोमि तं चक्षुषा जानामि इत्याद्यनुभवः,

स्यापि तव मते रजतत्वप्रकारकप्रत्यक्षविषयत्वात्। पुरस्थितरजतगोचरं प्रत्यक्षं लौकिकसन्निकर्षजन्यं न सामान्यप्रत्यासत्तिजन्यमिति चेत्, तत् किं लौकिकसन्निकर्षजन्यं सर्वं न सामान्यप्रत्यासत्तिजन्यम्, तथासति सन्निकृष्टासन्निकृष्टधूमादिगोचरव्याप्तिग्रहानुदयप्रसङ्गः, लौकिकसन्निकर्षं विना सामान्यस्याप्रत्यासत्ति-

---

एवं मानान्तरेण कल्पान्तरीयत्वेनावगते घटे कल्पान्तरीयं घटं चक्षुषा पश्यामीत्याद्यनुभवः स्यात्, न च सोस्तीत्यर्थः।

वैशेषिकादिमते परिचयवतां कल्पान्तरीयं घटं चक्षुषा जानामीत्याद्यनुभवोऽस्तीति शङ्कते—सामान्येति। अन्येषां किं कल्पान्तरीये घटे चाक्षुषं ज्ञानं नास्तीति तदननुभवः उत तस्य सत्वेऽपि तथाननुभवः? आद्ये, सामान्यस्याप्रत्यासत्तित्वापात इत्यभिप्रेत्याह—तत्किमिति।

द्वितीयं दूषयति—अस्ति चेदिति। विप्रकृष्टघटादेः साक्षात्कारानुपलम्भस्य तत्सत्वविरोधित्वात् तदभाव एव न्याय्य इत्याह—तथा चेति। घटं चक्षुषा जानामीत्याद्यनुभव एव विप्रकृष्टघटप्रत्यक्षविषय इत्याशङ्क्याह—घटमिति। सत्यपि घटज्ञाने विप्रकृष्टघटज्ञानाभावानुभवादपि न तस्य तद्विषयतेत्याह—कल्पनान्तरीयमिति। इन्द्रियजज्ञानस्य स्वविषयसामान्यवत् सर्वविषयत्वे बाधकान्तरमाह—यदि चेति। तज्ज्ञान इति। गेहे प्रमेयमस्तीति ज्ञाने सति प्रमेयतया घटत्वादेरपि निश्चितत्वात् तत्संशयो न स्यादित्यर्थः।

संशयस्य स्वसमानविषयप्रकारकनिश्चयविरुद्धत्वात् प्रमेयत्वप्रकारकनिश्चयेन घटत्वादिप्रकारकसंशयो न निवर्तते इत्याशङ्क्याह—न चेति।

न च समानविषयनिश्चयस्य संशयविरोधित्वे प्रमेयवानयमिति निश्चये सति घटत्वादिसंशयो न स्यादिति वाच्यम्, समानप्रकारकनिश्चयस्य तद्विरोधित्वमतेऽप्यस्य प्रसङ्गस्य तुल्यत्वात्। तत्र सत्तानिश्चयरूपत्वाभावात् तदविरोधित्वमित्येतदप्यन्यत्रापि तुल्यम्। स्वरूपविशेषसत्तानिश्चयस्य संशयविरोधित्वे समानप्रकारकत्वस्य वैयर्थ्याच्चेति भावः। इन्द्रियजन्यज्ञानस्य सामान्यप्रत्यासत्या विप्रकृष्टविषयत्वे दोषान्तरमाह—अपि चेति।

संयोगादिसन्निकर्षजन्यमेव प्रत्यक्षं स्वविषयप्रवर्तकं सामान्यप्रत्यासत्तिजं तु न तज्जन्यमतो न प्रवर्तकमित्यभिप्रेत्य शङ्कते—पुरस्थितेति। एवं वदतः किं लौकिकालौकिकसन्निकर्षजन्ययोः प्रत्यक्षयोर्भेदोऽभिप्रेत इति प्रश्नपूर्वकमेव भेदपक्षे दोषमाह—तत्किमित्यादिना।

किञ्चेन्द्रियसन्निकृष्टस्यैव सामान्यस्य प्रत्यासत्तितया तज्जन्यप्रत्यक्षस्य लौकिकसन्निकर्षजन्यत्वमावश्यकम्, इत्यभिप्रेत्याह—लौकिकेति। सन्निकर्षद्वयजन्ययोरभेदेऽपि

त्वाच्च। न च ज्ञानं लौकिकसन्निकर्षाश्रय एव प्रवृत्तिमुत्पादयतीति वाच्यम्, स्मृत्यादिना अप्रवृत्तिप्रसङ्गात्। इष्टतावच्छेदकप्रकारकज्ञानस्य स्वविशेष्ये इच्छाद्वारा प्रवृत्तिजनकत्वनियमाच्च। इदत्वप्रकारकज्ञानविषय एव प्रवृत्तिरित्यप्यत एव परास्तम्। तद्रजतं रजतमिति वाऽवगच्छतामपि प्रवृत्तिदर्शनात्। देशविशेषस्थत्वज्ञानमपि प्रवृत्तौ कारणमिति चेत्? न, तस्यापि पुरस्थिते इदंत्वादिना गृह्यमाणे रजते सत्त्वात्।

न चैवंभूतस्थले सामान्यप्रत्यासत्तिर्न प्रत्यक्षजनिकेति वाच्यम्, स्वेतरकारणसमवधाने चक्षुःसंयोगादेरिव तस्यापि जनकत्वनियमात्। न च तत्र सामान्यं प्रत्यासत्तिरेव न भवतीति वाच्यम्, चक्षुःसंयोगादेरिवास्यापि क्वचिदपि प्रत्यासत्तित्वे सर्वत्रापि तत्प्रसङ्गात्। अन्यथा क्वचिदपि प्रत्यासत्तित्वं न स्यात्।

किं चैवं नानुमानिकक्षितिकर्तृज्ञानसिद्धिः। तदनुमानस्य परमाण्वादिविषयसाक्षात्कारादिमज्जीवविषयत्वात्। न च सर्गाद्यकाले ज्ञानादिमान् जीवो न संभव-

---

लौकिकसन्निकर्षस्य प्रवृत्तिनियामकत्वान्नातिप्रसङ्ग इत्याशङ्क्य तदभाववत्यप्रवृत्तिप्रसङ्गात् मैवमित्याह—न च ज्ञानमिति।

किञ्च ज्ञानेच्छाकृतीनां कार्यकारणभावाय समानविषयकत्वस्यावश्यकत्वाद् देशान्तरीयरजतादेरपि प्रवर्तकज्ञानविषयत्वे तत्र तदधीनेच्छाप्रवृत्तिरप्यावश्यकीत्याह—इष्टतेति। अत एवेति। ज्ञानेच्छाकृतीनां समानविषयत्वनियमादेवेत्यर्थः। व्यभिचारमप्याह—तद्रजतमिति। इष्टज्ञानमात्रं न प्रवर्तकम्, किन्तु तस्य देशविशेषस्थत्वज्ञानमपि तदभावाच्च न सामान्यप्रत्यासत्तिजज्ञानविषये प्रवृत्तिरिति शङ्कते—देशेति। इदन्त्वप्रमेयत्वादिना पुरोदेशे गृह्यमाणरजतान्तरे देशविशेषस्थज्ञानस्यापि सत्त्वात्, तत्रापि प्रवृत्त्यापात इति दूषयति—न तस्यापीति।

यत्र प्रवृत्तिर्नास्ति तत्र सामान्यप्रत्यासत्तिर्विद्यमानापि न तज्ज्ञानमुत्पादयति, अतो न तत्र प्रवृत्तिरित्याशङ्क्यापेक्षणीयान्तराभावात् ततः तज्ज्ञानमावश्यकमिति दूषयति—न चेति। ननूक्तस्थले सामान्यस्य प्रत्यासत्तित्वमेव नास्ति येन तद् ज्ञानं भवेदिति नेत्याह—न च तत्रेति।

किञ्च सामान्यप्रत्यासत्तिजज्ञानाभ्युपगमे जीवेऽपि प्रमेयत्वादिरूपेण सर्वविषयसाक्षात्कारसत्वात् तेन कार्यत्वादिहेतोरर्थान्तरत्वान्न जीवातिरिक्तसर्वज्ञसिद्धिरित्याह—किञ्चैवमिति। सर्गाद्यकालीनकार्यस्यापि पक्षत्वात् तत्कारणतया जीवज्ञानासंभवान्नित्यज्ञानवदीश्वरसिद्धिरित्याशङ्क्य, ब्रह्माण्डान्तर्वर्तिजीवे तदापि तद्विषयज्ञानसंभवात्,

तीति वाच्यम्, विषमप्रलये तत्संभवात्। संभवति च विषमप्रलयः सुषुप्तेरिवादृष्टविपाकस्य यौगपद्यनियमाभावात्। न च विषमप्रलये मानाभावः, क्षितिकर्त्रनुमानस्यैव तद्विषयत्वात्। न चैवं कर्त्रनेकत्वगौरवं, ज्ञाननित्यत्वादिवत्तस्य फलमुखतयाऽदोषत्वात्।

ननु सामान्यलक्षणादिजन्यप्रत्यक्षस्य कार्यायोग्यत्वान्न तदनुमानविषय इति चेत्? न, प्रत्यक्षमात्रस्यैव तद्धेतुत्वात्। संयोगादिजन्यप्रत्यक्षस्यैव तद्धेतुत्वे त्वदभिमतक्षितिकर्तृप्रत्यक्षमपि तदयोग्यं स्यात्। जीवकृतेः परमाणुविषयत्वाभावान्न ततः तत्सिद्धिरिति चेत्? न, स्वरूपसंबन्धस्य भगवतः सर्वत्र जागरूकत्वात्। ततः त्याज्यो वाऽऽनुमानिकक्षितिकर्ता स्वीकर्तव्यो वाऽस्मदादेः परमाण्वादिसाक्षात्काराभावः।

यद्यर्वाचीनः कश्चिन्माभूदानुमानिक ईश्वर इति ब्रूयात् तस्मै पूर्वोक्ता बाधकाः स्मारयितव्याः। तस्माच्छब्दाजन्यजन्यप्रत्यक्षं स्वजनकमात्रविषयम्। इन्द्रियजन्यप्रत्यक्षत्वात्। संमतवद् विपक्षे बाधकं चोक्तमेव धर्मादेरिन्द्रियजन्यज्ञान-

---

मैवमित्याह—न चेति। विषमप्रलयस्य संभावितत्वेऽपि तत्साधकं मानं नेत्याशङ्क्य इदमेवानुमानं जीवकर्तृकं विषयीकुर्वतः तदुपपत्तये विषयप्रलयमपि साधयतीत्याह—न च विषमेति। क्षित्यादेर्जीवकर्तृकत्वे नियामकाभावात्, सर्वजीवकर्तृकत्वं स्यात्, ततश्च गौरवमित्याशङ्क्यानुमानप्रवृत्तेः पूर्वमज्ञातत्वादिदं गौरवं न दोषायेत्याह—न चैवमिति।

संयोगादिजन्यप्रत्क्षस्यैव कार्यहेतुत्वदर्शनान्न सामान्यप्रत्यासत्तिजन्यं तद्धेतुः, अतो न तद्वत्तयाऽर्थान्तरतेति शङ्कते—नन्विति। लाघवात् प्रत्यक्षमेव कार्ययोग्यमित्याह—न प्रत्यक्षेति।

एवमनङ्गीकारे परस्यानिष्टमाह—संयोगेति। जीवज्ञानस्य परमाण्वादिगोचरत्वेऽपि तत्कृतेस्तदगोचरत्वाद् द्व्यणुकादौ न जीवस्य कर्तृत्वं संभवतीति शङ्कते—जीवकृतेरिति। जीवकृतेः तन्त्वादाविव परमाण्वादावपि स्वरूपसंबन्धसंभवात् तद्विषयत्वं युक्तमित्याह—न स्वरूपेति। सामान्यप्रत्यासत्त्यभ्युपगमे परकीयेश्वरासिद्धिप्रसङ्गात्, तद्रक्षणाय सामान्यप्रत्यासत्तिरेव परित्याज्येत्यभिप्रेत्याह—तत इति। श्रुतिप्रामाण्यादेवेश्वरसिद्धिर्नानुमानात्, अतो न सामान्यप्रत्यासत्तिस्त्याज्येति वदन्तं प्रत्याह—यदीति। पूर्वोक्ता इति। पृष्ठदेशस्थे रजतेऽपि प्रवृत्त्यादय इत्यर्थः। सामान्यप्रत्यासत्तिजज्ञानाभावे उक्ततर्कानुग्राह्यं मानमाह—तस्मादिति। स्वमते दुःखादिगोचरशाब्दापरोक्षे परमते ईश्वरज्ञानादावनुमित्यादौ च बाधवारणाय पक्षविशेषणानि। सिद्धसाधनतावारणाय अन्यव्यावृत्तिपरं मात्रपदम्। उक्तशाब्दापरोक्षे व्यभिचारवारणाय—इन्द्रियजन्येति।

**विषयत्वे घटादिवदैन्द्रियकत्वप्रसङ्गश्च । इन्द्रियजन्यज्ञानविषयत्वस्य लाघवेनैन्द्रिय-यकशब्दार्थत्वात्, इतोऽन्यादृशस्य गुरुशरीतयाऽतदर्थत्वात् । सामान्यलक्षणप्रत्या-सत्त्यभावे कथं व्याप्तिग्रहः सकलधूमादिविषयः स्यादिति चेत् ? न, व्याप्तिग्रहस्य सन्निकृष्टधूमादिमात्रविषयत्वात् । समानाकारतयाऽनुमितौ व्याप्तिग्रह उपयुज्यते, न तु समानविषयतयापि गौरवात् ।**

सामान्यप्रत्यासत्त्यभावेऽपि व्याप्तिग्रहः

**यत्तु दशपञ्चवह्निधूमसहचारदर्शनानन्तरं धूमो वह्निव्यभिचारी न वेति संशयोऽप्रसिद्धधूमविषयः प्रसिद्धधूमानां वह्निजन्यत्वनिश्चयात् । संशये च धर्मी-न्द्रियसन्निकर्षः कारणमिति तदर्थं सा प्रत्यासत्तिरिति । तन्न । प्रसिद्धधूमेषु धूमो वह्निजन्य इति निश्चये तादृशसंशयाभावात् । एतद्धूमो वह्निजन्य इति निश्चये च**

---

इन्द्रियगतक्रियादौ व्यभिचारवारणाय—प्रत्यक्षम् । संमतत्वेदिति । इन्द्रियसंयुक्तघटविषय-प्रत्यक्षवदित्यर्थः । अप्रयोजकत्वं निराकरोति—विपक्ष इति । बाधकान्तरमाह—धर्मादे-रिति । ऐन्द्रियकत्वप्रसङ्गश्चेति । तथा चैन्द्रियकव्यवस्था न स्यादिति भावः । इन्द्रियसंयो-गादिजन्यज्ञानविषय एवैन्द्रियक इत्युच्यते धर्मादिकं तु न तथेत्याशङ्क्याह—इन्द्रियजन्येति ।

सामान्यस्याप्रत्यासत्तित्वे विप्रकृष्टधूमादीनां दुर्विज्ञेयतया सर्वोपसंहारवती व्याप्तिर्न सिद्ध्येदिति शङ्कते—सामान्येति । व्याप्तिग्रहस्य सकलधूमविषयत्वाभाव इष्ट इति परिहरति—न व्याप्तीति । पर्वतीयवह्नेर्व्याप्तिग्रहाविषयत्वे ततः कथं तद्विषयानुमि-तिरित्यत आह—समानेति । अनुमितिः साध्यांशे यत्प्रकारिका तत्प्रकारकव्याप्तिग्रह एवानुमितिहेतुः । स च दृष्टकतिपयधूमादिव्यक्तिषु धूमो वह्निव्याप्य इत्येवमाकारेण धूमत्ववह्नित्वप्रकारक एव जायते तदुत्पत्त्यनन्तरं तत्संस्कारसहकृतव्याप्यतावच्छेदक-प्रकारकधूमदर्शनात्, व्यापकतावच्छेदकप्रकारकवह्न्यनुमितिसिद्धेर्व्याप्तिग्रहे सर्वोप-संहारो नापेक्षित इति भावः ।

व्याप्तिसंशय एव सामान्यस्य प्रत्यासत्तित्वे मानमिति मणिकारोक्तं दूषयितुमनु-वदति —यत्त्विति । भवतु, अदृष्टधूमविषयो व्याप्तिसंशयः तावता कथं सामान्यस्येन्द्रिय-प्रत्यासत्तित्वमित्यत आह—संशये चेति । धूमो वह्निजन्य इति निश्चयानन्तरमयं संशयः उत, एतद्धूमो वह्निजन्य इति निश्चयानन्तरम् ?

आद्ये धूमो वह्निव्यभिचारी न वेति संशयोऽनुपपन्न इत्याह—तन्नेति । द्वितीये निश्चयसंशययोर्भिन्नप्रकारकत्वेनाविरोधात् दृष्टविषय एवायं संशय इत्याह—एतदिति ।

धूमत्वप्रकारकव्यभिचारसंशयः तेषु न विरुध्यते। तव मते संशयसमानप्रकारकनिश्चयस्यैव तद्विरुद्धत्वात्।

अन्यथा वायौ प्रसिद्धरूपाणामभावस्य निश्चितत्वेन वायुः रूपवान्न वेति संशयाभावप्रसङ्गात्। धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयात् तत्संशयोपपत्तेश्च। धूमत्वं वह्न्यजन्ये नास्तीति निश्चयानन्तरं तत्संशमाभावेन तथैव वक्तव्यत्वात्।

अन्यथा यत्र यदिन्धनप्रभवाः पञ्चैव धूमव्यक्तयः ताश्च विशिष्यैव वह्निजन्यतयाऽनुभूताः तत्र तदिन्धनप्रभवधूमो वह्निव्यभिचारी न वेति संशयो न स्यात्, अनिश्चितधर्म्यन्तरस्याभावात्। ज्ञानेच्छाकृतीनां समानविषयत्वं यद्यप्यपेक्षितं पुरस्थितरजतज्ञानात् पृष्ठदेशस्थरजते प्रवृत्त्यदर्शनात् तथापि तदर्थं न सामान्यप्रत्यासत्तिः। सन्निकृष्टरजतादौ तेन विनापि तत्संभवात्। आगामिपाकादेश्च अयंपाकः पाकपूर्वः पाकत्वादित्याद्यनुमानात् तत्सिद्धिः, न च चरमपाके व्यभिचारः। तस्य सर्वदाऽनुपस्थितेः। उपस्थितौ च तदन्यत्वेन विशेषणात्। पाकत्व-

---

विशेषाकारनिश्चयस्य सामान्याकारसंशयविरोधित्वे सामान्याभाववादे वायुः पृथिव्यादित्रयवृत्तिरूपरहित इति निश्चयानन्तरं वायुः रूपवात् न वेति संशयो न स्यादित्याह—अन्यथेति। निश्चितेऽप्यर्थे प्रामाण्यसंशयाहितसंशयवद् वह्निजन्यत्वेन निश्चितधूमेष्वेव धूमत्वस्य तदजन्यवृत्तित्वसंशयप्रयुक्तत्वेनाप्युक्तसंशयोपपत्तिरित्याह—धूमत्वमिति। उक्तसंशयाहित एवायं संशय इत्यत्र तद्व्यतिरेकं गमकमाह—धूमत्वमिति। व्यभिचारसंशयस्याप्रसिद्धधर्मिविषयत्वनियमे बाधकमाह—अन्यथेति। पञ्चैवेति। वस्तुतः इति शेषः।

इच्छाप्रयत्नयोः स्वसमानविषयज्ञानजन्यत्वनियमादिच्छादिविषयभाविपाकादौ सामान्यप्रत्यासत्तिजन्यज्ञानमावश्यकमिति चोद्यम् कैश्चिद् दूषितम्, इच्छादिजनकज्ञानस्य तत्समानप्रकारकत्वमेवापेक्षितम्, न तु समानविषयत्वमपीति। तत्र समानविषयत्वमप्यावश्यकमिति वदन् स्वयं प्रकारान्तरेण तत्परिहारमाह—ज्ञानेति।

किमिच्छादिकं सर्वत्र सामान्यप्रत्यासत्तिजज्ञानपेक्षते उत पाकादावेव? नाद्यः, इत्याह—सन्निकृष्टेति। आगामिपाकज्ञानस्यानुमानादपि संभवान्न द्वितीयोऽपीत्याह—आगामीति। पाकपूर्व इति। पाकात् पूर्वभावीत्यर्थः। अनुपस्थितेति।

ततश्च व्यभिचारानुपस्थितिदशायामनुमितिर्भवत्येवेति भावः। व्युत्पन्नानां चरमपाकोपस्थितिसंभवात्, कथं तेषामागामिपाकानुमानमित्यत आह—उपस्थितौ चेति। अनुमानान्तरादपि तेषां तदवगम इत्यभिप्रेत्याह—पाकत्वमिति। अलौकिकप्रत्यासत्ति-

**मनागतकार्यवृत्ति अनित्यवृत्तिनित्यधर्मत्वात् घटत्वादिवदित्यपि तदनुमानसंभवात्। तस्मान्न सामान्यं ज्ञानं वा प्रत्यासत्तिः।**

**अतः प्रत्यभिज्ञानादेः परोक्षापरोक्षात्मत्वादव्याप्यवृत्तित्वान्नापरोक्षत्वं जातिः। अव्याप्यवृत्तिरपि सा सुखादिप्रत्यक्षे न संभवतीत्युक्तम्। मनोमात्रजन्या व्याप्तिविषयिणी वृत्तिर्न ज्ञानं तस्याः परोक्षापरोक्षज्ञाने क्लृप्तकारणाजन्यत्वात्। सहचारदर्शनजन्यसंस्कारस्य तन्मात्रस्मृतिहेतुतया व्याप्तिस्मृत्यजनकत्वात् स्मृतेरनुभूतविषयत्वात्। यदाहुः, अनुभूतविषयाऽसंप्रमोषः स्मृतिरिति। किन्तु ज्ञानाभासः पदार्थान्तरम्। अन्तःकरणसमवेतं ज्ञानं सुखाद्यष्टगुणातिरिक्तान्तःकरणविशेषगुणभिन्नं पदार्थत्वात् सुखादिवत्। न चाप्रयोजकत्वम्, प्रत्यक्षसिद्धाया वृत्तेः क्लृप्तज्ञानकरणानिरूपणेन ज्ञानत्वानुपपत्तेः। सुखादिभिन्नत्वाच्च।**

---

निराकरणमुपसंहरति तस्मादिति। एतच्च योगजधर्मस्याप्युपलक्षणम्। तस्यापि प्रत्यासत्तित्वे मानाभावात्, तज्जन्यज्ञानस्यापि परोक्षापरोक्षात्मतया ज्ञानाभासात्मताया वक्ष्यमाणत्वात्। ज्ञानादेरप्रत्यासत्तित्वे प्रत्यभिज्ञादेः तत्तांशे इन्द्रियजन्यत्वासंभवात् तत्र संस्कारजन्यतया स्मृतित्वात् परोक्षत्वमेव। ततश्चापरोक्षत्वमव्याप्यवृत्तित्वान्न जातिरिति प्रकृतं निगमयति—अत इति। अव्याप्यवृत्तिजातिमङ्गीकृत्याप्याह—अव्याप्येति। न संभवतीति। तत्र तद्व्यञ्जकाभावात् ततश्च सुखादेरपरोक्षज्ञानविषयत्वेनापरोक्षत्वं न स्यादिति भावः।

ननु भूयः सहचारदर्शने सति कालान्तरे विप्रकृष्टधूमादिष्वेव मानसो व्याप्तिग्रहोऽपरोक्षो जायते तव मते कथं तस्यापरोक्षत्वमिति तत्राह—मनोमात्रेति। न ज्ञानमिति। तथा च न तस्य परोक्षत्वमपरोक्षत्व वेति भावः। क्लृप्तकारणाजन्यत्वादिति। मनसोऽकारणत्वादिति भावः।

भूयोदर्शनजसंस्कारजन्यतया स्मृतिरूपज्ञानं किन्न स्यादित्यत आह—सहचारेति। व्याप्तिस्मृत्यजनकत्वादिति। नियतसहचारस्यैव व्याप्तित्वात् तस्य पूर्वमननुभवादिति भावः। तस्य ज्ञानत्वाभावे किं तदित्यपेक्षायामाह—किं त्विति।

बुद्ध्याद्यतिरिक्तज्ञानाभासो मानशून्य इत्याशङ्क्याऽनुमानमाह—अन्तः करणेति। वृत्तिज्ञानभिन्नसाक्षिज्ञाने सिद्धसाधनतावारणाय—सुखादीत्यादि। पक्षीकृतज्ञानान्यत्वेन पक्षादन्यत्र साध्यसिद्धिः पक्षे तु विप्रतिपन्नज्ञानाभासान्यत्वेनैवेति तत्सिद्धिः। असन्निकृष्टव्याप्तिविषयवृत्तेर्ज्ञानादावन्तर्भावायोगात् तद्भेदसाधकहेतोर्नाप्रयोजकतेत्याह—न चेति। परोक्षापरोक्षज्ञानातिरिक्तज्ञानाभासाप्रसिद्धेः तत्कल्पने गौरवमित्याशङ्क्य हेत्वसिद्ध्या परिहरति—न चैवमिति। स्वमते कल्पनागौरवं परिहृत्य परमते असन्निकृष्ट-

न चैवमलौकिकपदार्थकल्पनागौरवं शुतिरजताकाराविद्यावृत्तेः सौषुप्तिकसुखादिपरामर्शनिमित्ताविद्यावृत्त्यादेश्च तथाभूतायाः प्रसिद्धत्वात्। प्रत्युत तवैवालौकिकज्ञानकल्पनमिति गौरवम्। कथं तर्हि ततोऽर्थावभासः इच्छाद्यवच्छेदकार्थस्यापि तदवच्छिन्नसाक्षिविषयत्वात्।

न च तस्मिन् ज्ञाने मनःकरणमिति वाच्यम्, मनसः प्रमाश्रयत्वेन तदकरणत्वात्। बहिरर्थे मनसः संबन्धं विना तज्ज्ञानजनकत्वायोगाच्च। तत्र व्याप्तिं साक्षात्करोमीत्यननुभवाच्च।

अथवा धूमस्य वह्निसंबन्धः स्वाभाविकः अनौपाधिकत्वात्, यद्यस्यानौपाधिकं तत्तस्य स्वाभाविकं संप्रतिपन्नवदित्यनुमानात्, तत्र व्याप्तिनिश्चयः। अव्यभिचारित्वं साध्यमिति न साध्याविशेषः। उपाध्यभावश्च प्रमाणैरेव गृह्यते अत एवाभिहितव्याप्तिज्ञानार्थमेव ज्ञानलक्षणा प्रत्यासत्तिः कल्प्येति परास्तम्। कविकाव्यमूलवृत्तिरपि ज्ञानाभासः, पुण्यविशेषसमुद्बुद्धप्राक्तनसंस्कारजन्यस्मृतिर्वाऽस्तु मनोमात्रजन्यज्ञानमपि चेत् कैश्चिदभ्युपेयते तर्हि तदपि वक्ष्यमाणरीत्या

---

विषयजन्यप्रत्यक्षस्य कुत्राप्यक्लृप्तत्वात् तत्कल्पने गौरवमित्याह—प्रत्युतेति। व्याप्तिविषयमनोवृत्तेरज्ञानत्वे कथं ततो व्याप्तिरित्याशङ्कते—कथमिति। न कथमपि मनोवृत्त्या व्याप्तिसिद्धिः, किन्तु तदवच्छिन्नसाक्षिणैवेति सदृष्टान्तमाह—इच्छादीति। मनसोऽपि ज्ञानकरणत्वात् तत्करणत्वेन तस्य ज्ञानत्वसिद्धिरित्याशङ्क्याह—न च तस्मिन्निति। मनसः करणत्वेऽपि बाह्यज्ञाने करणत्वमयुक्तमित्याह—बहिरर्थ इति। मानसव्याप्तिग्रहस्यापरोक्षत्वमनुपलब्धिबाधितञ्चेत्याह—तत्रेति।

इन्द्रियासन्निकर्षदशायां धूमादिव्याप्तिग्रहो ज्ञानाभास इत्युक्तम्, संप्रति लिङ्गजन्यपरोक्षज्ञानमेव तदित्याह—अथवेति। स्वाभाविकत्वं नामानौपाधिकत्वमेवेति हेतुसाध्ययोरभेदमाशङ्क्याह—अव्यभिचारित्वमिति। अव्यभिचारित्वेनैव संबन्धस्यानौपाधिकत्वं ज्ञातव्यमिति परस्पराश्रय इत्याशङ्क्योपाध्यनुपलब्ध्यादिनापि तज्ज्ञानसंभवान्नैवमित्याह—उपाध्यभावश्चेति। यदनौपाधिकमित्युक्तव्याप्तिज्ञानं मनसैव जायते मनसश्च बाह्यार्थसंबन्धान्तराभावात् ज्ञानमेव प्रत्यासत्तितया तत्र कल्प्यमिति केनचिदुक्तमित्याह—अत एवेति। तज्ज्ञानस्य मानसत्वाभावान्मानसत्वेऽपि तस्य ज्ञानाभासत्वाज्ज्ञानस्य प्रत्यासत्तित्वनिरासाच्चेत्यर्थः। कवीनां शरदादिवर्णनपरकाव्यमूलप्रत्ययार्थमलौकिकसन्निकर्षोऽभ्युपेय इत्याशङ्क्याऽऽह—कविकाव्येति। ज्ञानाभास इति। क्लृप्तकारणाजन्यत्वादिति भावः। ज्ञानत्वमङ्गीकृत्याह—पुण्येति। मनोमात्रजन्यस्य ज्ञानत्वं मनसो ज्ञानद्वारा बहिरर्थगोचरत्वं चाभ्युपेत्य तज्जन्यज्ञानस्यापरोक्षत्वनियमाभावान्न तदर्थमलौकिकसन्निकर्षः कल्प्य इत्यभिप्रेत्याह—मनोमात्रेति। वक्ष्यमाणरीत्येति। प्रमातृचैतन्याव्यवधानात्

**किञ्चित् परोक्षम्, किञ्चिदपरोक्षमस्तु । तस्मान्नापरोक्षत्वं जातिः ।**

परोक्षत्वं न जातिः

**एवं परोक्षत्वमपि न जातिः । अनुभवत्वेन साङ्कर्यात्, अव्याप्यवृत्तित्वाच्च नापीन्द्रियाजन्यज्ञानत्वम्, तस्य नित्यज्ञानेऽतिव्याप्तेः । नापि लिङ्गादिजन्यत्वम् तस्य प्रत्येकसमुदाययोरलक्षणत्वात् । तस्मान्नापरोक्षज्ञानविषयत्वमर्थानामपरोक्षत्वम्,**

अर्थापरोक्षत्वनिर्वचनम् ।

**किं तर्ह्यर्थापरोक्षत्वम् उच्यते, आत्मसंविदपरोक्षत्वम् न च घटाद्यपरोक्षत्वेऽव्याप्तिः तदपरोक्षताया अपि तत्सत्ताया इवात्ममात्रत्वात् ।**

**तथाहि—आत्मा तावत् स्वतोऽपरोक्षः "यत्साक्षादपरोक्षादि"ति श्रुतेः । तत्र साक्षादिति ज्ञानक्रियाव्यवधानस्य निषिद्धत्वादात्मनि ज्ञानसुखापरोक्षत्वस्यासंभवाच्च । घटादिकं चापरोक्षात्मन्यध्यस्तमिति स एव तदपरोक्षता । ततो भेदे**

---

किञ्चिदहमर्थविषयज्ञानमपरोक्षं बाह्यविषयज्ञानं तु तद्व्यवधानात् परोक्षमित्यर्थः ।

प्रकृतमुपसंहरति—तस्मादिति । ज्ञाने परोक्षत्वमपि विषयाधीनमेवेति वक्तुं तस्यापि जातित्वं निराकरोति—एवमिति । अव्याप्येति । तस्यापि प्रत्यभिज्ञानादावुक्तरीत्याऽव्याप्यवृत्तित्वादिति भावः ।

विषयाघटितोपाधिरूपत्वमपि तस्य निराकरोति—नापीति । प्रत्येकेति । लिङ्गाद्येकैकजन्यत्वस्याव्याप्तत्वात्, तत्समुदायजन्यत्वस्यासंभवादलक्षणमित्यर्थः । ज्ञानगतपरोक्षत्वापरोक्षत्वयोर्दुर्निरूपत्वान्न तद्विषयत्वमर्थस्य परोक्षत्वमपरोक्षत्व चेत्यभिप्रेत्योपसंहरति—तस्मादिति । स्वाभिमतमापरोक्ष्यं वक्तुमाकाङ्क्षामुद्भावयति—किं तर्हीति । प्रमातृचैतन्याभिन्नत्वमेवार्थापरोक्षत्वं तच्चात्मनः स्वतः, घटादेर्जडस्य तु तत्तादात्म्याध्यासादित्यभिप्रेत्याह—आत्मसंविदिति । उक्तमर्थं प्रपञ्चयति—तथा हीति । यत्साक्षादित्यस्याव्यवधानेनापरोक्षमित्यर्थः प्रतीयते तच्च घटादेरपि तुल्यमित्याशङ्क्याह—तत्रेति । घटादेर्यथा स्वाकारवृत्तिद्वारा प्रमातृचैतन्योपरागादपरोक्षता नैवमात्मनः किन्तु स्वत एवेति साक्षादित्यनेनोच्यते इतरथा तद्वैय्यर्थ्यादिति भावः । पूर्वोक्तरीत्यात्मन्यन्याधीनापरोक्षत्वस्यासंभवादपि तत्स्वत एवेत्याह—आत्मनीति । चिद्रूपात्मैवाध्यासिकभेदाद् घटाद्यपरोक्षतेत्याह—घटादिकमिति । घटोऽपरोक्ष इति घटसंबन्धितया प्रतीयमानापरोक्षता कथमात्मेत्यत आह—तदपरोक्षत्वेति ।

किञ्चाधिष्ठानचैतन्यस्य सर्वत्रैक्यात् तस्यैव जडापरोक्षतारूपत्वे लाघवं ज्ञानाधीना-

प्रमाणाभावात्, तदपरोक्षत्वानुभवस्य तत्सत्तानुभवस्येव तदधिष्ठानात्मगोचरत्वात् लाघवेन सर्वप्रपञ्चनिष्ठापरोक्षताया एकत्वात्। आत्मातिरिक्तापरोक्षत्वं विनैव घटादेरबाधितापरोक्षत्वानुभवसंभवे ततो भेदायोगाच्च।

न च घटधर्मतया प्रतीयमानाऽपरोक्षता कथमात्मा तस्यावृत्तित्वादिति वाच्यम्, अपरोक्षतातादात्म्यस्यैवानुभवात् तस्य चाधिष्ठानत्वेऽप्युपपत्तेः। घटेऽपरोक्षत्वमिति कल्पितानुभवश्च भ्रम एव। तदतिरिक्तापरोक्षत्वस्य जडेऽसंभवात् अपरोक्षज्ञानविषत्वलक्षणापरोक्षत्वस्य घटपटादिष्वनुगतत्वाभावाच्च। तस्माज्जडसत्तावदपरोक्षत्वमप्यात्मैव।

तदाहुराचार्याः "प्रमाणज्ञानादन्तरपरोक्षानुभवान्न विषयस्यापरोक्षता भिद्यत" इति।

तर्हि स्वत्वमिव घटादेरपरोक्षत्वमपि सर्वदा स्यादिति चेत्? न, प्रमातृ-

---

परोक्षत्वम् तु प्रतिविषयं भिन्नमिति गौरवमित्यभिप्रेत्याह—लाघवेनेति। आत्मानात्मनोरपरोक्षाकारबुद्धेरनुगतविषयत्वे संभवति तद्भेदो न युक्त इत्यभिप्रेत्याह—आत्मेति। घटापरोक्ष्यस्यात्मरूपत्वे तस्य तद्धर्मत्वानुभवविरोध इत्याशङ्क्य लौकिकानां घटोऽपरोक्ष इत्यनुभवस्य तत्तादात्म्यमात्रविषयत्वेन तद्धर्मत्वागोचरत्वमित्याह—न च घटेति। व्युत्पन्नानां घटधर्मतयाऽपरोक्षत्वानुभवोऽन्धपरंपराप्राप्तो भ्रम एव। तत्वतोऽधिष्ठानचैतन्यातिरिक्तापरोक्षत्वस्यासंभवादित्याह—घट इति। पराभिमतापरोक्षत्वस्य प्रतिविषयं भिन्नत्वेनानुगतापरोक्षाकारस्यालम्बनत्वायोगादधिष्ठानचैतन्यमेव सर्वत्रापरोक्षतेत्याह—अपरोक्षेति। प्रमातृचैन्याभिन्नविषयाधिष्ठानचैतन्यमेव तदापरोक्ष्यमित्युपसंहरति—तस्मादिति।

अत्र पञ्चपादिकाकृद्वचनमुदाहरति—तदाहुरिति। प्रमाणज्ञानान्न भिद्यत इति। न प्रामाणिकभेदवतीत्यर्थः। विषयस्येति। विषयानुगतेत्यर्थः।

अधिष्ठानचैतन्यमेव चेदपरोक्षता तर्हि घटादेः कदाचित् परोक्षता न स्यादिति शङ्कते—तर्हीति।

तत्तदाकारवृत्त्युपहिततया प्रमातृचैतन्याभेदेनाभिव्यक्तविषयाधिष्ठानचैतन्यमेव तदपरोक्षता। वृत्त्यभावदशायां तु प्रमातृचैतन्योपाध्यन्तःकरणानुपहितत्वेन तदभेदेनानभिव्यक्तत्वात् तदधिष्ठानचैतन्यं नापरोक्षतेति तदा प्रमातृव्यवहितत्वाद् घटः परोक्ष एवेत्यभिप्रेत्याह—न प्रमात्रिति। एवमप्येकप्रमातृचैतन्याभेदेनाभिव्यक्ताधिष्ठानचैतन्यतादात्म्यदशायां घटः सर्वेषामपरोक्षः स्यादधिष्ठानचैतन्यस्य साधारणत्वादिति चोद्यमयुक्तं देवदत्तान्तःकरणोपहितचैतन्यस्य प्रमात्रन्तराद् भिन्नत्वेन तत्तादात्म्यापन्नघटस्य

चैतन्यतादात्म्यस्य सर्वदाऽसत्वात्। अत एव देवदत्तस्यापरोक्षतादशायां सर्वस्यापि घटादिरपरोक्षः स्यादिति निरस्तम्। तदवच्छिन्नचैतन्यस्यान्यं प्रति भिन्नत्वात्।

अत एव देवदत्तस्य घटापरोक्षत्वदशायां रसगुरुत्वादिकं चापरोक्षं स्यादिति निरस्तम्। चक्षुर्जन्यवृत्तेः रसाद्यवच्छिन्नचैतन्यानभिव्यञ्जकत्वात्। तज्जन्याया एव वृत्तेः तदपरोक्षताव्यञ्जकत्वात्।

अत एव पर्वते वह्न्यादिरपि नापरोक्षः सुखाद्यवच्छिन्नचैतन्यं च वृत्ति विनैवाभिव्यक्तम्, तस्यानावृसाक्ष्यध्यासात्।

तर्हि धर्मादिकमप्यपरोक्षं स्यादिति चेत्? न, तस्यानुद्भूततयाऽप्रत्यक्षत्वात्। तस्मात् यज्जड मुद्भूतं यदा यदभिन्नचैतन्याभिन्नं तत्तदा तस्यापरोक्षत्वतादात्म्यात् भवत्यपरोक्षम्, अत एव सर्वज्ञत्वादि न जीवस्यापरोक्षम्, ईश्वरस्य सर्वमपरोक्षमेव। एवं च घटादेरपरोक्षत्वं वृत्तिप्रयुक्तम्, न त्वपरोक्षवृत्तिविषयत्व-

---

प्रमात्रन्तरेण संबन्धाभावेन तं प्रत्यपरोक्षत्वायोगादित्याह--अत एवेति।

ननु यदभेदेन घटाधिष्ठानचैतन्यमभिव्यक्तं तं प्रति तद्गतगुरुत्वादिकमप्यपरोक्षं स्यात्, अधिष्ठानचैतन्यस्यैकत्वादित्यप्ययुक्तम्, अवच्छेदकभेदेनाधिष्ठानचैतन्यस्यापि भिन्नत्वात्, घटाकारवृत्त्या तदनभिव्यक्तिश्चेत्याह—अत एवेति। धर्मिणः पर्वतस्यापरोक्षत्वेऽपि तत्र वह्न्यादिर्नापरोक्षः तज्जन्यवृत्तेरभावेन तदधिष्ठानचैतन्यस्यानभिव्यक्तिश्चेत्याह—अत एवेति। सुखादेरपि किं घटादिवदेवापरोक्षता नेत्याह—सुखादीति। सुखादिसमानाधिकरणधर्मादेरपि प्रमातृचैतन्य एवाध्यासात् स्वतोऽपरोक्षता स्यादित्याशङ्कते—तर्हीति। साक्षिसंबन्ध[द्ध]स्यापि धर्मादेः परमते इव स्वरूपायोग्यत्वान्नापरोक्षतेति परिहरति—न तस्येति।

आत्मचैतन्यस्यैव जडापरोक्षतारूपत्वेऽपि किञ्चिदेव कदाचित् कञ्चित् प्रत्यपरोक्षं भवतीत्यत्रानुगतप्रयोजकमाह—तस्मादिति। साक्ष्यभिन्नेश्वरसर्वज्ञत्वादिकमपि जीवं प्रत्ययोग्यत्वान्नापरोक्षमित्याह—अत एवेति। ईश्वरं प्रति सर्वस्य योग्यत्वात् तदधिष्ठानचैतन्यस्यानावृतत्वाच्च सर्वं तस्यापरोक्षमित्याह—ईश्वरस्येति। घटादेरैन्द्रियकवृत्तिमपेक्ष्यापरोक्षत्वे परमतान्न विशेष इत्याशङ्क्याह—एवं चेति। वृत्तिप्रयुक्तमिति। सुखादौ तदपि नेति भावः।

कृतं तदेव वा, ज्ञानापरोक्षत्वं तु चैतन्यस्य स्वरूपेणैव, वृत्तेस्त्वपरोक्षार्थविषयत्वम् ।

न चापरोक्षार्थविषयत्वमेव ज्ञानस्यापरोक्षत्वं चैतन्यवृत्तिसाधारणमिति वाच्यम् चैतन्यस्य सुखसाक्षात्कारत्वाभावप्रसङ्गात् ।

अपरोक्षत्वस्यानुमित्यादावतिव्याप्तिनिरासः

अत एवानुमित्यादिर्नापरोक्षः, लिङ्गादिजन्यवृत्त्यवच्छिन्नचैतन्यस्यार्थभिन्नत्वात् । अर्थमुखवृत्तिज्ञानापरोक्षत्वे सर्वमेवात्मविषयमनात्मविषयं वा वृत्तिज्ञानं यदंशेऽपरोक्षार्थं तदंशेऽपरोक्षमेव गुरुमत इव सर्वासामपि प्रतीतीनामात्माशे, अत एवापरोक्षवह्न्यौष्ण्यगोचरज्ञानमात्रस्य स्पार्शनत्वप्रसङ्ग इति निरस्तम् । स्पर्शनेन्द्रियजन्यज्ञानस्यैव स्पार्शनत्वात् ।

न च योगिप्रत्क्षस्याप्रत्यक्षत्वप्रसङ्गः । तस्याऽप्युद्भूतविद्यमानपदार्थे व्यवहितेऽपि चक्षुरादिसंप्रयोगसंभवेन विषयचैतन्याभिव्यक्तेः सत्वात् । अविद्यमानेऽनुभूते च न तद्भानं प्रत्यक्षम् । किन्तु योगाराधितपरमेश्वरोपदेशजन्यं परोक्षमेव । अत एव योगिनां व्यवहितार्थज्ञाने ध्यानादिकमर्थवद्भवति । धर्मविशेषजन्यज्ञानाभासो वा । तस्मात् तत्त्वमस्यादिवाक्यतात्पर्यविषयविषयं ज्ञानं न परोक्षम्,

---

अर्थापरोक्षत्वमुपपाद्य ज्ञानापरोक्षत्वमुपपादयति—ज्ञानेति । स्वप्रकाशज्ञानस्य तद्रूपत्वमेवात्मापरोक्षप्रकाशत्वं अनात्मापरोक्षप्रकाशत्वं त्वपरोक्षार्थविषयत्वमेव । वृत्तेस्तु सर्वत्र तदेवापरोक्षमिति विभागः । सर्वत्रैकरूपापरोक्षत्वसंभवात् तद्भेदः किमर्थ इत्यत आह—न चेति । चैतन्यस्येति । चैतन्यसुखयोरभेदेन तस्य तद्विषयत्वाभावात्, तस्य सुखापरोक्षता न स्यादित्यर्थः ।

ज्ञानापरोक्षत्वस्यातिव्याप्तिरपि नेत्याह—अत एवेति । अस्यैवार्थमाह—लिङ्गादीति । अनुमितिविषयवह्न्यादेः स्वाकारवृत्तेरनिर्गमनेन तदभिव्यक्तप्रमातृचैतन्यतादात्म्याभावान्नापरोक्षत्वम्, ततः तदनुमितिरपि नापरोक्षा । एवं शब्दादिजन्यज्ञानमपीत्यर्थः ।

यदुक्तमपरोक्षार्थविषयज्ञानस्यापरोक्षत्वे आत्मादिविषयानुमितेरप्यपरोक्षत्वापात इति तदिष्टमित्याह--अर्थमुखेति । यदप्युक्तं स्पृष्टवह्नेः शब्दादिजन्यौष्ण्यज्ञानस्यापरोक्षत्वे तत्र स्पार्शनत्वमपि स्यादिति । तदयुक्तम् । स्पर्शनेन्द्रियजन्यत्वस्यैव तत्प्रयोजकत्वादित्याह--अत एवेति ।

एवं तर्हि योगिज्ञानस्य विप्रकृष्टविषयस्य प्रत्यक्षता न स्यादित्यत आह--न चेति । तस्य ज्ञानत्वमङ्गीकृत्य सन्निकर्षयोग्यविषये प्रत्यक्षमन्यत्र परोक्षम्, तदित्याह--तस्यापीति । व्यवहितेऽपीति ।

अपरोक्षार्थविषयज्ञानत्वात्, घटादिप्रत्यक्षवत्, न चेन्द्रियजन्यत्वमुपाधिः। त्वदभिमताजन्यप्रत्यक्षे सुखादिप्रत्यक्षे च साध्याव्यापकत्वात्।

न च जन्यज्ञानस्य परोक्षत्वाभावे इन्द्रियजन्यत्वमुपाधिः। जन्यज्ञानस्य परोक्षत्वे लिङ्गजन्यत्ववत् तस्याप्यप्रयोजकत्वात्। वृत्तिज्ञानेऽपरोक्षार्थविषयत्वस्यैवापरोक्षतारूपत्वेन तस्य परोक्षत्वाभावव्याप्तत्वाच्च।

अत एव न शब्दाजन्यत्वमुपाधिः तत्त्वमस्यादिवाक्यजन्यज्ञानस्यापरोक्षत्वाभावेऽविद्यानिवृत्त्यभावादनिर्मोक्षप्रसङ्गश्च। वाक्यत्वानुमानं चाप्रयोजकम्, उक्तप्रतिकूलतर्कपराहतं च, दशमस्त्वमसीत्यादौ व्यभिचारी च।

दशमस्त्वमसीत्यादेरपरोक्षज्ञानजनकतानिरूपणं

तथाहि—'दशमस्त्वमसि' इति वाक्यश्रवणानन्तरं तत्राज्ञाननिवृत्तिः तत्पूर्वं नेत्यनुभवसिद्धम् अपरोक्षज्ञानमेवाज्ञाननिवर्तकमिति विभागप्रक्रियायामुक्तम्।

---

योगजधर्माकृष्टस्य चक्षुषो व्यवहितेनापि संयोगसंभवादिति भावः।

अनुद्भूते इति। अनुद्भूते तु संस्कारजनकत्वसंभवात् स्मृतिरेवेति भावः। ईश्वरोपदेशजन्यत्वे लिङ्गमाह—अत एवेति। योगजधर्मप्रत्यासत्तिमदिन्द्रियादेव सर्वविषयज्ञानोत्पत्तावतीतादिज्ञानार्थे योगिनां ध्यानादिकं न स्यादित्यर्थः। योगजधर्मजन्यस्य ज्ञानत्वमेव नास्ति कुतोऽपरोक्षत्वादिकमित्यभिप्रेत्याह—धर्मविशेषेति। ज्ञानापरोक्षताया अर्थापरोक्षत्वप्रयुक्तत्वसाधनफलमाह—तस्मादिति।

अत्र वाक्यजन्यमित्यपि पक्षविशेषणं द्रष्टव्यम्। ततश्च ध्यानपरिपाकसहितमनःप्रसूतसाक्षात्कारमादाय न सिद्धसाधनम्। विधिवाक्यजन्यज्ञाने बाधवारणाय—तत्त्वमसीत्यादि। सुखादिप्रत्यक्ष इति। सिद्धान्ते तस्य साक्षिरूपतयेन्द्रियजन्यत्वाभावादित्यर्थः। जन्यज्ञानत्वे सति यत्र परोक्षत्वाभावः तत्रेन्द्रियजन्यत्वमिति पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरित्याशङ्क्याह—न च जन्येति। परोक्षज्ञानवदपरोक्षज्ञानस्यापि विजातीयानेककरणजन्यत्वसंभवादलिङ्गजस्यापि परोक्षत्ववदनिन्द्रियजन्यस्यापि तदभावोपपत्तेः, तत्त्वेनेन्द्रियजन्यत्वं प्रयोजकमित्याह—जन्येति। अपरोक्षार्थविषयताव्यतिरेकेण ज्ञानापरोक्षताया दुर्निरूपत्वात् तस्य परोक्षत्वाभावेन व्याप्ततया पक्षेऽपि साध्यसिद्धेः, तत्रोपाधेः साध्यव्यापकत्वभङ्ग इत्यभिप्रेत्याह—वृत्तिज्ञान इति। उक्तयुक्तितः उपाध्यन्तरमप्ययुक्तमित्याह—अत एवेति।

किञ्चौपनिषदे ब्रह्मणि शाब्दापरोक्षाभावे तदावारकाविद्यानिवृत्तिर्न स्यात् परोक्षज्ञानस्य तदनिवर्तकत्वात् ततश्चानिर्मोक्षापात इत्याह—तत्त्वमसीति।

परोक्तप्रतिपक्षानुमानं दूषयति—वाक्यत्वेति।

व्यभिचारमेवोपपादयितुं दशमत्वादावपरोक्षज्ञानमावश्यकमित्याह—तथाहीति। दशमत्वादेरिन्द्रिययोग्यत्वात् तज्जन्य एव तत्साक्षात्कारोऽस्त्वित्यत आह—तत्रेति।

**तत्रेन्द्रियादपरोक्षज्ञानं शब्दाद् वेति विवेचनीयम्, यदीन्द्रियं तज्जनकं तदा वाक्यं व्यर्थम्। ततश्च वाक्यश्रवणाय यत्नो न स्यात्। वाक्यार्थज्ञानसहकृतमिन्द्रियं तद्धेतुरिति चेत् ? न, वाक्यार्थज्ञानं विनापि क्वचिद्दर्शनेन व्यभिचारिणि तत्र तस्याहेतुत्वात्। शाब्दसाक्षात्कारश्च न शब्दव्यभिचारी।**

**अथ विशिष्टज्ञाने विशेषणज्ञानतया वाक्यार्थज्ञानमपि तत्र हेतुरिति चेत्, तर्हि दशम इत्येतावन्मात्रश्रवणेऽपि विशिष्टधीप्रसङ्गः। प्रकारान्तरेण तज्ज्ञानेऽपि स्वस्मिन् दशमत्वज्ञानाभावाच्च। तस्माद् वाक्यादेव तत्रापरोक्षानुभवः। एवं रत्नतत्त्वादावपि। ततः 'तत्त्वमसि' वाक्यार्थविषयज्ञानमपरोक्षम् अविद्यानिवर्तकत्वात् संप्रतिपन्नवत्। न चासिद्धिः, तदन्यस्याभावेन तस्यैव तन्निवर्तकत्वात्।**

मनसः ब्रह्मसाक्षात्कारजनकत्वनिरासः

**यत्तु ध्यानपरिपाकसहकृतमनस एवात्मसाक्षात्कार इति तन्न, मनसोऽकरण-**

---

किमिन्द्रियमात्रं तज्जनकम्, उत, उपदेशसहकृतम् ? अद्ये दोषमाह—यदीति। द्वितीयं शङ्कते—वाक्यार्थेऽति। उपदेशं विनापि घटादावैन्द्रियकज्ञानदर्शनेन तत्र तस्यानियतत्वात्, रासभादिवत् तस्येन्द्रियसहकृतत्वमयुक्तम् इति परिहरति—न वाक्येति।

तर्हि साक्षात्कारस्यापि शब्दं विना दर्शनात् तत्रापि तस्य हेतुता न स्यादित्याशङ्क्य चक्षुरादिवत्तस्य साक्षात्कारविशेषनियतत्वाद्धेतुतेत्याह—शाब्देति। दशमत्वविशिष्टज्ञानस्येन्द्रियजत्वेऽपि तज्जनकविशेषणज्ञानाय वाक्यापेक्षेति शङ्कते—अथेति। विशेषणज्ञानस्य पदमात्रेणापि संभवात् तावता विशिष्टधीप्रसङ्गेन वाक्यवैय्यर्थ्यापात इत्यभिप्रेत्याह—तर्हीति।

किञ्च स्मरणादिरूपे दशमत्वज्ञाने सत्यपि दशमोऽहमिति साक्षात्काराभावात् तस्योपदेशजन्यत्वमावश्यकमित्याह—प्रकारान्तरेणेति।

परोक्तदृष्टान्तोऽप्यसंप्रतिपन्न इत्याह—एवमिति। इन्द्रियव्यापारे सत्यपि रत्नतत्त्वसाक्षात्कारानुदयादुपदेशज एव स इत्यर्थः।

पूर्वानुमानेन परोक्षत्वनिषेधमुखेनापरोक्षत्वं साधितम्, सम्प्रति साक्षादेव साधयति—तत इति।

तत्त्वमादिवाक्यजज्ञानस्याविद्यानिवर्तकत्वमसिद्धं वाक्यान्तरजज्ञानेन तददर्शनादित्यत आह—न चेति। तदन्यस्येति। वाक्यजज्ञानादन्यस्य ब्रह्माज्ञाननिवर्तकत्वाभावेनेत्यर्थः।

मानससाक्षात्कारस्य मूलाज्ञाननिवर्तकत्वात् कथमन्यस्याभाव इत्येतदनूद्य दूषयति—यत्त्वित्यादिना। अकरणत्वादिति। कामः संकल्प इत्यादिना मनसो बुद्ध्यादिपरि-

त्वात्। "यन्मनसा न मनुते" इति श्रुतिश्च मनस आत्मसाक्षात्कारे करणत्वं निषेधति। 'मनसा ह्येव पश्यति' इत्यादिश्रुतिश्च चित्तैकाग्र्यपरा न तु तत्करणत्वपरा।

तृतीयाया हेतुत्वमात्रेऽप्युपपत्तेः। न च 'यन्मनसा न मनुते' इति श्रुतिः, केवलमनोगम्यत्वं निषेधतीति वाच्यम्। येनाहुर्मनोमतमिति वाक्यशेषे मनोमात्रोपादानात् पूर्वमपि तस्यैव ग्रहणात्। 'यतो वाच' इति श्रुतिस्त्वप्राप्येति विशेषणाच्छक्तिनिषेधे व्यवस्थाप्यते शक्तेरेव शब्दस्यार्थप्राप्तित्वात्। लक्षणायाः शक्यसंबन्धरूपत्वात्।

तस्मादस्मदभेदार्थविषया धिषणा हरेः।
अपरोक्षाऽक्षजा बुद्धिर्यथा वेदान्तवाक्यजा॥ इति॥

सर्वस्यवेदस्य र्थपरता पूर्वपक्षः निराशश्च

ननु सर्वस्य वेदस्य कार्यपरत्वान्न ब्रह्मणो वेदार्थता; कुतः तस्य तदेकार्थतेति। न। वेदान्ता हि सिद्धपरा एव तेभ्यस्तदवगमात्, सत्याविवाक्यात् कार्यस्या-

---

णामिताभिधानात् तस्य करणत्वं विनाऽनुपपन्नज्ञानाभावाच्चेति भावः।

मनस आत्मज्ञानकरणत्वं श्रुत्यन्तरविरुद्धं चेत्याह—यन्मनसेति। मनसोऽकरणत्वमपि श्रुतिविरुद्धमित्याशङ्क्याह—मनसेति। तृतीयाश्रुत्या करणत्वमेवोच्यत इत्याशङ्क्य श्रुत्यन्तरविरोधेन सा हेतुत्वपरतया नेया, तच्चोपादानत्वेनाप्युपपद्यत इत्यभिप्रेत्याह—तृतीयेति। श्रुत्यन्तरविरोधान्निषेधकश्रुतिरेवान्यपराऽस्त्वित्यत आह—न चेति।

येनाहुर्मनो मतमिति चैतन्यदृश्यतयोक्तमनस एव तद्ग्राहकत्वनिषेधात् मनोमात्रस्य च तद्दृश्यत्वात् पक्वमनसोऽपि न तद्ग्राहकतेत्याह—येनाहुरिति।

ब्रह्मणि शब्दप्रवृत्तेरपि निषिद्धत्वात् कथं शाब्दज्ञानगोचरत्वमित्यत आह—यत इति। अप्राप्येति शक्तिनिषेधेन ब्रह्मणि निवृत्त्यभिधानेन वृत्यन्तरेण प्रवृत्तिरनुमता, इतरथा औपनिषदत्वश्रुतिविरोधादिति भावः।

वादार्थमुपसंहरति श्लोकेन—तस्मादिति। हरेरस्मदभेदविषया वेदान्तवाक्यजा धिषणा बुद्धिरिति योजना।

"आम्नायस्य क्रियार्थत्वात्", "विधिना त्वेकवाक्यत्वाद्" "दृष्टो हि तस्यार्थः कर्मावबोधन" मित्यादिना वेदस्य कार्यपरतावगमान्न सिद्धब्रह्मणः शास्त्रप्रमाणकतेति शङ्कते—नन्विति।

विधिप्रकरणपठितार्थवादादेरेव विध्येकवाक्यतया तत्र कार्यपरत्वमुक्तम्, न तु वेदान्तानां तेषामुपक्रमादिभिः सिद्धब्रह्मपरत्वस्यैवावधारणादित्यभिप्रेत्य परिहरति—

**नवगमात् ततोऽनवगम्यमानस्यापि तदर्थत्वेऽतिप्रसङ्गात्। अध्याहारस्यान्याय्यत्वात्, कार्ययोग्यार्थानवगमे तदयोगात्। पदार्थमात्रसंसर्गस्य नियोगं विनाऽनुपपत्त्यभावात्।**

**लोके सिद्धेऽपि शब्दानां व्युत्पत्तेः। शास्त्रत्वं हितशासनात् प्रवृत्तिनिवृत्तिशासनस्य प्रत्येकसमुदायाभ्यामतल्लक्षणत्वात्। हितासंस्पृष्टतदुपदेशस्य शास्त्रत्वेऽतिप्रसङ्गाच्च, हितं च सुखमेव। अन्यत् तत्प्रसादात् तथेति तदात्मकं ब्रह्म हितम्।**

---

न वेदान्त इति।

अध्याहृतकार्यपदान्वितात् तत्त्वमादिवाक्यात् कार्यावगममाशङ्क्याह—अध्याहारस्येति। पूषा प्रपिष्टभाग इत्यादाविवात्राप्यध्याहारोऽन्याय्य इत्यत आह—कार्येति। तत्र द्रव्यदेवतासंबन्धस्य विध्यविनाभूतस्यावगमात् तदुपपत्तये विध्यध्याहारो युक्तः, इह तु विध्यविनाभूतस्य कस्यचिदनवगमाद् विधिकल्पनमनुचितमित्यर्थः। वैदिकपदार्थसंसर्ग एव विधिं विनाऽनुपपन्नः तत्कल्पक इत्यत आह—पदार्थेति। लौकिकपदार्थसंसर्गवद्वैदिकपदार्थसंसर्गेऽपि कार्यान्वयनियमाभावेन तेन विनाऽनुपपत्त्यभावादित्यर्थः।

लोके कार्यान्वितस्वार्थे पदानां व्युत्पत्तेर्लौकिकानामेव पदानां वेदेऽपि बोधकत्वाल्लोके वेदे वा कथं कार्याननन्वितार्थे शब्दस्य प्रामाण्यमित्यत आह—लोक इति।

'पुत्रस्ते जातः' इति वाक्यश्रवणानन्तरं पितरि हर्षमुपलभ्य तत्कारणं सिद्धपुत्रजन्मज्ञानं तद्धेतुश्च वार्ताहारप्रयुक्तशब्दएवेति निश्चितवतो भवति सिद्धेऽपि पदव्युत्पत्तिः।

न च पितुर्हर्षकारणान्तरस्यापि संभवात् पुत्रजन्मैव तद्धेतुरिति निर्णयासंभव इति वाच्यम्; पुत्रजन्मनि हर्षहेतौ दृष्टे सति तत्सूचके पुत्रपदाङ्कितवाससि च सति हेत्वन्तरकल्पनायोगात्। तदुक्तम्—

"दृष्टचैत्रसुतोत्पत्तेस्तत्पदाङ्कितवाससा।
वार्ताहारेणायातस्य परिशेषविनिश्चितेः॥" इति।

किञ्च 'गामानय' इत्यादिप्रयोगेष्वप्यन्वितस्वार्थ एव लाघवाच्छक्तिगोचरता गृह्यते कार्यान्वितस्याप्युपस्थितिमात्रेण शक्तिगोचरत्वेऽतिप्रसङ्गादिति भावः।

प्रवृत्तिनिवृत्त्युपदेशस्यैव शास्त्रत्वाद् वेदान्तानां सिद्धपरत्वे प्रवृत्त्याद्यनुपयोगितया शास्त्रत्वं न स्यादित्यत आह—शास्त्रत्वमिति। अतल्लक्षणत्वादिति। प्रत्येकस्याव्याप्तत्वात् समुदायस्यासंभवादित्यर्थः।

किञ्च त्वयापि हितसंसृष्टप्रवृत्त्यादिशासनस्य शास्त्रत्वं वाच्यम्, अन्यथा चैत्यवन्दनाद्युपदेशस्यापि शास्त्रत्वापातात् तथा च लाघवाद्धितशासनमेव शास्त्रमित्यप्रेत्याह—हितासंस्पृष्टेति। पुत्रपश्वादेरेव हितत्वाद् ब्रह्मपरवेदान्तानां कथं हितशासनत्वमित्यत आह—हितं चेति। सिद्धार्थे शब्दप्रामाण्यस्य निपुणतरमाचार्यैरेवोपपादितत्वान्नात्र यत्यत इत्याह—एतच्चेति।

**अत एव वेदान्ताः स्वत एव पुरुषार्थनिष्ठाः। एतच्च सर्वं शास्त्रे निरूपितम्, न चात्र वादिनोऽत्यन्तं विवदन्त इति नात्र निरूप्यते।**

विधिपरवेदभागस्याप्यद्वैते तात्पर्यम्

**एवं विधिभागोऽप्यद्वैतब्रह्मावगतिं प्राप्यैव जैमिन्याद्यभिप्राय इव विश्राम्यति। जैमिन्यादेरद्वैतब्रह्मावगतौ तात्पर्याभावे प्रतारकत्वमसर्वज्ञत्वं वा भवेत्। न चैतद् युज्यते। न हि क्रियेव तत्त्वं विकल्प्यते। अस्ति च तत्प्रणीतशास्त्राणामधिकारसिद्धिदेहाद्यतिरिक्तस्थाय्यात्मादिनिरूपणद्वारेण देहाद्यतिरिक्तब्रह्मनिरूपणे उपायभावः। गुण्यात्मनिरूपणं तु तदर्थमनुभवदर्शितभेदमाश्रित्य न त्वभेदव्युदासाय। किञ्चिच्च तत्प्रमेयं धर्मद्वारोपकारकम्।**

**न चैवं वेदान्तप्रमेयाद्वैतोदासीनब्रह्मावगतिः क्वचिच्छास्त्र उपपुज्यते। न चोपकारं विना शेषत्वम्। व्यासभगवत्पादादेरसर्वज्ञत्वकल्पनाचाक्षपादादेः**

---

वेदान्तानामद्वैतब्रह्मपरत्वमुक्त्वा विधिनिषेधपरवेदभागोऽपि तात्पर्येण जैमिन्यादिप्रणीतशास्त्रवदद्वैतब्रह्मपर एवेत्याह—एवमिति। दृष्टान्तासंप्रतिपत्तिमाशङ्क्याह—जैमिन्यादेरिति। प्रतारकत्वमिति।

यदि जैमिन्यादयो वेदान्तार्थमद्वैतं ज्ञात्वा भेदादिकं प्रतिपादयेयुः, तर्हि प्रतारका भवेयुः, अज्ञात्वा चेदसर्वज्ञा भवेयुरित्यर्थः।

ननु जैमिन्याद्युक्तप्रमेयमपि तात्विकमेव तथा च न तेषां प्रतारकत्वमित्यत आह——न हीति। सिद्धस्य वस्तुनः पुरुषभेदेन परमार्थतो विरुद्धानेकरूपत्वायोगादिति भावः। अद्वैतब्रह्मप्रतिपत्तौ जैमिन्यादिशास्त्रकृतोपकाराभावात् तस्य कथं तत्र पर्यवसानमित्यत आह——अस्ति चेति।

जैमिनिप्रणीतशास्त्रस्य धर्माधर्मनिर्णयतदनुष्ठानपरिवर्जनचित्तशुद्ध्यादिद्वारा मुमुक्षुत्वरूपाधिकारसिद्धिद्वारोपकारः।

गौतमादिप्रणीतशास्त्रस्य च देहात्मवादादिनिरासेन तदतिरिक्तस्थाय्यात्मेश्वरस्थापनम्।

कपिलशास्त्रस्य कर्तृत्वादिनिरसनेन त्वंपदार्थशोधनम्।

पातञ्जलशास्त्रस्य च साक्षात्कारोपायचित्तैकाग्र्यद्वारोपकारकत्वमिति भावः।

गौतमादिभिः परमात्मनः सगुणत्वमपि निरूपितम्, तस्य कुत्रोपयोग इत्यत आह——गुण्यात्मनिरूपणमिति। तदर्थमिति। देहादिभेदसिद्ध्यर्थमित्यर्थः।

एवमपि तत्र द्रव्यगुणादिव्युत्पादनं किमर्थमित्यत आह——किञ्चिच्चेति।

वेदान्तशास्त्रस्यैव शास्त्रान्तरशेषता किं न स्यादित्यत आह——न चैवमिति।

ननु वेदान्ता अपि द्वैतपरा एव व्यासादीनां तु भ्रान्त्याऽद्वितीये समन्वयाभिधानमिति चेन्न, तत्र बाधकमानाभावेन तज्ज्ञानस्य भ्रांतित्वायोगादित्यभिप्रेत्य विपक्षेऽतिप्रसङ्गमाह——व्यासेति। प्रसरं प्रवृत्ताववकाशम्, जैमिन्यादीनामद्वैतेऽभिप्रायाभावे तच्छा-

**किमिति न भवेत् ।**

**यदाहुः—**

**"प्रसरं न लभन्ते हि यावत् क्वचनमर्कटाः ।**
**नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे" ॥ इति ।**

शास्त्राणामद्वैताभिप्राये मीमांसकसम्मतिः

**तेषामुक्ताभिप्रायाभावे तानेवेयमसर्वज्ञत्वपिशाच्यभिभवेत् श्रुतिविरुद्धार्थत्वात्, तच्छास्त्राणाम् । तदुक्तं भट्टपादैः--इत्याह नास्तिकनिराकरिष्णुरात्माऽस्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन ॥ इति ।**

**गुरुणाऽप्युक्तम्—"यदुक्तं अहंकारममकारावात्मन्यनात्माभिमानाविति"; मृदितकषायाणामेवैतत् कथनीयं न कर्मप्रसङ्गिनामिति ।**

**गौतमोऽप्याह धर्मशास्त्रे—**

**"स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति" इति । तस्माद्वेदान्तव्याख्यातॄणामृषीणामद्वैतब्रह्मप्रतिपत्तावैकमत्यमेव । तदाहुः—**

**"अपि वात्स्यायनादीनां ब्रह्मण्येव समन्वयः' इति ।**

**विधिभागस्य च ब्रह्मणि विनियोगः 'सर्वे वेदा यत्पदमामनन्ति'--'वेदैश्च**

---

स्त्राणां भ्रांतिमूलत्वमेव श्रुतिविरुद्धार्थत्वादित्याह--तेषामिति । तेषामुक्ताभिप्राये तद्वचनमेव मानमित्याह--तदुक्तमिति ।

भाष्यकृच्छबरस्वामी देहाद्यात्मवादनिराचिकीर्षया तदतिरिक्तात्माऽस्तितामात्रं युक्त्यादिभिर्बोधितवान् तदात्मविषयबोधस्तु दृढत्वं निर्विचिकित्सात्मतां वेदान्तश्रवणादिनैव यातीत्यर्थः ।

अहंकारममकारौ अहंममेति प्रत्ययावात्मन्यनात्माध्यासादित्येतत् मृदितकषायाणां विशुद्धचित्तानामेव कथनीयम् । नतु कर्मप्रसङ्गिनां रागादिना कर्मासक्तानाम् । अत्र गुरुणा हेतुरुक्तः--द्वैपायनवचनादिति । तद्वचनं चोदाहृतं पञ्चिकायां शालिकानाथेन—

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् । जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ इति । सायुज्यमैक्यम् ।

ततश्च मीमांसकानामपि वेदान्तवेद्याद्वितीयात्मतत्त्वमनुमतमेव, तच्च धर्मादिनिर्णयाय प्रवृत्तैः तैस्तत्रानुपयोगान्न निरूपितमिति भावेनोपसंहरति—तस्मादिति ।

तदुक्तं स्कान्दे--अनूद्य द्वैतमद्वैतं प्रतिपादयति श्रुतिः । स्मृतीनां च पुराणानां भारतादेस्तथैव च ॥ "तथा शैवागमादीनां तर्काणां च द्विजोत्तमाः । अद्वैतनिष्ठतैवोक्ता न द्वैतपरता सदा ॥" इति ।

विधिभागस्य ब्रह्मप्रतिपत्तिशेषत्वे चित्तशुद्ध्यादिद्वारत्वे च किं मानमित्याकांक्षायामाह—विधिभागस्येति । विविदिषावाक्येनेति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदि-

सर्वैरहमेव वेद्यः' इति वचनात् सिद्धः। तस्य ब्रह्मणि विनियोगप्रकारश्च विविदिषावाक्येन दर्शितः। न चैतावता कार्यस्य प्राधान्यभङ्गः। तद्वाक्यावगतकर्त्रादिप्राधान्यस्यैवमप्यनपायात्। नह्यमात्यस्य राजशेषत्वं भृत्यादिकं प्रति शेषित्वविरोधि।

कार्यस्य वेदार्थत्वनिरासः

धात्वर्थातिरिक्तकार्यं च न वेदार्थः। कुतस्तस्य प्राधान्यम्? तथाहि--अस्ति लोके लिङादेः श्रेयः साधनत्वे कार्ये वा शक्तिः तथापि नापूर्वं वेदार्थः। तत्र लिङादेः शक्तिग्रहाभावात्।

ननु लोके गृहीतैव कार्ये शक्तिः वेदेऽपूर्वे पर्यवस्यति। यागादेः स्वर्गाद्यसाधनस्य तत्कामिकार्यत्वाभावादिति चेत्; न, लोक इव वेदेऽपि धात्वर्थस्यैव फलसाधनत्वेन कार्यत्वात्।

न चाशुविनाशिनो धात्वर्थस्य चिरव्यवहितस्वर्गादौ न साधनत्वं अव्यवहितपूर्वसमयवर्तिन एव साधनत्वादिति वाच्यम्। यतो येन विना काम्यमानं न सिद्ध्यति यदनन्तरं न कार्यान्तरापेक्षा तदेव स्वकृतियोग्यं कार्यं कामिन उपदिश्यते।

---

षन्ति', 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादिवचनेनेत्यर्थः। ननु विधिवाक्यप्रमेयस्य कार्यस्य ब्रह्मज्ञानशेषत्वे प्राधान्यं न स्यात्, ततश्च कृतिसाध्यं प्रधानं यत्तत्कार्यमिति तल्लक्षणविरोध इति नेत्याह—न चेति। स्वप्रकरणपठितकारकाद्यपेक्षयैव प्राधान्यं तल्लक्षणम्। तच्च ब्रह्मज्ञानशेषत्वेऽपि न विरुध्यत इति सदृष्टान्तमाह--तद्वाक्येति। पराभिमत कार्यमङ्गीकृत्येदमुक्तम्। वस्तुतस्तदेव नास्ति मानाभावादित्याह—धात्वर्थेति। लो॰ पदानां कार्ये व्युत्पत्तिमङ्गीकृत्यापि क्रियातिरिक्तकार्यं न वैदिकपदार्थ इत्युपपादयति--तथाहीति। लोके धात्वर्थरूपकार्ये शक्तिग्रहमुपजीव्य वेदे तदतिरिक्तकार्यसिद्धिरिति शङ्कते—नन्विति। 'स्वर्गकामो यजेत' इति वाक्ये स्वर्गकामिनः कार्यमुपदिश्यते स्वर्गकामी च तदेव कार्यतया वेत्ति यत्काम्यमानस्य साधनं भवति। यागस्तु क्षणभङ्गुरो न कालान्तरभाविस्वर्गसाधनमिति तदतिरिक्तमेव कामिकृतिसाध्यतयोपदिश्यत इति वेदे सर्वत्र क्रियातिरिक्तकार्यं लिङाद्यर्थं इति निश्चीयत इति भावः। लोके यथा भोजनादिक्रियैव फलसाधनमेवं वेदेऽपि यागादिक्रियैव कार्यतयोपदिश्यत इति दूषयति—न लोक इ॰त। यागादेः स्वर्गसाधनत्वे उक्तानुपपत्तिमुद्भाव्य निराकरोति—न चेति। काम्यसाधनमेव कामिकृतिसाध्यतयोपदिश्यत इति न नियमः। येन यागादेः कार्यताधीर्न स्यात्। किं तु अन्यदेवेति हेतुमाह—यत इति। न कार्यान्तरापेक्षेति। न यत्नान्तरापेक्षेत्यर्थः। सुधामरीचिमण्डलादिव्यावृत्तये कृतियोग्यमित्युक्तम्। लोकेऽव्यवहितत्वस्यापि प्रवृत्यन्तर्गतत्वदर्शनात् तदप्यावश्यकमित्याशङ्क्य गौरवान्नायमस्ति नियम

**तच्चाव्यवहितं व्यवहितं वा भवतु न त्वव्यवहितमेवेति नियमः, अव्यवहितत्व-भागस्य प्रवृत्तावनपेक्षत्वात्। अत एवौदनकाम्यसिद्धतण्डुलोऽवहननेऽपि प्रवर्तते सिद्धतण्डुलः पाक एव। एवं यागं विना न स्वर्गः, कृते च तस्मिन्नकामिनः कार्यान्तरमिति स एव स्वर्गकामिकृतिसाध्यः नापूर्वम् तस्यानुनिष्पादित्वात्।**

**किञ्च शक्तिमत्त्वं साधनत्वम्, न त्वव्यवहितपूर्वक्षणवर्तित्वं तन्तुरूपादेरपि तत्सत्त्वात्। न चानन्यथासिद्धत्वेन विशेषितं तत्साधनत्वलक्षणं, एकरूपान्यथासिद्धेरभावात् अनुगतलक्षणासिद्धेः। पूर्वक्षणस्याहेतुत्वप्रसङ्गाच्च। यागादेर्नियोगादिकं प्रत्यहेतुत्वापाताच्च।**

**न च तद्व्यापारस्य पूर्वक्षणवर्तित्वेनैव यागस्य साधनता तस्य ततोऽन्यत्वात्। न ह्यन्यस्याव्यवहितपूर्वसमयवर्तित्वमन्यस्य भवति। यागस्य स्वर्गाद्यव्यवहितपूर्वक्षणवर्तित्वलक्षणसाधनत्वं विनाऽपूर्वस्य तद्व्यापारत्वायोगाच्च। तज्जन्यत्वे सति तज्जन्यजनकस्यैव तद्व्यापारत्वात्। अन्यथा जनकत्वं स्यात्। रासभादेश्च तादृशशक्तिमत्त्वे न लौकिकं वैदिकं वा किञ्चिन्मानमिति न स पटादेः कारणम्।**

---

इत्याह—तच्चेति। सामान्यत उक्तरूपं प्रकृतेऽपि योजयति—एवमिति। वाजिनवन्नान्तरीयकतया सिद्धत्वादपि नापूर्वं कार्यतयोपदिश्यत इत्याह—तस्येति। अव्यवहितताऽघटितं साधनत्वमङ्गीकृत्य कामिकृतिसाध्यताप्रयोजकं रूपं यागादावप्यस्तीत्युक्तम्, संप्रति कार्यानुकूलशक्तिमत्त्वमेव साधनत्वम्, तच्च यागादेरप्यस्तीत्यभिप्रेत्याह—किंचेति।

अत्र च कारणताग्राहकमानमेव प्रमाणमित्यभिप्रेत्य पराभिमतं कारणत्वं निराकरोति—नत्वित्यादिना। एकरूपान्यथासिद्धेरभावादिति। यदवच्छेदेन यस्यान्वयव्यतिरेकावित्याद्यन्यथासिद्धिलक्षणानां तन्तुरूपादावव्याप्तत्वादन्यस्य वाऽनुगतस्य दुर्निरूपत्वादित्यर्थः। अहेतुत्वप्रसङ्गादिति। पूर्वक्षणे पूर्वक्षणाभावादित्यर्थः। किञ्चैवं गुरुमते व्यवहिततयाअनन्वितानामाग्नेयादीनामधिकारापूर्वकारणता न स्यात्। भट्टमते च तेषां स्वर्गसाधनतापि न स्यात्, व्यवहितत्वादित्याह—यागादेरिति।

नन्वाग्नेयादिजन्यावान्तरापूर्वाणां तद्व्यापाररूपाणां नियोगादिकं प्रत्यव्यवहितत्वेन तेषां तत्साधनतेति तत्राह—न चेति। स्वस्य स्वव्यापारस्य वाऽव्यवहितपूर्ववर्तित्वमेव कारणत्वम्। ततश्च यागादिव्यापारस्य नियोगाद्यव्यवहितत्वान्न दोष इत्याशङ्क्य यागादेरुक्तकारणतां विना तज्जन्यापूर्वस्य व्यापारत्वासिद्धेः परस्पराश्रयापात इत्यभिप्रेत्याह—यागस्येति। व्यापारलक्षणे व्यापारजन्यस्य तज्जनकजन्यत्वानपेक्षायां दोषमाह—अन्यथेति। स्वोक्ते लक्षणेऽतिप्रसङ्गो नेत्याह—रासभादेरिति। पराभिमतलक्षणेऽ-

अस्तु वाऽनन्यथासिद्धनियतपूर्ववर्तित्वमात्रं साधनत्वम्, तथापि न यागस्य कार्यताक्षतिः। तथा चाविद्यमानेऽपि यागे तच्छक्त्यादिरूपसाधनत्वं कार्यता वा श्रुत्या प्रमापयितुं शक्यत इति नालौकिककार्यव्युत्पत्तिः। अस्तु वाऽऽग्नेयादेः परमापूर्वं इव व्यवहितस्यापि साधनता। यद्यपूर्वत्वात् तस्य क्रियानन्तरं योग्यत्वादन्वयबोधः तर्हि सुखत्वेन योग्यता प्रकृतेऽपि तुल्या।

यदि स्वर्गत्वेन कालान्तरभावित्वनियमः, तर्हि स्वर्गकामकृतिसाध्यापूर्वस्यापि तथात्वम्। आग्नेयादिसाध्यपरमापूर्वस्य कालान्तरभावित्वप्रतिसंधाने त्वदुक्तयोग्यताज्ञानादन्वयबोधासंभवात्। अपगोरणवद्वाऽपूर्वव्यवहितसाधनतयाऽन्वयबोधोऽस्तु, स्वर्गकामपदसमभिव्याहारेणापूर्वद्वारस्याप्युपस्थितत्वात्। नियोगवाक्यार्थवादेऽपि लिङस्तत्र लक्षणैवोचिता न प्रथमावगतिविरुद्धा शक्तिः।

न च वाच्यार्थसंबन्धितया मानान्तरेणापूर्वस्यानवगमान्न तत्र लक्षणेति

---

व्यवहितत्वविशेषणं व्यर्थमित्यभिप्रेत्योक्तमङ्गीकरोति—अस्तु वेति। अस्मिन्नपि पक्षे व्यवहितस्यापि यागादेः स्वर्गसाधनत्वसंभवात्, तत्कामिकृतिसाध्यतोपपत्तिरित्याह—तथापीति। साधनत्वं कार्यता वेति मतभेदेनोक्तम्। किञ्च गुरुमतेऽपि न यागस्य स्वर्गसाधनतानुपपत्तिराग्नेयादीनां व्यवहितपरमापूर्वसाधनत्ववत्तदुपपत्तिरित्याह—अस्तु वेति। अवान्तरापूर्ववत् परमापूर्वस्याप्यपूर्वत्वात् क्रियानन्तरभावित्वयोग्यतया क्रियायास्तत्साधनत्वप्रतिपत्तिरित्याशङ्क्य साम्येन परिहरति—यदीति।

स्वर्गत्वेनोपस्थितस्य कालान्तरीयत्वप्रतिसंधानान्न तस्य क्रियानन्तरभावित्वयोग्यतेत्याशङ्क्याधिकारापूर्वस्यापि तत्वेन कालान्तरभावित्वनियमान्न क्रियानन्तरभावित्वं योग्यतेत्याग्नेयादेस्तत्साधनत्वप्रतिपत्तिर्न स्यादित्याह—यदि स्वर्गत्वेनेत्यादिना। गुरुमते यथाऽपगोरणस्य ब्राह्मणं प्रति हननोद्यमनस्यौपादानिकं कालान्तरीयशतयातनासाधनत्वं दुरितापूर्वद्वारा निर्वाह्यते, एवं यागस्यापि कल्पितापूर्वद्वारा स्वर्गसाधनतोपपत्तिरित्याह—अपगोरणेति। एवं क्रियातिरिक्तं कार्यं न वेदार्थ इत्युक्तम्, संप्रति वेदार्थत्वमभ्युपेत्य तत्र वैदिकलिङादिपदानां पराभिमतां शक्तिं निराकरोति—नियोगेति। शक्यसंबधितया मानान्तरावगते तीरादौ गङ्गादिपदस्य लक्षणादर्शनादपूर्वस्य च मानान्तरेण तथानवगमान्न तत्र लक्षणेत्याशङ्क्य वाच्यसंबन्धितयाऽवगतिमात्रं लक्ष्यस्यापेक्षितम्, न तु मानेनापि तदवगतिर्गौरवादित्यभिप्रेत्याह—न चेत्यादिना। नियोगे लिङादिपदस्य शक्तिग्रहात् पूर्वमवगतिमात्रमेवासिद्धमित्याशङ्क्य तर्करूपावगतिस्तवापि

वाच्यम्, लक्ष्यस्य हि वाच्यार्थसंबन्धितयाऽवगतिमात्रमपेक्ष्यते न तु मानेनावगतिः। अस्ति चात्र विमर्शरूपाऽवगतिः। अन्यथा क्रियानियोगश्चेत्यनेकार्थत्वकल्पना-प्रसंगात्। न च लोके लिङ्गादेर्लक्षणेति वाच्यम्, तत्र प्रथमावगतशक्तिज्ञानस्याबाधि-तत्वात्।

किञ्च लोके क्रिया तदतिरिक्तं वा लिङ्गादिना लक्ष्यते ? नाद्यः; तस्या धातुनोपस्थितत्वात्। नान्त्यः; लोके क्रियाकारकातिरिक्तार्थाप्रतीतेः। कार्यत्वं धर्मो लोके लिङादिना लक्ष्यत इति चेत्, तर्हि वेदेऽपि तदेव लिङर्थोऽस्त्विति लिङादिरुभयत्र मुख्यः। अपर्यवसानाच्च विशेषलाभः। अपूर्वस्यापि व्युत्पत्तिदशायां सामान्यसंबन्धितयाऽवगमात्।

कार्यत्वस्य निर्वचानर्हत्वाच्च न लिङर्थता

किञ्च किमिदमपूर्वस्य कार्यत्वम्, न तावत् कृतिसाध्यत्वम्, प्रधानकिया-जनककृतेर्ब्राह्मणसन्तर्पणानन्तरभाविनियोगात् प्रागेव विनष्टत्वेन तस्य तदसाध्यत्वात्। ब्राह्मणसन्तर्पणान्ता कृतिरेकेवेति चेत् न व्यक्तिभेदस्य प्रत्यक्षत्वात्। अपि चैवं यागेऽपि कार्यता स्यात्। नापि कृतीप्सितत्वं कार्यत्वम्, तद् यदि कृत्या साधयामीतीच्छाविषयत्वम्, तन्न; तद्ज्ञानस्याप्रवर्तकत्वात्। न

संमताऽस्तीत्याह—अस्तीति। लक्षणया विनियोगज्ञाने संभवति लिङ्गदेस्तत्रापि शक्ति-कल्पने गौरवमित्याह—अन्यथेति। लोके धात्वर्थकार्यलक्षणाभ्युपगमान्न गौरवमित्या-शङ्क्याह—न चेति। लोके लिङादिलक्ष्यस्य दुर्निरूपत्वादपि न तत्र लक्षणेत्याह—किञ्चेति। द्वितीयं कल्पमादाय शङ्कते—कार्यत्वमिति। कार्यत्वधर्मस्य लौकिकवैदिक-कार्येष्वनुगतस्यैकस्यैव सर्वत्र लिङादिपदशक्यत्वसंभवान्न कुत्रापि लक्षणाऽऽस्थेयेति परि-हरति—तर्हीति। कार्यत्वधर्मस्यैव लिङाद्यर्थत्वे कथं लोकवेदयोर्व्यक्तिविशेषलाभ इत्या-शङ्क्य जातेः पदार्थत्वमते व्रीह्यादिविशेषवत्तल्लाभ इत्याह—अपर्यवसानादिति। पदशक्यसामान्याश्रयतयाऽवगतस्यैवापर्यवसानात्। लाभे नियोगस्य च तथा पूर्वमनवगमात् कथं अपर्यवसाभात् तल्लाभ इत्याशङ्क्य विमर्शावस्थायां तस्यापि तथाऽवगमान्न दोष इत्यभिप्रेत्याह—अपूर्वस्येति। क्रियातिरिक्तकार्ये नियोज्य-प्रवृत्त्युपयोगिकार्यत्वमपि दुर्निरूपमित्याह—किञ्चेति। किं कृतिसाध्यत्वं कृतीप्सित-तत्वं वा कृतिसाध्यत्वे सतीष्टसाधनत्वं वेति किंशब्दार्थः। आद्यमपवदति—न तावदिति। अत्र किं नियोज्यनिष्ठाशेषकृतिसाध्यत्वमभिप्रेतम्, उत यत्किंचित्कृतिसाध्यत्वम् आद्यम-संभवेन दूषयति—प्रधानेति। एकस्मिन् प्रयोगे कृतेरेकत्वान्नोक्तदोष इत्याशङ्क्यानुभव-विरोधेन परिहरति—ब्राह्मणेत्यादिना।

द्वितीये दोषमाह—अपि चेति। यागस्यापि कतिपयकृतिसाध्यत्वादिति भावः। द्वितीयं दूषयति—नापीति। अत्रापीप्सितत्वमिच्छाविषयत्वमिष्टत्वं वेत्यभिप्रेत्याद्यमनूद्य दूषयति—तद्यदीति। अप्रवर्तकत्वादिति। प्रवर्तकज्ञानविषयस्यैव त्वया कार्यत्वाभ्युपगमा-

हीच्छाविषयत्वज्ञानं प्रवर्तकम्; चिकीर्षानुकूलज्ञानस्यैव प्रवर्तकत्वात्। यागस्यापि तादृशेच्छाविषयत्वाच्च। नापि कृतिसाध्यत्वे सतीष्टत्वं कृतीप्सितत्वम्, इष्टत्वस्येच्छाविषयत्वरूपत्वे दत्तदोषानिस्तारात्। फलरूपत्वे चापूर्वे तदसंभवात्।

अथ कृतिसाध्यत्वे सतीष्टसाधनत्वं तदिति चेत्, न, यागस्याप्येवंरूपत्वात्।

यत्तु कृतिसाध्यं प्रधानं कार्यम्। स्वर्गस्तु न कृतिसाध्यः किन्तु क्रियासाध्यः यागश्च न प्रधानम् फलतत्साधनयोरन्यतरत्वाभावादिति। तदप्यत एव निरस्तम् यागस्याप्युक्तरूपत्वात्। अपूर्ववत्, स्वर्गस्यापि कृतिसाध्यत्वात् स्वर्गवदपूर्वस्य तदभावाच्च।

नियोगस्य वाक्यार्थे प्राधान्यमितिशंका।

यदपि स्वर्गकामवाक्ये स्वर्गः पुरुषविशेषणतयाऽवगम्यमानस्तद्द्वारा नियोगं प्रति गुणभूत एव। नियोगस्तु स्वसिद्ध्यनुकूलस्वर्गसाधनमपि प्रत्ययार्थतया

---

दस्य चातथात्वादित्यर्थः। तस्याप्रवर्तकत्वमुपपादयति—न हीति। ज्ञानस्य चिकीर्षाद्वारा प्रवृत्तिहेतुत्वाच्चिकीर्षाविषयत्वज्ञानस्य च तदनन्तरभावित्वान्न प्रवर्तकतेत्यर्थः। अतिव्याप्तिमप्याह—यागस्येति। द्वितीयमपवदति—नापीति। अत्रापीष्ठत्वमिच्छाविषयत्वं फलरूपत्वं वा ? नोभयथापीत्याह—इष्टत्वस्येत्यादिना। अपूर्वे तदसंभवादिति। स्वतः काम्यमानस्यैव फलत्वादपूर्वस्य चातथात्वादिति भावः।

तृतीयं शङ्कते—अथेति। यागादेरपीष्टसाधनताया उपपादितत्वात् कृतिसाध्यत्वाच्च तत्रातिव्याप्तिरिति दूषयति—न यागस्येति। शालिकनाथोक्तकार्यलक्षणमनुवदति—यत्त्विति। अत्र कृतिसाध्यपदेन स्वर्गेऽतिव्याप्तिनिरासः। प्रधानपदेन च याग इति परैरुक्तम्, तदप्यनुवदति - स्वर्गस्त्विति। तदप्यतिव्याप्तत्वादयुक्तमित्याह—तदपीति। उक्तरूपत्वादिति। यागस्यापि फलसाधनतया प्रधानत्वात् कृतिसाध्यत्वाच्चेत्यर्थः। किं चात्र कृतिसाध्यत्वमात्रमभिप्रेतमुत साक्षात् कृतिसाध्यत्वम्? आद्ये स्वर्गस्यापि परंपरया कृतिसाध्यत्वादतिव्याप्तिरित्याह—अपूर्ववदिति।

द्वितीयेऽपूर्वस्यापि यागद्वारा कृतिसाध्यत्वादव्याप्तिरित्याह—स्वर्गवदिति। नियोज्यस्य नियोगशेषत्वात् तद्विशेषणं स्वर्गोऽपि तच्छेष इति न तस्य प्राधान्यं ततो न तत्रातिव्याप्तिरिति चोद्यमनुवदति—यदपीति। साधनस्य साध्यशेषत्वेन नियोगस्यैव स्वर्गशेषता किं न स्यादित्याशंक्याह—नियोगस्त्विति। नियोगस्य तावत् प्रत्ययार्थतया

प्रधानम्। तदुक्तम्—

आत्मसिद्धयनुकूलस्य नियोज्यस्य प्रसिद्धये।
कुर्वत् स्वर्गादिकमपि प्रधानं कार्यमेव नः॥ इति।

लोके तु शब्दस्य प्रमाणान्तरापेक्षत्वादारोग्यार्थी भेषजं पिबेदित्यारोग्यादेः क्रियाकार्यं प्रति शब्दतो गुणत्वेऽपि प्रमाणान्तरतः फलस्यैव स्वत उद्देश्यता प्राधान्यावगमात्। क्लेशरूपक्रियायाः स्वतः प्राधान्यायोगाच्च विपरीत एव गुणप्रधानभावः। अत एव तस्य न कृतिं प्रत्यपि प्राधान्यम्, न हि कृतिः स्वर्गमुद्दिश्य प्रवृत्ता, किन्तु नियोगमुद्दिश्य, क्रियापेक्षया प्राधान्यं तु न लक्षणमिति।

उक्तशंकापरिहारः

तन्न, तथाहि—सत्यं कामावच्छेदकतया स्वर्गः पुरुषविशेषणम्, तथापि न नियोगशेषः स्वतन्त्रकामनागोचरत्वेन तस्यैव कृत्युद्देश्यत्वात्। स्वातन्त्र्यं च तस्यां सत्यामेव तदनुकूलतदतिरिक्तकामनेति सिद्धम्। नियोगे च काम्यमानस्वर्ग-

---

प्राधान्यमवगम्यते। तच्च स्वर्गसाधनत्वेऽपि न विरुध्यते कामिनियोज्यस्य काम्यमानस्वर्गाभावे नियोगोत्पादकयागादौ प्रवृत्त्ययोगान्नियोगेन स्वसिद्धयनुकुलतयैव स्वर्गोत्पादनात्। ततश्च स्वोपकारकगर्भदासपोषकस्वामिन इव नियोगस्यापि न प्राधान्यभंग इति भावः। उक्तार्थे—शालिकानाथवचनमुदाहरति—तदुक्तमिति। स्वर्गादिकं कुर्वदपि कार्यं नः प्रधानमेवेति योजना। लौकिकफलकार्ययोरपि किमेवं गुणप्रधानभाव इति पृच्छायां वैषम्यमाह—लोके त्विति। अस्य विपरीत एव गुणप्रधानभाव इत्युत्तरेण योजना। लौकिकवाक्यस्य मूलप्रमाणानुरोधेनैव प्रमाणत्वात् तेन च फलस्यैव स्वत उद्देश्यतया प्राधान्यावगमाच्छब्दतो नियोज्यविशेषणतया प्रतीयमानं गुणत्वं च ग्राह्यमित्याह—शब्दस्येति। क्रियाकार्यस्य प्राधान्यायोगादपि फलमेव प्रधानमित्याह—क्लेशेति। स्वर्गस्य नियोगं प्रत्यप्रधानत्वेऽपि कृतिं प्रति प्राधान्यमस्तीति तत्रातिव्याप्तिरित्यत आह—अत एवेति। कृत्युद्देश्यस्यैव कृतिं प्रति प्रधानत्वात् स्वर्गस्यातथात्वान्न कृतिं प्रति प्राधान्यमित्यर्थः। स्वर्गस्य यागसाध्यतया तं प्रति प्राधान्यमस्तीत्याशङ्क्याह—क्रियेति। न लक्षणमिति। तथा च नातिव्याप्तिरिति भावः। स्वर्गो न साक्षात् पुरुषविशेषणं किन्तु तद्विशेषणकामनागोचरतया ततश्च स्वतन्त्रकामनागोचरस्य एतस्यैव कृत्युद्देश्यतया कृतिं प्रत्यपि प्रधानत्वान्न स्वर्गजनकवियोगविशेषणतेत्याह—तन्नेति। स्वर्गकामनायाः स्वातन्त्र्यमुपपादयति—स्वातन्त्र्यं चेति। नियोगे तु फलकामनाप्रयुक्तैव कामनेति न तस्य कृत्युद्देश्यतेत्यभिप्रेत्याह—नियोगे चेति। नियोगस्य स्वतन्त्रकामनाऽगोचरत्वेन कृत्यनुद्देश्यत्वादप्राधान्यमुक्तम्, संप्रति तत्कामनैव तद्गुणत्वगोचरेति न तस्य प्राधान्यमि-

साधनतया कामनेति तत्परतन्त्रैव सा कामनापि स्वर्गसाधनत्वेनैव नियोगं गोचरयतीति कामनामुखमपि गुणत्वं नियोगस्यैव।

तथाहि–यदि काम्यनियोगं कामना नियोगत्वेनैव विषयीकुर्यात्। तदा कारीरीनियोगसिद्ध्याऽपि स्वर्गकामनः निवर्तेत सामान्येच्छाया यत्किञ्चिद्-विषयनिवर्त्यत्वात्।

ननु दर्शपूर्णमासनियोगेच्छा कथमन्यतो निवर्तेत अन्यस्य तदविषयत्वादिति चेत्, तर्हि दर्शपूर्णमासनित्यनियोगेन काम्यनियोगेच्छानिवृत्तिप्रसङ्गः। तस्मात् स्वर्गसाधननियोग एव कामनागोचर इति कामनामुखं गुणत्वं नियोगस्य। उपकारोऽपि वास्तवो नियोगेन स्वर्गस्य जायते तदुत्पत्तेस्तद्धेतुकत्वात्, न तु तस्य स्वर्गेण, नियोगस्य स्वर्गाहेतुकत्वात्। प्रतीतिकृतोपकारवैपरीत्यं तु न तद्गुणत्व-निमित्तम् लोके फलस्य तथाऽदर्शनात्। अपि च नियोगः स्वस्य वाक्यीयप्रमितये पुरुषविशेषणतया स्वर्गं नापेक्षते। तेन विनाऽपि यावज्जीवादिवाक्यात् तदुपस्थितेः। काम्यनियोगावगमः तेन विना न भवतीति चेत्, किं नियोगस्य काम्यत्वं स्वरूपेण काम्यसाधनतया वा? नाद्यः स्वर्गकामनारहितस्यापि तत्कामनाप्रसङ्गात्। तथा च

---

त्याह—कामनापीति। कामिनियोगः फलसाधनतयैव कामनागोचर इति वक्तुं तस्य प्रकारान्तरेण तद्गोचरत्वं निराकरोति—यदीति।

दर्शपूर्णमासनियोगत्वेन तस्य कामनागोचरत्वात् कारीरीनियोगलाभेन तत्कामनाया न निवृत्तिरिति शङ्कते—नन्विति। दर्शपूर्णमासयोर्नित्यकाम्यतया तद्विषयनित्य-नियोगेनापि नियोगान्तरकामनानिवर्तेतेति दूषयति—तर्हीति। काम्यनियोगः फलसाधन-तयैव कामनागोचर इति फलं प्रति तस्य गुणत्वमेवेत्युपसंहरति—तस्मादिति।

किञ्च सर्वत्रोपकारकस्योपकार्यशेषत्वान्नियोगस्य च स्वर्गस्वरूपोपकारकत्वात् तच्छेषत्वं युक्तमित्याह—उपकारोऽपीति। स्वर्गस्यापि नियोगप्रतिपत्तिहेतुनियोज्यविशेष-णतया तत् प्रतिपत्तावुपकारकत्वमस्तीत्याशंक्य नैतद्गुणत्वप्रयोजकमारोग्यार्थी भेषजं पिबेदित्यादौ नियोगप्रतिपत्तिहेतोरपि फलस्य गुणत्वादर्शनादित्याह—प्रतीतीति। स्वर्गस्य नियोगप्रतिपत्तिहेतुत्वमङ्गीकृत्येदमुक्तम्। वस्तुतस्तदेव नेत्याह—अपि चेति। काम्यनियोगप्रतिपत्तावेव स्वर्गस्य नियोज्यविशेषणतया हेतुत्वान्न तत्र व्यभिचार इति शङ्कते—काम्येति। नियोगस्य किं सुखवत् स्वभावात् काम्यमानता पश्वादिवत् फलसाध-नतया वेति विकल्पयति—किमिति।

आद्ये स्वर्गकामनामनपेक्ष्यैव तत्कामना स्यात्, तत्रातिप्रसंग इति दूषयति—नाद्य इति। दूषणान्तरमाह—तथा चेति। नियोगस्य स्वतः काम्यमानत्वे तत्कामिन एव

स्वर्गस्य तदर्थत्वमपि न स्यात्। न द्वितीयः; हितसाधनत्वेनैव शब्दार्थत्वप्रसङ्गात्।

वस्तुतः स्वर्गसाधनमेव नियोगः स्वरूपेण स्वस्यावगमाय पुरुषविशेषणं स्वर्गमपेक्षत इति चेत्, न; नियोगरूपेण तदुपस्थितौ पुरुषमात्रस्यैव हेतुत्वात्। अन्यथा नित्यनियोगो न प्रतीयात्। अप्रतीयमानविशेषस्यापि पुरुषविशेषापेक्षायां शुक्लो घटो घटत्वेनालोकं विना त्वचाऽपि न गृह्येत शौक्ल्यादिज्ञाने तस्य हेतुत्वात्।

ननु स्वर्गविशिष्टं पुरुषं विना न नियोगमात्रस्य वाक्यादवगमः कामिनियोज्यसमभिव्याहारं विना तत्र शब्दव्युत्पत्तेरेवाभावादिति चेत्, तर्हि न प्रतीतये तदपेक्षा, किन्तु तदुपस्थित्यै। तत्रापि न कार्यत्वेन तदुपस्थित्यर्थे स्वर्गोऽपेक्ष्यते, किन्तु स्वर्गसाधनत्वेन। स्वर्गकामपदसमभिव्याहारो हि काम्यमानस्वर्गस्य स्थायिसाधनं विनानुपपन्नः, नातत्साधननियोगं विना; नित्यनियोगं विनापि तत्सिद्धेः; तस्मान्नियोगः स्वस्य वाक्यादवगमाय व्युत्पत्त्यर्थं वा यदि स्वर्गमपेक्षते तर्हि स्वर्गः स्वसाधनतयैव तं बोधयतीति प्रतीतावपि गुणभूत एव नियोगः।

अत एव गर्भदासन्यायेनापि न नियोगस्य प्राधान्यम्। विमर्शावस्था-

---

नियोज्यत्वसंभवात् स्वर्गस्य तथा नियोगशेषता न स्यादित्यर्थः।

द्वितीये शब्दात् फलसाधनतया काम्यनियोगत्वे न तदपेक्षते, किन्तु नियोज्यविशेषणं स्वर्गमेवेति शङ्कते—वस्तुत इति। सामान्येन नियोगप्रतीतौ नियोज्यमात्रस्य हेतुत्वात् स्वर्गो नापेक्षित इति दूषयति—न नियोगेति। नियोगत्वेन प्रतीतेः स्वर्गापेक्षत्वे दोषमाह—अन्यथेति। विशेषतो यत्प्रतीतौ यदपेक्षा सामान्यतोऽपि तत्प्रतिपत्तौ तदपेक्षायामतिप्रसङ्गमाह—अप्रतीयमानेति। स्वर्गेण विनापि यावज्जीवादिवाक्यान्नियोगप्रतीतिरित्युक्तं तदयुक्तमिति शङ्कते—नन्विति। वाक्यादिति। यावज्जीववाक्यादित्यर्थः। कामिनियोज्याभावे क्रियातिरिक्तकार्योपस्थापकविमर्शानुदयेन तत्र लिङः शक्तिग्रहाभावात् ततो नित्यनियोगोऽपि न प्रतीयादित्यर्थः। एवमपि व्युत्पत्त्युपयोगिविमर्शाख्यतर्क एवोपयुक्तत्वात् स्वर्गस्य न वाक्यजन्यनियोगप्रमितिहेतुतेति परिहरति—तर्हीति। स्वर्गस्य नियोगव्युत्पत्त्युपयोग्युपस्थितिहेतुत्वादेव तं प्रति गुणत्वमित्याशङ्क्याह—तत्रापीति। कार्यमात्रस्य व्युत्पत्तिबलादेवोपस्थितेः स्वर्गसाधनतयैव तदुपस्थितौ स्वर्गो हेतुरिति तदापि नियोग एव स्वर्गशेष इत्यर्थः। नियोगोपस्थापकानुपपत्तिपर्यालोचनयापि तस्य स्वर्गशेषत्वमवगम्यत इत्याह—स्वर्गकामेति। विमर्शस्वरूपा वाक्यजन्या च नियोगप्रतीतिः स्वर्गशेषतयैव तद्गोचरेति निगमयति—तस्मादिति। यदुक्तं गर्भदासं प्रति स्वामिन इव स्वसिद्ध्यनुकूलस्वर्गं प्रत्युपकारकस्य नियोगस्य न प्राधान्यभङ्ग इति तत्राह—अत

मारभ्य तस्य सर्वदा गुणत्वेनैवावस्थानात् । स्वर्गस्तु स्वशेषनियोगनिष्पत्तये स्वामीव कदाचित् गुणभावमापन्न इव प्रतीयत इति गर्भदासन्यायेनापि स्वर्गशेष एव नियोगः तस्मात् "स्वात्मसिद्ध्यनुकूलस्य नियोगस्य प्रसिद्धये। विशेषणमपि स्वर्गः प्रधानं पुरुषस्य नः" । एवं कृतिप्राधान्यमपि स्वर्गस्यैव तस्यैव स्वरूपसुन्दरस्य कृत्युद्देश्यत्वात् ।

यत्तु फलापूर्वयोरेकलोलीभावात्, फलास्यापूर्ववृद्धिरूपत्वाद् वा नियोगप्राधान्यपरिपालनम्, न तत्परीक्षाक्षममित्युपेक्ष्यते प्रत्ययार्थत्वमपि तस्य विप्रतिपन्नम् एतेन निषेधवाक्यस्याप्यपूर्वार्थत्वं निरस्तम् । तथा सति निषेधमनुतिष्ठतः प्रत्यवायासिद्धिप्रसङ्गाच्च । तस्मान्न क्रियातिरिक्तं त्वदभिमतं कार्यमस्तीति कुतस्तस्य वेदार्थत्वम्। तथा च विधिवाक्यस्यास्तु क्रियाकार्यं श्रेयःसाधनत्वं वाऽर्थः। ब्रह्मवाक्ये तु विध्यश्रवणात् स्वप्रधानं ब्रह्मैव तत्प्रतिपाद्यमिति सिद्धम् ।

ब्रह्मणः विधिशेषत्वेन वेदार्थत्वमतानुवादः

अत्र केचिदाहुः—भवतु कार्यं श्रेयःसाधनत्वं वा लिङाद्यर्थः सर्वथा

---

एवेति । अतःशब्दार्थमेवाह—विमर्शेति । सर्वथा गुणत्वेनावगतनियोगस्य स्वामिवत्प्राधान्ये मानाभावान्न तन्न्यायेन प्राधान्यमित्यर्थः। वस्तुत एतन्न्यायेनापि स्वर्ग एव प्रधानमित्याह—स्वर्गस्त्विति। गुणभावमिति । नियोज्यविशेषणतयेत्यर्थः। उक्तार्थं श्लोकेन संगृह्णन्निगमयति—तस्मादिति । पुरुषस्य विशेषणमपीति योजना । एवं स्वर्गस्य कार्यं प्रति प्राधान्यमुपपाद्य कृतिं प्रत्यपि तदाह—एवमिति । फलापूर्वयोरत्यन्तभेदाभावात् फलप्राधान्यमिति केषांञ्चित् समाधानं दूषयति—यत्त्विति। अपूर्वस्य फलसाधनत्वात् साध्यसाधनयोरभेदायोगाद् भेदाभेदस्य चाप्रामाणिकत्वान्न फलाभेदेन नियोगप्राधान्योपपत्तिरिति भावः ।

यदुक्तं प्रत्ययार्थत्वात् कार्यं प्रधानमिति तदप्ययुक्तम्। इष्टसाधनत्वस्यैव लिङाद्यर्थत्वादित्यभिप्रेत्याह—प्रत्ययेति । गुरुमतानुसारिभि'र्न सुरां पिबेत्' इत्यादिनिषेधवाक्यानां सुरापानादिविरुद्धकार्यपरत्वमास्थितम्, तदप्ययुक्तमित्याह—एतेनेति । पराभिमतापूर्वे लिङादेर्व्युत्पत्त्यभावेनेत्यर्थः ।

किञ्च निषेधवाक्यानामपि कार्यान्तरपरत्वे निषिद्धानुष्ठानस्यानिष्टसाधनत्वे मानाभावात्, ततः प्रत्यवायो न स्यादित्याह—तथासतीति । विधिवाक्यादेः पराभिमतकार्यपरत्वनिराकरणफलमाह —तस्मादिति । पराभिमतापूर्वाभावेऽपि विधिवाक्यानामिव वेदान्तानामपि क्रियारूपकार्यतदन्तर्गतेष्टसाधनत्वं वाऽर्थोऽस्त्वित्याशङ्क्याऽऽह—तथाचेति । ब्रह्मणो वेदार्थत्वेऽपि न स्वप्रधानतया तदर्थत्वं किन्तु विधिशेषतयेत्येकदेशिमतं दूषयितुमनुवदति—अत्रेति । निर्गुणब्रह्मण उपासनाविध्यनुपयोगित्वेन तच्छेषत्वायोगात्

विधिशेषं ब्रह्म वेदार्थः। उपासनाविधिशेषत्वात्। निर्गुणब्रह्मज्ञानस्यापि विधेयत्वात् द्रष्टव्य इत्यादि विधिश्रवणात्।

नचायनुवादः; अलौकिकात्मज्ञानस्यान्यतोऽसिद्धेः। न चाध्ययनकालसिद्ध-मेवानूद्यत इति वाच्यम्; तदनुवादवैफल्यात्। न च सिद्धानुवादः साधनविधानाय भवति, न वा निषेधायानुवादः।

न च ज्ञानं विधेयम्, अपुरुषतन्त्रत्वात्, आत्मवदिति वाच्यम्। तद्यदि पुरुषेच्छानधीननिष्पत्तिकत्वम्, तन्न ब्रह्मज्ञानस्य परमपुरुषार्थसाधनतया पुरुषे-च्छाधीनत्वात्।

न च दुर्गन्धादिज्ञाने तदभाव इति वाच्यम्, यस्य हि पुरुषेच्छाधीन आत्म-लाभः तद्विधेयं विधिजन्येच्छानिष्पाद्यस्यैव विधेयत्वात्। अन्यथा क्रियाया अप्यविधेयत्वप्रसङ्गात्। नहि सर्वा क्रिया पुरुषेच्छया साध्यते। पत्न्यवेक्षितमित्या-दावीक्षणे विध्यङ्गीकाराच्च।

कस्य ब्रह्मज्ञानस्य विधेयतेत्याक्षेपः।

ननु शाब्दज्ञानं न विधेयम्; तस्य सांगाध्ययनवता विधिं विनापि सिद्धत्वात्। न च निर्णयो विधीयत इति वाच्यम्, तस्यापि निर्णयत्वात् न च तदापातरूपम्

---

स्वप्राधान्यमित्याशङ्क्य तस्यापि ज्ञानविशेषणत्वमाह--निर्गुणेति।

सिद्धान्ते द्रष्टव्य इत्यनुवादत्वान्न विधिरित्यास्थितं तद्दूषयति—न चायमिति। साङ्गाध्ययनविधिवलादेव निर्गुणात्मज्ञानं प्राप्तमिहानूद्यत इत्याशङ्क्यानुवादवैयर्थ्येन दूषयति—न चेति। किमयमनुवादो दध्ना जुहोतीतिवत् साधनविधानाय? किं वा 'न सुरां पिबेत्' इत्यादिवन्निषेधाय? नाद्यः, सिद्धस्य साधनानपेक्षणात्। न द्वितीयः, अत्र निषेधबोधिनञादेरश्रवणादित्यभिप्रेत्याह—न च सिद्धेत्यादिना। ज्ञानस्यापुरुषतन्त्रतया विध्ययोग्यत्वाद् द्रष्टव्य इत्येतन्न विधिपरमित्यत आह--न चेति। अपुरुषतन्त्रत्वादित्यनेन विवक्षितमनूद्य ब्रह्मज्ञानेऽसिद्ध्या दूषयति—तद्यदीति।

पुरुषेच्छां विनापि क्वचित् ज्ञानदर्शनात्, तत्र कथं विधिरित्याशङ्क्येच्छाधीन-निष्पत्तिकस्यैव तस्य विधेयत्वाभ्युपगमान्न दोष इत्याह—न च दुर्गन्धेति। तत्सजातीये विध्यसंभवमात्रेण तत्रापि तदपलापेऽतिप्रसङ्गमाह—अन्यथेति। न हि सर्वेति।

बलवदनिलादिनुद्यमानस्येच्छां विनापि क्रियादर्शनादित्यर्थः। यागसाधनाज्य-संस्काराय तदीक्षणविधानादपि न सर्वज्ञानस्य विध्ययोग्यतेत्याह-पत्नीति।

ननु द्रष्टव्य इति शाब्दब्रह्मज्ञानं विधीयते? उत तत्साक्षात्कारः न तावदाद्य इत्याह—ननु शाब्दमिति। धर्म इव ब्रह्मण्यध्ययनमात्रादापातबोध एव जायते, न च निर्णय इत्यत आह—न च तदिति। किं ज्ञानस्यापातत्वं संशयविपर्यासान्यतरत्वं सामान्यविष-

आपातत्वं हि न संशयविपर्ययान्यतरत्वम् अपौरुषेयवेदान्निष्पन्नस्य तदयोगात्। अपौरुषेयवेदादपि शक्तिभ्रमाद् भ्रमो युज्यत इति चेत्, न; ब्रह्मणि सत्यादिज्ञानस्याभ्रमत्वात्। ज्ञानविधिनापि तदनिवृत्तेः विचारेण तन्निवृत्तेश्च। नापि सामान्यविषयत्वमापातत्वम्। ब्रह्मणि तदभावात्। तस्मादादावेवोत्पन्नं ज्ञानं निश्चयरूपमिति न तद्विधेयम्।

साक्षात्कारस्य विधेयत्वनिरासः।

अथ साक्षात्कारो विधेय इति। तन्न, निरतिशयसुखात्मकब्रह्मसाक्षात्कारस्य फलतया स्वर्गादिवदविधेयत्वादिति। मैवं, साक्षात्कारस्याविद्यानिवृत्तिसाधनतया फलत्वात्।

ननु वेदान्तानां दर्शनविधिपरत्वे ब्रह्मस्वरूपासिद्धिः स्यात् प्रत्यक्षादेरिव शब्दस्यापि तत्राभावादिति चेत्, न; सत्यादिवाक्यैरेव विधिविषयब्रह्मणो विध्याकाङ्क्षया प्रतिपादनात्।

ननु साक्षात्कारस्य विधेयत्वे पत्न्यवेक्षणादिवत् तस्मादपूर्वं वक्तव्यं तस्य क्वोपयोगः। न तावन्मोक्षे तस्य ब्रह्मावाप्तिलक्षणस्याविद्यानिवृत्तिलक्षणस्य वा सिद्धस्वभावतया ज्ञानैकसाध्यतयाऽपूर्वासाध्यत्वात्। नापि तत्साधने, साक्षात्कारातिरिक्तमोक्षसाधनाभावात्। तस्य चापूर्वजनकतया त्वयाभ्युपगतत्वात्।

---

यत्वं वा? नाद्यः, अपौरुषेयवेदे दोषाभावेन संशयादिजनकत्वायोगादित्याह—आपातत्वमिति। स्वतो निर्दोषोऽपि वेदः प्रमातृगतदोषवशात् संशयादिजनक इति शङ्कते—अपौरुषेयेति। प्राथमिकज्ञानस्य बाधकाभावेन भ्रमत्वमेव नेति परिहरति—न ब्रह्मणीति।

किञ्च शक्तिभ्रमे विचारान्नष्टे सति शब्दादेव निर्णयसंभवाद् विधिर्व्यर्थ इत्यभिप्रेत्याह—ज्ञानविधिनेति। द्वितीयं दूषयति—नापीति। प्राथमिकज्ञानस्यापातरूपत्वनिराकरणफलमाह—तस्मादिति।

आद्यद्वितीयं शङ्कते—अथेति। ब्रह्मसाक्षात्कारस्य निरतिशयसुखभोगतयोद्देश्यत्वाद् विधेयत्वमयुक्तमिति दूषयति—तन्नेति। वृत्तिरूपसाक्षात्कारस्याशुविनाशिनोऽफलत्वेनाविद्यानिवृत्तिरूपफलसाधनतया तद्विधानं युक्तमिति परिहरति—मैवमिति। वेदान्तानां विधिपरत्वे तत्रैव प्रामाण्यमिति ब्रह्माप्रामाणिकत्वादसत् तथाऽऽपाततश्च तस्य कुतो विधिशेषतेत्यभिप्रेत्य शङ्कते—नन्विति। निर्विषयज्ञानविध्ययोगेन विध्याकाङ्क्षितब्रह्मणोऽप्यवान्तरतात्पर्येण वेदान्ता एव मानमित्यभिप्रेत्य परिहरति—न सत्यादीति। अविधेयस्यापि विधेयत्वेन तज्जन्यमपूर्वं वाच्यम्, तस्य च स्वतोऽपुरुषार्थत्वात् क्वचिदुपयोगोऽपि वाच्यः। स च दुर्निरूप इति शङ्कते—नन्विति।

किं तदपूर्वस्य मोक्ष उपयोगः तत्साधने वा चित्तशुद्धौ वा?, नाद्यः, इत्याह—न तावदिति। ब्रह्मावाप्तेरविद्यानिवृत्तेश्चापूर्वासाध्यत्वे यथाक्रमं सिद्धस्वभावतयेत्यादि हेतुद्वयम्। द्वितीयं दूषयति—नापीति। अपूर्वस्योपयोगाय साक्षात्कारान्तरं कल्प्यमित्यत आह—न चेति। साक्षात्कारान्तरस्यापि प्रथमसाक्षात्कारवदपूर्वं विनाऽप्युत्पत्तिसंभवान्न

न च साक्षात्कारान्तरं कल्प्यम्, वैयर्थ्यात्। तस्यापि प्रथमसाक्षात्कारवदपूर्वाजन्यत्वाच्च। न च चित्तशुद्धिरेव तदपूर्वफलम्। 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुत्या शुद्धेरपि साक्षात्कारहेतुत्वश्रवणेन तत्पूर्वं तस्याः सिद्धत्वात्। न च तत्रापूर्वमेव नेति वाच्यम् विधौ तदभावायोगात्। अविद्यानिवृत्तिकामस्य विधिं विनापि ज्ञानोन्मुखत्वेनापूर्वं विना विधिवैयर्थ्याच्च। तस्मान्न ज्ञाने विधिरिति। मैवं। विधिसामर्थ्यादविद्यानिवृत्तावेवापूर्वस्योपयोगकल्पनात्।

केचित्तु न साक्षात्कारादपूर्वं जन्यते साक्षादेव तस्य मुक्तिहेतुत्वसंभवात्। दृष्टद्वाराभावे सति कालान्तरभाविफलजनकतया विहितस्यैवापूर्वजनकत्वादित्याहुः।

साक्षात्कारविधिसमर्थनम्।

वस्तुतस्तु न कुत्राप्यपूर्वमिति तव सिद्धान्तः। न च विधीयमानत्वे साक्षात्कारस्य न ततोऽविद्यानिवृत्तिः स्यादिति वाच्यम्, तथापि प्रमाणज्ञानप्रयुक्ताविद्यानिवृत्तावविरोधात्। न चालौकिकसाक्षात्कारस्याप्रसिद्धत्वान्न तद्विधानम्।

---

तस्य तत्रोपयोग इत्याह—तस्यापीति। तृतीयं दूषयति—न च चित्तेति। क्रियैव विधीयमानाऽपूर्वहेतुर्न ज्ञानमित्यत आह—न च तत्रेति। अपूर्वाभावेऽप्यप्रवृत्तप्रवर्तनार्थमेव विधिः किं न स्यादित्यत आह—अविद्येति। विधिजन्यापूर्वोपयोगाभावान्न ज्ञाने विधिरित्युपसंहरति—तस्मादिति। ज्ञानजन्यापूर्वमङ्गीकृत्य तस्याऽपि ज्ञानवदविद्यानिवृतिहेतुत्वं विध्यनुपपत्तिरूपौपादानिकप्रमाणबलात् कल्पनीयमिति परिहरति—मैवमिति। दृष्टद्वारेणैवाविद्यानिवृत्तिसंभवात् ज्ञानजन्यापूर्वमेव नेति मतान्तरमाह—केचित्त्विति। विमतमपूर्वजनकं विहितत्वादाग्नेयादिवदित्याशङ्क्य तत्र दृष्टद्वाराभाव उपाधिरित्यभिप्रेत्याह—दृष्टद्वारेति। सर्वज्ञेश्वरस्यैव कर्मानुरूपफलदातृत्वान्न कस्याप्यपूर्वजनकतेति सिद्धान्तिनोऽपि संमतत्वाद् विधेयज्ञानादपूर्वाभावो न दोषायेत्याह—वस्तुत इति। ज्ञानस्य विधेयत्वे योषिदादावग्निज्ञानवदादृष्टद्वाराप्यविद्यानिवर्तकज्ञानं न स्यादित्याशङ्क्य योषिदादावग्निज्ञानस्यायथार्थत्वान्नाविद्यानिवर्तकत्वं ब्रह्मज्ञानस्य तु विधेयत्वेऽप्यग्नावग्निज्ञानवद् यथार्थत्वादविद्यानिवर्तकतोपपत्तिरित्याह—न चेत्यादिना।

किमत्राशनायाद्यतीतात्मसाक्षात्कारे विधिस्तद्वदात्मसाक्षात्कारे वा? नाद्यः, तस्याप्रसिद्धत्वेनाकाशमुष्टिहननवदविधेयत्वात्। न द्वितियः; अशनायादिमदात्मज्ञाने सत्यप्यविद्यानिवृत्तेरभावात् तस्य विधिंविनापि सिद्धत्वाच्चेति चोद्यमयुक्तमित्याह—न चालौकिकेति। अलौकिकात्मसाक्षात्कारस्याप्रसिद्धत्वम्, किमनुत्पन्नत्वमज्ञातत्वं वा।

अत्यन्ताप्रसिद्धे तदयोगात्। लौकिकात्मसाक्षात्कारस्तु अपुरुषार्थत्वात् सिद्धत्वाच्च न विधेय इति वाच्यम्, अप्रसिद्धस्यैव विधेयत्वात्। प्रसिद्धे विधिवैयर्थ्यात्। विधिसामर्थ्यादेवाप्रसिद्धस्यापि सिद्धेः।

न च धात्वर्थस्यात्यन्ताप्रसिद्धौ कस्य हितसाधनत्वं प्रत्ययेन प्रतिपाद्यत इति वाच्यम्। आत्मदर्शनपदार्थयोः प्रसिद्धत्वात् प्रकरणादलौकिकात्मविषयत्वसिद्धेः। अन्यथा तदुद्देशेन विचारविधानमपि न स्यात्। अत्र चौपनिषदमिति श्रुत्या वेदान्तानां करणत्वं प्रकरणपाठाच्छ्रवणादेः; शान्त्यादेश्चाङ्गत्वं आर्थवादिकं चामृतत्वं फलमिति। अमृतत्वकामः श्रवणादिभिरुपकृत्य वेदान्तवाक्यैरात्मानं साक्षात्कुर्यादिति द्रष्टव्य इति वाक्यार्थः।

आत्मज्ञानसन्तानविधिपक्षोपक्षेपः।

केचित्त्वात्मसाक्षात्कारोद्देशेनात्मेत्येवोपासीतेति ज्ञानसंतानविधिमाचक्षते ज्ञानतदभ्यासयोरविधेयत्वे सर्वोपासनाविधीनामप्रामाण्यप्रसंगः।

न चोपासना न ज्ञानं किन्तु क्रियेति वाच्यम्। तत्र वेदेति ज्ञानपर्यायवित्तिशब्दप्रयोगात्। ज्ञानविधिशेषतयोपासनाविधिशेषतया च ब्रह्म वेदान्तैः प्रतिपाद्यत इति न स्वप्रधानं ब्रह्म वेदार्थ इति।

ज्ञानविधिनिरासेन सिद्धान्तः।

उच्यते—साक्षात्कारस्तावन्न विधेयः तस्य साङ्गाध्ययनकाल एव विधि

---

आद्ये विधेयत्वं युक्तमित्याह—अप्रसिद्धस्यैवेति। द्वितीयमपवदति—न चेति। प्रकरणानुगृहीतात्मपदसमभिव्याहृतधातुनैवालौकिकात्मदर्शनस्यैवोपस्थापितत्वान्नात्यन्तमज्ञाततेत्याह—आत्मदर्शनेति। उक्तविधया तस्याप्रसिद्धौ द्रष्टव्य इति दर्शनमनूद्य तादर्थ्येन श्रोतव्य इत्यादिना श्रवणादि विधीयत इति त्वदभिमतार्थोऽपि न सिद्ध्येदित्याह—अन्यथेति। एवं विधिसंभवमुक्त्वाऽपेक्षितकरणोपकारकफलानि दर्शयन् तदन्वितप्रयोगविधिमाह—अत्र चेत्यादिना। अपरोक्षज्ञानोद्देशेन परोक्षज्ञानसंतानविधौ तत एव तत्सिद्धेः सन्तानपरा वेदान्तास्तच्छेषतया ब्रह्मपरा इति मतान्तरमाह—केचित्त्विति। ज्ञानवत्तदभ्यासोऽपि विध्ययोग्य इति मन्वानं सिद्धान्तिनं प्रत्याह—ज्ञानेति। उपासनाया मानसक्रियात्वाद् विधेयतोपपत्तिरित्यत आह—न चेति। वित्तिशब्दप्रयोगादिति। विदिधातुप्रयोगादित्यर्थः।

एकदेशिमतमुपसंहरति—तस्मादिति।

शाब्दापरोक्षवादोक्तन्यायेनाधीतस्वाध्यायादेव ब्रह्मापरोक्षज्ञानसंभवात् तत्र तावद् विधिर्न संभवतीति दूषयति—साक्षात्कार इति। अधीतस्वाध्यायादेव साक्षात्कारोत्प-

विना वेदान्तात् प्रसिद्धत्वात् सिद्धे विधिवैयर्थ्यात्। न चैवं श्रवणादिवैयर्थ्यं, अविद्यानिवृत्तिप्रतिबन्धकासंभावनादिनिवृत्तेस्तेन विनाऽसंभवात्। अधिष्ठानसाक्षात्कारेऽप्युपाधिदशायां प्रतिबिम्बादिभ्रमस्येवाविद्याया अप्यनिवृत्तेः। कारणमात्रस्य स्वकार्ये विरोध्यभावतया प्रतिबन्धकाभावापेक्षणात्। तस्य पूर्वं सत्तानवधारणात्मकत्वाच्च। न चाप्रतिबद्धसाक्षात्कारो विधीयतामिति वाच्यम्, विशेषणांशस्य श्रवणादिफलत्वात्। विशेष्यांशस्य वेदान्तमात्रजन्यत्वात्। न च साक्षात्कारविशेषो विधीयत, इति वाच्यम्। विषयविशेषाभावात्। नापि जातिरूपो विशेषः। मुक्तिसाधनसाक्षात्कारव्यक्तिभेदे प्रमाणाभावात्। एकेनैवाविद्यानिवृत्त्युपपत्तेः। तदनेकत्वेऽपि न तस्य प्राथमिकसाक्षात्कारवैजात्ये प्रमाणमस्ति। विजातीयकरणकत्वमेव प्रमाणमिति चेत्, न, चरमसाक्षात्कारेऽपि शब्दस्यैव करणत्वात्। श्रवणादीनां प्रतिबन्धकाभावेनैवान्यथासिद्धतया तद्वैजात्येऽप्रयोज-

---

तौ तादर्थ्येन श्रवणादेरपि विधानं न स्यादित्याशङ्क्य ज्ञानफलप्रतिबन्धकनिवृत्त्यर्थमेव श्रवणादिविध्यभ्युपगमान्न दोष इत्याह—न चैवमित्यादिना। उत्पन्नसाक्षात्कारस्याविद्यानिवृत्तौ नान्यापेक्षा दृष्टेत्याशंक्य भ्रमविशेषनिवृत्ताविवाविद्यानिवृत्तावपि प्रतिबन्धकनिवृत्त्यपेक्षा युक्तेत्याह—अधिष्ठानेति।

तर्हि प्रतिबन्धकाभावस्यापि कारणतेत्याशंक्य तस्य विरोध्यभावतयैवापेक्ष्यमाणतया तेन रूपेणान्यथासिद्धत्वान्न कुत्रापि कारणतेत्यभिप्रेत्याह—कारणेति। प्राथमिकसाक्षात्कारादज्ञानानिवृत्तौ हेत्वन्तरमाह—तस्येति। अप्रतिबद्धसाक्षात्कारस्य प्रागनुदयात् तदर्थं विधिर्युक्त इत्यत आह—न चेति। विशेषणांशस्यति। प्रतिबन्धकाभावस्येत्यर्थः। क्रियामात्रेऽन्यतः सिद्धेऽपि क्रियाविशेषो यथा विधीयते, एवं साक्षात्कारो विधीयतामित्याशंक्याह—न चेति। विषयविशेषविषयत्वं वा जातिर्वा ज्ञाने विशेषः तदुभयमप्यविद्यानिवर्तकज्ञाने न संभवतीत्याह—विषयेत्यादिना।

जातेर्व्यक्तिभेदसापेक्षत्वादेकजीववादे एकेनैव साक्षात्कारेण एकाविद्यनिवृत्त्युपपत्तेर्न तद्भेद इत्याह—मुक्तीति। अनेकजीववादेऽविद्यानिवर्तकसाक्षात्कारस्य नानात्वेऽपि तत्र प्राथमिकसाक्षात्काराद् वैजात्ये न किंचिन्मानमित्याह—तदनेकत्व इति। चरमसाक्षात्कारस्य श्रवणादिकारणविशेषजन्यत्वं जातिविशेषं विनाऽनुपपन्नं तत्कल्पकमिति शङ्कते—विजातीयेति। श्रवणादीनां ब्रह्मप्रमितिहेतुत्वे तत्प्रामाण्यपरतस्त्वापातान्न तेषां तद्धेतुत्वं किन्तु शब्दस्यैवेत्यभिप्रेत्याह—न चरमेति।

तर्हि श्रवणादीनां वैयर्थ्यमित्यत आह—श्रवणादीनामिति। प्रतिबन्धकाभावस्य ज्ञाने अपेक्षितत्वात् तद्द्वारा श्रवणादिस्तद्धेतुः किं न स्यादित्यत आह—न चेति देवश्राणः

कत्वात् । न च प्रतिबंधकाभावद्वारा साक्षात्कारेऽपि हेतुः प्रतिबन्धकाभावस्याहेतुत्वात् । अन्ये तु श्रवणादिपरिपाके विधिं विनैव फलीभूतसाक्षात्कारसिद्धेः न साक्षात्कारे विधिरित्याहुः । किञ्च न साक्षात्कारः कृत्यसाध्यत्वाद् विधिगोचरः न हि ज्ञानं कृत्या साध्यते; तस्य बहुशस्तद्व्यभिचारात् । अत एवावेक्षणादावपि क्रियैव विधीयते ।

अपि च साक्षात्कारो न प्रधानं सन् विधीयते । श्रवणादिरूपाङ्गगोचरकृत्यतिरिक्तस्वविषयकृत्यसाध्यत्वात् प्रधानस्यांगकृतिव्यतिरिक्तस्वगोचरकृतिसाध्यत्वनियमात् नाङ्गतयाऽपि तद्विधिः । तदतिरिक्तस्य फलवतोऽभावात् । साक्षात्कारस्यैव सर्वत्र मुक्तिसाधनत्वश्रवणात् । अत एवान्यतः सिद्धोऽपि साक्षात्कारो द्रष्टव्य इति विधिना नियम्यत इति निरस्तम् । अविद्यानिवृत्तावुपायान्तराभावाच्च । तस्मान्न साक्षात्कारे विधिरिति । श्रवणादौ तु विधिरभ्युपेयः ।

---

पूर्वं साक्षात्कारविशेषाभावेऽपि तस्यान्यतः प्राप्तत्वात् तद्विधिर्व्यर्थ इति समाध्यन्तरमाह—अन्ये त्विति । जीवकृतिसाध्यस्यैव विधेयत्वनियमात् ज्ञानस्य च तदसाध्यत्वादपि न तत्र विधिरित्याह—किं वेति । व्यभिचारादिति । न च क्रियाया अपि क्वचित् कृतिं विनोत्पत्तेस्तस्या अपि तत्साध्यता न स्यादिति वाच्यम्, जीवकर्तृक्रियाया नियमेन तत्साध्यत्वाज्जीवकर्तृकज्ञानस्य च कुत्राप्यप्रसिद्धत्वादिति भावः । ज्ञानस्य कृत्ययोग्यत्वादेव पत्न्यवेक्षितमित्यत्रापि ज्ञानानुकूलक्रियायामेव विधिरित्याह—अत एवेति ।

किंच द्रष्टव्य इत्यनेन किं दर्शनं प्रधानतया विधीयते, उताङ्गतया? नाद्य इत्याह—अपि चेति । अङ्गकृत्यतिरिक्तकृत्यविषयत्वेऽपि प्रधानत्वं किं न स्यादित्यत आह—प्रधानस्येति । द्वितीयं दूषयति—नाङ्गतयेति । फलवत्सन्निधावफलस्य तदङ्गत्वात् ज्ञानातिरिक्तस्य मोक्षसाधनस्याभावात् ज्ञानस्याफलत्वाभावाच्च नाङ्गतेत्यर्थः । अङ्गतया प्रधानतया वा विधानायोगादेव ज्ञाने नियमविधिरिति पक्षोऽप्ययुक्त इत्याह—अत एवेति ।

किं चैकस्मिन् साध्ये साधनद्वयस्य पक्षे प्राप्तौ नियमविधिः ज्ञानफलाविद्यानिवृत्तौ च न कदापि साधनान्तरप्राप्तिरिति नित्यप्राप्ते ज्ञाने न नियमविधिरित्याह—अविद्येति । ज्ञाने विधिरेव नास्ति कुतस्तच्छेषतया ब्रह्म वेदान्तार्थ इति मनसि कृत्वोपसंहरति—तस्मादिति ।

नन्वेवं श्रवणादिविधिरपि न स्यात् गान्धर्वशास्त्रविचारादिना षड्जादिसाक्षात्कारदर्शनेन तद्दृष्टान्तेनात्मविचारेऽपि विधिं विनाऽपि प्रवृत्तिसंभवादित्याशङ्क्य तथाप्य-

श्रवणादौ विधिनिरूपणम् ।

अद्वैतब्रह्मप्रतिपादकवेदान्तश्रवणनियमाभावे आत्मज्ञानार्थिनो नैय्यायिकादिदर्शनेऽपि कदाचित् प्रवृत्तिप्रसङ्गाच्च । द्वा सुपर्णेत्यादिवाक्यं श्रुतवतो विचारात् प्राग्भेदज्ञानान्मुक्तिरिति भ्रमसंभवात् तावतापि वेदान्तविचारस्य पाक्षिकतापातात् । कथं तर्ह्य"त्मा श्रोतव्यः" इति वाक्याद् भिन्नात्मतत्वश्रवणनिवृत्तिरिति चेत् उच्यते—

यद्विज्ञानात् सर्वविज्ञानं तमेव ह्यानन्दात्मकमात्मानं प्रस्तुत्यात्मदर्शनाय श्रवणादि विधीयते । नहि भेदवादिसंमतात्मतत्त्वदर्शनात् सर्वदर्शनं भवति । न वा स आत्माऽऽनन्दो भवति । तथा चात्मा द्रष्टव्य इत्यत्राद्वितीय एवात्मा आत्मशब्देनाभिधीयते । अध्ययनविधिना गुरुमुखाध्ययनमिव श्रवणविधिनाआचार्याधीनं श्रवणं नियम्यते इति केचित् । स्वातन्त्र्येण पुराणनिवृत्त्यर्थो वा वेदान्तविचारो नियम्यते ।

उपासनाविधिशेषतया ब्रह्मसमर्थणमतनिरासः

यत्तूपासनाविधिशेषतया ब्रह्म वेदान्तप्रतिपाद्यमिति । तन्न, तथा सति

---

द्वैतब्रह्मपरवेदान्तविचारनियमनात्र विधिरर्थवानित्यभिप्रेत्याह--श्रवणादाविति । आत्मज्ञानाय वेदान्तविचारादन्यत्र कदाचित् प्रवृत्यप्राप्तेः कथं तन्निवृत्तिफलको नियमविधिरित्यत आह—अद्वैतेति । भिन्नात्मज्ञानस्य मुक्त्यहेतुत्वात् कथं मुमुक्षोरेतद्धेतुदर्शने प्रवृत्तिरित्यत आह—द्वा सुपर्णेति । भिन्नात्मविचारस्य मोक्षसाधनज्ञाने वस्तुतोऽनुपयुक्तत्वात् तत्र भ्रान्त्यैव प्रवृत्तिर्न मानादित्यत आह—तावतापीति । नियमविधिर्हि नियम्ये कदाचिदप्रवृत्तिमात्रमपेक्षते तदन्यत्र भ्रान्त्यापि प्रवृत्तौ संभवति । अन्यथाऽवहननादावपि नियमविधिर्न स्यात् । वस्तुतोऽपूर्वाय तण्डुलान् प्रति नखविदलनादेः साधनत्वाभावेन तत्रापि मानतस्तदर्थं प्रवृत्त्ययोगादिति भावः ।

श्रवणविधिवाक्येऽद्वितीयात्मोपस्थित्यभावात्कथं तद्विचारनियमनमिति शङ्कते—कथं तर्हीति । प्रकरणानुगृहीतात्मपदसामर्थ्यादेवाद्वितीयात्मप्रतिपत्तेस्तद्विचारनियमनमिति समाधत्ते--उच्यत इति ।

आत्मविज्ञानात् सर्वविज्ञानाद्यभिधानेन कथं पराभिमतात्मपर्युदास इत्यत आह—न हीति । अद्वितीयात्मनस्तु सर्वजडसत्तादिरूपतया तद्विज्ञाने सर्वविज्ञानोपपत्तेः तस्य परमानन्दरूपत्वाच्च स एवात्रात्मपदोपात्त इत्याह - तथा चेति । स्वातन्त्र्येणात्मविचारनिवृत्तये गुरुमुखादेव श्रवणं नियम्यत इति मतान्तरं सदृष्टान्तमाह—अध्ययनेति । आत्मज्ञानार्थिना वेदान्तश्रवणमेव कार्यं न पुराणमात्रश्रवणमिति वा नियम्यत इत्याह—स्वातन्त्र्येणेति । साक्षात्कारे विध्यभावेऽपि तदुद्देशेन ज्ञानसंतानविधिसंभवात् तच्छेषतया

प्रमाणाभावेन ब्रह्मस्वरूपासिद्धिप्रसङ्गात् । प्रत्यक्षादिविरोधेऽतत्पराच्छब्दात् तदसिद्धेः । आरोपितरूपेणाप्युपासनोपपत्तेः निदिध्यासनातिरिक्तमोक्षसाधनोपासनायां प्रमाणाभावात् । निदिध्यासनस्य च स्वतः फलवत्त्वाभावेन तस्मिन् वेदान्तानां तात्पर्याभावात् । आत्मेत्येवोपासीतेति च नोपासनम्. ज्ञानफलस्य सर्वात्मभावस्य तत्र श्रवणात् । न हि ज्ञानातिरेकेण सर्वात्मभावो भवति, अन्यस्यान्यात्मतानुपपत्तेः पूर्वमपि तदात्मनस्तद्भावस्य ज्ञानातिरिक्तासाध्यत्वात् ।

सगुणोपासनं तु निर्गुणब्रह्मपरैर्वेदान्तैः प्रसङ्गात् तत्तत्फलाय विधीयते । निरतिशयपुरुषार्थस्याभेदज्ञानैकलभ्यत्वेन तत्रैव सर्ववेदानां पर्यवसानात् । तथा च श्रुतिः--'सर्वे वेदा यत्पदमामनन्ति'' इति । उपासनात्मिका वृत्तिर्न ज्ञानं

---

ब्रह्म वेदान्तार्थं इति मतान्तरमनुवदति दूषयितुम्—यत्त्विति । वेदान्तानां विधिपरत्वे ब्रह्मणि मानाभावात्तदेव न सिद्धयेत् कुतस्तस्य विधिशेषतेत्यभिप्रेत्य दूषयति—तन्नेति । देवताधिकरणन्यायेनान्यपरादपि शब्दात् ब्रह्मसिद्धिमाशङ्कयाह–प्रत्यक्षादीति । मानान्तराविरोधेऽन्यपरादपि वाक्यात् प्रतीयमानार्थोऽभ्युपेयत इति हि देवताधिकरणे व्युत्पादितम् । अद्वैतब्रह्मणश्च मानविरुद्धत्वान्न विधिपरवाक्यात् सिद्धिरिति भावः ।

यदपि चोक्तं विध्याक्षेपरूपौपादानिकप्रमाणात् तत्सिद्धिरिति तत्राह–आरोपितेति । 'वाचं धेनुमुपासीत' इत्यादिवदुपासनाया आरोपितविषयत्वेऽपि तद्विधिसंभवान्न तस्योपास्ययाथार्थ्यापेक्षेति भावः ।

किञ्च विधीयमानमुपासनं निदिध्यासनमेव तदतिरिक्तं वा ? नान्त्य इत्याह—निदिध्यासनेति । आद्ये तस्य चित्तैकाग्र्यद्वारा मोक्षसाधनज्ञानशेषत्वेन स्वतः फलत्वाभावात् तत्परत्वं वेदान्तानामयुक्तमित्याह--निदिध्यासनस्येति ।

कथं तर्हि निर्गुणब्रह्मप्रकरणे आत्मेत्येवोपासीतेत्युपासनाविधिरित्याशङ्क्यात्राद्वितीयात्मैव ज्ञेयत्वेनोच्यते न तु तदुपासनं विधीयते । "अत्र ह्येते सर्व एकीभवन्ती"ति ज्ञानफलस्यैव श्रवणादित्याह–आत्मेत्येवेति । उपासनयैव सर्वात्मभावोऽस्त्वित्यत आह—न हीति । वेदान्तानामद्वैतब्रह्मपरत्वे कथं तत्र तत्र सगुणोपासनविधानमित्यत आह–सगुणेति । अध्यारोपापवादन्यायेन निर्विशेषब्रह्मप्रतिपत्त्यर्थमारोपितगुणानाश्रित्य प्रसङ्गादवान्तरतात्पर्येण तत्तत्फलाय तत्तदुपासनाविधायकानामपि महातात्पर्येण निर्विशेषब्रह्मपरतैवेत्यर्थः । न केवलमुपासनाविधीनामेवाद्वितीयब्रह्मपरत्वम्, किन्तु काण्डत्रयात्मकसर्ववेदस्यापि, तद्ज्ञानस्यैव परमपुरुषार्थहेतुत्वादित्यभिप्रेत्याह·—निरतिशयेति । उक्तार्थे मानमाह–तथा चेति । वेदा ब्रह्मात्मविषयास्त्रिकाण्डण्डविषया इम

क्लृप्तज्ञानकारणाजन्यत्वादित्युक्तम् । अतो न तद्दृष्टान्तेन ब्रह्मज्ञानविधिरनुमातुं शक्यते । तस्माच्छ्रवणादिविधिसामर्थ्यसिद्धालौकिकागोचराप्रतिबद्धसाक्षात्कारं द्रष्टव्य इत्यनूद्य तदर्थं श्रवणादिर्विधीयते न ज्ञानमिति स्वप्रधानमेव ब्रह्म वेदान्तप्रतिपाद्यमिति ।

ब्रह्मणः जगदुपादानत्वनिरूपणम् ।

तच्च ब्रह्म जगदुपादानं आत्मन आकाशः संभूत इति पञ्चम्या तस्य प्रकृतित्वप्रतिपादनात् । पटादयो घटोपादानोपादानकाः कार्यत्वात् घटवदित्याद्यनुमानान्मृदुपादानत्वबाधे पटादीनां घटाद्यनुरक्तसदुपादानतासिद्धेश्च ।

स्यादेतत्, मृदादेस्तावदन्वयव्यतिरेकसिद्धं घटाद्युपादानत्वं न ततोऽन्यस्य । तत्र मानाभावात् । न चेदमेवानुमानं प्रमाणम्; मृदतिरिक्तघटोपादानस्यानुभवविरुद्धत्वात्, अनुमानस्य गौरवबाधितत्वाच्च ।

---

इत्यादि स्मृतिरपि द्रष्टव्या ।

यदुक्तं ज्ञानस्याविधेयत्वे उपासनाविधिर्न स्यादिति तत्राह—उपासनात्मकेति । द्रष्टव्य इत्यनुवादस्य नैरर्थक्यमुक्तम् निराकुर्वन् प्रकृतमुपसंहरति—तस्मादिति । प्रसाधितमौपनिषदत्वमद्वितीयब्रह्मण एव न तटस्थस्येश्वरस्येत्यभिप्रेत्य तस्य जगदुपादानतामाह—तच्चेति । प्रकृतित्वेति । जनिकर्तुः प्रकृतिरिति उपादानेऽपादानसंज्ञाविधानादिति भावः । श्रुतौ विप्रतिपन्नं प्रत्यनुमानमाह—पटादय इति । स्वतन्त्रप्रकृतेर्घटाद्युपादानत्वे धर्मिकल्पनागौरवाद् घटाद्यनुरक्ततयाऽनुभूयमानसद्वस्त्वेव तदुपादानतया सिद्ध्यतीत्यभिप्रेत्योक्तम्—घटाद्यनुरक्तेति । एतदाक्षिपति—स्यादेतदिति ।

किं मृदादेरप्यन्वयादिना घटाद्युपादानत्वमुत न, आद्ये तत एव घटादिकार्योपपत्तेरतिरिक्तोपादाने न मानमस्तीत्याह—मृदादेरिति । मृदाद्युपादानकतया विकार्यत्वोपपत्तेरुक्तानुमानमप्रयोजकत्वान्न मानमित्यभिप्रेत्याह—न चेति । दूषणान्तरमाह—मृदतिरिक्तेति ।

अन्वयादेरन्यथासिद्धत्वान्मृदादेर्नोपादानतेति द्वितीयमाशंक्य निराकरोति—न चेति । मृदाद्यवच्छिन्नसत्ताया जातित्वादुपादानत्वायोग इत्याह—सत्तेति । सत्ताया जातित्वमसंमतमिति मन्वानं प्रत्याह—सत्ता चेति । मृदादेरुपादानावच्छेदकतयाऽन्यथासिद्धिरित्येतदप्ययुक्तमित्याह—मृदादेरिति ।

न च मृदादेरवच्छेदकतयाऽन्वयव्यतिरेकौ, तदनुगतसत्तैकैव सर्वकार्योपादानमिति वाच्यम्; सत्ताजातेरनुपादानत्वात्, सत्ता च नित्यत्वे सत्यनेकसमवेतत्वाज्जातिः। मृदादेः स्वतन्त्रान्वयादिना घटाद्युपादानत्वाच्च।

किञ्च सत्ता न द्रव्योपादानं निःस्पर्शत्वात् गगनवत्। अन्यथा कार्यद्रव्ये स्पर्शनियमाभावप्रसंगात्। आकाशादिश्च न कार्यं निरवयवद्रव्यत्वात्, आत्मवत् न चासिद्धिः निःस्पर्शत्वेन तत्सिद्धेः, तत्कार्यत्वे साधकाभावाच्च। श्रुतेरनुमानविरोधेऽन्यपरत्वात्। आकाशादिः कार्यं विभक्तत्वात् घटादिवदिति चेत् न, विभक्तत्वं यदि विभागाश्रयत्वं तदा निरवयवसंयोगवन्निरवयवविभागोऽपि सिद्धान्ते नास्तीत्यसिद्धिः। परमते परमात्मनि व्यभिचाराच्च। अत एव न भिन्नत्वमपि प्रपञ्चभिन्ने ब्रह्मणि व्यभिचारात्।

अथ स्वसमानसत्ताकभेदाश्रयत्वं भिन्नत्वं न ब्रह्मणीति चेत्, न; त्वदभिमताविद्यायां तस्यापि सत्वात्। अप्रयोजकत्वाच्च, कार्यद्रव्यस्य स्वन्यूनपरिमाणद्रव्योपादानकत्वनियमाच्च न ब्रह्मण उपादानत्वम्। किञ्चोपादनं सच्चेतनमचेतनं वा? प्रथमे घटादेरपि चेतनत्वापत्तिः उपादानगतविशेषगुणस्य कार्ये स्वसमानजातीयगुणारम्भकत्वनियमात। अन्त्ये न त्वदभिमतब्रह्मोपादानतासिद्धिः।

---

द्रव्योपादानस्य स्पर्शवत्वनियमात् सत्तायाश्च तदभावादपि न द्रव्योपादानतेत्याह—किं चेति। स्पर्शरहितस्यापि द्रव्योपादानत्वे बाधकमाह—अन्यथेति। कार्यद्रव्यस्याऽऽकाशादेः स्पर्शाभाव इष्ट इत्याशङ्क्याह -आकाशादिश्चेति। घटादौ रूपादौ च व्यभिचारवारणाय विशेषणद्वयम्। आकाशादौ निरवयवत्वमसिद्धमित्यत आह न चेति। आकाशादिकार्यत्वेमानाभावादपि तदकार्यतेत्याह—तत्कार्यत्व इति। 'आत्मन आकाशः संभूतः' इत्यादि श्रुतरेव तत्र मानमित्यत आह-श्रुतेरिति। यावद्विकारं तु विभागो लोकवदिति सूत्रोक्तमनुमानमनूद्यापवदति—आकाशादिरिति। किं विभक्तत्वं विभागाश्रयत्वं भिन्नत्वं वा? आद्यं तावदसिद्धमित्याह—विभक्तत्वमिति। संयोगपूर्वकत्वाद्विभागस्य निरवयवाकाशादौ संयोगाभावेन विभागस्याप्यसंभवादित्यर्थः। भेदिमते ब्रह्मणोऽपि विभागा-

उपादानत्वे नवीनपक्षः

नवीनस्तु विकारवत्कारणत्वमुपादानत्वम्। परिणामित्वं ह्युपादानत्वम्। तच्च विकारित्वम्। ब्रह्म च निर्विकारं कूटस्थमचलं ध्रुवमित्यादिशास्त्रादिति ते मतम्।

ननु मायाविशिष्टम्, मायाशक्तिमद् वा मायाश्रयो वा ब्रह्म जगदुपादानम्। तत्र प्रथमे द्वे सूत्रे रज्जोरिव मायाब्रह्मणी उपादाने। निर्विकारश्रुतिस्तु केवल-ब्रह्मपरा। द्वितीये मायोपरागात् ब्रह्मोपादानम्। श्रुतिस्तु तदनुपरागब्रह्माभि-प्राया। तृतीयेंऽशुस्तन्तुद्वारा पटस्येव मायाद्वारा ब्रह्मोपादानम्, श्रुतिस्तु अद्वार-विकारनिषेधिकेति चेत्, न; आद्ये मायावत् तन्तुवच्च विकारीति विशेष्यब्रह्मणो निर्विकारत्वोक्त्ययोगात्।

किञ्चाविद्योपादानत्वेऽपि सूत्रकार्ये पटे सितत्ववज्जगति परमार्थसत्यत्वमपि

---

श्रयत्वात्तत्र व्यभिचार इत्याह-- रमत इति। द्वितीयं दूषयति --अत एवेति। ब्रह्मणि व्यभिचारवारणाय भेदविशेषणं शङ्कते--अथेति। अनिर्वचनीयाविद्यादेः स्वसमान-सत्ताकभेदवत्त्वेऽपि कार्यत्वाभावात् तत्र व्यभिचार इत्याह---त्वदभिमतेति। अविद्या व्यावृत्तये विशेषणान्तरोपादाने हेतोरप्रयोजकतेत्यभिप्रेत्याह—अप्रयोजकत्वादिति।

किञ्च यदि ब्रह्म कार्यद्रव्योपादानं स्यात्, तर्हि ततोन्यूनपरिमाणवत्स्यात् ततो न तदुपादानमिति बाधकान्तरमाह —कार्येति। घटाद्यनुगतसद्वस्तुनस्तदुपादानत्वे विकल्पमुखेन बाधकान्तरमाह---किं चेत्यादिना। परमाणुपरिमाणपरत्वादिव्यावृत्तये विशेषगुणस्ये-त्युक्तम्---कार्य इति। द्रव्य इत्यर्थः। ब्रह्मण्युपादानलक्षणासंभवान्न तस्योपादानत्वमिति परोक्तमनुवदति--नवीन इति। ब्रह्मण उपादानत्वेन विकारित्वेन निर्विकारश्रुतिविरोध इति वक्तुं तस्य मतभेदेन त्रिप्रकारमुपादानत्वं वदन् शङ्कते---नन्विति। आद्ये माया-विशिष्टरूपेण विकारित्वेऽपि केवलरूपेण निर्विकारत्वोपपत्तिरित्याह---तत्रेति। माया-शक्तिमद्ब्रह्मोपादानमिति मते मायोपरागे विकारित्वं तत्तदभावे तु निर्विकारित्वमित्य-विरोधमाह---द्वितीय इति। मायाश्रयो ब्रह्मोपादनमिति मते मायाद्वारा विकारित्वं निर्विकारित्वं तु साक्षादित्यविरोधमाह- -तृतीय इति। विशिष्टस्य विशेष्यविशेषणाभ्या-मनन्यत्वात् तद्विकारेण विशेष्यस्यापि विकारो दुर्वार इत्याद्यं दूषयति —आद्य इति।

तन्तुवदेव ब्रह्मण उपादानत्वे तन्तुस्वभावस्य श्वैत्यस्येव ब्रह्मस्वभावस्यापि परमार्थसत्यत्वस्य तत्कार्यवृत्तिता स्यादित्याह--किंचेति। उपादानस्वभावस्य कार्ये धीमात्रमपेक्ष्यते न तु सत्वं ब्रह्मस्वभावस्यापि सत्तादेः प्रपञ्चे प्रतीतिमात्रमस्त्येवेत्याशंक्य तथा सत्यविद्यास्वभावोऽनिर्वचनीयत्वमपि प्रपञ्चे न स्यादिति दूषयति—न हीति।

दुर्निवारम् । न ह्युपादानस्वभावस्योपादेये धीमात्रम् । अविद्यास्वभावस्यानिर्वचनीयत्वस्यापि प्रपञ्चे धीमात्रत्वापातात् । सन्मात्रोपादानत्वं सत्वे तन्त्रमिति चेत्, न; अनिर्वचनीयत्वमपि न स्यात् तन्मात्रोपादानत्वाभावात् । द्वितीये मायाख्यहेतूपरागभावाभावाभ्यां विकारभावाभावविवक्षा चेत्, मृदादिसाधारण्यम् । मायाशक्तिमद्ब्रह्मविकारि निर्विकारश्रुतिस्तु तदनुपरक्ताभिप्रायेति विवक्षायां शक्तिमतो ब्रह्मत्वे निर्विकारश्रुतिविरोधः । तदन्यत्वे न नो विवादः । किञ्च विशिष्टस्य मृदादिवद्धर्मिसमसत्ताकरूपान्तरापत्तिरूपपरिणामाद् विवर्तहानिः । विशिष्टस्य परिणामः शुद्धस्य विवर्त इति चेत् । तर्हि शुद्धविवर्तार्थमारोपितविकारस्यावश्यकत्वान्निर्विकारश्रुतेस्तत्परत्वं न स्यात् । श्रुतिर्विशेष्यस्यैव तात्त्विकविकाराभावपरा चेत् विशिष्टविकारोक्तिरयुक्ता स्यात् । तत्त्वतो निर्विकारे आरोपितविकाराविरोधात् ।

तृतीयोऽप्ययुक्तः, अंशोस्तन्तुं प्रतीव ब्रह्मणोऽनादिमायां प्रत्युपादानत्वाभावात् । विभ्रमाधिष्ठानत्वमुपादानत्वमित्यपि न, उपादानमृदादौ भ्रमाधिष्ठा-

---

कार्यस्य सत्त्वे सन्मात्रोपादानत्वं प्रयोजकम्, न तु सदुपादानत्वमिति शङ्कते—सदिति । कार्यस्यानिर्वचनीयत्वेऽप्यनिर्वचनीयमात्रोपादानत्वं प्रयोजकमिति तदपि न स्यादित्याह–अनिर्वचनीयत्वमिति । द्वितीये कालभेदेन मायोपरागतदभावौ विकाराविकारव्यवस्थापकाविति विवक्षितमुत समानकालीनावेव । आद्ये न ब्रह्मणो मृदादितो विशेष इति दूषयति—द्वितीय इति । द्वितीये मायोपरक्तस्य विकारिणो निर्विकारब्रह्मणा सहाभेदो भेदो वा ? आद्ये तस्य निर्विकारत्वक्षतिरित्याह--शक्तिमत इति । द्वितीये ब्रह्मभिन्नस्याब्रह्मत्वात् तस्य जगदुपादानत्वमिष्टमित्याह--तदन्यत्व इति ।

किञ्च मायाशक्तिविशिष्टाकारेण ब्रह्मण उपादानत्वे विशिष्टस्यानिर्वचनीयत्वेन तत्समसत्ताकं कार्यं तत्परिणाम एव स्यात् धर्मिसमसत्ताकरूपान्तरापत्तेः परिणामत्वनियमात् ततश्च विवर्तवादहानिरित्याह--किंचेति ।

प्रपञ्चस्य विशिष्टपरिणामत्वेऽपि न विवर्तहानिरिति शङ्कते--विशिष्टस्येति । किमस्मिन् पक्षे निर्विकारश्रुतिः शुद्धस्य विकारमात्राभावपरा ? उत, वस्तुतो विकाराभावपरा ? नाद्यः, शुद्धेऽप्यारोपितविकारस्यावश्यकत्वादित्याह--तर्हीति । द्वितीयमुद्भाव्य दोषमाह--श्रुतिरित्यादिना । शुद्धं ब्रह्मैवोपादानं न च निर्विकारश्रुतिविरोधः, आरोपितविकारेण वास्तवनिर्विकारत्वस्याविरोधादिति वक्तुं शक्यत्वाद् विशिष्टस्यो-

नत्वस्य तदधिष्ठानशुक्त्यादावुपादानत्वस्य चाव्यवहारात्। पारिभाषिकोपादानत्वस्यानुपादानत्वे पर्यवसानात्।

एतेनासत्यरूपान्तरापत्तिर्विवर्तः, सत्यरूपान्तरापत्तिः परिणामः। रूपान्तरापत्तिमात्रमुपादानत्वम्। तच्च ब्रह्मणो विवर्तरूपविशेषेणाप्युपपन्नम्। निर्विकारश्रुतिस्तु तात्त्विकविकाराभावाभिप्राया। ब्रह्म चाज्ञातं प्रपञ्चरूपेण विवर्तते इत्यज्ञानमपि परिणामितयोपादानम्। रूप्यमपि शुक्तिविवर्तत्वादज्ञानपरिणामत्वाच्चोभयोपादानमिति निरस्तम्। ब्रह्मकार्यस्यासत्यत्वानुपपत्तेः। तथात्वेवाऽन्वयव्यतिरेकाभ्यामविद्यानिमित्तत्वमात्रापातात्। आरोपितानारोपितरजतानुगतरजतत्ववत् सत्यासत्यरूपान्तरापत्त्यनुगतोपादानत्वसामान्याभावाच्च। ब्रह्मणो रूपान्तरापत्तेरविद्यापरिणामत्वायोगाच्च। न ह्यन्यस्य रूपान्तरापत्तिरन्यपरिणाम इति युज्यते। तस्मान्न ब्रह्मण उपादानत्वम्।

---

पादानत्वोक्तिरयुक्तेत्यर्थः। अंशोस्तन्तुद्वारा पटोपादानत्ववद्ब्रह्मणो मायाद्वारा जगदुपादानत्वमिति मतमसंभवेन दूषयति---तृतीयोऽपीति।

ननु विकारित्वं नोपादानत्वम्, किन्तु भ्रमाधिष्ठानत्वं तच्च वस्तुतो निर्विकारेऽपि ब्रह्मण्यविरुद्धमिति नेत्याह-- विभ्रमेति। पारिभाषिकेति।

मृदाद्यनुगतमुपादानलक्षणान्तरमाशङ्क्य निराकरोति--एतेनेति। सत्यरूपान्तरापत्तिरिति। धर्मिसमसत्ताकरूपान्तरापत्तिरित्यर्थः। रूपान्तरापत्तिमात्रमिति। रूपान्तरतादात्म्यापन्नकारणत्वमित्यर्थः। एतच्च सामान्यलक्षणं ब्रह्मणोऽतात्त्विकरूपान्तरापत्त्याऽप्युपपद्यत इत्याह---तच्चेति। ब्रह्मविवर्तप्रत्येवाज्ञानं परिणामितयोपादानं तस्य स्वसमसत्ताकरूपान्तरापत्तिसत्त्वादित्याह --ब्रह्म चेति। शुक्तिरूप्यादेरिवैकोपादानत्वमस्त्वित्याशङ्क्य तस्याप्यज्ञातशुक्तिविवर्तत्वादुभयोपादानकत्वं तुल्यमित्याह---रूप्यमिति। एतेनेत्येतद् विवृणोति-- ब्रह्मेति। सद्रूपब्रह्मोपादानत्वे कार्यस्यापि सत्यता स्यादित्युक्तत्वादित्यर्थः। ब्रह्मकार्यस्याऽप्यविद्यादोषजन्यत्वादसत्यत्वमित्याशंक्य तथा सत्यविद्यायास्तदुपादानत्वं न स्यादित्याह तथात्व इति। किञ्च सद्रूपे ब्रह्मण्यसत्यरूपाज्ञाने चानुगतैकोपादानत्वासंभवात् तुल्यं लक्षणमयुक्तमित्यभिप्रेत्याह --आरोपितेति। ब्रह्मविवर्तं प्रति परिणामितयाऽज्ञानमुपादानमित्येतदप्ययुक्तमित्याह--ब्रह्मण इति। शुक्तिविवर्तस्य रजतस्य तदज्ञानपरिणामित्वं दृष्टमित्याशङ्क्य तदपि विप्रतिपन्नमित्यभिप्रेत्याह-- न हीति। ब्रह्मोपादानताया दुर्निरूपणान्न तस्य जगदुपादानतेत्याह--तस्मादिति।

ब्रह्मणः उपादानत्वाभावे श्रुतिविरोधाभावः

नापि तत्र मानमस्ति। आत्मन आकाशः संभूत इति पंचमीश्रुतिर्नोपादानत्वे प्रमाणं, तस्या अनेकार्थत्वात्। अपादानार्थत्वेऽपि "ध्रुवमपायेऽपादानम्" इत्यपादानसंज्ञासंभवाच्च। जनिकर्तुः प्रकृतिरित्यनेनापादानत्वसंज्ञायामपि वृत्तौ 'पुत्रात् प्रमोदो जायत' इत्यस्याप्युदाहृतत्वात्। न चाकाशाद् वायुरित्युपादानपंचमीसाहचर्यादात्मन इत्युपादानपञ्चमीति वाच्यम्; आकाशादित्यादावपि निमित्तार्थ एव पंचमीविधानात्। सच्चत्यच्चाभवदिति च परमेश्वरस्य सत्वादिगुणाभिव्यक्तिपरा। सदादिभवनस्य जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन जगत्सृष्टित्वानुपपत्तेः।

अन्यथाऽभवदित्युक्तिविरोधाच्च, न हि शुक्तीरूप्यमभवदित्युच्यते। मूर्तामूर्तप्रपञ्चस्य सत्त्यत्पदाभ्यामेवोक्तत्वात् निरुक्तं चानिरुक्तं चेत्यादिवाक्यशेषस्थनिरुक्तादिपदवैयर्थ्यं च।

"सोऽकामयत बहुस्याम्" इति तु परमेश्वरस्याजायमानो बहुधा विजायते

---

मानाभावादपि न ब्रह्मोपादानमित्याह—नापीति। तत्र संभावितश्रुतीस्तावदन्यथयति—आत्मन इति। अपादानार्थत्वेऽपीति। अपगमावधित्वेऽपीत्यर्थः। जनिकर्तुरिति सूत्रोक्तापादनसंज्ञाधीनेयं च पञ्चमी किं न स्यादित्यत आह—जनिकर्तुरिति। संज्ञायामपि पञ्चमी नोपादानत्वे मानमिति शेषः। तत्र हेतुमाह—वृत्ताविति। पितुः प्रमोदनिमित्तस्याप्येतत्सूत्रप्राप्तपञ्चम्यर्थत्वेनोदाहृतत्वादित्यर्थः। शृङ्गाच्छरो जायत इत्यादेरप्युदाहृतत्वात्, आकाशाद्वायुर्वायोरग्निः अग्नेराप इत्युपादानपञ्चमीप्रायपाठात्मन इति पञ्चम्युपादानार्थैवेत्याशङ्क्याह—न चाकाशादिति। आकाशादेर्विजातीयद्रव्यं प्रत्यनुपादानत्वात् तत्रापि निमित्तार्थैव पञ्चमीत्यर्थः। सच्चत्यच्चाभवदिति ब्रह्मणोमूर्तामूर्तात्मकरूपान्तरापत्त्यभिधानात् तस्य तदुपादानत्वसिद्धिरित्याशंक्य तदप्यन्यथति—अनन्तरभावित्वेनेति। इद सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्चत्यच्चाभवदि"ति जगत्सृष्ट्याद्यनंतरसदादिभवनस्य पश्चात्तनत्वेन जगत्सृष्टेस्तदर्थत्वायोगादित्यर्थः। ब्रह्मणो जगद्रूपेण विवर्तपक्षे दोषान्तरमाह—अन्यथेति। सर्वकार्यस्य मूर्तामूर्तात्मकत्वात् सच्चत्यच्चाभवदिति तदुत्पत्त्याद्यभिधानेऽत्रैव सर्वकार्योत्पत्तिसिद्धेरुत्तरवाक्यवैय्यर्थ्यापाताच्चेत्याह—मूर्तेति।

ईश्वरस्य नानाकार्यरूपापत्त्यभावे कथं तस्य बहुभवनसंङ्कल्पश्रुतिरित्याशङ्क्य साप्यन्तर्यामिरूपेण बहुभवनपरा न जगद्रूपेणेत्याह—सोऽकामयतेति। अन्तर्यामिरूपेण

'यदेकमव्यक्तमनन्तरूपम्' इत्यादिश्रुतिसिद्धानन्तपदार्थप्रेरकानन्तरूपैर्बहुभवन सङ्कल्पमाह। न च स्वस्वानन्तरूपैर्बहुभावं सङ्कल्प्येदं सर्वमसृजतेति प्रपञ्च-सर्जनानुपपत्तिरिति वाच्यम्; नियामकरूपैर्बहुभावस्य नियम्यसपेक्षत्वात् नियम्यं सृष्ट्वा नियामकरूपैः प्रवेशोक्तसुपपत्तेः अन्यथा सृष्टेः पूर्वमन्तःकरणाभावेन तद्वि-शिष्टाहमर्थाभावात्। उत्तमपुरुषानुपपत्तिश्च। एतेन 'तदैक्षत बहुस्यां प्रजायेय' इत्येतदपि व्याख्यातम्।

किञ्च तत्तेजोऽसृजतेति यत्तेजः प्रभृति सृज्यं तदात्मना हि त्वया बहुभावो वाच्यः, तेजःप्रभृति च चेतनं "तत्तेजः ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्त तिस्रो देवता" इति ईक्षितृत्वस्रष्टृत्वदेवतात्वानां श्रवणात्। न च चेतनं प्रत्युपादनता तवापीष्टा। एतेनासद्वा इदमग्र आसीत् ततो वै सदजायत तदात्मानं स्वयमकुरुतेत्येतदपि व्याख्यातम्। 'तदात्मानं सृजाम्यहम्, संभवामि युगे युगे" इत्यादिवदुपपत्तेः। न ह्यत्रात्मानमाकाशाद्यात्मनाऽकुरुतेति श्रूयते।

किञ्च परमते ततो वै सदजायतेति पूर्ववाक्येनैव सच्छब्दनिर्दिष्टप्रपञ्चस्य ब्रह्मण उत्पत्तेः सिद्धत्वात् तदात्मानमिति व्यर्थम्। नापि" सर्वाणि ह वा इमानि

---

बहुभवनस्य संकल्पश्रुत्यर्थत्वेऽनन्तरं संकल्पितबहुभवनमनुक्त्वाऽसंकल्पितजगत्सृष्ट्यभिधान-मनुपपन्नमित्याशङ्क्य संकल्पितप्रतियोगितया तदभिधानमिति परिहरति–न चेत्यादिना। संकल्पितश्रुतेः स्वाभिमतार्थमुपपाद्य सिद्धान्त्यभिमतार्थदोषमाह—अन्यथेति।

अस्मद्युत्तम इत्यहमनुभवालंबनार्थ एवोत्तमपुरुषस्मरणात् सृष्टेः पूर्वं तदभावात् "स्यां" प्रजायेये'ति प्रयोगानुपपत्तिरित्यर्थः। अन्तःकरणोत्पत्तेः पूर्वं कामनाया असंभवात् अकामयतेत्यनुपपन्नमिति चार्थः। उक्तन्यायेन संकल्पश्रुत्यन्तरमपि नेयमित्याह—एतेनेति।

किञ्च तदैक्षत बहुस्यामित्येतदनन्तरं तेजोबन्नानां सृष्टिः श्रूयते तद्रूपेण च त्वया बहुभवनं वाच्यम्, तदनुपपन्नं ईक्षितृत्वादिभिस्तेषां चेतनत्वावधारणात् त्वयापि चेतनान् प्रति ब्रह्मण उपादानत्वानभ्युपगमादित्याह–किं चेत्यादिना। स्रष्टुरेव सृज्या-त्मपरा श्रुतिरप्यन्तर्याभिभावेन तत्स्रष्टृविषयेत्याह—एतेनेति। अन्तर्यामिभावेनात्मनः सृज्यत्वं तदर्थ इत्यत्र स्मृतिसंवादमाह—तदात्मानमिति। सिद्धान्त्यभिमतार्थे न किञ्चित् प्रापकमित्यभिप्रेत्याह— न हीति।

तदात्मानं स्वयमकुरुतेत्यत्राकाशादिसृष्ट्यभिधानेऽस्य वैयर्थ्यं च स्यादित्याह—किञ्चेति। ब्रह्मणि जगतः सृष्टिलयाभिधायिनी श्रुतिस्तस्य तदुपादानत्वे मानमनुपादाने

भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तंयन्तीत्यादिश्रुत्या ब्रह्मण्येव सृष्टि-लयोक्तिः तत्र मानं निमित्ते कार्यस्य लयाभावादिति युक्तम्। निमित्तोर्णनाभौ तन्तोर्लयदर्शनात्। ब्रह्मणोऽप्यूर्णनाभिवदेव संहर्तृत्वस्य "यथोर्णनाभिः सृजते गृह्णते चेत्यादिश्रुतिसिद्धत्वात्।

न चोर्णनाभिरपि तन्तूपादानं, ऊर्णनाभिदेहगतधातुविशेषस्यैव तन्तूपादानत्वात्। केशादीन् जडोपादानान् प्रतिचेतनस्य निमित्तमात्रत्वात्। नाप्येकमेवाद्वितीयमिति वस्त्वन्तरनिषेधादात्मन एवोपादानत्वम्, त्वन्मतेऽप्यविद्यादेः सत्त्वात्। नाप्येकविज्ञानात्त सर्वविज्ञानानुपपत्तिरुपादानत्वे मानम् सादृश्यप्राधान्याभ्यामेव तदुपपत्तेः। नापि "सर्वं खल्विदं ब्रह्म" इति सामानाधिकरण्यानुपपत्तिस्तत्र मानम्। "सर्वं समाप्नोषि ततोऽसि सर्वः" इति स्मृत्यैव सर्वगतत्वपरतयैव व्याख्यातत्वात्। महाभूतानि सद्वस्तुप्रकृतिकानि, सत्स्वभावानुरक्तत्वे सति विविधविकार-

---

कार्यस्य लयायोगादित्यप्ययुक्तम्। क्वचिन्निमित्तेऽपि लयदर्शनेन तदनुपपत्त्यभावादित्याह—नापीत्यादिना। घटादिलयाधारस्य मृदादेस्तदुपादानत्वदर्शनाद्ब्रह्मणोऽपि तल्लयाधारत्वात् तदुपादानत्वमित्याशङ्क्य श्रुत्यैवोर्णनाभिदृष्टान्तेन लयाधारत्वोक्तेस्तद्वदेव निमित्तत्वैवेत्याह—ब्रह्मण इति। ऊर्णनाभेरपि तन्तूपादानत्वात् सृष्टिनिमित्तस्य लयाधारत्वे न दृष्टान्त इत्यत आह—न चेति। धातुविशेषस्येति। श्लेष्मधातोरित्यर्थः। ऊर्णनाभेः स्वजन्यतन्तूनां च रूपभेदेनोपादानोपादेयभावानुपपत्तेस्तच्छरीरावच्छिन्नचेतनस्य च स्पर्शादिरहितत्वेन सुतरां तदुपादानत्वानुपपत्तेरिति भावः। "यथा सतः पुरुषात् केशलोमानि" इत्युत्तरवाक्येऽपि निमित्तमेवोदाहृतमित्यभिप्रेत्याह—केशादीनिति। सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति सृष्टेः पूर्वमात्मातिरिक्तस्य निषेधात्स एवोपादानमित्याशङ्क्य तदाप्यविद्यातत्सम्बन्धादेरावश्यकत्वात् कार्यद्रव्यमात्रस्यैव निषेधाभिप्रायं तद्वचनमित्यभिप्रेत्याह—नापीत्यादिना।

ब्रह्मजगतोरुपादानोपादेयभावेन तादात्म्याभावे "येनाश्रुतं श्रुतं भवतीत्यादिना ब्रह्मविज्ञानात् सर्वविज्ञानानुपपत्तिरित्यपि न; स्थालीस्थैकतण्डुलपरीक्षया तत्सादृश्यात् तत्रत्यसर्वतण्डुलपाकज्ञानवत् प्रधाने राजनि दृष्टे तदमात्यादयो दृष्टप्राया इतिवद्वा तदुपपत्तेरित्याह—नाप्येतेति। सर्वस्य कार्यस्य कारणीभूतब्रह्माभेदः श्रूयमाणस्तस्य तदुपादानत्वं विनानुपपन्नस्तत्र मानमित्यपि न, ब्रह्मणः सर्वात्मत्वश्रुतेर्विरुद्धत्वेनान्यपरतयैव स्मृत्यास्याऽऽख्यातत्वेन तस्य तदभेदाभावादित्याह—नापि सर्वमिति।

ब्रह्मोपादानत्वे श्रुतितदनुपपत्ती निराकृत्याऽनुमानमपि निराकरोति—महाभूतानीति।

**त्वात्, मृदनुस्यूतघटादिवदिति विवरणानुमानं न साधु। तव मते उपादनानुपपत्तेरुक्तत्वात्, सत्प्रकृतिकत्वस्य मन्मतेऽपि सत्वात्। खण्डो गौर्मुण्डो गौरिति गोस्वभावानुरक्तखण्डादौ व्यभिचारात्। ब्रह्म न द्रव्योपादानं चेतनत्वात् चैत्रवत्, जगन्न चेतनप्रकृतिकं तत्स्वभावाननुरक्तत्वात्। यत्स्वभावाननुरक्तं न तत् प्रकृतिकं यथा घटस्वभावाननुरक्तः पटो न घटोपादान इत्यादिना सत्प्रतिपक्षत्त्वाच्चेति।**

माध्वोक्तयुतीनां खण्डनं ब्रह्मणो जगदुपादानत्वव्यवस्थापनं च।

अत्रोच्यते। **यदुक्तं विकारवत्कारणत्वमुपादानत्वमिति। तन्नतावद्विकारसमवायित्वम्, यत्किञ्चिद्विकारसमवायित्वस्य निमित्तसाधारणत्वात्। तद्विकारसमवायित्वस्याप्येकसमवायवादे तत्र सत्वात्। घटाद्यवच्छिन्नः समवायो दण्डादौ नास्तीति चेत्, स किं दण्डवृत्तिसमवायादनन्यः, किं वाऽन्यः।**

**आद्ये न तत्र तदभावः। तदभिन्नस्य तत्र सत्वे तदभावायोगात्। द्वितीयः। समवायस्यैकत्वभङ्गप्रसङ्गात्। घटादिविशिष्टत्वाकारेणान्य इतिचेत्, न, विशेष्याभेदवतिविशिष्टभेदबुद्धेर्विशेषणभेदविषयत्वाङ्गीकारविरोधात्। एकस्मिन्नप्यौपाधिकभेदोऽस्तीति चेत् न, उपाधिजन्यस्य भेदस्याभावात्। उपाधिनि-**

---

भूतानां सद्वस्तु प्रकृतिकत्वे सत्वापत्तेरुक्तत्वात् प्रतिकूलतर्कपराहमिदमित्यभिप्रेत्याह---तव मत इति।

परमतेऽपि भूतोपादानस्य प्रकृत्यादेः सत्वाभ्युपगमात् सिद्धसाधनं चेत्याह—सत्प्रकृतिकत्वस्येति। किं चात्र यो विकारो यत्स्वभावानुरक्तः स तत्प्रकृतिकः सामान्येन व्याप्तिर्वाच्या। तथा च व्यभिचार इत्यभिप्रेत्याह–खण्ड इति। प्रतिपक्षपराहतिप्याह–ब्रह्मेति।

स्वाभिमतमुपादानलक्षणं निरूपयितुं तावत् परोक्तमनुवदति निराकर्तुम्--यदुक्तमिति। किं विकारवत्वं, विकारसमवायवत्वं, परिणामित्वं वा आद्यं प्रत्याह--तन्न तावदिति। निमित्तसाधारणत्वादिति। दण्डादेरपि रूपत्वादिसमवायित्वात् घटाद्युपादानत्वापात इति भावः। यद्यद्विकारसमवायि तत्तदुपादानमिति विवक्षायामप्येकसमवायवादे स दोषस्तदवस्थ इत्याह—तद्विकारेति।

दण्डादौ समवायमात्रसत्वेऽपि घटावच्छिन्नसमवायाभावान्न तत्समवायित्वमिति शंकते---घटेति। विकल्पा सहत्वान्नैतदिति दूषयति---स किमिति।

स्वरूपेणैकत्वेऽपि विशिष्टरूपेण भेदो न विरुद्ध इति शंकते—घटादीति।

स विशेषणे हि विधिनिषेधौ विशेष्ये बाधे विशेषणमुपसंक्रामत इति पराभ्युपगमाद् घटादिविशेषणभेदोऽपि न समवायभेदसिद्धिरित्याह---न विशेष्येति।

समवायप्रतियोगिकस्वारसिकभेदाभावेऽप्यौपाधिकभेदोऽस्तित्वति शङ्कते—एकस्मिन्नति।

मित्तरक्तरक्तप्रतीतेरिवौपाधिकसमवायप्रतियोगिकतद्धर्मिकभेदबुद्धेरपि भ्रमत्वात्। एतेन घटनिरूपितसमवाये केवलसमवायभेदबुद्धेर्भ्रमत्वेऽपि रूपादिसमवायात् तद्बुद्धिः प्रमेति निरस्तम्। किं रूपादिनिरूपितः समवायः केवलसमवायादनन्यः। अन्यो वा ? आद्ये घटसमवाये रूपसमवायाद् भेदानुपपत्तिः घटादिसमावायस्यापि समवायादनन्यत्वात्। द्वितीये पदार्थातिरेकप्रसङ्गः। रूपादिकं प्रतिघटादेरनुपादानत्वप्रसङ्गश्च, तत्सम्बन्धस्यासमवायत्वात् घटरूपादिसमवायानामन्योन्यमिव केवलसमवायादप्यौपाधिको भेद इति चेत्; न, रूपसम्बन्धो न भवतीतिवत् रूपसम्बन्धः समवायो न भवतीति बुद्धेः प्रमात्वापातात्, केवलसमवायप्रतियोगिकवास्तवभेदाभ्युपगमे तस्यासमवायत्वाच्च। नन्वेवमपि दण्डे घटो नास्तीति चेत्; न तथापि भूतलादेरुपादानत्वप्रसङ्गात्; तत्र घटादेर्विद्यमानत्वाच्च।

---

किं भेदस्योपाधिजन्यत्वमौपाधिकत्वं तद् ज्ञाप्यत्वं वा ? नाद्यः भेदस्यानादितया जन्यत्वायोगादित्याह—न उपाधीति।

द्वितीये उपाध्यधीनप्रतीतेर्भ्रमत्वनियमेन ततो दण्डघटसमवाययोर्न भेदसिद्धिरित्यभिप्रेत्याह----उपाधीति।

दण्डघटसमवायस्य समवायतया घटसमवायादभेदेऽपि रूपसमवायतया भेदोऽस्तीति तद्रूपेण भेदधीः प्रमैवेत्येतदपि वक्ष्यमाणविधया निरस्तमित्याह—-एतेनेति।

केवलसमवायाद्रूपादिसमवायस्याभेदो भेदो वेतिविकल्पयति----किमिति।

आद्ये घटसमवायस्य रूपसमवायाभिन्नकेवलसमवायाद् भेदाभावेन ततोऽपि भेदो न स्यादित्याह ---आद्य इति।

द्वितीये स किं भेदः स्वाभाविक औपाधिको वा ? आद्ये रूपसमवायस्य समवायेऽनन्तर्भावाद् द्रव्यादिष्वनन्तर्भावाच्च पदार्थातिरेकापात इत्याह----द्वितीयइति।

रूपानरूपिसंम्बन्धस्यासमवायत्वे घटादेस्तत्समवायित्वाभावेन तदुपादानतापि न स्यादित्याह----रूपादिकमिति

द्वितीयं शङ्कते—-घटेति।

रूपादिसमवायानामौपाधिकभेदबुद्धेः प्रत्यक्षत्ववत्तेषां केवलसमवायादपि भेदधीः प्रमा स्यादिति दूषयति—न रूपेति।

इष्टापत्तिमाशङ्क्याह—केवलेति। तस्येति।

रूपादिसमवायस्यासमवात्वापातेन पदार्थातिरेकापात इति भावः। समवायस्यैकत्वेन दण्डे समवायसत्वेऽपि घटस्य तत्राभावाद् दण्डो न घटोपादानमिति शङ्कते—नन्विति।

दण्डे घटाभावेऽपि कार्यसमवायाश्रयत्वरूपोपादानलक्षणस्य तत्रातिव्याप्तेरेवेत्यभिप्रेत्याह—नेति।

समवायनिरासः

**न च यत्र कार्यस्य समवायमात्रं सम्बन्धः तत्कारणमुपादानम्; गुणादावतिप्रसक्तेः तन्तुपटयोरप्याधाराधेयभावसत्वाच्च । संयोगातिरिक्तसमवाये प्रमाणाभावाच्च । न चावयवावयव्यादिविशिष्टप्रत्ययान्यथानुपपत्या तत्सिद्धिः । संयोगस्यैव तद्बुद्धिविषयत्वात् । अक्लृप्तविषयत्वकल्पनात् क्लृप्तविषयस्यैव युक्तत्वात् । न चावयवावयव्यादिविशिष्टबुद्धेः समवायविषयत्व एकविषयत्वमिति लाघवम् । इतरथानेकविषयत्वाद् गौरवमिति वाच्यम्; संयोगस्यापि भेदाभावात् । न चोत्पत्तिविनाशभ्यां तस्यानेकत्वमिति वाच्यम् । तयोरेवाभावात् ।**

**न च घटसंयोगो विनष्ट इति प्रत्ययो मानमिति वाच्यम्; लौकिकानां घटो नष्ट इत्येव बुद्धेर्दर्शनात् । भूतले घटसम्बन्धो नास्तीत्यनुभवस्तु समवायो नेत्यनुभवेन तुल्यः ।**

---

कार्याश्रयत्वेनापि तल्लक्षणं विशेष्यत इत्याशङ्क्याह -तथापीति ।

चशब्दो घटादेरित्यत्र संबध्यते तेन तत्समवायः समुच्चीयते । भूतलादावतिव्याप्तिपरिहाराय विशेषणान्तरमाशङ्क्य परिहरति—न चेति । गुणादाविति ।

रूपाद्याधारकालादेरपि तदुपादानत्वप्रसङ्गादित्यर्थः । कालादेर्गुणादिनाऽऽधाराधेयसंवन्धस्यापि सत्त्वान्न समवायमात्रमित्याशंक्य तन्तुपटयोरपि स तुल्य इत्याह—तन्तुपटयोरिति ।

किं च समवायसद्भावे मानाभावेन तस्यैवासत्वात् तद् घटितं लक्षणमयुक्तमित्यभिप्रेत्याह—संयोगेति ।

"इह तन्तुषु पटो" "नीलमुत्पलमि" त्यादिविशिष्टप्रत्ययः संवन्धविषयः विशिष्टप्रत्ययत्वात् कुण्डेबदरमिति प्रत्ययवत् विपक्षे च विशिष्टप्रत्ययानुपपत्तिरित्यनुमानमेव तत्र मानमित्याशंङ्क्यार्थान्तरत्वेन दूषयति – न चेति ।

संयोगानामनन्तत्वेनावयवावयव्यादिविशिष्टप्रत्ययानां तद्विषयत्वे गौरवं तदतिरिक्तसमवायभेदे मानाभावात् तद्विषयत्वे लाघवमिति समवायविषयत्वमेव युक्तमित्याशङ्क्य संयोगभेदेऽपि मानाभावात् सोऽपि सर्वत्रैक एवेत्याह--न चेत्यादिना ।

क्रियया पूर्वसंयोगनाशादुत्तरसंयोगोत्पत्तेः तदनेकत्वमावश्यकमित्याशंङ्क्य हेत्वसिद्ध्या दूषयति—न चेति ।

संयोगनाशादेरनुभवसिद्धत्वात् कथमभाव इत्याशङ्क्याह—न चेति ।

संयोगो नष्ट इत्याद्यनुभवः किं लौकिकानां उत वैशेषिकमते व्युत्पन्नानाम् । नाद्य इत्याह--लौकिकानामिति । घटनाशानन्तरं मृदि तत्समवायो नेत्यनुभवो यथा संबन्धिनाशादिविषयस्तथायमपीत्यर्थः ।

वैशेषिकादिग्रन्थाभ्यासवतां भूतले घटसंयोगो नष्ट इति प्रतीतिरस्तीति चेत्, तर्हि प्राभाकरादिशास्त्राभ्यासवतां तन्तुषु पटसमवायो नष्ट इति प्रतीतिरपि समवायानित्यत्वे मानमस्ति। समवायस्य लाघवेनैकतया सिद्धौ तद्विनाशप्रत्ययः सम्बन्धिविनाशविषय इति चेत्। संयोगेऽपि तुल्यम्। न चैवं सम्बन्धिनोः सतोः संयोगानुपलब्धिर्न स्यादिति वाच्यम्; घटादावपि बुद्ध्यादिसमवायानुपलब्धिर्न स्यादिति तुल्यत्वात्। बुद्धिनिरूपितः समवायस्तत्र नास्तीति चेत्, तर्हि उद्धृतघटे भूतले घटनिरूपितसंयोगाभावादनुपलब्धिरिति तुल्यम्। समवायस्यैकत्वात् घटेऽप्यस्त्येव बुद्धिसमवायः। बुद्धेस्तत्राभावात् घटो बुद्धिमानिति बुद्धिर्नास्तीति चेत्। तर्ह्युद्धृतघटभूतलसंयोगेऽपि तुल्यम्। भवद्भिर्घटस्य ज्ञानाधारत्वाभ्युपगमाच्च।

किं च व्यवधानं संयुक्तधीप्रतिबन्धकम्, लाघवेन संयोगस्यैकत्वे सिद्धे व्यवधानदशायां नियमेन संयोगाननुभवेन तस्य तत्प्रतिबन्धकत्वस्य प्रमाणसिद्धत्वात्; न च गुणेषु संयोगानुपपत्तिः संख्यावत् संयोगस्याप्युपपत्तेः। संयोगस्य तु समवायवत्स्वरूपमेव सम्बन्धः।

---

द्वितीयं शङ्कते—वैशेषिकेति।

परीक्षकानुभवस्य समवायनाशेऽपि सत्वात् तस्याप्यनेकत्वं स्यादित्याह—तर्हीति।

समवायैक्यस्य प्रामाणिकत्वात्तेषां तद्विनाशप्रत्ययोऽन्यविषय इति शङ्कते—समवायस्येति। संयोगस्यापि लाघवेनैक्यसिद्धेस्तन्नाशप्रत्ययोऽपि संबंधिविषय इत्याह—संयोगेऽपि। संयोगाभावबुद्धेः संबन्ध्यभावविषयत्वे घटे भूतलादुद्धृतेऽपि संबन्धिद्वयस्य सत्वात् तत्र कथं संयोगानुपलब्धिः कथं वा तदभावोपलब्धिरित्याशङ्क्य तव मते आत्मनि बुद्ध्यादौ सत्यपि घटादौ तदनुपलब्धिवदिति परिहरति – न चैवमित्यादिना। घटादौ समवायस्वरूपे सत्यपि बुद्धिविशिष्टसमवायाभावात् तदनुपलब्धिरित्याशंक्य तुल्यमुत्तरमित्याह—बुद्धीत्यादिना। घटे बुद्धिसमवायसत्वेऽपि बुद्धेरेवाभावात् तद्विशिष्टप्रत्ययो नेत्याशंक्यैतदप्यन्यत्रापि तुल्यमित्याह—समवायस्येति। किं च परमते बुद्धेर्घटेऽभावादित्येतदेवायुक्तं स्वरूपसंबन्धेन बुद्धेर्घटादिवृत्तित्वाभ्युपगमादित्याह-भवद्भिरिति।

एवमुद्धृतघटभूतलयोः सत्यपि संयोगे तदनुपलब्धिं प्रतिबन्ध्यापरं प्रत्युपपाद्य वस्तुतः तदुपपादकमाह–किं चेति। व्यवधानस्य संयोगधी प्रतिबन्धकत्वे न मानमस्तीत्यत आह–लाघवेनेति।

न च संयोगाभावातिरिक्तं व्यवधानमेव नेति वाच्यम्। विभागस्यैव तत्त्वात्। स च क्वचित्क्रियाजन्यः क्वचिद्विभागजः क्वचिदन्यदिति भावः। गुणगुण्यादीनां कथं संयोगस्तस्य द्रव्यमात्रवृत्तित्वादित्यत आह—न च गुणेष्विति। ननु संयोगस्य स्वाश्रयेण

अथ सर्वत्रापि स्वरूपमेव संबन्धोऽस्त्विति चेत्, काममस्तु नास्माकं काचित् क्षतिः । तथापि न विकारवत्कारणत्वमुपादानत्वम् । अस्तु तर्हि समवायोऽनेक इति चेत्, न तावत्स नित्यः । संबन्धिद्वयोत्पत्तेः पूर्वं संबन्धस्थित्ययोगात् । संबन्धस्य संबन्ध्याश्रयत्वनियमात् ।

अनित्यत्वे च समवायस्याप्युपादानं तत्समवायी चेत्, समवायानन्त्यात् एकमपि कार्यं न सिद्ध्येत् । संबन्ध्युत्पत्तेः पूर्वं संबन्धानुत्पत्तेश्च समवायान्तरानङ्गीकारे च तदुपादाने लक्षणाव्याप्तिः ।

न च समवायो निरुपादान इति वाच्यम्; भावकार्यस्य सोपादानत्वनियमात् । निरुपादानात् सकारणकत्वव्यावृत्तेः कार्यत्वायोगाच्च । नापि परिणामित्वमुपादानत्वम् । तद्धि तात्त्विकरूपान्तरामेदः । तन्न, अभेदे रूपान्तरत्वव्याघातात् रूपान्तरत्वे चाभेदव्याघातात् भेदाभेदयोश्च निरसिष्यमाणत्वात् । तस्मात्

---

संबन्धाभावे तत्र वृत्त्ययोगात् संबन्धो वाच्यः । सोऽपि संयोगश्चेदनवस्थापात इति समवाय एव स इति नेत्याह—संयोगस्य । स्वरूपसंबन्धस्य कुत्रचिद्विशिष्टप्रत्ययालम्बनत्वे सर्वत्रापि तत एव तदुपपत्तेः संयोगोऽपि न सिद्ध्येदिति शङ्कते—अथेति । अद्वैतवादिनः स्वरूपसंबन्धातिरिक्तसंयोगाभावे न काचिदनुपपत्तिरित्याह—काममिति । परेणापि सर्वत्र स्वरूपसंबन्धाभ्युपगमे तदुक्तमुपादानलक्षणमयुक्तं निमित्तकारणेऽपि गतत्वादित्यभिप्रेत्याह—तथापीति । समवायस्यानेकत्वान्न घटसमवायो दण्डेऽस्ति । अत उपादानलक्षणे नातिव्याप्तिरिति गुरुमतानुवर्ती शङ्कते—अस्त्विति । किमस्मिन् मते तन्तुपटसमवायोऽनादिर्जन्यो वा ? नाद्य इत्याह—न तावदिति ।

न च संबन्ध्यभावेऽपि घटत्वादिवत्समवायोऽपि काले वर्ततामिति वाच्यम् । तत्र ...नाभावात् । समवायानेकत्वे तन्तुषु पटसंबन्ध उत्पन्न इति प्रतीतेः समवायविषयत्वे ...धकाभावाच्चेति भावः ।

द्वितीये समवायस्याप्युपादानमस्ति न वा ? आद्ये तदुपादानं तत्समवायवन्न वा ? आद्ये दोषमाह—अनित्यत्व इति । किञ्च तन्तुषु पटसमवायोत्पत्त्यनन्तरं तदुपादानपटोत्पत्तिः तदुत्पत्तौ च तत्समवायोत्पत्तिरितीतरेतराश्रय इत्यभिप्रेत्याह—संबन्धीति । द्वितीये दोषमाह—समवायेति । समवायस्योपादानं नेति कल्पं दूषयति—न चेति । निरूपादानताकस्याकारणकत्वनियमात् कार्यतापि न स्यादित्याह—निरुपादानेति । विकारित्वं परिणामित्वमिति कल्पं दूषयति—नापीति । परिणामित्वलक्षणपर्यालोचनयाऽसंभवमाह—तद्धीत्यादिना । कार्यस्य कारणादभेदेऽपि भेदस्यापि

परमते कथमपि नोपादानलक्षणं निर्वहति।

स्वमते उपादानलक्षणोक्तिः

अस्मन्मते तु यदभिन्नं कार्यमुत्पद्यते तत्कारणमुपादानम्। अभेदश्च पृथक्सत्ताशून्यत्वम्। तच्चाविद्याब्रह्मणोः समानम्। तथाहि अविद्यातावद्भूतभौतिकाकारेण परिणमते। तत्र शुद्धब्रह्मगता भूताकारेण तदवच्छिन्नब्रह्मगता तत्तद्भौतिकाकारेण।

न च जगतोऽविद्यापरिणामत्वे प्रमाणाभावः। जगदविद्यापरिणामः कार्यत्वात् शुक्तिरूप्यवत्। न च बाधितत्वमुपाधिः, साधनव्यापकत्वात्, जगज्जडोपादानकं कार्यत्वात् संमतवत्, तच्चैकं लाघवात्। तदपि परिशेषादज्ञानमिति वक्ष्यते। न चान्वयव्यतिरेकसिद्धमृदाद्युपादानेऽतिरिक्तोपदाने गौरवं, उक्तानुमानात्तत्सिद्धेः।

अविद्यायामनुमानान्तरम्

अथवा तन्त्वनुपादानं कार्यं पटोपादानजडोपादानकं कार्यत्वात् पटवत्। तच्च जडं लाघवादेकं सिद्ध्यति। तदेवाज्ञानं, तदन्यस्यासंभवात्। सर्वस्यापि

---

सत्वाद्रूपान्तरत्वमित्याशंक्याह—भेदाभेदयोरिति। एवं पराभिमतोपादानलक्षणं निराकृत्य स्वाभिमतलक्षणमाह- अस्मन्मत इति। कार्यस्य कारणादभेदे कथं कार्यकारणभाव इत्याशङ्क्याह--अभेदश्चेति। कार्यस्यानिर्वचनीयत्वेन कारणसत्तातिरेकेण स्वतः सत्ताभावेप्यनिर्वचनीयभेदात् कार्यकारणभावोपपत्तिरिति भावः। अस्य च नाव्याप्त्यादिरित्याह—तच्चेति। एकेनैवोपादानेन जगदुत्पत्तेः किमर्थमविद्याब्रह्मणोरुभयोरुपादानतेत्याशङ्क्याविद्यायाः तावदनिर्वचनीयजगदाकारपरिणामितयोपादानत्वं साधयति—अविद्येति। भूतभौतिकानामविद्यापरिणाममित्वे भौतिकानां कथं भूतपारतन्त्र्यमित्याशङ्क्य तत्र विशेषमाह--तत्रेति। तदवच्छिन्नेति।

भूतादेरविद्यापरिणामत्वे मानाभावान्नोक्तविभाग इत्यत आह—न चेति, साधनव्यापकत्वादिति। जगतोऽपि नेह नानास्ति किञ्च नेत्यादिश्रुतिबाधितत्वादिति भावः। दृष्टान्तोऽसंप्रतिपन्न इति मन्वानं प्रत्यनुमानान्तरमाह—जगदिति। परमाण्वाद्युपादानत्वेनार्थान्तरतामाशङ्क्याह—तच्चेति। मृदाद्युपादानेनैव सर्वकार्यसिद्धेरुपपत्तेस्तदतिरिक्तमायोपादानत्वकल्पने गौरवमित्याशङ्क्य कार्यत्वहेतुना सर्गाद्यकार्याणां मायोपादानत्वसिद्धेर्लाघवेन कार्यमात्रस्यैव तदुपादानत्वसंभवात् परमते घटादावनेककर्तृकत्ववदनेकोपादानत्वेऽपि न दोष इत्यभिप्रेत्याह—न चेत्यादिना। अनुमानान्तरमाह--अथवेति। तन्तूपादानतयाऽर्थान्तरवारणाय तन्त्वनुपादानमित्युक्तम्। ब्रह्मोपादानतयाऽर्थान्तरवार-

घटस्यानुगतैकोपादानत्वाभावे घटो घट इत्यनुगतप्रत्ययस्य निरालम्बत्वप्रसङ्गात्, अनुगतविषयमन्तरेण तदयोगात्। न च घटत्वजातिस्तद्विषय इति वाच्यम्; तस्यानुगतस्य नित्यत्वे प्रमाणाभावात्। न हि सर्वमुक्तौ घटत्वादिसद्भावे किञ्चिन्मानमस्ति।

अनादिकार्यप्रवाहानुगततया तस्यानादित्वान्नित्यत्वं सिद्धमिति चेत्। न, प्रागभावाप्रतियोगित्वस्य ध्वंसप्रतियोगित्वेनाविरोधादप्रयोजकत्वात्। अनादेरपि प्रमाणसिद्धध्वंसकारणात् ध्वंसस्यावश्यकत्वात् एकस्यैव घटपटाद्यनुगतबुद्धिविषयत्वे संभवति घटत्वाद्यनन्तजातौ गौरवाच्च। न चैवं घटादावपि पट इति बुद्धिप्रसङ्गः। घटादिवृत्तिजातेरेव तत्रापि सत्वादिति वाच्यम्; पटबुद्धौ पटस्यापि कारणत्वात्। सर्वसर्वगता जतिरिति मते व्यक्तिविशेषसमवायादेव तस्यास्तद्बुद्धि-

---

णाय जडपदम्। एतावता कथमज्ञानसोपादानत्वसिद्धिरित्यत आह—तच्चेति। ननूक्तमज्ञानातिरिक्तपटोपादानकं कार्यत्वात् पटवदित्याभाससाम्यमिति चेत् न, अस्याप्रयोजकत्वात्। अज्ञानारिक्तैकजडोपादानस्यानुपलब्धिविरुद्धत्वाच्चेति भावः। तर्हि त्वदुक्तसाध्येऽपि हेतुरप्रयोजक इत्यत आह-सर्वस्येति। पराभिमतजातिरेवानुगतबुद्ध्यालम्बनमित्यत आह—न चेति। पराभिमतजातेर्नित्यत्वादनुगतबुद्ध्यालम्बनस्य नित्यत्वे मानाभावान्न जातितेत्यर्थः। अनुगतबुद्धिरेव तत्र मानमित्याशङ्क्य सर्वमुक्त्यनन्तरं तदभावात्तदा जातिर्न स्यादित्याह—न हीति।

घटाकारानुगतबुद्धिप्रवाहस्यानादित्वात् तदालम्बनतया घटत्वादेरनादित्वसिद्धौ ततो नित्यत्वमनुमीयत इति शङ्कते-अनादीति। अनित्यत्वेऽप्यनादित्वसंभवात् अप्रयोजको हेतुरिति दूषयति—न प्रागभावेति।

किं च "यत्र त्वस्य सर्वमात्मैवाभूत्" "तथा विद्वान् नामरूपाद्विमुक्त" इत्यादिश्रुत्या जडमात्रस्य नाशश्रवणात्; सर्वमनित्यं जडत्वादित्यनुमानाच्च तस्य नाश आवश्यक इत्यभिप्रेत्याह-अनादेरपीति।

किञ्च सर्वत्रैकस्यैवाज्ञानस्यानुगतबुद्ध्यालम्बनत्वे लाघवं पराभिमतजातेरालम्बनत्वे घटत्वपटत्वाद्यनन्तजातेः कल्प्यत्वाद् गौरवमित्याह-एकस्येति। उपादानतयाऽज्ञानस्यैव घटपटाद्याकारानुगतबुद्ध्यालम्बनत्वे घटेऽपि पटबुद्धिः पटे घटबुद्धिरित्याद्यतिप्रसङ्गः स्यादित्यत आह—न चेति। घटादिवृत्तिजातेरिति। घटाद्युपादानतयाऽनुगताज्ञानजातेरित्यर्थः। व्यक्तिविशेषोपहितस्यैव तदाकारानुगतबुद्धिगोचरत्वादिति हेतुमाह—पटेति। जातेर्व्यक्तिविशेषोपरागाद् घटाद्याकारबुद्धिगोचरत्वस्य परैरप्यङ्गीकारात् सर्वानुगताविद्यारूपजातेरपि तदुपपत्तिरित्याह—सर्वसर्वगतेति। सर्वाजातिः कृत्स्न्येन सर्वगतेति

विषयत्ववदेकानुगतस्यापि तथात्वोपपत्तेः । व्यक्तिसर्वगता जातिरिति मतेऽपि व्यक्तिविशेषस्यावश्यकत्वात् । सर्वाधारे काले सर्वजातिसत्त्वेऽपि घटादिबुद्ध्यभावाच्च ।

समवायवृत्त्या यत्र जातिस्तत्रैव तद्बुद्धिः । समवायेन वृत्तिश्च व्यक्तिविशेष एव तथैवानुभवादिति चेत्, तर्ह्येकस्यापि व्यक्तिविशेषतादात्म्यात् तत्तद्बुद्धिरिति किमनन्तजातिकल्पनया । तस्माज्जडं कारणमेव कार्येष्वनुस्यूतं तत्तदनुगतबुद्धिविषयः । तच्चास्मदभिमताऽविद्यैव ।

अनुगतबुद्धिविषयो जडः अविद्यैव ।

तथा हि-मृद्घटयोः सामानाधिकरण्यानुभवादभेदः । न च जाताऽजातयोः पारमार्थिको भेदः संभवति । पूर्वमप्युपलम्भप्रसङ्गात् । कार्यकारणभावानुपपत्तेश्च ।

---

मत इत्यर्थः । जातिर्व्यक्तिविशेषेष्वेव सर्वात्मना वर्तत इति मतेऽपि घटत्वादेः पटादिविलक्षणव्यक्तिविशेषपरतन्त्रतया तदुपरागादेव घटाद्याकारधीगोचरेत्याह—व्यक्तिसर्वेति । अस्मिन्मते काले सर्वजातेः सत्वात् तस्य व्यक्तिविशेषत्वाभावादेव तत्र न घटाद्याकारधीरिति व्यतिरेकमाह—सर्वाधारेति ।

घटाकारबुद्धौ घटत्वादिसमवाय एव नियामको न व्यक्तिविशेष इति शङ्कते—समवायेति । कालादावपि समवायेन वृत्तिः किन्न स्यादित्यत आह—समवायेनेति । अविद्याया जातेरपि व्यक्तिविशेषतादात्म्यात्तत्तदाकारबुद्धिगोचरतोपपत्तेः तदतिरिक्तानन्तजातितत्समवायकल्पने गौरवमिति दूषयति—तर्हीति । घटादिषु लाघवादेकमेव जडात्मकमुपादानमनुगतबुद्ध्यालम्बनमित्युपसंहरति—तस्मादिति । तदुक्तम्—

जाड्यं जगत्यनुगतं खलु भावरूपं
मौढ्यं च पुंगतमिदं प्रतिभाति तादृक् ।
जाड्यं च मौढ्यमिति चानुभवादिसिद्ध-
मज्ञानमाहुरपवर्गविधानदक्षाः ।

तच्च जडं पराभिमता प्रकृतिरेवेत्यत आह—तच्चेति । अनिर्वचनीयकार्यस्याविद्यैवोपादानमित्यभिप्रेत्य तस्य पारमार्थिकत्वमपवदति—तथा हीति । जाताजातयोरिति । पूर्वोत्तरकालभाविनोरित्यर्थः मृद एव घटत्वे तस्य मृदि दण्डादिसमवधानात् पूर्वमपि उपलम्भः स्यान्मृत्स्वरूपस्येव घटस्यापि कारणं न स्यादित्याह—पूर्वमिति । मृदः स्वेनाभेद एव घटे, न तु भेदाभेदौ, ततश्च भेदात्पूर्वमनुपलब्धिः कार्यकारणभावश्चोप-

ननु कार्यकारणयोर्भेदाभेदौ, ततो नोक्तदोषः। न च विरोधादेकस्य न भेदाभेदाविति वाच्यम्। प्रमाणसिद्धत्वात्। 'मृद्घट'इति हि सामानाधिकरण्यानुभवः सर्वसंप्रतिपन्नः। स चात्यन्तभेदे दण्डघटयोरदृष्टः, अत्यन्ताभेदे च 'घटो घटः'' इति न दृष्ट इति मृद्घटयोर्भेदाभेदनिमित्तः स इति चेत्। न, पृथुबुध्नोदराकारविशिष्टं हि वस्तु घटशब्दार्थः। न केवला मृत् तस्यां घटबुद्धिशब्दयोरभावात्। तत्र हि यदि घटो मृदभिन्नः पूर्वमपि मृदिव कम्बुग्रीवाकारोऽनुभूयेत मृत् स्वस्मिन्निव घटेऽपि न कारणं स्यात्। भेदमादाय सर्वमुपपद्यत इति चेत्, किं तेन स्थितिकाल इव प्रागपि प्रतियोगिसत्वाविरोधिना। नहि भेदो विद्यमानस्य प्रतियोगिनोऽनुपलम्भे प्रयोजको न वा कार्यत्वे। घटस्थितिकालेऽपि तत्प्रसङ्गात्।

ननु पूर्वं न सन् घट इति चेत्, न, तदभिन्नायां मृदि सत्यां तदसत्वानुपपत्तेः। घटाकारेण भेद एव चेत्, कस्य तर्हि अभेदः? घटस्यैव मृदात्मनाऽभेद इति चेत्, तर्हि घटाभिन्नमृदि सत्यां न तस्यासत्वमिति पूर्वोक्तदोषः। न च घटाभेदो मृदेव सा च पूर्वमपि वर्तते भेदांशस्तु घटः पूर्वं नास्तीति नोक्तदोष इति वाच्यम्। यत एवं मृद्घटश्चेति द्वयमेव तत्तादात्म्यं स्यात् तदुभयं चात्यन्तं भिन्नमेवेति न भेदाभेदौ।

---

पद्यत इति शङ्कते-न न्विति। मृदः स्वगतभेदो यथा भेदविरुद्धः एवं घटादप्यभेदोऽस्ति चेत् विरुद्धो भेदो न स्यादित्याशङ्क्य कारणादीनां भेदाभेदयोः प्रामाणिकत्वान्न विरोध इत्याह-न चेति। केवलं भेदे केवलाभेदे वा सामाधिकरण्यप्रत्ययादर्शनाद् भेदाभेदौ च सर्वत्र तद्विषयाविति स प्रामाणिक इत्याह-मृदघट इति।

तत्र घटपदार्थं प्रदर्शयन् तस्य मृदभेदप्रयुक्तपूर्वोक्तदोषोऽत्रापि दुष्परिहर इति दूषयति-न हि पृथुबुद्ध्नेति। भेदस्यापि सत्वाद् घटस्य पूर्वमनुपलम्भो मृदस्तत्कारणता चेत्युक्तमनुवदति -भेदमिति। मृद्गतरूपादिकं यथा मृदनुपलम्भे मृदो मृत्कार्यत्वे च न प्रयोजकं तत्कस्य हेतोः मृदि मृदभेदाविरुद्धत्वादेवं मृद्घटभेदस्यापि तदभेदाविरुद्धत्वे ततो घटानुपलंभादि न सिद्ध्येत घटस्थितिदशायां सत्यपि भेदे घटानुपलम्भादेरभावादित्याह -किं तेनेति। घटोत्पत्तेः पूर्वं तदभेदस्य सत्वेपि घटस्यासत्वात् तदनुपलम्भादिरिति शङ्कते-नन्विति। मृदभिन्ने सति मृद इव घटाभिन्ने सति तस्याप्यसत्वमयुक्तमित्याह-न तदभिन्नायामिति। घटस्य घटाकारेण न मृदभेदः येनोक्तदोषः स्यादिति शङ्कते-घटाकारेणेति। तर्हि भेदाभेदोक्तिरयुक्ता स्यादित्यभिप्रेत्याह-कस्येति। घटस्व मृद्रूपेण तदभेदोऽप्यस्तीति शङ्कते-घटस्येति। घटस्य मृदभेदधर्मित्वे मृत्समये घटसत्वस्यावश्यकत्वादनुपलभाद्यनुपपत्तिस्तदवस्थेत्यभिप्रेत्याह-तर्हीति।

ननु न कार्यकारणातिरिक्तौ भेदाभेदौ किन्तु कारणमेवाभेदः कार्यं चोत्पत्तेः

सामानाधिकरण्यप्रतीतेर्विषयव्यवस्था

कस्तर्हि मृद्घट इत्यादि सामानाधिकरण्यानुभवविषयः ? तादात्म्यमेव । किं तत्, उच्यते—भिन्नत्वे सत्यभिन्नसत्ताकत्वं अस्ति हि मृद्घटयोरेतत्तादात्म्यम्; उपादानोपादेययोः सत्वभेदाभावात् । अन्यथा मृद्घट इति सामानाधिकरण्यायोगात् । दण्डघटयोस्तु नैवं भेदे समानेऽपि दण्डाधिष्ठानात्तदुपहितात् तत्सत्वाद् घटसत्ताया अन्यत्वात्, तदन्यत्वं च घटसत्वस्य दण्डाद्यभावेऽपि सन् घट इत्यनुभवात् दण्डो घट इत्यननुभवाच्च सिद्धम् ।

नन्वेवमेकघटकार्यरूपरसादीनां घटसत्तैव सत्तेति रूपरसादेरन्योन्यं सामानाधिकरण्यानुभवः स्यादिति चेत्, न । घटो हि न रूपादीनां कारणम् । रूपादिभिः सहैवोत्पत्तेः सर्वानुभवसिद्धत्वात्, भिन्नकालोत्पत्तौ प्रमाणाभावात् । कार्यभेदस्य मृत्तद्गतरूपादिघटितसामग्रीभेदादेव संभवात् ।

न च कार्यस्योपादानाश्रयत्वनियमान्न घटे रूपादिकं स्यादिति वाच्यम् ।

---

पूर्वमसदिति नानुपलभाद्यनुपपत्तिरित्याशंक्यात्यन्तभेदवादिमतान्न विशेष इति परिहरति—नचेत्यादिना ।

एवं भेदाभेदयोः सामानाधिकरण्यधीगोचरत्वं निरस्य स्वयमाकाङ्क्षापूर्वकं तद्विषयं निरूपयति – कस्तर्हीत्यादिना । भिन्नत्व इति ।

न च भिन्नयोरभिन्नसत्ताकत्वं विरुद्धमिति वाच्यम् भेदस्य सत्तावच्छेदकत्वे हि तथा स्यादुपादानोपादेयभेदश्च न सत्तावच्छेदस्तथात्वे मृदघट इति प्रत्ययायोगात् । ततश्चोपादानावच्छिन्नाधिष्ठानसत्तैवोपादेयेनाप्यवच्छिद्यत इति तयोर्भेदेऽप्येकसत्ताकत्वमिति वक्ष्यमाणत्वादिति भावः । दण्डघटयोरप्येकाधिष्ठानसत्तावच्छेदकत्वादभिन्नसत्ताकत्वे भिन्नत्वं च तुल्यमित्याशंक्याह – दण्डघटयोरिति । दण्डघटयोर्भेदस्य सत्तावच्छेदकतया तयोरपि परस्परानवच्छिन्नसत्तावच्छेदकत्वेनैकस्यान्योपहितसत्तासंबन्धित्वाभावान्नैकसत्वमिति भावः । उपादानसत्तैवोपादेयसत्ता चेद्रूपरसयोरपि घटसत्तैव सत्तेति तयोरप्यभिन्नसत्ताकतया तादात्म्यानुभवः स्यादिति शङ्कते – नन्विति । रूपरसादीनां घटकार्यत्वमेवायुक्तमिति तावदाह – न घटो हीति । घटस्य रूपाद्यकारणत्वे घटसामग्रीत एव तदुत्पत्तिर्वाच्या । तथा च सामग्रीभेदाभावात् कार्यभेदो न स्यादित्यत आह – कार्यभेदस्येति । मृद एव घटकारणत्वात्तद्गतरूपादेश्च घटरूपादावेव कारणत्वात् सामग्रीभेद इत्यर्थः ।

घटस्य रूपाद्यनुपादानत्वे तदाश्रयत्वं न स्यात् घटादिकार्यानुपादानस्य तदनाश्रयत्वदर्शनादित्याशङ्क्य कार्यद्रव्याणां स्वासमवायिकारणसमानाधिकरणत्वनियमेऽपि गुणेषु तदभाववदुपादानाश्रितत्वनियमोऽपि नेति परिहरति – न चेत्यादिना । तत्समान-

गुणानां कार्यत्वेऽपि स्वासमवायिकारणासमानाश्रयत्ववत् कारणातिरिक्ताश्रयत्वस्यापि गुणादौ संभवात् ।

न च समानकालीनयोराश्रयाश्रयिभावोऽनुपपन्नः सव्येतरविषाणवदिति वाच्यम् । सव्येतरविषाणयोर्हि संबन्धाभावप्रयुक्त आश्रयाश्रयित्वाभावः । न तु समानकालीनत्वप्रयुक्तः भिन्नकालोत्पन्नयोरपि संबन्धाभावे तदभावात् । समानकालीनयोरपि संबन्धे घटपटयोर्नित्ययोश्चाश्रयाश्रयिभावदर्शनात् । घटरूपयोस्तु समानकालीनयोरपि तादात्म्यं प्रमाणसिद्धम् । अभिन्नसत्ताकरूपतादात्म्यस्य समानकालीनयोरप्यविरोधाच्च । अन्यथा 'शुक्लो घटः' इत्यादिसामानाधिकरण्यानुभवायोगात् । न च 'शुक्लो घटः' इति मतुब्लोपादभेदवत्प्रतीयते न त्वर्थगत्याऽभेदोऽस्तीति वाच्यम् । शाब्दे हि ज्ञाने मतुब्लोपात् भेदतिरोधानं न तु प्रत्यक्षानुभवेऽपि, अनुभूयते च "शुक्लो घटः" इति ।

मतुब्लोपानुशासनं अभेदसूचनार्थम्

किं च मतुब्लोपानुशासनेऽप्याचार्यस्य सत्ताऽभेदलक्षणतादात्म्यमेव मूलम् । युतसिद्धयोस्तथानुशासनाभावात् । तस्मादयं घट इति सामानाधिकरण्यानुभवस्य

---

कालीने तदनाश्रयत्वस्य सव्येतरविषाणादौ दर्शनाद् घटादेरपि रूपादिसमानकालीनत्वे तदाश्रयत्वं न स्यादित्याशङ्क्य दृष्टान्ते संबन्धाभाव उपाधिरिति दूषयति—न च समानेति । यदि समानकालीनत्वमाश्रयाश्रयिभावाभावप्रयोजकं स्यात् तर्हि भिन्नकालीनयोर्नियमेनाश्रयाश्रयिभावः स्यात् सर्वत्रेत्याह—भिन्नकालेति । व्यभिचारमप्याह—समानेति । घटरूपयोः समानकालीनत्वे कार्यकारणभावाभावात् तादात्म्यं वा कथमित्याशङ्क्य तस्या रक्तो घट इत्याद्यनुभवसिद्धत्वादविरोधाच्च नानुपपत्तिरित्याह—घटरूपयोरिति । गुणगुणिनोरत्यन्तभेदवादिनं प्रत्याह – अन्यथेति । गुणवचनेभ्य उत्तरस्य मतुपो लोपस्मरणाच्छुक्ल इति शुल्कगुणवत्वमेवोच्यते न तु तदभेद इत्याशङ्क्याह—न च शुक्ल इत्यादिना ।

भिन्नसत्ताकयोः संवन्धव्यवहारे कात्यायनेन मतुब्लोपानभिधानाद्गुणवचनेषु तदभिधानं गुणगुणिनोश्च भिन्नसत्ताकत्वरूपतादात्म्यप्रयुक्तमेवेत्याह—किंचेति । गुणगुणिनोः सामानाधिकरण्यानुभवमात्रेण कथं तादात्म्यसिद्धिः सम्बन्धान्तरस्यैव तद्विषयत्वसंभवादित्याशङ्क्यायं घट इत्याद्यनुभवे तादात्म्यस्य विषयतया क्लृप्तत्वात् स एवात्रापि विषयो नान्य इत्युपसंहरति—तस्मादिति । एवं च रूपरसादीनां यत्तादात्म्यमापादितं तदप्ययुक्तमित्याह—तथा चेति । उपादानमविद्यादि आश्रयो घटादि; अभेदो ऽभिन्नसत्ताकत्वं यद्यपि रूपरसादिना घटसत्तैवावच्छिद्यते तथापि रूपाद्यवच्छिन्नसत्ता न रसादिनाऽवच्छिद्यते न वा तयोस्तत्प्रयोजकः सत्तानवच्छेदकभेदः । अतो न तयोस्ता-

स्वप्रकारीभूतधर्मद्वयविशिष्टाभेदविषयत्वस्य क्लृप्तत्वात् । अन्यत्रापि तस्य स एव विषयः । तथा चोपादानाश्रयाभ्यामेवाभेदो गुणानां रूपरसादीनाम् । नान्योऽन्यं रूपाद्यवच्छिन्नतया घटसत्ताया रसादिसत्तात्मत्वाभावात् तद्भेदस्यापि सत्तावच्छेदकत्वात् । तत्राप्यनुभव एव मानम् ।

ननु मृद्घटयोर्भेदे कथमेकसत्ताकत्वं दण्डघटयोरदर्शनादिति चेत् । किं प्रमाणप्रश्नः ? तत्रोपपत्तिप्रश्नो वा ? आद्येऽभिहित एव सामानाधिकरण्यानुभवः । द्वितीये तु दण्डघटभेदवन्मृद्घटभेदः सत्तावच्छेदको न भवतीति भेदेऽप्येकसत्ताकत्वम् । भेदसत्ताया एव धर्मिप्रतियोगिसत्तैकत्वविरोधात् । अन्यथा दण्डघटयोरिव मृद्घटयोरयुतसिद्धिर्न स्यात् तेषां भेदाविशेषात् । तस्मादधिष्ठानात्मसत्त्वैव कारणाज्ञानेनावच्छिन्ना कार्येणाप्यवच्छिद्यत इति परिणामपरिणामिनोरेकसत्ताकत्वं तादात्म्यम् ।

एतेन घटः किं सद्विलक्षण एव तथा सति सन् घट इति धीर्न स्यात् । अथाधिष्ठानात्मसत्तादात्म्यात् तथा प्रतीतिः घटस्य सत्तादात्म्यं हि तदतिरिक्तसत्ताशून्यत्वमेवेत्यधिष्ठानं सन् घटश्चेति द्वयमेव । तथा च घटस्य सत्तासंबन्धाभावात् न सत्प्रतीतिविषयत्वमुपपद्यते । असद्विलक्षणत्वमेव सद्बुद्धिविषय इति चेत् । न । आत्मनि सत्वस्यैव सद्बुद्धिविषयत्वात् । असन्ज्ञानानपेक्षप्रतीतिक-

---

दात्म्यमित्याह—नान्योऽन्यमिति । सत्यपि रूपादाविदं सितं नेत्याद्यनुभव एवोक्तार्थे मानमित्याह—तत्रेति । भिन्नयोरभिन्नसत्ताकत्वस्य क्वचिदप्यदर्शनात् मृद्घटयोस्तत्कथमिति पृच्छति—नन्विति । प्रश्नविषयं विकल्पयन्नुत्तरमाह—किमिति । भेदस्य सत्तानवच्छेदकत्वेऽपि तत्स्वरूपस्य विद्यमानत्वात् कथमेकसत्ताकत्वमित्यत आह—भेदसत्ताया इति । भेदावच्छिन्नाधिष्ठानसत्ताया एवेत्यर्थः । भेद एव लाघवात् सत्तैकत्वविरोधीत्युक्तौ बाधकमाह—अन्यथेति । अयुतसिद्धिर्न स्यादिति । समवायस्य भेदाभेदयोश्च निरासादिति भावः ।

मृद्घटादावुक्तन्यायेनाज्ञानतत्कार्ययोरपि तादात्म्यसिद्धिरित्याह—तस्मादिति । घटादेरधिष्ठानसत्तावच्छेदकत्वमेव स्वतो न सत्वमित्यभ्युपगमे घटः सन्नित्यादिधीविरोध इत्यादि चोद्यं वक्ष्यमाणविधया निरस्तमित्याह-एतेनेति । स्वतः सत्ताभावेऽप्यधिष्ठानसत्तायास्तदाकारधीरिति शङ्कते—अथेति । घटस्य सत्तादात्म्यं नाम तदभिन्नसत्ताकत्वम् । तच्च पृथक्सत्ताशून्यत्वमेव तथात्वेऽपि घटे सत्तासंबन्धासिद्धेस्तत्र सदाकारधीरनुपपन्नेत्याह-घटस्येति । घटे सत्वाभावेऽप्यसद्वैलक्षण्यस्य विद्यमानत्वात् सद्बुद्धिविषय इति शङ्कते—असदिति । आत्मनि घटे च सद्बुद्धेरेकरूपत्वात् कुत्रचित् सत्त्वं तद्विषयः कुत्रचिदसद्वैलक्षण्यमिति विषयभेदोऽनुचित इत्यभिप्रेत्याह—नात्मनीति ।

**सत्ताया निष्प्रतियोगित्वाच्चेति परास्तम्। सद्रूपाधिष्ठाने सद्भेदाभावरूपतादात्म्यस्यैव सन् घट इति सामानाधिकरण्यानुभवविषयत्वात्। अथवा भेदसत्ताऽविरोधी कश्चिदनिर्वचनीयो धर्मस्तादात्म्यम्। घटस्य दण्डादिव मृदो भेदाननुभवात्। मृद्घट इत्यभेदानुभवाच्च।**

कार्यकारणभावसिद्धये सद्भेदनिराकरणम्

**ननु सद्भेदाभावे कार्यकारणभावशब्दान्तरवाच्यत्वादिकं न स्यादिति चेत्, न, कार्यकारणभावाद्यर्थं हि भेदोऽपेक्ष्यते न तु सद्भेदः स्वप्नरथादेरपि कार्यत्वादेः श्रुत्या दर्शितत्वात्। तथा च घटादेर्मृदादिप्रतियोगिको भेदो न भेदान्तरवत्सत्तावच्छेदक इति सामानाधिकरण्यप्रतीतिबलात् सिद्धम्।**

**एवं च पक्षद्वयेऽपि भेदस्य सत्ताशून्यत्वात् कार्यकारणयोरनिर्वचनीयो भेद इत्युच्यते। अत एव भेदाभावस्येव तन्नियतस्यापि भेदसामानाधिकरण्यविरोधः अविरोधे वा कथं भेदाभेदनिरासः इति प्रत्युक्तम्, समानसत्ताकयोरेव प्रतियोगितदभावतन्नियतयोर्विरोधात्। तस्मात् कार्यस्य तद्भेदस्य च सद्विलक्षणत्व एव कारण-**

---

असज्ज्ञानमनपेक्ष्यैव सन् घट इति [ प्रतीतेः ] असद्वैलक्षण्यं न तद्विषय इत्याह—असदिति। घटस्य वस्तुतोऽधिष्ठानसत्तया संबन्धाभावेऽपि तत्प्रतियोगिकवास्तवभेदस्याप्यभावात् सत्तानवच्छेदकभेदवत्त्वरूपतादात्म्यसंबन्धादधिष्ठानसत्तावच्छेदकत्वेन सद्बुद्धिगोचरतेत्याह—सद्रूपेति। पदार्थान्तरं वा तादात्म्यमित्याह-अथवेति। भेदसत्ताऽविरोधीति। सत्तानवच्छेदकभेदाविरोधीत्यर्थः तत्र मानमाह—घटस्येति।

मृद्घटयोः सत्तावच्छेदकभेदमात्रे कार्यकारणभावोऽपर्यायपदवाच्यता च न स्यादिति शङ्कते—नन्विति। भेदमात्रे सति सत्तावच्छेदकभेदाभावेन कार्यकारणभावाभावादेरदर्शनाद्भेद एव तत्र प्रयोजकः स मृद्घटयोरपि तुल्य इत्यभिप्रेत्याह—न कार्येति। मृद्घटभेदस्य सत्तानवच्छेदकत्वे बाधकाभावात् स एव सामानाधिकरण्यधीनियामक इत्याह—तथाचेति। सत्तानवच्छेदकभेदो भेदसत्ताविरोध्यनिर्वचनीयधर्मो वा तादात्म्यमिति पक्षद्वयेऽपि कार्यकारणभेदोऽनिर्वचनीय इत्याह—एवं चेति।

नन्वभेदस्य यथा भेदेन विरोधः तथाऽभेदनियताभिन्नसत्ताकत्वस्यापि तेन विरोधान्न भिन्नयोरभिन्नसत्ताकत्वमिति चोद्यं भेदस्यानिर्वचनीयत्वादेव निरस्तमित्याह—अत एवेति। अनिर्वचनीयभेदेन तदभावस्य न विरोध इत्यभिप्रेत्य विरोधप्रयोजकमाह—समानेति। प्रतियोगी च तदभावतन्नियतं च द्वंद्वैकवद्भावे प्रतियोगितदभावतन्नियते तयोरित्यर्थः। कार्यस्य तद्भेदस्य च सत्यत्वे कारणाभिन्नसत्ताकत्वरूपतादात्म्यायोगात्तयोरनिर्वचनीयत्वमावश्यकं; तच्च सन्मात्रोपादानत्वेऽनुपपन्नमित्यनिर्वचनीयाविद्यापि तदुपादानमित्याह—तस्मादिति। परैरपि सद्विलक्षणकार्योपादानाङ्गीकारे

तादात्म्यं संभवतीत्यविद्यैवास्मदभिमता कारणं पराभिमतात् कारणात् सद्विलक्षण-कार्यानुत्पत्तेः। अन्यथा नाममात्रे विवादः स्यात्।

पटे अधिकतन्तुयोजने पटान्तरोत्पत्तिनिराकरणम्

एवं पटादिकार्यं द्वितन्तुकादि पटे सत्येव जायमानं किं ततो भिन्नमेवाभिन्नं वा ? नाद्यः। मूर्तानामनेकेषां युगपदेकत्र समवायायोगात्। नन्वत एव पूर्वपटनाशे सत्येव पटान्तरं जायत इति चेत्, न, त्रितन्तुकादिपटपूर्वं पूर्वपटस्यानुभूयमानत्वात्। न च स्वाभ्युपगमविरोधेनानुभवो बाध्यते। पूर्वपटनाशे हेतुमपि न पश्यामः। समवाय्यसमवायिनोः सत्वात् तव मते तदन्यतरविनाशस्यैव द्रव्यनाशे हेतुत्वात्। संयोगनाशादेव पूर्वपटनाशः स च क्रिययेति चेत्, कर्म तावदवयविनि संयोगादिवदव्याप्यवृत्तिप्रत्यक्षमनुभूयते सूत्रादिद्रव्ये वेष्टितभागातिरिक्तप्रदेशे कर्मानुभवात्। न च तत्रावयववृत्त्येव कर्म, सूत्रं चलतीत्यबाधितानुभवात्। अन्यथा संयोगादेरव्याप्यवृत्तित्वं न सिद्ध्येत्। न चैवं सर्वकर्मणोऽप्यव्याप्यवृत्तित्वप्रसङ्गः, अनुभवानुरोधेनैकस्याव्याप्यवृत्तित्वे सर्वस्य तथात्वनियमाभावात्। न च व्याप्यवृत्तिजातीयस्य व्याप्यवृत्तित्वनियम इति वाच्यम्; अनुभवविरोधाद् व्याप्तिग्रहायोगात्। चित्ररूपादौ तदभावाच्च। अप्रयोजकत्वाच्च। तस्माद्यदंशे प्रतिबंधस्तदितरांशे कर्मेति पटसमवायप्रदेशे दृढवेष्टनादिप्रतिबंधात् कर्मानुत्पत्तौ तत्संयोगविनाशानुपपत्तिः।

अन्यथा प्रत्यक्षसमवेतकर्मणः प्रत्यक्षत्वात् प्रदेशान्तर इव तत्रापि कर्मानु-

---

सैवाविद्येति न विवाद इत्याह—अन्यथेति।

द्वितन्तुकपटादिकार्याणामपि वस्तुतो भेदाभेदाभ्यां दुर्निरूपत्वादनिर्वचनीयत्वेनाविद्योपादानत्वमावश्यकमित्याह—एवमिति। किं द्वितन्तुकादिपटे सत्येव त्रितन्तुकादिपटो जायते उत तस्मिन्नष्टे ? आद्येऽपीदं वक्तव्यमित्याह—पटादीति। भेदपक्षेऽपि किं तन्तव एवोत्तरपटोपादानमुतोत्तरोत्तरतन्तुसहितः पूर्वपटः ? आद्यमसंभवेन दूषयति—नाद्य इति। पूर्वपटनाशानन्तरमेवोत्तरपटोत्पत्तिपक्षं शङ्कते—नन्विति। त्रितन्तुकादिपटोत्पत्तेः पूर्वं तन्तुवदेव द्वितन्तुकादिपटानामनुभूयमानत्वात् तन्नाशो न युक्त इत्याह—न त्रितन्तुकेति। उत्तरपटोत्पत्तेः पूर्वं पटनाशस्यास्माभिरभ्युपगमात्। तदा तत्सत्तानुभवो भ्रम इत्यत आह—न चेति। वाद्यभ्युपगमविरोधेन भ्रमत्वे न किमपि ज्ञानं प्रमा स्यादिति भावः। द्वितन्तुकादिपटनाशहेतोरभावादपि तदा तन्नाशासंभव इत्याह—पूर्वपटेति। असमवायिकारणनाशादेव तन्नाश इति शङ्कते—संयोगेति। यस्मिन् प्रदेशे द्वितन्तुकादिपटारम्भस्तत्र न क्रियाऽतो न तदारम्भकसंयोगनाश इत्यभिप्रेत्य क्रियाया अव्याप्यवृत्तितामाह—कर्मेति। सूत्रैकदेशेऽनुभूयमानं कर्म न सूत्रगतं किन्तु तदवयवगतं तत्र च व्याप्यैव वर्तत इत्याशंक्य सूत्रत्वसामानाधिकरण्यानुभवान्मैवमित्याह—न च तत्रेति।

भूयेत। नापि पूर्वपटोत्तरतन्तुभ्यां पटान्तरं जायते एतावानेक एव पट इत्यनुभवात् तन्तुषु पट इतिवत् पटे पटः उभौ वेत्यननुभवात् पटस्य त्वन्त्यावयवित्वाभ्युपगमाच्च।

एतेन त्रितन्तुकादिपटस्तन्तुभिरारभ्यते। स च तन्तुप्रदेशभेदसमवायीति निरस्तम्। दशहस्तदीर्घ एकः पट इत्यबाधितानुभवविरोधात्। प्रदेशभेदानेकत्वयोरननुभवाच्च। अवयविनस्तवमतेऽव्याप्यवृत्तित्वाभावात्। तत्रापि दीर्घतन्तोरेकस्य विश्लेषे सर्वपटानामननुभवप्रसङ्गाच्च। तस्मात् पूर्वपटाभेदेनैवोत्तरः पटो

---

अवयविनि अनुभूयमानस्याप्यवयवधर्मतया व्याप्यवृत्तित्वाभिधानेऽतिप्रसङ्गमाह—अन्यथेति।

कर्मणः क्वचिदव्याप्यवृत्तित्वे शरीरादिनिष्ठस्यापि तथात्वापात इत्याशङ्क्याह—न चैवमिति। संयोगवन्नियमोऽनुमीयत इति शङ्कित्वा आह—न च व्याप्येति। दलितवेणुदलद्वयविभागस्याव्याप्यवृत्तित्वेऽपि यथा विभागमात्रे न तथात्वमेवं कर्मणोऽपीत्यभिप्रेत्याह—अनुभवविरोधादिति। व्यभिचारमप्याह—चित्रेति।

न च नैल्यादिविजातीयमेव चित्ररूपं; तच्च व्याप्यैव वर्तत इति वाच्यम्। पटः एकदेशे संयुक्त इतिवदेकदेशे नील इत्यादिप्रतीतेर्बाधकाभावात्। कारणगतरूपादीनां कार्ये सजातीयरूपाद्यारम्भकत्वनियमाच्च चित्रस्य विजातीयत्वानुपपत्तेरिति भावः। कर्मणो व्याप्यवृत्तितानियमाद् द्वितन्तुकादिपटारम्भकतन्तुप्रदेशानां गुरुतरदारुवेष्टिततया कर्मायोगेन तत्रत्यसंयोगनाशासंभव इत्याह-तस्मादिति। प्रारब्धपटकतन्तुप्रदेशेषु कर्मास्ति चेद्योग्यानुपलब्धिविरोध इत्याह—अन्यथेत। उत्तरतन्तुसहितः पूर्वपट एवोपादानमिति पक्षं दूषयति—नापीति। त्रितन्तुकादिपटानां तन्तूपादानकत्वेऽपि नैकत्र समवायस्तव मतेऽपि चित्ररूपवत्प्रदेशभेदेन भिन्नाश्रयत्वादित्येतदप्यनुभवादिविरोधेनायुक्तमित्याह— एतेनेति।

किं चास्मिन् पक्षे दीर्घतन्तूनां प्रदेशभेदेन सर्वपटोपादानत्वात् तत्रैकस्य तन्तोर्विभागे सर्वपटारम्भकसंयोगनाशेन तन्नाशापातादनन्तरं तदुपलम्भो न स्यादित्याह—तत्रापीति।

न च संयुक्ततन्तुभिरेव खण्डपटोत्पत्तेस्तदनुभव इति वाच्यम् तुरीवेमादिकारणान्तराभावेन तदुत्पत्त्ययोगात्।

न च तुरीवेमादिकं महापट एव कारणं न खण्डपट इति वाच्यम्। अस्मिन् पक्षे महापटस्यैवाभावेन सर्वेषां खण्डपटत्वादिति भावः। एवं भेदपक्षं निरस्याभेदपक्षं परिशेषयति—तस्मादिति। उत्तरोत्तरपटे पूर्वपूर्वपटाभेदवास्तवत्वायोगादनिर्वचनीयत्वं वाच्यम्।

जन्यते। न च जातस्य जायमानाभेदोऽविद्यां विना संभवति। विरुद्धयोर्वास्तवैक्यायोगात्। अनिर्वचनीयस्यादृष्टमात्रासाध्यस्याविद्योपादानत्वात्।

अवयविनि परिमाणभेदे अदृष्टातिरिक्तमायाया आवश्यकता

अत एवादृष्टमेव मायेति पराभिमानो निरस्तः। अत्रादृष्टातिरिक्तमायाया आवश्यकत्वात्।

न च दूरस्थवनस्पत्योरिवाविद्यया तदभेदे तद्भेद एव स्यात्। अन्यथाऽभेदो मिथ्या न स्यादिति वाच्यम्, वनस्पत्योरभेदस्येवास्य भेदाज्ञानाजन्यत्वात्। तस्मात् प्रथमपटस्तत्परिमाणं च तन्त्वन्तरसंयोगेऽविद्यामहिम्ना दुर्निरूपस्वरूपेण वर्द्धते। अत एव स एव पट एतावानासीदिति विवेकिनामप्यनुभवः। एवमेकस्मात् पटादे रज्जुद्रव्योत्पत्तिरप्यविद्योपादानत्वे प्रमाणम्। तद्धचन्वयव्यतिरेकाभ्यां संयोगजन्यं संयोगश्च द्वित्वसमानाधिकरणः द्वित्वं चैकत्वद्वयजन्यमिति नैकस्मिन् द्वित्वं तदधिकरणाधिकरणकसंयोगश्च तत्वतः संगच्छते। न चाधिकपरिमाणान्न्यूनपरिमाणारम्भोऽविद्यां विना संभवति।

न च द्रव्यान्तरमेव न भवतीति वाच्यम्। पटादेरिव रज्ज्वा अपि रूपसमा-

---

तच्च तन्मात्रोपादानत्वेऽनुपपन्नमित्यनिर्वचनीयाविद्योपादानत्वसिद्धिरित्याह—न च जातस्येति। अदृष्टवशादेवानिर्वचनीयकार्योत्पत्तिरित्याशंक्य तस्य निमित्तमात्रत्वात् कार्यानुरूपोपादानं विना तदनुपपन्नमित्यभिप्रेत्यादृष्टमात्रासाध्यस्येत्युक्तम्। अदृष्टातिरिक्तमायाया अभावाच्छ्रुत्यादिष्वदृष्टमेव मायापदार्थ इति पराभिमानो न युक्तः अनिर्वचनीयकार्यस्यादृष्टातिरिक्तमायां विनाऽनुपपत्तेस्तस्या आवश्यकत्वादित्याह—अत एवेति।

ननु कार्यकारणे वस्तुतो भिन्ने, आविद्यकाभेदवत्त्वात् दूरस्थवनस्पतिद्वयवत्। इतरथा भेदस्य मिथ्यात्वेऽभेदस्य सत्यत्वापातादिति नेत्याह—न चेति। वनस्पत्योर्भेदाज्ञानात्तदभेदारोप इति तद्भेदः पारमार्थिकः।

अत्र तु ब्रह्माज्ञानादेव कार्यं तदभेदश्चारोपित इति ब्रह्मैव परमार्थो न भेदादिरित्यभिप्रेत्याह—वनस्पत्योरिति। जाताजाताभेदस्याविद्यकत्वेऽनुपपत्त्यभावात् प्रथमकार्य एवोत्तरोत्तरकार्यमित्याह—तस्मादिति। जाताजाताभेदादिर्ब्रह्माज्ञानविलसित एवेत्यत्र गमकमाह- अत एवेति। अविद्योपादानत्वेऽर्थापत्त्यन्तरमाह—एवमिति। द्विगुणीकृतपटादिनैव रज्जुरारब्धव्या किमविद्ययेत्याशंक्य तां विनैकस्मिन् भेदद्वित्वादेरयोगेन तन्नियतसंयोगादेरसंभवेन द्विगुणीकरणादेरेवायोगात्साऽऽवश्यकीत्याह—तद्धीत्यादिना।

किं चोच्चतरगिरिशिखरवर्तिवृक्षादावल्पतरगुल्मकरूपकार्यपरिमाणस्याविद्यकत्ववद्विस्तृतपटारब्धाल्पतररज्जुद्रव्यपरिमाणस्याविद्योपादानत्वं वाच्यमित्यभिप्रेत्याह—न चेति। पट एव संयोगविशेषाद्रज्जुतया प्रतीयते न तदारब्धद्रव्यान्तरमित्याशंक्य द्रव्य-

ख्याकार्यभेदेन द्रव्यान्तरत्वात्। एकपटमात्रवृत्तिसंयोगस्याविद्यां विनाऽसंभवेन रज्जुप्रतीतेः संयुक्तद्रव्यविषयत्वकल्पनानुपपत्तेश्च।

तस्मादेकस्मिंश्चन्द्रे द्वित्ववदेकस्मिन् पटादौ द्वित्वस्य मायात्मकत्वात्तन्नियम्यः संयोगोऽपि तदात्मक इति तत्कार्यमपि तथैव। मायया अधिकपरिमाणे वृक्षादौ न्यूनपरिमाणकार्यं दृष्टमिति महापटारब्धरज्जुपरिमाणमपि तादृशमेव। एवं बाल्यादिशरीरमप्युत्तरोत्तरशरीराकारेण वर्धमानमविद्याकारणत्वे प्रमाणं मायां विना शरीराभेदेऽपि परिमाणभेदायोगात्। द्रव्ये सति पूर्वपरिमाणस्य मायां विना विनाशायोगाच्च।

न च पूर्वपरिमाणवति द्रव्ये परिमाणान्तरवद्द्रव्यसमवाय एव न त्वभेद इति वाच्यम्। एकद्रव्यासमवायात्। परिमाणान्तरविशिष्टबालशरीरस्यावस्थान्तरेऽनुपलम्भाच्च।

अथ पूर्वशरीरापगमे तदवयवैरेव शरीरान्तरमप्यारभ्यत इति चेत्; न, पूर्वशरीरविनाशहेतोरभावात्। भोगजनकादृष्टस्य तदहेतुत्वात्। पूर्वशरीरविनाशं विनाऽदृष्टकार्यभोगानुपपत्त्यभावाच्च। भोगजनकादृष्टे शरीरारम्भके सत्यन्येनाऽपि शरीरनाशायोगाच्च।

---

भेदकानां भिन्नाकृतीनां कार्याणां रज्ज्वादावपि सत्त्वान्नैवमित्याह—न च तदिति।

किं चैकस्मिन् पटेऽविद्यां विना भेदसामानाधिकरणसंयोगस्यैवासंभवान्न संयुक्तपटविषयिणी रज्जुबुद्धिरित्याह—एकेति।

अविद्यया वा कथमेकस्मिन् द्वित्वसमानाधिकरणः संयोगः? कथं वाऽधिकपरिमाणादल्पपरिमाणारम्भ इत्याशंक्य तस्य बहुशो दृष्टत्वान्न विरोध इत्याह—तस्मादित्यादिना।

किं च बाल्याद्यवस्थासु शरीराभेदेऽपि तत्परिमाणभेदो दृश्यते। स चाविद्योपादानत्वं विनाऽनुपपन्नस्तत्र मानमित्याह—एवमिति। अविद्यां विनापि कालभेदेन पूर्वपरिमाणनाशः परिमाणान्तरोत्पत्तिश्च किं न स्यादित्यत आह—द्रव्य इति। अल्पपरिमाणवच्छरीरस्याधिकपरिमाणशरीरारंभकतया भेदान्नैकत्र परिमाणद्वयमित्याशंक्य परमते एकस्यानारम्भकत्वात्, पूर्वशरीरे उत्तरसमवायो न युक्त इति दूषयति—न च पूर्वेति।

किं च पूर्वपूर्वशरीरतत्परिमाणानां भेदेनावस्थानमनुपलब्धिविरुद्धमित्याह—परिमाणान्तरेति। पूर्वशरीरं नोत्तरशरीरारम्भकं किन्तु तन्नाशे तदवयवा एव, तथा च नोक्तदोष इति शंकते—अथेति। पूर्वशरीरनाशे सत्येवं स्यात्, स एव हेत्वभावादनुपपन्न इति दूषयति—न पूर्वेति। यौवनादौ भोगजनकादृष्टमेव तन्नाशकमित्याशंक्य तस्य भोगमात्रहेतुत्वान्नैवमित्यभिप्रेत्याह—भोगेति। भोगार्थमेव पूर्वदेहं नाशयतीत्याशंक्य

परिमाणभेदेऽपि न द्रव्यभेद इत्यत्र युक्तयः

किञ्च दिनपक्षादिव्यवहितानुभवविषयस्याननुसंधानप्रसङ्गः। शरीरभेदे जन्मान्तरीयानुभवविषय इव तदयोगात्। यदपि शरीरभेदे जातिस्मरणेऽनुसन्धानं दृश्यते सोऽदृष्टविशेषमहिम्ना त्वदभिमतपरमाण्वादिचाक्षुषप्रत्ययवत्। अदृष्टविशेषशून्यस्य शरीरभेदे अननुसन्धानमेव अयोगिनामिव परमाणौ चाक्षुषानुभवाभावः। अन्यथा तद्वदेव सर्वेषामपि जन्मान्तरीयानुसन्धानप्रसङ्गः।

न चादृष्टविशेषशून्यस्य जन्मभेद एवाननुसन्धाने प्रयोजकः जन्मैक्ये चानुसन्धानमुपपद्यत इति वाच्यम्; शरीरान्तरप्राप्तिलक्षणजन्मनो बाल्यादिशरीरभेदेऽपि सत्त्वात्। शरीरनिरूपितजन्मभेदस्याननुसन्धानप्रयोजकत्वे गौरवात् लाघवाच्छरीरभेदस्यैव प्रयोजकत्वात्।

एतेन देहावयवानुस्यूतेरनुसन्धानमिति निरस्तम्। शरीरावच्छिन्नेनानुभूतस्य तदवयवावच्छिन्नेन स्मर्तुमशक्यत्वात्। तव मते तयोर्भेदात्।

अन्यथा चैत्रदेहारम्भकत्र्यणुकादेः शरीरान्तरेऽप्यारम्भकत्वात् तत्राप्यनुसन्धानापत्तिः। साक्षाच्छरीरारम्भकावयवानां च न कुत्राप्यनुस्यूतिः। न हि बालाङ्गुल्याद्यवयवैः स्थविरदेह आरभ्यते।

---

तदर्थमुत्तरदेह एवापेक्षितः न पूर्वदेहनाश इत्याह—पूर्वेति। कालादिना पूर्वदेहनाशमाशंक्याह—भोगेति।

किं च बाल्यादिदेहानां परिमाणभेदाद्भेदे पूर्वदेहेऽनुभूतविषयस्य पश्चात्स्मरणं न स्यात् शरीरभेदस्याननुसंधानप्रयोजकत्वादित्याह—किं चेति। कथं तर्हि शरीरभेदे जातिस्मृतिमतो जन्मान्तरेऽनुभूतस्मरणमित्याशङ्क्य तस्य योगितुल्यत्वात् तद्व्यतिरिक्तविषय एवायं नियम इत्याह—यदपीत्यादिना। अदृष्टविशेषरहितस्यापि शरीरभेदेऽप्यनुसन्धाने दोषमाह—अन्यथेति। देहभेदो नाननुसन्धानप्रयोजकः येनोक्तदोषः स्यात् किं त्वदृष्टविशेषरहितत्वे सति जन्मभेद एवेत्याशङ्क्योत्तरोत्तरदेहानां तूत्पत्त्यभ्युपगमे जन्मभेदोऽपि दुर्वार इति दूषयति—न चेत्यादिना।

किं च शरीरजन्मभेदापेक्षया लाघवाच्छरीरभेद एवाननुसंधानप्रयोजक इत्याशंक्याह—शरीरेति।

पूर्वशरीरारावयवानामुत्तरशरीरेऽप्यारम्भकतयाऽभ्युपगमात् तदवच्छिन्नात्मनः पूर्वदेहानुभूतानुसन्धानमित्यप्ययुक्तं अन्यावच्छिन्नेनानुभूतस्यान्यावच्छेदेन स्मरणायोगादित्याह—एतेनेति। शरीरभेदे सत्यपि तदारम्भकानुस्यूतिमात्रेणानुसन्धानेऽतिप्रसंगमाह—अन्यथेति। अनुभवहेतुदेहसाक्षादारम्भकाणामेवानुस्यूतिरनुसंधाने हेतुः त्र्यणुकादिकं तु न तथेत्याशंक्य तर्हि प्रकृतेऽप्यनुसन्धानं न स्यादित्याह—साक्षादिति।

यद्यप्यस्मन्मते सुषुप्तौ शरीरद्वयविलयः तथापि तव मत इव न तदभावः। सूक्ष्मतापत्तेरेव विलयत्वात्। सा च दुर्निरूपाप्यसत उत्पत्त्यनुपपत्तेः प्रत्यभिज्ञानाच्चाङ्गीकर्तव्या।

न चैवं ब्राह्मणादेरनेकजन्मव्यवहितस्यापि स्मरणप्रसङ्गः। कदाचित्तस्य ब्राह्मणादिशरीरप्राप्तेः संभवादिति वाच्यम्; तदेवेदं शरीरमित्यत्र प्रमाणाभावात्।

प्रकृते तु "त इह व्याघ्रो वा सिंहो वे"त्यादि श्रुतिरनुसन्धानं च तदेवेत्यत्र प्रमाणम्। शरीराभेदस्यैव लाघवेन तत्प्रयोजकत्वेन क्लृप्तत्वात्। तस्मात् प्राथमिकमेव शरीरं मायाविशरीरवन्मायया वर्द्धत इति परिमाणगुरुत्वाद्याधिक्योपलब्धिः।

क्षीरस्य दधिभावेऽपि न क्षीरनाशः

एवं क्षीरस्य दधिभावोऽपि मायया। क्षीरस्वभावे स्थिते तस्य दधिभावानुपपत्तेः तत्स्वभावावस्थायां दधिभावानुपलब्धेश्च। क्षीरविनाशे क्षीरारम्भकैः परमाणुभिर्दध्यारभ्यत, इत्येतत् स्थवीयः। परमाणूनां सर्वत्र सुलभतया दध्यर्थं

---

ननु सिद्धान्ते स्वापे स्थूलशरीरलयाभ्युपगमात् कथमामरणं शरीरैक्यमित्याशंक्य सूक्ष्मतापत्तेरेव लयत्वेन पराभिमतविनाशानभ्युपगमान्न विरोध इत्याह—यद्यपीति।

ननु स्वापे देहादेः सूक्ष्मरूपत्वं ततो भिन्नमभिन्नं वा? आद्ये न देहैक्यसिद्धिः। द्वितीये जाग्रतो न विशेष इत्याशंक्य भेदादिनाऽनिर्वचनीयैव सा प्रमाणवलादभ्युपेयैवेत्याह—सा चेति। सूक्ष्मरूपेण लीनमेव पुनः स्थूलरूपेणोत्पद्यत इत्यभ्युपगमे जन्मशतव्यवहितब्राह्मणदेहस्यापि तावन्तं काल सूक्ष्मरूपेण लीनस्येदानीन्तनब्राह्मणदेहरूपेणोत्पत्तिसंभवेनास्य तदभेदात् तेनानुभूतमिदानीं स्मर्येतेत्याशंक्य तत्सूक्ष्मरूपात् तस्यान्यत्वेऽप्येतच्छरीरसंभवादस्य तदभेदे मानाभावान्मैवमित्याह— न चैवमिति।

सुषुप्तौ लीनमेव पुनर्भवतीत्यत्र वा किं मानमिति बीक्षायामाह—प्रकृत इति। अनुसन्धानस्य शरीराभेदगमकत्वमुपपादयति— शरीरेति। शरीराभेदेऽपि परिमाणगुरुत्वादिवैषम्यं मायिकमेकमेवेत्युपसंहरति—तस्मादिति।

किं च क्षीरस्य दधिभावः सर्वप्रसिद्धः। स च वास्तवो न संभवति, क्षीरस्वभावे नष्टे स्थिते वा तस्य तद्भावायोगात्। सोऽप्याविद्यक इत्याह—एवमिति। क्षीरस्य न दधिभावः। किन्तु परमाणुपर्यन्तक्षीरस्वरूपे नष्टे पुनस्तैरेव परमाणुभिर्द्व्यणुकादिक्रमेण दध्यारभ्यते इति मतमयुक्तं क्षीरस्य परमाणुपर्यन्तनाशे दध्युत्पत्तेः पूर्वं कदाचित् तदनुपलंभापातान्नाशकाभावाच्चेत्यभिप्रेत्याह- क्षीरविनाश इति।

किं च परमाणुषु पृथिवीत्वादिव्याप्यजातेरभावात् पार्थिवपरमाणव एव क्षीरारंभकाः तैश्च दध्युत्पत्तौ सर्वत्र तेषां सुलभत्वात्तदर्थिनः क्षीरोपादानं न स्यादित्याह—परमाणूनामिति। क्षीरध्वंसोऽपि तत्र कारणमित्याशंक्याह—क्षीरेति। तत्काले गृहीत-

क्षीरानुपादानप्रसङ्गात्। क्षीरध्वंसानामपि सुलभत्वात्। उपात्तक्षीरध्वंसस्यैव हेतुत्वेऽपि पीताद् भूमौ पतिताद्वा दध्युत्पत्तिप्रसङ्गात्। माहिषात् क्षीरादुत्पन्नं दधि माहिषमिति व्यवस्थायोगाच्च।

क्षीरदध्नोर्नियततुल्यपरिमाणायोगाच्च। तस्माच्छुक्तिरिव रजतरूपेण क्षीरमेव दध्याकारेण परिणमते. किं बहुना सतोऽसतोऽप्युत्पत्त्ययोगादनिर्वचनीयं कार्यं तस्य चाविद्योपादानमिति कार्यमात्रमविद्योपादानमिति।

प्रधाननिरासः।

एतेन यद्यज्ञानमेवोपादानं तर्हि घटाद्यनुविद्धं प्रतीयात्, उपादानस्य कार्यानुविद्धतया प्रतीतिनियमादिति नवीनोक्तं परास्तम्। द्व्यणुकादौ प्रकृतौ च तदभावात्। अस्मन्मतेऽज्ञानस्यैव घटाद्यनुगतबुद्धिविषयत्वाच्च। तस्मादविद्यातिरिक्तपरपरिकल्पितप्रधानपरमाण्वोर्वर्णितकार्यजनकत्वायोगादविद्यैवोपादानम्। किञ्च प्रत्यक्षं न प्रधाने प्रमाणम्, अज्ञानवदननुभवात्।

नाप्यनुमानम्; जगदुपादानजडानुमानानामविद्ययाऽन्यथासिद्धत्वात्।

---

क्षीरस्यैव ध्वंसो हेतुरित्यत आह—उपात्तेति।

किं च पार्थिवपरमाणूनां क्षीरध्वंसस्य च सर्वत्र तुल्यत्वाद् दधिषु वैजात्यं न स्यादित्याह—माहिषादिति।

न च माहिषक्षीरध्वंसजन्यत्वान्माहिषत्वमिति वाच्यम् तद्ध्वंसतत्प्रत्यक्षयोरपि तदापातात्। तस्य दधिहेतुत्वे मानाभावाच्चेति भावः।

उत्पन्नविनष्टघटावयवैर्घटान्तरारम्भेऽपि यथा तयोर्नतुल्यपरिमाणवत्वनियम एवं क्षीरारम्भकैर्दध्यारम्भेऽपि तयोस्तुल्यपरिमाणनियमो न स्यादित्यभिप्रेत्याह—क्षीरदध्नोरिति। तस्मात् क्षीरमेव दधिभावं भजते स च तस्याविद्यक इत्याह—तस्मादिति।

किं च सदसत्कार्यवादस्य दूषितत्वात् कार्यमात्रमनिर्वचनीयमविद्यारूपोपादानं विनाऽनुपपन्नं तत्र मानमित्याह—किं बहुनेति। घटादेरज्ञानोपादानकत्वे परोक्तं बाधकमनूद्य परिहरति—एतेनेति। परिशेषप्रमाणादप्यज्ञानमेवोपादानमित्याह—तस्मादिति। प्रपंचस्यानिर्वचनीयत्वात् प्रधानादीनां सत्यतया तदुपादानत्वायोगादनिर्वचनीयाविद्यैव तदुपादानमित्यर्थः प्रधानादिकमंगीकृत्येदमुक्तम्।

वस्तुतस्तदेव नास्ति मानाभावादित्यभिप्रेत्याह— किं चेति। अननुभवादिति। न च सर्वेषामेव पदार्थानां पुरुषभेदेन सुखदुःखमोहात्मकतया भानात् तद्रूपं प्रधानमनुभूयत इति वाच्यं पदार्थानां सुखादिहेतुत्वेन तद्रूपत्वाभावादिति भावः।

तन्त्वनुपादानं कार्यं पटोपादानजडोपादानकं कार्यत्वादित्याद्यनुमानमर्थान्तरतया निराकरोति—नापीति।

न चोदासीनप्रधाने किञ्चिदनुमानमस्ति । नाप्यागमः, श्रुतौ स्मृतौ च जगत्कारणे प्रधानादिशब्दस्याविद्यापरत्वात् । अद्वैतब्रह्मपरैर्वेदान्तैस्तदन्यप्रतिपादनायोगात् । मायाया उपादानत्वविषयश्रुतिविरोधाच्च न पराभिमतप्रधानं श्रुत्यर्थः । माया च ज्ञाननिवर्त्याऽविद्येत्युक्तम् ।

परमाणुनिरासः

नापि परमाणवः प्रामाणिकाः, अप्रत्यक्षत्वात् । कार्यस्यान्यथासिद्धत्वाच्च, या तु त्रसरेणोरुपादानतया द्व्यणुकस्य तदुपादानत्वेन परमाणोरुत्प्रेक्षा-त्रसरेणोर्महद्द्रव्यस्य कार्यमुपादानं तदपि महच्चेत् प्रत्यक्षं स्यात् । ततोऽणुद्रव्यस्य तस्योपादानं यत्तत्परमाणुरिति । सापि न साध्वी त्र्यणुकोपादानगोचरानुमानं हि लाघवादपञ्चीकृतपृथिव्यादिपञ्चकं विषयीकरोति न त्वनन्तद्व्यणुकानि गौरवात् ।

परमाणुसाधकानुमा निरासः

ननु त्र्यणुकोपदानं ततो न्यूनपरिमाणं न वा ? आद्ये तदेव द्व्यणुकं अणुकार्यस्यैव द्व्यणुकत्वात् । अन्त्ये त्र्यणुकं स्वन्यूनपरिमाणवद्द्रव्यारब्धं कार्यद्रव्यत्वादित्यनुमितेर्न तद्विषय इति चेत्; न अधिकपरिमाणादपि पटादल्पपरिमाणस्य रज्जुद्रव्यस्योत्पत्तेर्व्यभिचारात् ।

---

किं च गुणसाम्यरूपप्रधानस्योदासीनत्वात् तस्य कार्यलिङ्गकानुमानगम्यतैव नेत्याह—न चेति । "अजामेकां लोहितशुक्लकृष्णां" "महतः परमव्यक्तम्" "अक्षरात् परतः परः" प्रकृतिं पुरुषं चैव" 'प्रधानपुरुषेश्वर" इत्यादिश्रुतिस्मृतिष्वजादिपदैः प्रधानमेवोच्यत इत्यत आह—श्रुताविति । श्रुतिविरोधादिति । मायां तु प्रकृतिं विद्यादिति श्रुतिविरोधादित्यर्थः ।

न च मायापदेन पराभिमता प्रकृतिरेवोच्यत इत्याशंक्याह—माया चेति । परमाणूनामप्यप्रामाणिकतामाह—नापीति । सर्गाद्यकार्यं सोपादानं कार्यत्वादित्यनुमानमविद्याऽन्यथासिद्धमित्यभिप्रेत्याह—कार्यस्येति । त्र्यणुककारणतया द्व्यणुकसिद्धिस्तत्कारणतया च परमाणुसिद्धिरिति परैरूहितं तत् दूषयितुमनुवदति—या त्विति । उत्प्रेक्षामेवाह—त्रसरेणोरिति । महत्कार्यस्य कार्योपादानकत्वनियमात् त्र्यणुकोपादानं किञ्चत् कार्यं वक्तव्यं तस्यापि महत्वे प्रत्यक्षत्वापातात्तदणुकार्यं द्व्यणुकमेव । तदुपादानं च ततो न्यूनपरिमाणं नित्यं च वाच्यम् तस्यापि कार्यत्वेऽनवस्थापातात् । स च परमाणुरेवेति भावः । त्र्यणुकोपादानानुमानस्य स्वाभिमतसूक्ष्मभूतैरर्थान्तरत्वान्न द्व्यणुकमेव सिद्ध्यति कुतस्ततः परमाणुसिद्धिरिति दूषयति—साऽपीति । त्र्यणुकोपादानतयाऽभिमतसूक्ष्मभूतं विकल्पयन्नर्थान्तरतापरिहारं शंकते—नन्विति । तदपञ्चीकृतभूतं, पूर्वोक्तार्थान्तराभावेऽपि व्यभिचारस्य सत्वादिदमनुमानमेवायुक्तमित्याह—नाधिकेति । रज्जुरपि पटवत्

न च सा रज्जुस्तन्तुभिरेवारभ्यते, रज्जौ पटमयत्वानुभवात्। महत्या अपि पृथिव्यादिव्यक्तेरुद्भूतरूपाभावेनाप्रत्यक्षत्वसंभवाच्च। न चैवं तत्कार्यमप्यनुद्भूतरूपं स्यादिति वाच्यम्। अनुद्भूतरूपादप्यदृष्टादिवशादुद्भूतरूपवद्द्रव्योत्पत्ताववविरोधात्। तप्ततैलस्थादनुद्भूतरूपात् तेजस उद्भूततरतेजउत्पत्तिदर्शनात्। अन्यथा तदुत्कर्षात् तदुत्कर्षायोगात्। अप्रत्यक्षत्वाभिप्रायैवापञ्चीकृतानां सूक्ष्मतोक्तिः।

सिद्धान्ते स्थूलात् सूक्ष्मोत्पत्तिसाधनम्

किं च विवर्तवादे सूक्ष्मात्स्थूलोत्पत्तिरिति नियन्तुं नशक्यते। ऊर्ध्वतरगिरिशिखरस्थमहातरुष्वत्यल्पगुल्मादिविवर्तदर्शनात्।

ननु पृथिव्यादिव्यक्तेरेकैकत्वे कथं पञ्चीकरणं त्रिवृत्करणं वा। तस्य पृथिव्यादिव्यक्तिविभागाधीनत्वाद्विभागस्यानेकवृत्तित्वादिति चेत्, न; एकस्मिन्नपि चैतन्ये जीवेश्वरादिविभागवच्चन्द्रादिविभागवच्चाविद्यया विभागोपपत्तेः। किं च पटस्य मध्ये छेदेऽस्त्येवाबाधितो द्वैधीभावः। न हि तत्र पूर्वं पटभेदोऽस्ति। न च तत्र तन्तूनामेव विभागो न पटस्येति वाच्यम्, इमौ पटौ इत्यनुभवात्। ननु तस्य सावयवत्वाद्विभाग इति चेत्। अस्तु सावयवत्वं तथापि निरवयवस्यैवास्य विभागस्तु प्रामाणिक एव।

---

तन्त्वरब्धो न पटारब्धःअतो न व्यभिचार इत्यत आह—न चेति। त्र्यणुकोपादानस्य महत्त्वे प्रत्यक्षत्वापात इत्युक्तं परिहरति—महत्या इति। कारणस्यानुद्भूतरूपवत्वे कार्यमपि तथा स्यादित्याशंक्य सूक्ष्मात् स्थूलोत्पत्तिवदनुद्भृतरूपोत्पत्तिरदृष्टवशाद् युज्यत इत्यभिप्रेत्याह—न चैवमिति।

किं च तप्ततैलस्थतेजसोऽनुद्भूतरूपवत्वेऽपि तत्र जलसंसर्गादुद्भूतरूपवज्ज्वालोत्पत्तिदर्शनान्नोक्तनियम इत्याह—तस्येति। तत्र तप्ततैलस्थं तेजो न ज्वालोत्पादकं किं त्वन्यतेजोवयवा इत्याशंक्याह—अन्यथेति।

अपंचीकृतानां महत्त्वे कथं सूक्ष्मभूतानीति व्यपदेश इत्यत आह—अप्रत्यक्षत्वेति। एवं परमतेऽपि स्थूलात् सूक्ष्ममुत्पद्यत इत्युक्तः सिद्धान्ते तु न कोऽपि विरोधः। यथा—प्रतीत्यनिर्वचनीयकार्यसंभवादिति सदृष्टान्तमाह—किं चेति।

अपञ्चीकृतभूतानामेकैकव्यक्तित्वमुक्तमाक्षिपति—नन्विति। अपञ्चीकृतभूतानां मध्ये एकैकं द्विधा विभज्य पुनरेकमर्धं चतुर्धाविभज्य स्वार्धभागं विहायेतरार्धभागेषु मेलनं पञ्चीकरणं नाम। त्रिवृत्करणं तु तेजोऽबन्नानामेकैकं द्विधा विभज्येतरभूतभागयोर्मेलनं तदेतद्द्वयं भूतानामेकैकव्यक्तिकत्वेऽनुपपन्नमित्यर्थः। एकव्यक्तौ वास्तवविभागासंभवेऽप्याविद्यकस्य संभवात्तदधीनानिर्वचनीयपञ्चीकरणाद्युपपत्तिरित्यभिप्रेत्याह—एकस्मिन्निति।

**ननु दृश्यमानं पटद्वयं पूर्वपटादन्यदेवेति चेत्; न, एक एव द्विधाकृतः स एवायं पट इत्यबाधितानुभवात् स एवायमिति शपथेऽपि जयदर्शनाच्च ।**

**तस्माद्विचित्रशक्तिमायायां सत्यां गगनादिविभागवन्नैकस्मिन् विभागोऽनुपपन्न इति न पञ्चीकरणाद्यनुपपत्तिः । पञ्चीकरणं त्रिवृत्करणं वा श्रुतिस्मृतिसिद्धम्, असतिबाधे स्वीकार्यमेव ।**

**अन्यथा पृथिव्यादौ शुक्लरूपाद्यनुपलंभप्रसंगाच्च । अपञ्चीकृतपृथिव्यादेर्गन्धादिमात्ररूपतायाः श्रुतिस्मृतिप्रसिद्धत्वात् । जलादौ गन्धाद्यनुपलंभोऽनुद्भवादिति न किञ्चिदनुपपन्नम् । अतो न द्व्यणुकसिद्धिः ।**

त्र्यणुकावयवानुमानानङ्गीकारपक्षः

**केचित्तु त्र्यणुकन्यूनपरिमाणस्यालौकिकतया गौरवेण त्र्यणुकोपादानानुमानागोचरत्वम् । श्रुतावप्येषोऽणुरात्मा चेतसा वेदितव्य, इत्यादौ प्रत्यक्ष एवाणु-**

---

चन्द्रादौ भेदभ्रम एव न भेदोऽस्तीति मन्वानं प्रत्युदाहरणान्तरमाह---किं चेति अबाधित इति । अविद्यादशायामिति शेषः । भिन्नतन्तूनामेवायं विभागो नैकपटस्येत्याशंक्य पटत्वसामानाधिकरण्यानुभवान्मैवमित्याह—न च तत्रेति । सूक्ष्मभूतात् पटे वैषम्यं शंकते—नन्विति । एकस्य विभागमात्रे दृष्टान्तस्य सिद्धत्वादवान्तरवैषम्यमकिञ्चित्करमित्यभिप्रेत्याह—तथापीति । छेदेन पूर्वपटो नष्टः खण्डपट उत्पन्नस्तयोरेव विभागो न त्वेकस्येति शंकते—नन्विति । खण्डपटयोः पूर्वपटेनाभेदस्याबाधितानुभवसिद्धत्वात् भेदादिकमयुक्तमिति दूषयति—न एक इति । भेदाभेदयोर्विरुद्धत्वात् कथमेकत्र संभव इत्याशंक्याघटितघटकमायाविलासत्वान्न विरोध इत्यभिप्रेत्याह—तस्मादिति ।

पञ्चीकरणादिकमेव नास्तीति वदन्तं प्रत्याह--पञ्चीकरणमिति । तासां त्रिवृत्तं त्रिवृतमेकैकामकरोदिति श्रुतिसिद्धं त्रिवृत्करणं, पञ्चीकरणं तु "तत्पुनः कारणं ब्रह्म तानि भूतानि पञ्च च । एकैकं द्विविधं कृत्वा तेषां मध्ये सुरोत्तमाः ।

अंशान्यं च समादाय तेषामेकैकमास्तिकाः ।।"
कृत्वा चतुर्द्धा तेष्वंशानादाय चतुरः सुराः ।"

इत्यारभ्य "एवंभूतानि सर्वाणि पञ्चीकृत्य सुरर्षभाः" इत्यन्तस्मृतिसिद्धमित्यर्थः ।

त्र्यणुकोपादानानुमानस्यापञ्चीकृतभूतविषयत्वे फलितमाह--अत इति । अपञ्चीकृतपृथिव्यादीनामनन्तत्वेऽपि त्र्यणुकोपादानानुमानं न पराभिमतद्व्यणुकविषयमलौकिकपरिमाणकल्पनाप्रसंगादित्यभिप्रेत्याह--केचित्त्विति । 'एषोऽणुरात्मे'ति श्रुतावणुपदार्थप्रसिद्धेनं तस्याप्रसिद्धिरित्याशंक्य तत्रैष इति पदसमभिव्याहारात् प्रत्यक्षस्यैवाणुपदेनोक्तत्वान्न पराभिताणोः सिद्धिरित्याह--श्रुताविति । द्व्यणुकाप्रामाणिकत्वसाधनफलमाह—

शब्दप्रयोगात्। अप्रत्यक्षाणुपरिमाणं सर्वप्रमाणबहिर्भूतमित्याहुः।

द्व्यणुकाभावे परमाणुसिद्धिर्दूरनिरस्ता। निरवयवसंयोगानुपपत्तेरपि न परमाणुकार्यं जगत्। अत एव परमाणुसमूहो जगदिति निरस्तम्।

सूक्ष्मात् स्थूलोत्पत्तिनिरासः

वस्तुतस्तु सूक्ष्मारब्धमवयविद्रव्यान्तरं नास्त्येव तत्कल्पने गौरवात् प्रमाणाभावाच्च।

न च पट एकः स्थूल इति व्यवहारस्तत्र मानं, तृणवण [ शण ] रोमसूत्रात्मन्येकः पट इति स्थूल इति बुद्धिवद्वनं स्थूलमेकमिति बुद्धिवच्च तदुपपत्तेः। चाक्षुषत्वे च सजातीयसंयोग एव प्रयोजकः न महत्वं तस्य द्रव्यान्तरसिद्ध्यधीनत्वात्। अपञ्चीकृतानां महत्वाच्च। अन्यथा वृक्षाद्यग्रेणापि मूलकार्यप्रसङ्गः। तस्मादनेकेष्वेकत्वमविद्यां विना न भवतीत्यविद्योपादानमिति। तस्मादविद्यैव जगदाकारेण परिणमते। एवं ब्रह्मापि जगद्विवर्ताधिष्ठानमुपादानम्। विवर्तस्याधिष्ठानाभिन्नत्वात्। ब्रह्मणः कारणत्वाच्च।

---

द्व्यणुकेति। परमाणूनंगीकृत्यापि जगतस्तज्जन्यत्वमनुपपन्नमित्याह—निरवयवेति। परमाणूनामसंभवादेव संघातवादोऽप्ययुक्त इत्याह--अत एवेति। उपादानातिरेकेण कार्यद्रव्यस्य कुत्राप्यभावादारम्भवादोऽप्ययुक्त इत्यभिप्रेत्याह--वस्तुत इति। स्थूल एकः पट इत्यादिबुद्धेः सूक्ष्मानेकतन्तुविषयत्वायोगात् तदतिरिक्तावयव्यावश्यक इत्याशंक्य विजातीयतृणवणाद्यारब्धावयवाभावेऽपि एक इत्यादिबुद्धिवत्तदुपपत्तेर्न तदवयविनि मानमित्याह--न चेति। अवयवातिरिक्तावयविनोऽभावे तन्त्वादेरपि परमाणुमात्रत्वेन महत्वाभावाच्चाक्षुषता न स्यादित्यत आह--चक्षुषत्वेवेति। दूरस्थकेशादौ द्रव्यान्तरारम्भं विनाऽपि सजातीयसंयोगमात्रादेव चाक्षुषत्वदर्शनादिति भावः।

किं च परमाणूनामप्रामाणिकत्वादपञ्चीकृतभूतसंघात एव जगत्तेषां च महत्वान्न चाक्षुषत्वविरोध इत्यभिप्रेत्याह--अपञ्चीकृतेति। अवयवातिरिक्तावयविनः सत्वे तस्य सर्वावयवेष्वेकरूपत्वात् तत्कार्यमपि सर्वत्र स्यादित्याह--अन्यथेति। कारणातिरिक्तकार्यानिरूपणात् तत्र प्रतीयमानमेकत्वादिकमाविद्यकमित्याह—तस्मादिति। अविद्याकार्यस्य धर्मिसमसत्ताकतया परिणामितयैवाविद्योपादानमित्याह—तस्मादिति। अविद्यापरिणामस्य ब्रह्मसमसत्ताकत्वाभावाद्ब्रह्मविवर्त एव। ततश्चाधिष्ठानतयैव ब्रह्मोपादानमित्यभिप्रेत्याह—एवमिति। ब्रह्मण्यप्युपादानस्य लक्षणं दर्शयति—विवर्तस्येति। सद्रूपब्रह्मणो विवर्तनीयप्रपञ्चेन वास्तवाभेदाभावेऽप्यारोपिततादात्म्यमभ्युपेयमित्युपपादयति—तथा हीति।

किं ब्रह्मातिरिक्तसत्ता घटादिस्वरूपमेव पराभिमतसत्ताजातिर्वा? नाद्य इत्याह—

ब्रह्मण उपादानता सद्रूपेण ।

तथाहि "सन् घटः" इत्याद्यनुभवात् सद्घटयोरभेदोऽनुभवसिद्धः । सच्च ब्रह्मैव तदतिरिक्तसत्तायां प्रमाणाभावाच्च ।

न तावत् घटः सन्निति प्रतीयमानसत्ता घटादिस्वरूपमेव "घटो घटः" इतिवत् 'सन्घटः' इत्यनुभवायोगात् । अनुगतसद्बुद्धेरनुगतसत्ताविषयत्वाच्च । घटादिस्वरूपस्य सत्वे तदुत्पत्तिविनाशयोरनुपपत्तेः । प्रागुत्तरकालमपि तत्स्वरूपानुभवप्रसङ्गाच्च । नापि पराभिमतसत्ताजातिः, सन्निति बुद्धिर्हि घटपटादेः सत्तादात्म्यं विषयीकरोति ।

न तु तस्य घटादिवृत्तित्वमपि तत्र तस्या औदासीन्यात् । सत्तादात्म्यं चानिदमि रजते इदंतादात्म्यवदधिष्ठानतया सत उपपद्यते । युक्तं चैतत् अतिरिक्तसत्ताकल्पने गौरवात् । अनुभवस्य सदात्मविषयत्वेऽप्युपपत्तेः । न चैवं रजत इदंतादात्म्यबाधवत् घटादौ सत्तादात्म्यबाधः स्यादिति वाच्यम् । सत्तादात्म्यानुभवहेतुमूलाज्ञाननिवर्तकसाक्षात्काराभावात् । यौक्तिकबाधस्तूक्त एव ।

घटादिकं बाधायोग्यं न भवति जडत्वात् । शुक्तिरजतवत् । न चाप्रयोजकः आत्मातिरिक्तसत्ताकल्पने गौरवात् सिद्धान्ते च लाघवात् । श्रुतिरपि "न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव" "यस्मात् परं नापरमस्ति किंचिदि"त्यादिविश्वस्य स्वाभाविकसत्तां निराकरोति ।" अस्तीत्येवोपलब्धव्यः "अस्ति ब्रह्मेति चेद्वेदेत्याद्यात्मनोऽस्तित्वं दर्शयति ।

---

न तावदिति । घटादीनामन्योन्यविलक्षणतया तेष्वेकाकारबुद्धेरयोगात् तदतिरिक्तसत्तैव तद्विषय इत्याह—अनुगतेति ।

किं च घटादिस्वरूपस्यैव सत्वे वस्तुनो द्वैरूप्यायोगात् सर्वदा सत्वमेव स्यात् तथा च तस्योत्पत्तिर्विनाशो वा न स्यादित्याह—घटादीति । सर्वदा सत्त्वे उत्पत्तेः पूर्वं नाशानन्तरं च तदुपलम्भः स्यादित्याह—प्रागुत्तरेति । द्वितीयं दूषयति—नापीति । सन् घट इत्यादिबुद्धेः सत्तादात्म्यमात्रविषयत्वात् तदाश्रयसत्तायां न किंचिन्मानमित्युपपादयति—सन्निति । सद्विलक्षणस्य सत्तादात्म्यं वा कथमित्यत आह—सत्तादात्म्यं चेति । सद्रूपात्मतादात्म्यमेव सद्बुद्धिगोचर इत्येतल्लाघवाद्युक्तम् । अतिरिक्तसत्ताकल्पनं तु गौरवादयुक्तमित्याह—युक्तं चेति । कल्पितस्य बाधनियमाद् घटादौ सत्तादात्म्यस्याऽपि कल्पितत्वे बाधः स्यादित्याशंक्याह—न चैवमिति ।

किं सविलासाविद्यानिवृत्तिरूपो बाध आपाद्यत उत मिथ्यात्वनिश्चयरूपः ? नाद्यः तन्मूलाविद्यानिवर्तकज्ञानाभावादित्याह—सत्तादात्म्येति । द्वितीयं प्रत्याह—यौक्तिकेति ।

सत्ताजातिनिराकरणम्

**किं च जातिः सति वर्तते असति वा? आद्ये आत्माश्रयः। न द्वितीयः, असत आश्रयत्वानुपपत्तेः। यत्तु सत्वोपलक्षिते सत्तेति। तन्न, तदुपलक्षिततदाश्रयस्यापि सत्वासत्वव्यतिरिक्तप्रकारान्तरस्य तव मतेऽसंभवात्। अपि च सबुद्धिविषयः सत्ताजातिश्चेत् सामान्यादौ सद्बुद्धिर्न स्यात् सत्ता वा स्यात्। तत्रापि सत्तैकाधिकरण्येन सद्बुद्धिरिति चेत्; न, अन्यत्र सद्बुद्धेः सत्तासमवायविषयत्वे प्रतीतिवैलक्षण्यं विना सामान्यादौ विषयवैलक्षण्यकल्पनायोगात्। अन्यथा गुणादावपि तदैकाधिकरण्यात् सा किं न स्यात्।**

अत एव **सामान्यादौ स्वरूपविषयिणी सद्बुद्धिरन्यत्र जातिविषयिणीति** प्रत्युक्तं, **एकाकारप्रतीतेर्विषयवैलक्षण्यायोगात् सामान्यादावनुगतसद्बुद्ध्ययोगप्रसङ्गाच्च।**

बाधायोग्यत्वं सत्तेतिपक्षनिरासः

**ननु बाधायोग्यत्वं सत्ता सामान्यादावप्यस्तीति चेत्, न, तस्या एव सत्ताया लाघवानुगृहीतानुभवेनोदाहृतश्रुत्या चात्ममात्रतया सिद्धत्वात् प्रपञ्चस्य श्रुत्यनुमानाभ्यां** बाधयोग्यत्वस्य **सिद्धत्वात्। नवाऽन्यथासिद्धानुभवबलेन न्यायोपोद्बलितश्रुत्यर्थोऽन्यथा नेतुं शक्यते; अतिप्रसङ्गात्। एतेनासद्वा इदमग्र**

---

अनुमानादितोऽपि प्रपञ्चमिथ्यात्वं निश्चीयत इत्याह—घटादिकमिति। असद्वा इदमग्र आसीदिति श्रुतेरात्मनोऽपि न सत्त्वमित्याशंक्य तस्य स्वरूपप्रतिपादकानेक श्रुतिविरोधादसच्छ्रुतिरन्यपरेत्यभिप्रेत्याह—अस्तीत्येवेति। आश्रयानिरूपणादपि पराभिमतसत्ताजातिरयुक्तेत्याह—किंचेति। आत्माश्रय इति। सत्ताविशिष्टस्यैव सच्छब्दार्थत्वादिति भावः। किं च सत्ताजातेरेव सद्बुद्धिगोचरत्वे सामान्यादौ सद्बुद्धिर्न स्यादितरथा सामान्यादिकमपि सामान्यवत्स्यादित्याह—अपि चेति। द्रव्यादौ सत्तासमवायः सद्बुद्धेर्विषयः सामान्यादौ तु तत्सामानाधिकरण्यमिति शङ्कते-तत्रापीति। विषयवैलक्षण्ये प्रतीतिवैलक्षण्यस्यावश्यकत्वात् द्रव्यादौ सामान्यादौ च सत्प्रतीतेर्वैलक्षण्याभावादुक्तविधया विषयवैलक्षण्यमयुक्तमिति दूषयति—नान्यत्रेति। विपक्षे गुणादावपि सामान्यादाविव सद्बुद्ध्युपपत्तेः सत्तासमवायो न स्यादित्यभिप्रेत्याह—अन्यथेति।

ननु यत्र सत्ता जातिः संभवति तत्र सद्बुद्धिर्जातिविषयिणी। यत्र तु सा न संभवति तत्र स्वरूपमेव तद्विषय इत्येतदप्ययुक्तमित्याह—अत एवेति। अतः शब्दार्थमाह—एकाकारेति। सिद्धान्त्यभिमतसत्तैव सर्वपदार्थनिष्ठा सर्वत्र सद्बुद्धिविषय इति शंकते—न न्विति। अस्तीत्येवोपलब्धव्य इत्यादिश्रुत्याऽऽत्मन एव बाधायोग्यत्वावधारणात् तत्तादात्म्यादेव श्रुतिबाधितप्रपञ्चे सद्बुद्ध्युपपत्तेर्न तत्र बाधायोग्यत्वमित्याह—न तस्या इति। सद्बुद्धिविरोधात्प्रपञ्चनिषेधश्रुतिरन्यपरेत्याशङ्क्याह—न चेति। अतिप्रसङ्गादिति।

आसीदिति" श्रुत्या ब्रह्मणोऽपि बाधितत्वात्, न ब्रह्मापि सदिति नवीनोक्तं प्रत्युक्तम् । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुरिति श्रुत्या ब्रह्मणोऽसत्वं प्रतिषिध्य सत्वस्य प्रतिपादितत्वात् । "असद्वा इदमग्र आसीत्" इति श्रुतिस्तु सृष्टेः प्राक् प्रपञ्चस्यानभिव्यक्तनामरूपतां दर्शयति ।

न तु ब्रह्मणोऽसत्वं इदमिति जगतः परामर्शात् ततो वै सदजायतेति उत्तरवाक्यविरोधाच्च । 'कथमसतः सद् जायेत' इति श्रुत्यैवासतः सदुत्पत्तेर्निराकरणात् ।

सत्वं प्रमाणयोग्यत्वं प्रपञ्चेऽपीति पूर्वपक्षः तन्निरासश्च

ननु बाधायोग्यत्वं न सत्वं असतोऽपि बाधायोग्यत्वात् न ह्यसदभावः केनचित् प्रमाणेन प्रमीयते, किन्तु प्रमाणयोग्यत्वं, तच्च प्रपञ्चस्यापि प्रत्यक्षादियोग्यत्वादस्तीति न सदभेदानुभवो ब्रह्मगोचर इति चेत्; न, धर्मस्य स्वरूपस्य वा बाधायोग्यत्वस्य निःस्वरूपासतोऽसंभवात् । न हि तस्य कश्चित् धर्मो न वा किञ्चित् स्वरूपमस्ति । तथात्वे क्लृप्तपदार्थस्यैव कस्यचिदसदिति नाममात्रं कृतं स्यात् ।

कथं तर्ह्यसन् सन्न भवतीत्यादि निषेध इति चेत्; न, असदिति ज्ञानं सद्विषयं न भवतीत्येव निषेधात् । असत्सन्न भवतीतिवदज्ञाननिमित्तविकल्पव्यवहारमात्रत्वाच्च ज्ञानमपि तादृशं विकल्पप्रत्ययरूपं तत् न निवार्यते । असतो ज्ञानविषयत्वं वा कथमिति चेत्; न कथञ्चित् विषयाभावेऽपि परोक्षज्ञानसंभवात् ।

---

देहात्मतानुभवविरोधेन स्वर्गकामो यजेतेत्यादेरप्यन्यपरत्वापातादित्यर्थः । उक्तयुक्तिभिरेव परोक्तवाधकमपि निरस्तमित्याह--एतेनेति । असद्वेतिश्रुत्या ब्रह्मणोऽसत्वस्यैवोक्तत्वात् सत्त्वप्रतिपादकश्रुतिरेवान्यपरा किं न स्यादित्यत आह—असद्वा इति । असच्छब्दस्य शून्यपरत्वेऽनन्तरवाक्यविरोधश्चेत्याह—तत इति । असतः सदुत्पत्त्युपपत्तेर्न तद्विरोध इत्याशंक्याह—कथमसत इति ।

वाधायोग्यत्वमेव सत्वं तच्च ब्रह्मण एवेत्युक्तमाक्षिपति—नन्विति । किं तर्हि सत्वमिति वीक्षायामाह--किं त्विति । फलितमाह—तच्चेति । वाधायोग्यत्वरूपसत्वमसत्यति व्याप्तमित्येतत्तावद् दूषयति—न धर्मस्येति । असतो निर्धर्मकत्वे कथं सत्प्रतियोगिकतादात्म्यस्य तत्र निषेध इति शंकते—कथं तर्हीति । असच्छब्दोल्लेखिज्ञानस्यैव निषेधधर्मित्वं न त्वसतः तस्य निषेधर्मित्वेऽसत्वव्याघातादित्याह—नासदिति ।

**निर्विषयं ज्ञानं नास्तीति चेत्; न परमतेऽतीतानागतादिविषयज्ञानस्य भूयसः सत्वात्। परोक्षज्ञानस्य विषयाजन्यत्वेन तेन विनाऽनुपपन्नत्वाभावाच्च।**

असतोऽसत्त्वसाधनम्।

**कथं तर्ह्यसतोऽसत्वसिद्धिः ? किं सिद्धिः सत्ता ज्ञानं वा ? आद्ये न कथमपि। ज्ञानं तु निर्विषयमेवेत्युक्तम्। प्रपञ्चेऽसदन्यत्वप्रतिपादनस्यापि गतिर्वक्ष्यते।**

**यत्त्वसज्ज्ञानमेव नास्तीति तन्न, [तत्र] एतन्निषेधस्यैवानुपपत्तेः। व्यवहारमात्रत्वे च तन्निषेधासिद्धेः। व्यवहारमात्रस्य ज्ञानजन्यत्वाच्च। तस्मान्नासतो बाधायोग्यत्वे प्रमाणम्। यद्यबाधितोऽनुभवः तर्हि बाधायोग्यत्वमित्येवायातम्।**

**यदि चानुभवमात्रं तर्हि मिथ्यारजतादौ सत्वप्रसङ्गः।**

---

किं चासन्न भवतीत्येतदाकारं ज्ञानमेव नास्ति किंत्वेवमाकारं निर्विषयव्यवहारमात्रमित्याह--असदिति। असत्पदश्रवणेऽसद्धानमनुभवसिद्धं तस्य कथमपलाप इत्याशंक्याह—ज्ञानमपीति। तादृशपदज्ञाननिमित्तं विकल्पपदार्थमजानानः शंकते--असत इति। विकल्पस्य निर्विषयत्वादसतस्तद्विषयत्वमेव नेत्याह–न कथञ्चिदिति। जानातेः सकर्मकत्वान्निर्विषयज्ञानमनुपपन्नमिति शंकते—निर्विषयमिति। अतीतादिविज्ञातस्य सत्काले विषयासत्वेऽपि परैरभ्युपगमान्नोक्तानुपपत्तिरित्याह—न परमते इति।

किं च यद् ज्ञानं विषयजन्यं तद्विषयाभानेऽनुपपन्नं विकल्पप्रत्ययस्य च परोक्षत्वेन तदजन्यत्वान्न तेन विनानुपपत्तिरित्याह– परोक्षेति।

मेयसिद्धेः मानाधीनत्वादसतो मानागोचरत्वे कथं तस्यासत्वसिद्धिरिति शंकते—कथमिति। सिद्धिपदार्थं विकल्प्य दूषयति--किमिति। असत्पदार्थाभावे तदन्योन्याभावस्याप्यभावात्प्रपंचे कथं तदन्यत्वाभ्युपगम इत्याशंक्यासद्वाद्यभिमतासत्वं न दुर्निरूपतामात्रेणासदन्यत्वोक्तिरित्यनिर्वचनीयवादे वक्ष्यत इत्याह--प्रपञ्च इति। तार्किकैरसद्वादाद् विकल्पप्रत्ययोऽपि नेत्यभ्युपगतं तदनूद्य निराकरोति–यत्विति। अनुपपत्तेरिति। निष्प्रतियोगिकनिषेधस्य परैरनभ्युपगमादिति भावः। असद्ज्ञानं नास्ति इति न कस्यचिन्निषेधः किन्तु निषेधव्यवहारमात्रमित्याशंक्य तस्यासज्ज्ञानसत्वेऽप्युपपत्तेर्न तदपलापसिद्धिरित्याह– व्यवहारेति। स्वतन्त्रव्यवहारस्यार्थं ज्ञानजन्यत्वनियमादपि तज्ज्ञानमावश्यकमित्याह--व्यवहारेति। असतो निःस्वरूपत्वात्तत्र सत्तालक्षणस्य नातिव्याप्तिरित्युपक्रान्तं निगमयति—तस्मादिति।

यदुक्तं प्रमाणयोग्यत्वमेव सत्वमिति तत्र प्रमाणपदेनाबाधितार्थानुभवो विवक्षितः उतानुभवमात्रमज्ञातार्थानुभवो वा ? आद्ये ब्रह्मण एवाबाध्यत्वात् तस्यैव सत्वमित्यसम-

**अथाज्ञातविषयानुभवः तर्ह्यात्मैव प्रमाणयोग्यः अज्ञानस्य चैतन्यमात्रविषयतायां उक्तत्वात् ।**

बाधायोग्यत्वं किं स्वरूपमन्यद्वेति विचारः

**ननु बाधायोग्यत्वं प्रमाणयोग्यत्वं वा सत्वं ब्रह्मस्वरूपं ततोऽन्यद्वा ? आद्ये ब्रह्मपदार्थातिरिक्ताभावात् सद्ब्रह्मेति प्रत्ययप्रयोगौ न स्याताम् । द्वितीये मुक्तौ तत्सत्वेऽद्वितीयत्वक्षतिः । असत्वे ब्रह्मणोऽसत्वप्रसङ्गः । बाधायोग्यत्वस्य कल्पितत्वेऽप्येष दोषः समान इति चेत् न; ब्रह्मणो बाधयोग्यतायाः श्रुत्यैव निरस्तत्वात् । ब्रह्मणोऽपि बाधयोग्यत्वे कल्पितत्वेन जडतया विश्वान्ध्यप्रसङ्गात् । अधिष्ठानान्तराभावेन ब्रह्मणः कल्पितत्वानुपपत्तेः । सर्वाधिष्ठानाकल्पितप्रकाशस्यैव आत्मत्वात् । तस्मात् सद्रूपमेव ब्रह्म सर्वप्रपञ्चाधिष्ठानं सत्तेति भावार्थः । सत्तादात्म्यात् सति प्रपञ्चेऽधिष्ठानसतोऽप्यनुगतत्वेन भावार्थत्वोपपत्तेः । तथा च न सत्ता ब्रह्मस्वरूपादतिरिच्यते ।**

**एवं च कल्पितबाधायोग्यत्वविशिष्टं बाधायोग्यं चैतन्यं सत्ताशब्दार्थः । धर्मान्तरविशिष्टं ब्रह्मशब्दार्थ इति सद्ब्रह्मपदयोर्न सामानाधिकरण्यानुपपत्तिः ।**

---

दिष्टसिद्धिरित्यभिप्रेत्याह प्रमाणमिति । द्वितीयमतिव्याप्त्या दूषयति—यदि चेति । तृतीयेऽपि ब्रह्मण एव सत्वं न जडस्येत्याह—अथेत्यादिना ।

ब्रह्मणि यत्सत्वमभ्युपगम्यते किं तदपि सत्यं कल्पितं वा ? तत्राद्यस्तावद्भेदाभेदविकल्पासह इति शंकते—नन्वित्यादिना । असत्वप्रसंग इति । सत्वाभावे निर्वचनीयत्वाभ्युपगमेनासत्वापातादित्यर्थः । उक्तदोषं द्वितीयेऽप्यतिदिशति—बाधायोग्यत्वस्येति । कल्पितत्व इति । ब्रह्मस्वरूपत्वे ब्रह्मणोऽपि कल्पितत्वापातः । धर्मत्वे च मुक्तौ तदभावाद्ब्राह्मणोऽसत्वापात इति भावः । बाधायोग्यस्वरूपमेव सत्ता तच्च ब्रह्मणो नातिरिच्यते न वा कल्पितमित्यभिप्रेत्य ब्रह्मणो बाधयोग्यतां निराकरोति—न ब्रह्मण इति । श्रुत्यैवेति । असन्नेव स भवतीत्यादिश्रुत्येत्यर्थः । श्रुत्यनुकूलां युक्तिमप्याह—ब्रह्मण इति । ब्रह्मणोऽपि स्वप्रकाशमधिष्ठानान्तरमस्त्वित्याशंक्याह सर्वेति । ब्रह्मस्वरूपस्याकल्पितत्वात् सद्रूपं ब्रह्मैव सत्तेत्यत्र भावप्रत्ययार्थ इत्याह तस्मादिति ।

ननु घटाद्यनुगतैव सत्ताऽनुभूयते तत्कथं ब्रह्मसत्तेत्युच्यत इति तत्राह—सत्तादात्म्यादिति । प्रपञ्चस्य स्वतः सत्ताऽभावेपि सदधिष्ठानतादात्म्येन सद्व्यक्तित्वात् तदनुगताधिष्ठानं सद्ब्रह्मैव सत्तेति प्रकृतिप्रत्ययार्थ इति भावः । फलितमाह—तथा चेति ।

नन्वतिरिक्तसत्ताभावे सद्ब्रह्मशब्दयोः प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकरण्यानुपपत्तिरित्युक्तं तत्राह—एवं चेति । यथा घटत्वादिधर्मः परैरभ्युपगम्यते एवं बाधा-

एतेन ज्ञानत्वानन्दत्वे अपि व्याख्याते, तत्तद्वृत्त्यनुगतब्रह्मचैतन्यस्यैव तत्रापि भावार्थत्वात् । तस्माज्जातिमन्मात्रे स्फुरणसत्तादात्म्यानुभवात् सत्स्फुरणात्मकं ब्रह्मापि विवर्ताधिष्ठानमुपादानमिति जगदविद्याब्रह्मोपादानकमिति ।

तदाहुः—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ।। इति ।।

अधुना मम नाथ नास्ति चिन्ता
दयया त्वं हृदये न तिष्ठसीति ।
यदिमे मनसि स्फुरन्त्यजस्रं
त्वदृते किं वद दृश्यमस्ति विष्णो ।।

ब्रह्मणो निर्विकारत्वश्रुतिसामञ्जस्यम्

न चैवं ब्रह्मणो निर्विकारश्रुतिविरोधः, कल्पितविकारसम्बन्धस्य वास्तवनिर्विकारत्वाविरोधात् । श्रुतिप्रतिपन्नत्रैकालिकविकाराभावस्यावास्तवविकारेऽप्यनपायात् । अधिष्ठानस्य निर्विकारत्वाच्च । विकारापवादस्तु तत्त्वसाक्षात्काराद् भविष्यति ।

---

योग्य एव चैतन्ये व्यवहाराय तद्योग्यत्वं नाम धर्मोऽभ्युपगम्यते एवं सर्वात्मयोग्ये तस्मिंस्तद्योग्यत्वं च । तथा च तत्तद्विशिष्टस्य सद्ब्रह्मपदवाच्यार्थत्वात्तयोः सह प्रयोगोपपत्तिरित्यर्थः । ज्ञानत्वानन्दत्वयोरपि ब्रह्मस्वरूपत्वं भावप्रत्यार्थत्वं प्रसंगादाह—एतेनेति । यदभिन्नं कार्यमुत्पद्यते तत्कारणमुपादानमित्युपादानलक्षणस्य ब्रह्मण्यपि सत्वात्तदप्युपादानमित्युपसंहरति—तस्मादिति । नामरूपात्मकप्रपञ्चे ब्रह्मतादात्म्यं भासत इत्यत्राभियुक्तसम्मतिमाह—तदाहुरिति । ब्रह्म सर्वोपादानतया सर्वात्मत्वाद्विवेकिनां ब्रह्मदृष्टिः सर्वदा सर्वत्र सुकरेत्यभिप्रेत्याह श्लोकेन—अधुनेति । हे नाथ त्वं दयया मम हृदये चित्ते न तिष्ठसि न प्रकाशस इति या चिन्ता मनस्तापः साऽधुना नास्ति यत् यस्मात् इमे देहादयोऽजस्रं मे मनसि स्फुरन्ति अन इत्यर्थः ।

ननु देहादिस्फुरणेन कथं मदस्फुरणप्रयुक्तमनस्तापनिवृत्तिस्तत्राह—त्वदृते इति । दृश्यमात्रे प्रतीयमानसत्तास्फुरणं च त्वमेवेति सा चिन्ता गतेत्यर्थः ।

ब्रह्मण उपादानत्वे विकारित्वापत्त्या कूटस्थत्वादिश्रुतिविरोध इत्युक्तं निराकरोति—न चैवमिति ।

न च ब्रह्मण उपादानत्वे विकारस्योपादानसमानस्वभावत्वात् परमार्थत्वप्रसङ्गः, अन्यथाऽनिर्वचनीयत्वमपि न स्यादिति परोक्तं साधु। यतो विकारस्य परिणामिसमानस्वभावत्वनियमाभावे च जडोपादानं जडमित्यादिनियमो न स्यात्। शुक्तिरजतं चाविद्यापरिणामः तत्समसत्ताकम्। ततः प्रपञ्चस्याज्ञानसमसत्तैव स्वतोऽपि सद्विलक्षणत्वमेवाविद्यावत्।

तस्मात् "तन्त्वजन्यो घटादिः स्वोपादानजडव्यतिरिक्तोपादानकः कार्यत्वात् पटवदि"ति चेतनोपादानत्वसिद्धिः।

अन्यथा सन् घट इत्याद्यनुभवोनुपपत्तेः। विषयस्य निश्चितत्कत्वे तदपरोक्षत्वानुपपत्तेश्च।

न च घटः पटोपादानोपादानको न भवति। तद्भिन्नत्वादात्मवदिति वाच्यम्, चेतनानुपादानत्वे वर्णितबाधकेनास्य दुर्बलत्वात्। अत एवाकार्यत्वमुपाधिः बाधोन्नीतस्य पक्षेतरत्वस्याप्युपाधित्वात्। पक्षातिरिक्तव्यावर्त्यसत्वाच्च।

---

ननु श्रुतिप्रतिपन्नविकारतादात्म्यस्य कथमवास्तवत्वमित्याशंक्याध्यारोपापवादन्यायेनात्मनि निर्विकारश्रुत्यपेक्षयैव विकारसंबन्धानुवादाद् विकारश्रुत्यर्थो न वास्तव इत्यभिप्रेत्याह—श्रुतीति।

किञ्च परिणामिन एव स्वसमानसत्ताकविकारतादात्म्याद् विक्रियादृष्टोपपन्ना च। न त्वधिष्ठानस्यारोप्यसंबन्धाद् विक्रिया दृष्टोपपन्ना वा। तदुक्तम् "यत्र यदध्यासस्तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणापि स न संबध्यत" इति। अतोऽधिष्ठानब्रह्मणो न विकार इत्यभिप्रेत्याह—अधिष्ठानस्येति। ब्रह्मण्यारोपितविकारस्याविरोधे तन्निवृत्तिः कदापि न स्यादित्याशंक्याह—विकारेति। ब्रह्मण उपादानत्वे नवीनोक्तं बाधकमनूद्यापवदति—नचेत्यादिना। शुक्तिपरिणामस्यापि रजतस्य शुक्तिसमानसत्ताकत्वाभावात्कथमुक्तनियम इत्याशंक्य तस्याविद्यापरिणामत्वादविरुद्धमित्याह—शुक्तिरजतमिति। प्रपञ्चस्य परिणामिपर्यालोचनया दृश्यस्वरूपपर्यालोचनया चानिर्वचनीयत्वमेवेत्याह—तत इति।

उक्तयुक्तिभिः संभाविते ब्रह्मोपादानत्वेऽनुमानं प्रयुंक्ते—तस्मादिति। घटादिरित्यादिपदेन पटग्रहणं मा भूदिति तन्त्वजन्य इति विशेषणम्। स्वपदं पक्षपरमतो न पटे साध्यवैकल्यम्। अप्रयोजकत्वं निराकरोति—अन्यथेति। जडस्य चिद्रूपब्रह्मानुपादानत्वे संविदभेदासंभवेनापरोक्षतापि न स्यादित्याह—विषयस्येति। सत्प्रतिपक्षत्वं निराकरोति—न च घट इति। प्रतिपक्षानुमाने यावत्पटोपादानजन्यत्वे निषिद्धे कार्यमात्रे साधारणमेकमुपादानं न सिद्ध्यतीति भावः। तद्भिन्नत्वादिति। पटभिन्नद्रव्यत्वादित्यर्थः। अतो न तन्निष्ठगुणादौ व्यभिचारः। यतः प्रतिकूलतर्कपराहतं प्रत्यनुमानमतः पक्षेतरेणापि सोपाधिकमित्याह—अत एवेति। विपक्षस्य पटस्य व्यावर्त्यस्य सत्वान्न पक्षेतरतापीत्याह—पक्षातिरिक्तेति। घटादेः स्वोपादानजडातिरिक्तोपादानकत्वानुमानेऽपि तर्क-

न च सिद्धान्तानुमानेऽपि घटपटयोर्वैजात्यानुपपत्तिर्बाधिका। पटत्वं चोपाधिः॥ एकद्रव्यगतरूपरसादिवैजात्यस्यैवैकोपादानद्रव्यस्यापि वैजात्ये बाधकाभावात्। मृत्तन्त्वादिवैजात्यादपि तदुपपत्तेश्च। तन्तुरूपादौ तव मते साध्याव्यापकत्वेनानुपाधित्वाच्च। वर्णितप्रतिकूलतर्केणावच्छिन्नसाध्याव्यापकत्वाच्च।

चित्सुखाचार्योक्तानुमाननिरूपणम्

आचार्यानुमानमपि मानं--घटादिकं सदुपादानकं कार्यत्वात्। शुक्तिरजतवत्। अन्यथा सदनुविद्धं न स्यात्। यत्कार्यं नियमेन येनानुविद्धं तत्तदुपादानकं यथा मृदनुविद्धो घटादिरिति दर्शयितुं तत्र सदनुविद्ध इति विशेषणम्। सच्चात्मैवेत्यात्मौपादानकं जगत्।

ब्रह्मणःप्रपञ्चोपादानत्वबाधकानुमाननिरासः

यत्तु ब्रह्म न द्रव्योपादानं चैत्रवत् चेतनत्वादिति तदप्रयोजकम्, उक्तप्रतिकूलतर्कपराहतञ्च।

किं च चेतनत्वं यदि ज्ञानरूपत्वं तदा तव मतेऽसिद्धिः ज्ञानाश्रयत्वस्य मम मते। नापि जातिः। एकव्यक्तौ तदभावात्। न चास्मान् प्रत्येवायं प्रयोग इति ज्ञानरूपत्वमेव चेतनत्वम्।

---

बाधादिकं तुल्यमित्याशंक्याह—न चेति। एकोपादानकत्वेऽपि गुणानां यथा वैजात्यमेवं द्रव्याणामपि तदुपपद्यत इत्याह—एकेति। विजातीयोपादानजन्यत्वस्यापि सत्वात्तदुपपत्तिरित्याह—मृत्तन्त्वादीति। तर्कविरोधं परिहृत्योपाधिं निराकरोति—तन्तुरूपादाविति। द्रव्यत्वे सति घटाद्युपादानजडातिरिक्तोपादानकत्वं यत्र तत्र पटत्वमिति विवक्षितत्वान्नोक्तदोष इत्याशंक्याह—वर्णितेति।

सत्स्वभावानुविद्धत्वे सति विविधविकारत्वादिति हेतोरप्यनवद्यतां दर्शयितुमाह—आचार्येति। कार्यमात्रस्य हेतुत्वे इतरविशेषणवैयर्थ्यमित्याशंक्य विपक्षे बाधकदर्शनार्थं तदित्याह—अन्यथेति। सदनुविद्धत्वस्य सदुपादानकत्वेन सह व्याप्त्यभावात् कथं तदनुपपत्तिरित्याशंक्य सामान्यतो व्याप्तिमाह—यत्कार्यमिति। यच्चोक्तमस्मन्मतेऽपि सत एवोपादानत्वात् सिद्धसाधनमिति तत्राह--सच्चात्मैवेति। अत्र परोक्तप्रतिपक्षानुमानमनूद्य दूषयति--यत्त्विति। हेतुतयोक्तमपि चेतनत्वं किं ज्ञानत्वं ज्ञानाश्रयत्वं वा आत्मत्वजातिर्वा सर्वथाप्यन्यतरासिद्धिरित्याह--किं चेत्यादिना। परसिद्धेन परो बोधनीय इति न्यायेनात्मनश्चिद्रूपत्ववादिनं प्रति ज्ञानत्वमेव हेतुरित्याशंक्य तस्य दृष्टान्तोऽसंप्रतिपन्न इति दूषयति--न चास्मानिति। न चैत्रचैतन्यस्यौपाधिकब्रह्मभेदवत्त्वाभ्युपगमात् दृष्टान्तत्वमित्यत आह--चैत्रेति। अंतः करणेति। अन्तःकरणसहिततद्वृत्तेरित्यर्थः।

तर्हि चैत्रोऽपि ब्रह्मैवेति दृष्टान्तासिद्धिः। चैत्रचैतन्यस्थ्यन्तःकरणतद्वृत्ते-र्द्रव्यस्योपादानमिति न तदपि दृष्टान्तः। यदपि न जगच्चेतनप्रकृतिकं तत्स्वभा-वाननुरक्तत्वादिति तत्र चेतनपदेन ज्ञानाश्रयाभिधाने सिद्धसाधनं चैतन्यमात्राभि-धाने हेतावपि तत्पदस्य तदर्थत्वादसिद्धिः सन् घटः घटः स्फुरति इत्याद्यनुभवात्।

उपादानत्वे स्पर्शवत्त्वं प्रयोजकमिति नियमनिरासः

यत्तु स्पर्शवद्द्रव्यस्यैवोपादानत्वान्नाविद्या ब्रह्म वोपादानमिति। तन्न; आकाशादेरपि शब्दाद्युपादानत्वात्। द्रव्योपादानत्वे स्पर्शवत्त्वं प्रयोजकमिति चेत्; न, अन्त्यावयविनि वर्तमानस्य तस्य तत्राप्रयोजकत्वात्। न च स्पर्शवत्त्वं तद्-व्यापकम् अनुकूलतर्काभावेनाप्रयोजकत्वात्। पुरुषार्थप्रयुक्तद्रव्योत्पत्तेर्निःस्पर्शाद-प्यविरोधात्।

अन्यथा द्व्यणुकाभ्यां परमाणुभिश्च तव मते कार्यं किं न स्यात्। न च मानाभावादेव तदभावः। द्व्यणुकद्वित्वपरमाणुबहुत्वे परिमाणासमवायिकारणे, अनेकसमवेतमहत्त्वासमानाधिकरणद्रव्योपादानसंख्यात्वात् परमाणुद्वित्वादिवत्।

विनिगमकाभावश्चानुकूलस्तर्कः। वियदाद्युपादाने स्पर्शाभावादपि न स्पर्शो द्रव्योपादानत्वव्यापकः।

---

परोक्तानुमानमप्यनूद्य निराकरोति—यदपीत्यादिना।

स्पर्शवत एवोपादानत्वनियमात्तद्रहिताविद्यादिर्नोपादानमित्युक्तमनूद्य दूषयति—यत्त्वित्यादिना। उपादानत्वमात्रे न स्पर्शवत्त्वं प्रयोजकं किन्तु द्रव्योपादानत्व इति शंकते—द्रव्येति स्पर्शवत्त्वस्य तत्प्रयोजकत्वं किं तद्व्याप्यत्वं तद्व्यापकत्वं वा? नोभयथापीति क्रमेणाह—नान्त्येति। अप्रयोजकत्वादिति। द्रव्यनिमित्तत्वस्येव द्रव्योपादा-नत्वस्यापि स्पर्शवत्व प्रत्यव्याप्यत्वे बाधकाभावादिति भावः। भोजकादृष्टप्रयुक्ता द्रव्यसृष्टिः प्रमाणबलान्निः स्पर्शादप्युपपद्यते इत्याह—पुरुषार्थेति। भोगस्यानियामकत्वे बाधकमाह—अन्यथेति। द्व्यणुकद्वयस्य परमाणुत्रयस्य च मानाभावादेव न द्रव्यारम्भ-कत्वमित्यत आह—न चेति। परिमाणासमवायिकारणेति। परमाण्वादिगतबहुत्वादेर्द्व्य-णुकादिगतपरिमाणासमवायिकारणत्वायोगात् तज्जन्यपरिमाणाश्रयद्रव्यान्तरसिद्धिरिति भावः। मनोगतद्वित्वादौ व्यभिचारवारणाय द्रव्योपादानेत्युक्तम्। द्रव्यपदेनैकजातीयं द्रव्यं विवक्षितमतो विजातीयद्रव्योपादानविजातीयपरमाणुगतद्वित्वादौ न व्यभिचारः। तन्त्वादिगतद्वित्वादौ व्यभिचारवारणाय—महत्त्वासमानाधिकरणेति। परमाण्वेकत्वे व्यभिचारवारणायानेकसमवेतेति।

अप्रयोजकत्वं निराकरोति—विनिगमकेति। परमाणुगतद्वित्वमेव द्व्यणुकगतबहु-

न च वियदादेः कार्यत्वे प्रमाणाभावः। "आत्मनः आकाशः संभूतः", "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। एवं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इत्यादिजनिश्रुतितः तत्सिद्धेः।

आकाशः कार्यं भूतत्वात्। स्वसमानसत्ताकविभागाश्रयत्वात् पृथिव्यादिवत्।

न च परमाण्वादौ व्यभिचारः, सत्वे तस्य पक्षत्वात्। निरवयवेऽप्याकाशे परमते अस्मन्मते च दुर्निरूपो विभागोऽस्तीति नासिद्धिः। आकाशादेश्च कार्यत्वे बाधकाभावोऽनुकूलस्तर्कः।

न चैकस्मात् कारणात् किंचित् स्पर्शवत् किंचिच्च तद्विपरीतं जायत इति न युज्यत इति वाच्यम्। तत्तत्क्रियाविशेषसम्पन्नभोगानुग्रहीत्रीश्वरानुग्रहकृतमूल परिणामिन एकस्मादपि तत्तत्कार्यविशेषोपपत्तेः। 'आत्मन आकाशः संभूत" इत्यादिश्रुतिरपि ब्रह्मण उपादानत्वे प्रमाणम्।

आत्मन आकाश इत्यादेः निमित्तपञ्चमीत्वनिरासः

न चात्मन इत्यादिपंचम्या निमित्तत्वमात्रं प्रतिपाद्यते। जनिकर्तुः प्रकृतिरिति सूत्रे उपादान एवापादानसंज्ञाविधानात्।

अत एव महाभाष्ये उपादानमेवोदाहृत्य तत्सूत्रं प्रत्याख्यातम्। कैयटस्यापि

---

त्वमेव परिमाणासमवायिकारणमित्यत्र नियासकाभाव इत्यर्थः। ततश्च वैयर्थ्यादेव तदनारम्भको वक्तव्य इति भावः। किं चाकाशान्तःकरणादौ स्पर्शाभावेन तदुपादानस्यापि तद्रहितत्वात् स्पर्शो न द्रव्योपादानत्वव्यापक इत्याह—वियदादीति। वियदादेः कार्यत्वस्यैवासिद्धेस्तदुपादानमेव नेत्याशंक्य तत्कार्यत्वस्य श्रुत्यनुमानसिद्धत्वान्नैवमित्याह—न च वियदादेरिति। आत्मनि व्यभिचारवारणाय स्वमानसत्ताकेत्युक्तम्। न चाज्ञानादौ व्यभिचारः तस्य विभागगुणाश्रयत्वे मानाभावात्।

न च कालादौ व्यभिचारः पक्षतुल्यत्वादिति भावः। यदुक्तं निरवयवसंयोगवन्निरवयवविभागोऽप्यसिद्ध इति तत्राह—निरव इति। पृथिव्यादिवदाकाशादेरपि कार्यद्रव्यत्वे कथं स्पर्शराहित्यमित्याशंक्याह—न चैकस्मादिति। सिद्धान्तेऽदृष्टाभावात्तत्तत्क्रियाविशेषेत्युक्तम्। अनुमानाद् ब्रह्मणो जगदुपादानत्वमुक्त्वा श्रुतिरपि तत्र मानमित्याह—आत्मन इति।

यदुक्तमात्मन इति पंचमी निमित्तार्थेति तत्राह—न चेति। उपादान एवेति। प्रकृतिपदस्योपादाने रूढत्वान्निमित्तदण्डादावप्रयोगात् पदमञ्जरीकारेणापि प्रकृतिरित्यस्य विवरणं-कारणमिति उपादानकारणमित्यर्थ इत्युक्तत्वाच्चेति भावः। भगवता पतञ्जलिनाप्युपादानपरमेव प्रकृतिपदमित्यभिप्रेत्येदं सूत्रं निराकृतमित्याह—अत एवेति।

**परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशं कार्यमुत्पद्यत इति वदतस्तथैवाभिप्राय इति गम्यते ।**

**अस्तु वा प्रकृतिपदं कारणमात्रपरं तथापि प्रकृते पञ्चमीविशेषे विनिगमनाभावात् [1]मन्त्रस्थानन्त्यश्रुतिबलाच्चोभयकारणत्वपरा ।**

**यत्त्वियं पञ्चमी "ध्रुवमपायेऽपादानम्" इति सूत्रविहितापादानपञ्चम्येवेति, तन्न, ध्रुवमपायेऽपादानमित्यस्यापायो बिश्लेषो विभागस्तद्धेतुभूतो गतिविशेष इति यावत् । तस्मिन् साध्य इति विषयसप्तमी । तत्र यद्ध्रुवमवधिभूतं तदपादानसंज्ञं भवतीत्यर्थः । तदुक्तम्--**

---

कार्यंजननसमये सर्प इव विलादुपादानान्निर्गच्छतीवेति लोकप्रसिद्ध्यनुसारेण कार्यस्योपादानविशेषोऽस्तीत्यपादानं कार्यावधिभूतमेव । ततश्च "ध्रुवमपायेऽपादानम्" इत्यनेनैवापादानसंज्ञासिद्धेः किं जनिकर्तुरिति सूत्रेणेत्यभिप्रायवता भाष्यकारेण तत्प्रत्याख्यातम् । अयमभिप्रायः शक्यो वक्तु-कथं गोमयाद्वृश्चिको जायते गोलोमभ्यो दूर्वा जायंत इति अपक्रामन्ति तास्तेभ्य इत्यादिनेत्यर्थः भाष्यकाराभिप्रायं प्रकटयन् टीकाकारस्याप्युपादानविषयत्वमेवास्याभिप्रेतमित्याह—कैय्यटेति । अपक्रामन्ति ता इति लोकप्रसिद्ध्याश्रयणेनैतदुच्यते । लोके हि यद्यस्माज्जायते तत्तस्मान्निर्गच्छतीत्युच्यते । तर्काश्रयास्तु प्रक्रिया भिद्यन्ते वैशेषकदर्शने परमाण्वादिसमवेतं कारणेभ्योऽपृथग्देशं कार्यमुत्पद्यत इति नास्ति कार्यस्यापक्रमः । सांख्यदर्शने त्वाविर्भावतिरोभावलक्षणजन्मनाशरूपपरिणामाभ्युपगमात् नास्त्यपक्रम इति वदतः कैय्यटकारस्याप्युपादानविषयत्वमेवाभिप्रेतमिति गम्यत इत्यर्थः ।

पुत्रात्प्रमोदो जायत इत्युदाहरणानुरोधेन प्रकृतिपदं कारणमात्रपरमित्यंगीकृत्यापि आत्मन इति पंचम्या उभयकारणत्वमप्यर्थ इत्याह—अस्तुवेति । आनन्त्यश्रुतिबलादिति । सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्ये प्रतिज्ञातं त्रिविधपरिच्छेदशून्यत्वमानंत्यमुपपादयितुमेव हि "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिना सृष्टिः प्रस्तूयते । तत्र चात्मन उपादानत्वानभिधाने तदानन्त्यानिर्वाहात्तेनैकवाक्यत्वानुपपत्तेः सृष्टिश्रुतिरुपादानत्वपरेति भावः । ध्रुवमपायेऽपादानमित्यस्य पूर्वभावित्वाद्विहितापादानसंज्ञानिबन्धनाऽऽत्मन इति पंचमी ततो नात्मन इत्युपादानत्वसिद्धिरिति चोद्यमनुवदति—यत्त्विति । अत्रापायपदेन लोकदृष्टयोपादानकारणनिःसृतकार्यसाधारणापायविवक्षायां जनिसूत्रस्य वैय्यर्थ्येऽपि नास्माकं क्षतिः । क्रियापूर्वकविश्लेषविवक्षायां तु प्रकृते तदसंभवान्नैतत्सूत्रेणापादानसंज्ञा किन्तु जनिसूत्रेणैवेत्यभिप्रेत्याह—तन्नेत्यादिना । अतदावेशादिति । चलना-

---

[1] मन्त्रः सत्यंज्ञानमनन्तं ब्रह्मेति

अपाये यदुदासीनं ध्रुवं वा यदि वा चलम् ।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ॥ इति ।

ततश्च विभागावधिरेवापादानमेतत् सूत्रविषयः । न चात्मनः आकाश इत्यादिश्रुत्या विभागहेतुक्रियोच्यते उत्पत्तिश्रुतेः । अन्यथा तन्निमित्तत्वमपि ब्रह्मणस्त्वदभिमतं ततो न सिध्येत् ।

सोऽकामयतेत्यादितः ब्रह्मण उपादानत्वनिर्णयः

एवं सोऽकामयतेति । यस्मादाकाशादिः स आत्मा कामितवान् । काममाह–बहु स्यामिति । बहुधाभवेयं कथमेकस्य बहुभवनमित्याशङ्क्याह–प्रजायेय उत्पद्येय । आत्मनश्चोत्पत्तिरात्मसत्तया सदात्मकनामरूपाभिव्यक्तिरेव । ब्रह्मणोऽन्यथोत्पत्त्ययोगादिति जनिसङ्कल्पश्रुतिस्तस्योपादानत्वमाह निमित्तस्य प्रपञ्चात्मना जन्मानुपपत्तेः ।

न चेयं श्रुतिर्ब्रह्मणोऽनन्तनियन्तृरूपेण प्रवेशविषयेति वाच्यम् । तस्याप्रविष्टरूपेणैव नियन्तृत्वसंभवेन तदर्थं प्रवेशवैय्यर्थ्यात् । एकेनापि बहूनां सर्वज्ञेन सर्वगतेन युगपत् सृष्टितन्नियमनसंभवात् । एकस्य सर्वगतस्य ब्रह्मणो वस्तुतो बहुभवनप्रवेशायोगाच्च । अवास्तवस्य त्वन्मतेऽनुपपत्तेः ।

न च सिद्धान्ते सृष्टेः पूर्वमन्तःकरणाभावेन तद्विशिष्टाहमर्थाभावात्

---

त्मककर्मानाश्रयत्वादित्यर्थः । फलितमाह—ततश्चेति । क्रियापूर्वविभागस्योत्पत्त्यनन्तरभावित्वादाकाशादेरुत्पत्तेरेवात्र श्रूयमाणत्वादात्मनस्तद्विभागावधित्वं नैतदर्थ इत्याह—न चात्मन इति । विपदादेरुत्पत्त्यनभिधाने दोषमाह – अन्यथेति ।

आत्मनो बहुभवनसंकल्पश्रुतिरपि तदुपादानत्वे मानमित्याह—एवमिति । सोऽकामयतेति जनिसंकल्पश्रुतिस्तस्योपादानत्वमाहेत्युत्तरेण संबन्धः । तामेव श्रुतिं विवृणोति—यस्मादित्यादिना । अनासिद्धात्मन उत्पत्तिर्वा कथमित्यत आह—आत्मनश्चेति । सद्रूपाधिष्ठानात्मतादात्म्येन लब्धसत्ताकानिर्वचनीयनामरूपाकारेणाभिव्यक्तिरेवात्मन उत्पत्तिरित्यर्थः । आत्मनः केवलकर्तृत्वमेव संकल्पश्रुत्यर्थः किं न स्यादित्यत आह – निमित्तस्येति । यदुक्तमियं श्रुतिर्ब्रह्मन्तर्यामिरूपेण प्रवेशसंकल्पपरेति, तन्निराकरोति—न चेति । प्रवेशबहुभवनयोर्नियमनार्थमनपेक्षितत्वेन तत्परत्वकल्पनमयुक्तमित्याह–तस्येति ।

किं च ब्रह्मणो बहुभवनप्रवेशौ सत्यौ उतानिर्वचनीयौ ? नाद्यः, एकत्वसर्वगतत्वविरोधादित्याह—एकस्येति । द्वितीये दोषमाह—अवास्तवस्येति ।

संकल्पश्रुतेरात्मनः सृज्यरूपेणोत्पत्तिविषयत्वे उत्तमपुरुषप्रयोगानुपपत्तिः तदर्थस्याहंकारस्य सृष्टेः पूर्वं तव मतेऽभावादिति परोक्तं निरस्यति—न च सिद्धान्त इति । पौरुषेयवाक्यस्योत्तमपुरुषस्यैव प्रयोक्तृपुरुषाभिधायकतया तदुपाध्यहमर्थापेक्षत्वादस्य

**उत्तमपुरुषप्रयोगानुपपत्तिः। न हीदं वाक्यमीश्वरस्य प्रयोगः येनोत्तमपुरुषप्रयोगोपाधित्वेनाहमर्थान्तःकरणमपेक्ष्येत किन्त्वीश्वरस्य बहुभवनादीच्छां श्रुतिरनुकरोति।**

**न चाहमर्थाभाव ईश्वरस्याहं स्यामितीच्छैव कथमिति वाच्यम्, इच्छाप्रयोजकरूपवत्वेनैव तदुपपत्तेः। तच्च जीवानामन्तःकरणमीश्वरस्याज्ञानमेवेत्यन्यदेतत्। अपि च नियम्योत्पत्तेः पूर्वं तस्यैव कामना युक्ता न तु नियन्तृबहुभवनस्य तद्धि नियम्योत्पत्तिसापेक्षम्। परमेश्वरस्य स्वत उत्पत्त्यसंभवात्। इदं सर्वमसृजतेति श्रुतनियम्यसृष्टिहेतुतयाऽपि तत्कामस्यावश्यकत्वात्। ततश्च नियम्यप्रपञ्चात्मना ब्रह्मणो माययोत्पत्तिकामनैव श्रुत्यर्थः। तदुक्तम्--**

**व्याकृतिर्या तयोर्विष्णोः प्रत्यहं नामरूपयोः।**
**भूयोभवनमेतत्स्यान्मायिनोऽनेकता यथा।। इति। तै. वा. (२-६-७४)**

सच्चत्यच्चाभवदित्यादितः उपादानत्वावगतिः।

**एवं सच्चत्यच्चाभवदिति श्रुतिर्ब्रह्मणो मायया मूर्तामूर्तात्मतां ब्रुवाणा तदुपादानत्वे प्रमाणम्। अन्यथा तद्भावायोगात्। न च परमेश्वरस्य सत्वादिगुणा-**

---

चापौरुषेयतयेश्वराप्रणीतत्वेन तदीयाहमर्थानपेक्षणात्। इतिपदशिरस्कोत्तमपुरुषान्तमिदं वाक्यमीश्वरकामनामेवानुकरोतीत्याह—न हीदमिति। अन्तः करणाभावे तत्परिणामरूपेच्छा तस्याहं स्यामित्याकारो वा कथं स्यादित्याशंक्येश्वरेच्छाया अविद्यापरिणामत्वात् तद्विशिष्टस्वरूपविषयत्वस्यैव तस्याहमर्थाकारत्वाच्च न दोष इत्यभिप्रेत्याह—न चेत्यादिना।

किं च नियमनशक्तेः पूर्वं नियन्तृरूपेण बहुभवनकामनायोगेन निरपेक्षसृष्टिकामनैव कामश्रुत्यर्थ इत्यभिप्रेत्याह—अपि चेति प्रजायेयेति। स्वस्यैव सृष्टिकामनाश्रवणात् कथं नियम्यसृष्टिकामनेत्याशंक्याह—परमेश्वरस्येति। स्वतः स्वरूपेणेत्यर्थः। किं चानन्तरवाक्ये "स तपस्तप्त्वा इदं सर्वमसृजत" ति नियम्यसृष्टेरेवाभिधानात्कामनां विना तदयोगादियमेव कामना तद्विषयेत्यभिप्रेत्याह—इदं सर्वमिति। फलितमाह - ततश्चेति। नामरूपयोः प्रत्यहं या व्याकृतिरेतदेव विष्णोर्भूयो भवनं बहुभवनं स्यादिति योजना।

ब्रह्मणः सत्यच्छब्दवाच्यमूर्तामूर्ततादात्म्यबोधकमुत्तरवाक्यमपि तत्र मानमित्याह—एवमिति।

यदत्र परेणोक्तमीश्वरस्य सत्वादिगुणाभिव्यक्तिपरं वाक्यमिति। तदयुक्तं। "साक्षी चेता केवलो निर्गुणश्च" "अव्यपदेश्यमसत्वमरजस्कमतमस्कममायमि"त्यादि श्रुतिभिरीश्वरे गुणसंबन्धनिषेधात् इत्याह—न चेति।

किं च बृहदारण्यके तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चेति पृथिव्यादित्रितयं मूर्तमित्युक्त्वा तस्मिन् "एतत् सदिति सच्छब्दः प्रयुक्तः। तथाऽमूर्तं वायुश्चान्तरिक्षं चेति

भिव्यक्तिपरेयं तस्य श्रुतिर्भिनिगुणत्वनिर्द्धारणात् । शाखान्तरे मूर्तामूर्तयोरेव सत्त्यच्छब्दश्रवणात् । "तदनु प्रविश्य सच्च त्यच्चाभवदि"ति भवनस्य प्रवेशसमानकर्तृकत्वश्रुतेश्च । प्रवेशश्च सृष्टिसमानकर्तृकः श्रुतः । सदादिभवनस्य सृष्टितत्प्रवेशोत्तरभावित्वात् सृष्टित्वमनुपपन्नमिति चेत् । सत्यं सृष्टस्याहेरिव रज्जोर्न ब्रह्मणः पृथक् सत्वमिति भावेन ब्रह्मणः कामितबहुभवनापत्तिं ब्रूते ।

यत्तु 'निरुक्तमि'त्यादिवैयर्थ्यमिति, तन्न । मूर्तामूर्तविशेषभावापत्त्यभिप्रायत्वात् । एवमसद्वा इदमग्र आसीदिति मन्त्रेऽप्युक्तार्थप्रकाशके इदं नामरूपविशेषेण व्याकृतं जगदग्रे प्रागुत्पत्तेः असदव्याकृतनामरूपं ब्रह्मैवासीत् । नत्वसदेव ततः सदुत्पत्त्ययोगात् कथमसतः सदित्यादिश्रुत्या तस्य निषिद्धत्वाच्च । ततो ब्रह्मणः सत् अभिव्यक्तनामरूपं जगदजायत । किं मातुरिव पुत्रः नेत्याह—तद्ब्रह्म स्वयं अन्यानधिष्ठितं स्वस्यैव कर्तृत्वात् आत्मानमकुरुत 'मायावीव स्वात्मानमेव व्याघ्रादिस्वरूपेण जायमानप्रपञ्चाकारेणात्मानमकरोदि"ति श्रवणात् ब्रह्मोपादानम् ।

न च सृष्टेर्मायिकत्वे अकुरुतेत्यनुपपत्तिः लोके मायया सृजति मायाः

---

वाय्वाकाशममूर्तमित्युक्त्वा तस्मिन्नेव त्यदितित्यच्छब्दः प्रयुक्तस्ततश्च प्रकृतेऽपि सत्यच्छब्दाभ्यां मूर्तामूर्तयोरेव प्रत्यभिज्ञायमानत्वान्न पराभिहितार्थो युक्त इत्याह—शाखान्तर इति । सच्चत्यच्चेति सत्वादिगुणस्य भवनकर्तृत्वाभिधानं प्रवेशसमानकर्तृकत्वपरश्रुतिविरुद्धं चेत्याह—सच्चेति । प्रवेशोऽपि गुणस्यैवेत्याशंक्य तत्सृष्ट्वेति सृष्टिसमानकर्तृकत्वश्रवणान्नैवमित्याह—प्रवेशश्चेति । तत्सृष्ट्वा तदेवानुप्राविशदिति पूर्ववाक्य एव सृष्ट्यादेरुक्तत्वात् सच्चेत्यादिवाक्यं न दृश्यसृष्टिपरमिति शंकते—सदादीति । पूर्वं सृष्ट्याद्यभिधानमङ्गीकरोति—सत्यमिति । पुनस्तदुक्तिवैयर्थ्यमित्याशंक्य सृष्टस्य जगतः कुलालसृष्टघटादेरिव ताटस्थ्यवारणाय ब्रह्मण एव तदापत्तिप्रतिपादनेन तदुपादानत्वपरमिदं वाक्यमित्यभिप्रेत्याह—सृष्टस्येति । सत्यच्छब्दाभ्यामेव मूर्तामूर्तमात्रोत्पत्तेरभिधानान्निरुक्तमित्यादिवैयर्थ्यमित्युक्तमित्यनुवदति—यत्त्विति । गोबलीवर्दन्यायेन पृथगभिधानोपपत्तिरिति परिहरति—तन्नेति । सृष्टिवाक्यार्थसंग्राहकमन्त्रपर्यालोचनयाऽपि ब्रह्म जगदुपादानमित्याह—एवमिति । उक्तार्थप्रकाशके मन्त्र इति श्रवणाद्ब्रह्मोपादानमिति संबन्धः । मन्त्रं व्याकुर्वन्निदमिति पदपरामृष्टमाह—इदं नामरूपेत्यादिना । सृष्टेर्मिथ्यात्वे स्वयमकुरुतेत्यनुपपन्नं शुक्तिरजतमकुरुतेति प्रयोगाभावादित्यत आह—न च सृष्टेरिति । लोक इत्युपलक्षणं वेदेऽपि मायिकस्वप्नस्था 'थरथान् रथयोगान्पथः सृजत" इति सृज्यत्वश्रवणात् । एतेन शुक्तिः रजतमभवदित्यश्रवणात् सच्चत्यच्चाभवदित्यनुपपन्नमिति—निरस्तम् । मायावी व्याघ्रोऽभवदिति प्रयोगदर्शनादिति भावः । आत्मानं

करोतीति प्रयोगात्। यत्त्वत्र रूपान्तरवाचकं पदं न श्रूयत इति तन्न, ततो वै सदजायतेति श्रवणात्। तस्यैव भेदनिराकरणायेयं श्रुतिरित्युक्तम्।

यत्तु 'संभवामि युगे युगे'' इत्यादिवदियं श्रुतिरुपपन्नेति तन्न, 'संभवामि' इत्यस्य स्वेच्छया शरीरपरिग्रहमात्रार्थत्वात्। अत्र च स्वयमात्मानमकुरुतेति, स्वस्यैव सदात्मना स्रष्टव्यत्वश्रवणात्।

न च संभवामीत्यस्यापि विभूत्यात्मना स्वसृष्टिरर्थः। विभूतेस्तदन्यत्वानन्यत्वाभ्यां तदात्मना सृष्टयनुपपत्तेः। एवं तदैक्षत बहुस्यामित्येतदप्युक्ताभिप्रायम्।

तत्तेजोऽसृजतेत्यादेः सिद्धान्ताभिप्रायः

यत्तु तेजआदिरूपेण बहुभावो वाच्यः तेजःप्रभृति चात्र चेतनं ऐक्षत असृजतेति श्रवणात् चेतनान् प्रति न ब्रह्मोपादानमिति तव मतमिति। तन्न। अत्र हि योग्यतावशात् प्रथमतेजः पदेन भौतिकं तेजो गृह्यते तेजः सृष्टयनन्तरं तदवच्छिन्नमुत्तरकार्यस्योपादानं निमित्त चेति तेजोऽवच्छिन्नं ब्रह्म द्वितीयतेजः पदेन गृह्यते यथा आत्मनः आकाशः संभूत इत्यत्र प्रथमाकाशादिपदं कार्यपरं द्वितीयं ब्रह्मपरम्। एवं तदपो सृजतेत्यादावपि।

ब्रह्मण उपादानत्वे प्रमाणान्तराणि

---

प्रपञ्चाकारेणाकरोदिति कथं तत्र प्रपञ्चवाचकपदाभावादिति परोक्तमनूद्य निराकरोति—यत्त्वित्यादिना। ततो वै सदजायतेत्यनेनैव सृष्टेः संगृहीतत्वात् तदात्मानमिति व्यर्थमित्याशंक्याह--तस्यैवेति। तदात्मानमित्यस्य परोक्तमर्थमनूद्य दूषयति--यत्त्वित्यादिना सदात्मनेति। पूर्वोक्तभूतभौतिकसृष्टिसंग्राहकत्वादस्य मन्त्रस्यावतारपरत्वायोगादिति भावः। 'संभवामि युगे युगे'' इत्यत्रापि ईश्वरस्य विभूत्यात्मना सृष्टिरर्थः। ततश्च तदात्मानमित्यनेन न वैषम्यमित्यत आह—न चेति। विभूतेरीश्वरादन्यत्वे तस्य तदात्मना सृष्टिरयुक्ता। अनन्यत्वे च विभूतेरपि साऽनुपपन्नेत्यर्थः। एतेन तदात्मानं सृजाम्यहमित्येतदपि व्याख्यातं सोऽकामयतेत्यनेन तुल्यार्थत्वात् 'तदैक्षते' ति छन्दोगश्रुतिरपि ब्रह्मोपादानत्वपरेत्याह—एव मिति।

अत्र परोक्तमनूद्य निराकरोति—यत्त्वित्यादिना। योग्यतावशादिति। द्वितीयान्ततेजःपदार्थस्य सृज्यत्वश्रवणात्तद्भौतिकतेजः प्रथमान्ततेजः पदार्थस्य बहुभवनोचितत्वाभिधानात्तेजोऽवच्छिन्नं ब्रह्मैवेत्यर्थः। ब्रह्मपरमिति। ''यतो वा इमानि भूतानि जायन्ते'' इति भूतमात्रस्य ब्रह्मजत्वाभिधानादाकाशाद्वायुरित्यादिपञ्चम्यन्ताकाशादिपदं तत्तदवच्छिन्नं ब्रह्मपरमिति भावः। तदपोऽसृजत ता आप ऐक्षन्ते' त्यत्रापि प्रथमोऽप्शब्दो भूतपरः। द्वितीयस्तु ब्रह्मपर इत्याह—एवमिति।

"सर्वाणि ह वा इमानि भूतानि" "यतो वा इमानि भूतानि" इत्यादि ब्रह्मण्येव सृष्टिलयप्रतिपादकं श्रुतिजातमपि तत्र प्रमाणम् ।

न चोर्णनाभिवत् संहर्तृत्वमात्रं ब्रह्मणो न तु लयाधारत्वमिति वाच्यम् । ऊर्णनाभिर्हि गृह्णत इति वचनात् तस्य निगरणमेव । इह त्वाकाशं परमात्मानं प्रत्यस्तंयन्ति यत् प्रयन्ति नाशं प्रतिपद्यमानानि सन्त्यभिसंविशन्ति, आभिमुख्येन तदात्मतया प्राप्नुवन्तीति कार्यस्य तदात्मताप्राप्तिश्रवणान्न तथा । न हि कार्यस्य निमित्तमात्मा येन विनाशस्तदात्मतामात्रं स्यात् ।

एवं "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयमि"ति वाक्यं ब्रह्मण्येव जन्मस्थितिलयाधारत्वं दर्शयत्तदुपादानत्वे प्रमाणम् । एकविज्ञानात् सर्वविज्ञानश्रुतिरुपादानतया सर्वसंमतमृदादिदृष्टान्तेन तदुपपादनश्रुतिश्च कार्यप्रपञ्चस्य तदतिरिक्तसत्तां निराकुर्वती तत्र प्रमाणम् ।

न चैतस्मिन् ज्ञाते अन्यत्सर्वमेतत्सदृशमिति तदपि ज्ञातप्रायमेव तस्य प्रधानत्वाद्वोपचार इति वाच्यम् । असति बाधे तदयोगात् सादृश्याभावस्य श्रुतित एव प्रमितत्वात् । एवं सर्वशाखासु ब्रह्मणः सर्वात्मत्वश्रुतिरपि तत्र मानम् ।

न चेयमपि सर्वगतत्वमात्रपरेति वाच्यम्, सर्वात्मतयैव सर्वगतत्वस्योक्तत्वात् । अन्यथा तादात्म्यश्रुतेर्बाधप्रसङ्गात् । "सर्वं समाप्नोषि ततोऽसि सर्वः" इति भगवद्गीतावचनमपि सर्वात्मत्वं बोधयति तादात्म्यस्यैव समाप्तित्वात् ।

---

सर्वकार्यस्य ब्रह्मणि विलयप्रतिपादकश्रुतिरपि तदुपादानत्वे मानमित्याह—सर्वाणीति । दृष्टान्ततयोक्तोर्णनाभेस्तन्तुसंहर्तुस्तदनुपादानत्वात् ब्रह्मणोऽपि संहर्तृत्वमात्रमिति परोक्तं दूषयति—न चेत्यादिना । निगरणं ग्रसनं आकाशपदस्य व्याख्यानं परमात्मानमिति प्रयन्तीत्यत्रापेक्षितकर्माह—नाशमिति । नाशं प्रयन्ति गच्छन्ति सन्ति अभिसंविशन्तीत्यर्थः— न तथेति । न संहर्तृत्वमात्रमित्यर्थः । आत्मा स्वरूपम् । कैवल्योपनिषदि मुखत एव ब्रह्मणि लयश्रवणादपि तदुपादानमित्याह—एवमिति ।

किं च येनाश्रुतं श्रुतं भवतीत्यादिना एकविज्ञानात् सर्वविज्ञानं प्रतिज्ञाय कथं नु भगव इत्यादिनाऽऽक्षिप्य 'यथा सोम्यैकेन मृत्पिण्डेने'त्यादिनोपादानतया सर्वसंप्रतिपन्नमृदादिदृष्टान्तेन एवं सोम्य स आदेश इत्यनेन ब्रह्मणः स्वाभिन्नसत्ताकजगदुपादानतयैव तत्प्रतिज्ञामुपपादयती श्रुतिस्तदुपादानत्वे मानमित्याह—एकविज्ञानादिति ।

अस्याः श्रुतेः परोक्ततात्पर्यं निराकरोति—न चेति । मुख्ये बाधकाभावादुपचारस्तावदयुक्त इत्याह—असतीति । सादृश्यात् सर्वज्ञानमित्येतत् दूषयति—सादृश्येति । श्रुतित इति । "न तत्समश्चे" त्यादिश्रुतेरित्यर्थः । "सर्वं खल्विदं ब्रह्मे"दं सर्वं यदयमात्मेत्यादिश्रुतिरपि तत्र मानमित्याह—एवमिति । यदुक्तं इयं श्रुतिः स्मृतिवचनेन

न च सर्वसंयोगित्वमात्रं समाप्तिः समितिपदवैयर्थ्यात् तेन सर्वस्याकाशसंबन्धविलक्षणस्यैव सर्वत्वहेतुतया प्रतिपादनात्।

न च रूपादिना संयोगोऽपि। ततस्तद्वचनस्य सर्वात्मत्वपरत्वाभावे पदद्वयबाधः।

न च प्राणादिसर्वात्मत्ववत् ब्रह्मणोऽपि तदुपासनार्थम्। तस्य वस्तुतत्त्वपरत्वात् प्राणस्य च प्रमाणसिद्धभेदस्य न तत्स्वरूपमिति तदुपासनार्थम्।

प्रपञ्चस्य सत्तादात्म्यानुभवादपि सदात्मब्रह्मणः सर्वात्मत्वम्। सद्बुद्धेर्लाघवेनात्मस्वरूपसत्तामात्रविषयत्वनिश्चयात्। अविद्यान्यथाभावः प्रपंचस्य सदधिष्ठानं विनाऽयोगादपि ब्रह्मण उपादानत्वम्। तस्माद्रज्जुरिवाहेः सर्वस्य स्वरूपापरित्यागेन ब्रह्मोपादानमिति।

ब्रह्मणो निमित्तत्वनिरूपणम्

एवं जगत्कर्ताऽपि परमात्मैव तदन्यस्य कर्तुरसंभवात् न हि सर्वज्ञं सर्वशक्ति मुक्त्वा विविधजगद्रचना संभवति।

ननु ब्रह्मणो जगत्कर्तृत्वे प्रत्यक्षं न प्रमाणं तदनुपलंभात्।

ननु कुलालादयो ब्रह्माभिन्नाः "ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवा"

---

सर्वगतत्वपरतया व्याख्यातेति तत्राह---सर्वमिति। आकाशसंबन्धविलक्षणस्येति। आकाशस्येतरैर्यः संबन्धस्तद्विलक्षणस्येत्यर्थः। इतरथेश्वरस्योत्कर्षाभावेन स्तुत्ययोगादिति भावः। सर्वसंयोगस्य बाधितत्वादपि न तत्परतेत्याह---न चेति। पदद्वयेति। सर्वपदस्य समित्युपसर्गस्य च बाध इत्यर्थः। "प्राणो ह पिता प्राणो माते"त्यादिवदात्मनः सर्वात्मत्वश्रुतिरुपासनापरेत्याशंक्य वैषम्यमाह---न चेत्यादिना। वस्तुतत्त्वपरत्वादिति। वस्तुतत्त्वपरत्वे बाधकाभावादित्यर्थः।

लाघवानुगृहीतप्रत्यक्षादपि सद्रूपब्रह्मणः सर्वतादात्म्यसिद्धेस्तदुपादानमित्याह---प्रपञ्चस्येति। अर्थापत्तिमप्याह---अविद्येति। ब्रह्मणोऽधिष्ठानतया जगदुपादानत्वान्न निर्विकारत्वक्षतिरित्युपसंहरति—तस्मादिति। ब्रह्मणो जगदुपादानत्वे तत्कर्तुरभावात्तस्यापि तदनुपपन्नमिति तदुपपत्त्यनुपपत्तिमाशङ्क्यान्यस्य तत्कर्तृत्वासंभवेऽपि ब्राह्मणस्तत्संभवात् तदुपपत्तिरित्यभिप्रेत्याह—एवमिति। उपादानस्य ब्रह्मणः कर्तृत्वे मानाभावात् तस्यापि तदनुपपन्नमिति चोदयति—नन्विति। श्रुतियुक्तिभिर्जीवब्रह्मणोरभेदाज्जीवानां च प्रत्यक्षेण घटादिकर्तृत्वावगमाद् ब्रह्मापि तत्कर्त्रीति तदेव कार्यमात्रकर्त्रीति शंकते—ननु कुलालेति।

इति श्रुतेः। तद्भेदस्य निरस्तत्वाच्च। ततो घटादिकर्तृत्वं ब्रह्मण इति वियदादि-कर्तृत्वमपि तस्यानुमीयत इति चेत्, सत्यं, ब्रह्मैव वस्तुतः कुलालादिस्तथापि भेदोऽस्त्येव। तथा च घटादिकर्तृत्वं किं ब्रह्मण एव उत तस्यापि ? नाद्यः कुलालादेः करोमीत्यनुभवविरोधात्; अन्यथा पुण्यपापादिकमपि न तस्येति कल्पितसंसारोऽपि तस्य न स्यात्।

न द्वितीयः, कर्तृत्वस्य व्यासज्यवृत्त्ययोगात्। ब्रह्मण; तदाश्रयत्वे प्रमाणा-भावाच्च।

ब्रह्मणः जगत्कर्तृत्वाक्षेपः

ब्रह्म जगत्कर्तृ चेतनत्वात् जीववदिति चेत् न, वियदादिकर्तृत्वस्याप्रसिद्ध-त्वात्। घटादिकर्तृत्वं साध्यमिति चेत् एवमपि वियदादिकर्तृत्वासिद्धिः घटादेरपि कुलालातिरिक्तकृतिमज्जन्यत्वाभावाच्च।

न च ब्रह्म कर्तृ चेतनत्वात् इत्यनुमानात् घटादिकर्तृत्वबाधे वियदादिकर्तृ-त्वसिद्धिरिति वाच्यम्। चैतन्यतदाश्रयत्वलक्षणचेतनत्वस्य कृतिं विनाऽनुपपत्त्य-भावात् अप्रयोजकत्वात्। कृत्याश्रयत्वं चेतनत्वमिति चेत्। न, साध्याविशेषात्। नापि क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत् स च कर्ता परमेश्वर एवेति वाच्यम्। अलौकिककर्त्रप्रसिद्धिदशायां तदसंभवस्योक्तत्वात्। नापि श्रुत्या ब्रह्मणः कर्तृत्व-सिद्धिः आत्मन आकाश इत्यादेः प्रकृतित्वविषयत्वेनाप्युपपत्तेः। तदात्मानं स्वयम-कुरुतेत्यादेर्यद्यपि कृतिः प्रतीयते तथापि ब्रह्मणोऽनवच्छिन्नस्य मायायाश्च कृत्यवि-षयत्वात् उपादानगोचरकृतिमत एव कर्तृत्वात् न ततो ब्रह्मणः कर्तृत्वसिद्धिः।

किं च कर्तृत्वस्य श्रुत्यैकगम्यत्वे तदपि श्रुत्यर्थ इत्यात्मनोऽद्वितीयत्वक्षतिः। अत एवार्थापत्तिरपि न प्रमाणं व्यभिचारेण कर्तारं विना कार्यमात्रानुपपत्तिनि-श्चयाभावात्।

---

वस्तुतोऽभेदेऽप्यौपाधिकभेदेन कर्तृत्वभोक्तृत्वादेर्व्यवस्थितत्वान्न जीवकर्तृत्वं ब्रह्मण इत्यभिप्रेत्याह—सत्यमित्यादिना। ब्रह्मणोऽपि पृथगेव कर्तृत्वमस्त्वित्यत आह—ब्रह्मण इति।

प्रमाणाभावोऽसिद्ध इति शंकते—ब्रह्मेति। किमत्र वियदादिकर्तृत्वमपि साध्य-मुत घटादिकर्तृत्वमेव नोभयथापीति क्रमेणाह—न वियदादीत्यादिना। कुलालातिरिक्तेति। घटादेः कुलालादिकृत्यैवोत्पत्तिसंभवात्तदन्यकृतिजन्यत्वायोगादित्यर्थः। घटाद्यकर्तुर्ब्रह्मणः, कर्तृत्वमात्रे साधिते परिशेषाद्वियदादिकर्तृत्वसिद्धिरित्यत आह—न चेति।

किं चेतनत्वं ज्ञानत्वं, तदाश्रयत्वं वा, कृत्याश्रयत्वं वा, आद्ययोरप्रयोजकता। अन्त्ये त्वसिद्धिरिति दूषयति—चैतन्येत्यादिना। व्याप्तिग्रहादेरसंभवेन कार्यलिङ्गका-नुमानस्य त्वयैव निरस्तत्वात् ततोऽपि न ब्रह्मकर्तृत्वसिद्धिरित्याह—नापीत्यादिना। मानान्तराद्ब्रह्मणः कर्तृत्वासिद्धावपि श्रुतितस्तत्सिद्धिरित्यत आह—नापि श्रुत्येति। क्षित्यादिकार्यानुपपत्तिरपि न तत्र मानमित्याह—अत एवेति। व्यभिचारेणेति।

कर्तृत्वे नवीनकृताक्षेपः

नवीनस्तु किमिदं ब्रह्मणः कर्तृत्वम् न तावद् भ्रमाधिष्ठानत्वमात्रं तस्यैवोपादानत्वशब्दार्थत्वात् ब्रह्मोपादानं निमित्तमिति च सामानाधिकरण्यायोगात् तदैक्षत नामरूपे व्याकरवाणीति श्रुत्यनुपपत्तेश्च । न हि चैतनोऽचेतनो वा स्वस्मिन्नारोपितं संकल्प्य करोति ।

अत एव नाध्यासद्रष्टृत्वं कर्तृत्वम् । भ्रान्तस्य प्रेक्षापूर्वमारोपितकर्तृत्वाभावात् । ब्रह्मणो भ्रान्तत्वेन जगत्कर्तृत्वाभावापाताच्च । न चेष्टापत्तिः श्रुत्यादिविरोधात् ।

कर्तृत्वस्य विकल्प्य निरासः

किंच पक्षद्वयेऽपि वैषम्यादिपरिहाराय कर्मापेक्षोक्तिर्विरुध्येत अधिष्ठानत्वादिना तदप्रसक्तेः । नापि मायाविवत् व्यामोहकत्वमात्रं, नामरूपे व्याकरवाणीति श्रुत्यनुपपत्तेः । नहि मायावी गजादिकं करवाणीति संकल्प्य करोति किन्तु दर्शयामिति संकल्प्य दर्शयति ।

किं च पक्षद्वयेऽपि जन्मादिसूत्रेऽर्थलब्धसर्वज्ञत्वस्फुरणार्थं शास्त्रयोनित्वसूत्रमिति मतं भग्नं स्यात् भ्रमाधिष्ठानत्वादिना सार्वज्ञालाभात् ।

नाप्युपादानगोचरप्रयत्नवत्त्वं कर्तृत्वं तदा कल्पितत्वायोगात् । न हि

---

औपनिषदवादोक्तन्यायेनालौकिककृत्यनुपस्थितिदशायां क्षित्यादावेव व्यभिचारनिश्चयादित्यर्थः । उपादानब्रह्मणः कर्तृत्वं निर्वक्तुमप्यशक्यमिति परेणोक्तमित्याह—नवीनस्त्विति ।

किन्तु भ्रमाधिष्ठानत्वं ब्रह्मणः कर्तृत्वं, तद्द्रष्टृत्वं वा अन्यव्यामोहकत्वं वा, उपादानगोचरकृतिमत्त्वं वा, तद्गोचरचिकीर्षावत्वं वा, तदपरोक्षज्ञानवत्वं वा, कारकान्तराप्रयोज्यत्वे सति तत्प्रयोक्तृत्वं वा ? नाद्य इत्याह—न तावदिति । अध्यासस्याधिष्ठानगतेक्षणाद्यनपेक्षत्वात्तदभिधायकश्रुत्यसामञ्जस्यं चेत्याह—तदैक्षतेति । द्वितीयं दूषयति--अत एवेति ।

अतः शब्दार्थमाह—भ्रान्तस्येति । श्रुत्यादिविरोधादिति । तदैक्षत "तत्तेजोऽसृजत" "प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनरि"त्यादिश्रुतिस्मृतिविरोधादित्यर्थः । उक्तकल्पद्वये साधारणं दोषमाह—किञ्चेति । कर्मापेक्षोक्तिरिति । वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयतीति सूत्रेणेति शेषः । तदप्रसक्तेरित्ति वैषम्याद्यप्रसक्तेरित्यर्थः । तृतीयं निराकरोति—नापीति । सिंहावलोकनन्यायेनाद्यपक्षयोर्दूषणान्तरमाह—किञ्चेति ।

जन्माद्यस्य यत इति सूत्रोक्तसर्वकर्तृत्वानुपपत्तिलब्धसर्वज्ञत्वदार्ढ्याय तृतीयसूत्रमिति भाष्यकारोक्तमयुक्तं स्यादित्यर्थः । तत्र हेतुमाह--भ्रमेति ।

चतुर्थमसंभवेन दूषयति—नापीति । अद्वितीयब्रह्मणि सृष्टेः पूर्वं कृतेरेवासंभवान्न

घटादिकं कुलालेनेव कल्पितं रूप्यादिभ्रान्तेन क्रियते ।

अन्ये तु कृतिमत्त्वं यदि कर्तृत्वं सा किं नित्याऽनित्या वा ? नाद्यः तव मते तदभावात् । न द्वितीयः शरीरादिकं विना तदयोगात् तदनवस्थाप्रसङ्गाच्च कार्यमात्रस्यैव कृतिजन्यत्वात् । एवमुपादानगोचरचिकीर्षावत्त्वमपरोक्षज्ञानवत्त्वं वा तदिति निरसनीयं तयोरतिप्रसक्तत्वाच्च ब्रह्मणो ज्ञानरूपस्य ज्ञानवत्त्वाभावाच्च । एतेन कारकान्तराप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वं कर्तृत्वं, तच्च सर्वशक्तिब्रह्मणः संभवतीति निरस्तम् । कारकप्रयोक्तृत्वं हि तद्व्यापारानुकूलकृतिमत्त्वं तच्च न संभवतीत्युक्तं तस्मात् ब्रह्म न कर्तृ उपादानत्वात् संमतवदिति ।

सिद्धान्तिमते कर्तृत्वनिर्वचनम्

अत्रोच्यते । कार्यानुकूलज्ञानवत्त्वं ज्ञानवत्वे सति कारणत्वं वा कर्तृत्वम् ।

अनुकूलत्वं च परंपरया घटादिजनककुलालादिज्ञानस्य विश्वनिर्माणहेत्वनादिज्ञानस्यापि तुल्यम् । उदासीनज्ञानं च नैवं तत्प्रागभावे सत्यपि कार्योदयात् विश्वनिर्मातृज्ञानं च घटादिनिर्मातृज्ञानवज्जनकादात्मनोऽविद्यया भिन्नम् । मुक्तौ च न कर्तृत्वमात्मनः । अत एवेश्वरस्यापि कर्तृत्वमाविद्यकमिति सिद्धान्तः ।

न चादृष्टाद्वारकोपादानगोचरज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वं, व्यर्थविशेषणत्वात्, न चैवं जीवनयोनिकृतिसाध्ये प्राणव्यापारे जीवनस्य कर्तृत्वप्रसंगः ।

---

तद्घटितं कर्तृत्वमित्यपरैरुक्तं तदाह—अन्ये त्विति । तदनवस्थाप्रसंगादिति । तथा च प्रलयेऽपि कृतिमाला स्यादिति भावः । नित्यानित्यविकल्पप्रयुक्तदोषं पञ्चमषष्ठयोरप्यतिदिशति—एवमिति । उदासीनेऽपि तयोः सत्वादतिव्याप्तिश्चेत्याह—तयोरिति । षष्ठे दोषान्तरमाह—ब्रह्मण इति । ब्रह्मणि कृत्यनिरूपणादेव सप्तमोऽपि निरस्त इत्याह—एतेनेति । अद्वितीयब्रह्मणो जगत्कर्तृत्वलक्षणाद्यभावमुक्त्वा वैपरीत्ये मानं दर्शयन्नुपसंहरति—तस्मादिति । संमतत्वादिति । अविद्यावदित्यर्थः । सिद्धान्ते जीवब्रह्मसाधारणकर्तृत्वलक्षणं दर्शयन्नुक्तदोषं परिहरति—कार्यानुकूलेत्यादिना ।

आद्यलक्षणे—कार्यानुकूलत्वं कार्यतद्गोचरचिकीर्षान्यतरकारकत्वं विवक्षितं, तच्च जीवेश्वरज्ञानयोस्तुल्यमित्यभिप्रेत्याह—अनुकूलत्वं चेति । उदासीनज्ञानस्य कार्याननुकूलत्वान्न तत्रातिव्याप्तिरित्याह—उदासीनेति ।

यदुक्तं ज्ञानरूपस्य ब्रह्मणो न ज्ञानवत्त्वमिति तत्राह—विश्वेति । मुक्तावाविद्यकभेदाभावाद् ज्ञानवत्वं न स्यादित्याशंक्येष्टापत्तिमाह—मुक्ताविति । एवं स्वाभिमतं कर्तृत्वलक्षणं निरूप्य पराभिमतं तद् दूषयति—न चेति । उपादानगोचरकृतिमत्त्वमेव कर्तृत्वमित्युक्ते दोषाभावाद् व्यर्थमित्यर्थः । तर्हि प्राणसञ्चारस्यापि जीवकृतिसाध्यत्वात्तस्य तत्कर्तृत्वापात इत्याशंक्य रेचकपूरकादिप्राणव्यापारे तदिष्टमित्याह—न चैवमित्या-

प्राणायामं करोमीत्यनुभवात् प्राणव्यापारविशेषे तस्य कर्तृत्वस्येष्टत्वात्' सुषुप्तिकालीनप्राणव्यापारश्च न जीवकृतिसाध्यः, तस्य क्षित्यादितुल्यत्वात् त्वदभिमतक्षितिकर्तुर्ज्ञानादित्रितयवत्त्वे प्रमाणाभावाच्च।

कृतिरपि तदीया किमनादिः कार्यं वा ? नाद्यः तदनादित्वे प्रमाणाभावात्। अनुमानस्य निरस्तत्वात् जीवकार्यस्यैव कृतिजन्यत्वेन सर्गाद्यकालीनकार्यस्य कृतिं विनाऽप्युपपत्तेः।

अत एव न द्वितीयः अशरीरस्य तदनुपपत्तेश्च। एवं तदिच्छायाश्चिकीर्षात्वे तया संहारकार्यं न स्यात् अन्येच्छातोऽन्यकार्यायोगात्। न च तव तदिच्छाद्वयमस्ति न चैकेच्छाया उभयरूपत्वं विरोधात्। न चादृष्टविशेषोपधानादेकस्योभयरूपत्वम् अदृष्टसमवधानव्यतिरेकेण तदिच्छायाः संहारप्रकारकत्वाभावात्।

ईश्वरे कृतिनिराकरणम्।

अस्तु तर्हि सिद्धान्ते जन्येश्वरकृतिरिति चेत् न, अन्तःकरणधर्मकृतेस्तदभावेऽयोगात् ब्रह्मणि चान्तःकरणे प्रमाणाभावात्। तस्याशरीरत्वात् तस्मिन्नहमित्यादिशब्दानामौचारिकत्वात्। कृतेः कृतिजन्यत्वाभावेन ब्रह्मणस्तत्कर्तृत्वाभावप्रसङ्गाच्च। कृत्यनुकूलापि कृतिरस्त्विति चेत्, न सर्गाद्यकालीनकृत्यभावेन तन्मूलानामप्यभावप्रसङ्गात्। प्रलये कृतिप्रवाहानुपपत्तेः तत्कल्पनायां प्रमाणाभावात् कृतेः स्वसमानाधिकरणकृतिजन्यत्वाभावस्य जीवकृतौ निश्चितत्वाच्च।

---

दिना। जीवस्याबुद्धिपूर्वप्राणव्यापारहेतुकृतिमत्त्वे मानाभावात् न तत्कर्तृत्वमित्याह—सुषुप्तीति। तटस्थेश्वरज्ञानादौ मानाभावात् तत्राव्याप्तिश्चेत्यभिप्रेत्याह—त्वदभिमतेति।

तर्हि कृतिमत्त्वमेव कर्तृत्वमित्याशंक्याह—कृतिरपीति। जीवकार्यस्यैवेति। कृतेश्चेष्टाद्वारैव जनकत्वाज्जीवकार्यस्यैव चेष्टाजन्यत्वादिति भावः। तदनुपपत्तेरिति। जन्यकृत्यनुपपत्तेरित्यर्थः। तटस्थेश्वरेच्छायाश्चिकीर्षात्वमप्यनुपपन्नमित्याह—एवमिति। चिकीर्षाया एव प्रलयहेत्वदृष्टोपधानात् संजिहीर्षात्वमित्यत आह—न चेति। परमते ईश्वरे कृत्यसंभवेऽपि सिद्धान्ते इच्छावदविद्यावृत्तिरूपकृतिसंभवात् तद्वत्त्वमेव कर्तृत्वमस्त्वित्यभिप्रेत्य शंकते—अस्तु तर्हीति। कृतेश्चेष्टाद्वारैव कार्यजनकत्वात् तस्या अन्तःकरणधर्मनियमात्तद्रहितेश्वरे न कृतिसंभव इत्यभिप्रेत्याह—अन्तःकरणेति। अशरीरत्वादिति। स्थूलसूक्ष्मशरीररहितत्वादित्यर्थः। औपचारिकत्वादिति। स्वप्नोपलब्धपित्रादिप्रयुक्ताहंशब्दवदिति भावः। ब्रह्मण्यनित्यकृतेः कर्तुरभावादित्यनुपपत्तिमाह—कृतेरित्यादिना।

कार्यानुकूलज्ञानवत्त्वस्यैव कर्तृत्वे ईश्वरे इच्छापि न स्यादित्यत आह—कामश्रुतीति। ब्रह्मणि कृतेरपि श्रवणात् साऽभ्युपेयेत्याशंक्याह—नामरूपे इति। ज्ञानविषयेति। ऐक्षतेति प्रतिज्ञातज्ञानविषयसमर्पणेन तदेकवाक्यत्वात् तद्विषयेत्यर्थः।

ईशकृतिनिरासः

कामश्रुतिबलाद् बहुभवनेच्छाभासत्त्वविद्यावृत्तिरूपोऽस्तु । नामरूपे व्याकरवाणीति श्रुतिस्तु ज्ञानविषया । सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति ज्ञानाकारस्यैव तया ऽभिलापात् । ''तदात्मानं स्वयमकुरुते''ऽति चात्मानं प्रपञ्चरूपेण जनयामासेति दर्शयति ।

न तु कृतिमत्त्वं उक्तदोषात् । तस्मान्न ब्रह्मसृष्टिः कृतिसाध्या, जीवाकर्तृकत्वात् ब्रह्मवत् । तदिच्छावच्च, अन्यथाऽनन्तकृतिकल्पनागौरवात् । तदुक्तम् 'वीक्षणमात्रसाध्यत्वाद् वियदादि वीक्षितं हिरण्यगर्भद्वारा वीक्षणाधिकप्रयत्नसाध्यत्वाद्भौतिक स्मितमि''ति । ''आत्मन आकाशः संभूतः'' ''तदैक्षत तत्तेजोऽसृजतेत्याद्याश्रुतिरत्र प्रमाणं, पञ्चम्या उभयकारणार्थत्वादुभयस्यात्रापेक्षितत्वात् ईक्षणवत्करणस्य कर्तृत्वात् ।

श्रुत्यन्तरेण साक्षिविवेके वर्णितन्यायेन च नित्यज्ञाने सिद्धे क्षित्यादिकं सकर्तृकं कार्यत्वात् घटादिवदिति लाघवसहकृतानुमानादपि तत्सिद्धिः तदन्यस्यासंभवात् ।

अत एव कर्तृत्वं न श्रुत्यर्थः, किन्तूपादानकर्त्रभेद एवानन्यलभ्यः श्रुत्यर्थ इति सिद्धान्तः ।

विवरणाचार्योक्तस्य अभिन्ननिमित्तोपादानानुमानस्याभिप्रायः

ननु सर्वं कार्यमभिन्ननिमित्तोपादानकं कार्यत्वादात्मगुणवदित्याचार्य्यानुमाना-

---

न च व्याकरवाणीति कृतिसाध्यत्वस्यैव तद्विषयतयाऽभिलापात् कृतिरभ्युपेयेति वाच्यम् । उक्तविधया कृतेरसंभवेनोत्पाद्यत्वस्यैव तदर्थत्वादिति भावः । प्रपञ्चरूपेणेति । 'ततो वै सदजायते'त्युक्तसृष्टि अकुरुतेत्यनूद्य तदात्मानमिति तादात्म्यमात्रस्य प्रतिपादनादिति भावः । तर्कितेऽर्थे प्रयोगमाह--तस्मादिति । ब्रह्मसृष्टिरीक्षणमात्रसाध्येत्यत्र वीक्षितमेतस्य पंचभूतानी''त्येतद्व्याख्यातृव्यासाश्रमवचनसंचारमाह—तदुक्तमिति । यदुक्तमुपादानस्य ब्रह्मणः कर्तृत्वे न मानमिति तत्राह—आत्मन इति । तदैक्षत बहुस्यामित्यादिनोपादानत्वमेव प्रतीयते न तु कर्तृत्वमित्याशंक्याह—ईक्षणवदिति ।

''न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत''इति श्रुत्या प्रथमपरिच्छेदोक्तन्यायेन च नित्यज्ञाने सिद्धे क्षित्यादौ व्यभिचारनिश्चयासंभवेन कार्यत्वस्य ज्ञानवज्जन्यत्वेन घटादौ व्याप्तिग्रहसंभवादनुमानादपि तत्सिद्धिरित्याह—श्रुत्यन्तरेणेति । यदुक्तं कर्तृत्वस्य श्रुत्येकगम्यत्वेऽद्वैतक्षतिरिति तदपि नेत्याह—अत एवेति । अनुमानसिद्धत्वादित्यर्थः । उपादानकर्त्रभेदस्याप्यनन्यलभ्यत्वमयुक्तं विवरणाचार्यैस्तत्राप्यनुमानाभिधानादिति शंकते--

त्तस्यापि सिद्धिरिति चेत् । सत्यमाचार्यैरेतदुक्तं तच्छ्रुतिसिद्धार्थेऽसंभावनानिराचिकीर्षया, अनुमानमात्रस्याप्रयोजकतया असाधकत्वात् ।

किञ्चाभिन्ननिमित्तोपादानत्वस्य गौरवेण व्यापकताऽनवच्छेदकत्वान्न तेन रूपेणानुमितिः घटादावुपादानकर्तृभेदस्य प्रत्यक्षसिद्धत्वात् बाधव्यभिचारयोरन्यतरप्रसङ्गश्च । एतेन घटादेश्चेतनोपादानत्वनिश्चयदशायां चेतनोपादानं सकर्तृकं कार्यत्वादित्यनुमानाल्लाघवसहकृतात् तदेकत्वसिद्धिरिति परास्तम् घटोपादानस्य कुलालात्मनश्च भेदप्रत्यक्षविरोधेन तदभेदानुमानायोगात् बाधिते लाघवानवतारात्।

तदभेदनिश्चयस्तु श्रुत्या जीवपराभेदनिर्णय एव भवति ब्रह्मस्वरूपातिरिक्तजीवरूपेण तस्यासर्वगतत्वात् । ब्रह्मण उपादानत्वप्रतिपादकश्रुतिविरोधेन जीवस्य तदयोगाच्च श्रुत्या च जीवपराभेदनिश्चयः क्षित्याद्युपादानकर्त्रोरभेदनिश्चयं विना न संभवति महावाक्यस्य तदादिपदैः प्रकृततदभेदस्यैव परामर्शात् ।

न चानुमानादेव जीवपराभेदनिर्णयः प्रत्यक्षविरोधात्, 'य आत्मनी'त्यादिभेदश्रुतिविरोधाच्च । लाघवमात्रेण वस्तुतत्वनिर्णयेऽतिप्रसङ्गस्योक्तत्वाच्च । तस्माद्वियदाद्युपादानकर्त्रभेदस्य मानान्तराबाधिततया श्रुतिसामर्थ्यात् तदभेदेऽवगते तद् दृढीकरणाय दृष्टान्तप्रदर्शनमनुमानवाक्यमित्याचार्याभिप्रायः ।

जीवेश्वराभेदे अनुमानम्

अथवाऽभेदेऽप्यनुमानमस्तु । न च बाधः श्रुतिप्रामाण्यभंगप्रसंगतर्केण

---

नन्विति । श्रुत्युपजीवितदनुमानमिति परिहरति – सत्यमिति । कार्यत्वस्यैवोपादानकर्त्रभेदेन व्याप्त्यभावादपि न ततस्तत्सिद्धिरित्याह— किं चेति । अन्यतरप्रसंगश्चेति । घटादेः पक्षत्वे बाध. अपक्षत्वे च व्यभिचार इत्यर्थः । उपादानकर्त्रभेदस्याव्यापकत्वेऽपि घटादिचेतनोपादानकं तदनुविद्धकार्यत्वादित्यनुमानाच्चेतनोपादानत्वे निश्चिते पुनः कार्यत्वहेतुना कर्ता सिध्यन् तदभेदेनैव सिद्धचतीत्याशंक्याह—एतेनेति ।

कुलालशरीरावच्छिन्नस्य घटोपादानाद्भेदनिश्चयेऽपि तत्स्वरूपस्य सर्वगतस्य मृदाद्यवच्छिन्नत्वात्तदभेदनिश्चयः संभवतीत्याशंक्याह—तदभेदेति । तर्हि श्रुत्या जीवपराभेदनिश्चये सत्युक्तप्रकारेणोपादानकर्त्रभेदसिद्धिरित्याशंक्य तथा सत्यन्योन्याश्रयापात इत्यभिप्रेत्याह—श्रुत्या चेति । प्रकृततदभेदस्यैवेति । तदैक्षत बहुस्यामिति प्रकृताभिन्ननिमित्तोपादानस्यैव तत्पदार्थत्वादिति भावः । शास्त्रमनुपजीव्य केवललाघवाद् वस्तुतत्वनिर्णये कल्पान्तरीयकुलालादेरप्येकत्वापात इत्याह—लाघवमात्रेणेति । तर्हि आचार्यैः केनाभिप्रायेणानुमानमुक्तमित्यत आह—तस्मादिति । मानान्तराबाधिततयेति भेदप्रत्यक्षस्यौपाधिकभेदविषयतयाऽन्यथोपपत्तिरिति भावः । आचार्यैः कथाङ्गतयैतदनुमानं प्रयुक्तमित्यभिप्रेत्याह—अथवेति ।

**बलवताऽनुमानेन प्रत्यक्षस्य बाधात् चन्द्रैकत्वानुमानेन तद्भेदप्रत्यक्षवत् ।**

**अत्रापि श्रुतिरुपजीव्येति श्रुतेरेवानुमानं तर्कः कर्तृत्वानुमाने तु समानार्थश्रुतिर्निरपेक्ष्येति तदानुमानिकं कर्तृत्वाद्यप्यभेदतात्पर्यश्रुत्या बोध्यत इति न तच्छास्त्रार्थः**

ब्रह्म अकर्तृ उपादानत्वात् इत्यनुमानभंगः

**यत्तूपादानत्वाद् ब्रह्मणोऽविद्यावदकर्तृत्वानुमानं तत् उक्तानुमानश्रुतिबाधितं त्वदभिमतेश्वरे च व्यभिचारि ।**

**किंच कृतिमत्त्वाभावसाधने सिद्धसाधनम् अनुकूलतर्काभावादप्रयोजकं च ।**

**उपादानत्वं यदि परिणामित्वं तदाऽसिद्धिः कार्याभिन्नकारणत्वं च तव**

---

न च तत्र दृष्टान्तः परमते साध्यविकल इति वाच्यम्, जीवस्य स्वोपादानेच्छाद्यनुकूलज्ञानवत्त्वेन तत्कर्तृत्वस्याप्यावश्यकत्वादिति भावः। तर्हि घटोपादानकुलालयोः भेदस्य प्रत्यक्षसिद्धत्वाद् बाध इत्यत आह—न चेति।

एवं तर्ह्युपादानकर्त्रभेदस्य श्रुत्येकगम्यत्वक्षतिरित्यत आह—अत्रापीति। तर्हि श्रुत्या नित्यज्ञानसिद्धावेव क्षित्यादिसाधारण्यव्याप्तिग्रहात् सकर्तृत्वानुमितिरिति तदप्यानुमानिकं न स्यादित्यत आह—कर्तृत्वानुमान इति। श्रुत्या देवताविग्रहादिवत् कर्तृत्वसिद्धावपि तत्र तात्पर्याभावान्न तच्छास्त्रार्थ इत्याह—कर्तृत्वादीति। ईश्वरे चेति। स्वगतसंयोगाद्युपादाने जगत्कर्तरि इच्छाद्युपादाने जीवे चेत्यर्थः। न च द्रव्योपादानत्वमकर्तृत्वेन नियतमिति वाच्यम् अप्रयोजकत्वादिति वक्ष्यमाणत्वात्।

न चेश्वरस्य शुक्तिवदधिष्ठानत्वादकर्तृत्वमिति वाच्यम् शुक्तिवदजडत्वेन कार्यानुकूलज्ञानवत्त्वात् कर्तृत्वोपपत्तेः।

न चाध्यस्तस्याज्ञानाधीनत्वात् तत्र ज्ञानं न हेतुरिति वाच्यम्। मायाविसृष्टहस्त्यश्वादेस्तदीयज्ञानजन्यत्वाज्जीवाज्ञानकार्यस्य प्रपञ्चस्यापीश्वरज्ञानजन्यत्वोपपत्तेः। अत एव जन्माद्यधिकरणे सार्वज्ञ्यलाभः अनिर्वचनीयस्यापि तदीयेच्छाधीनत्वेन व्याकरवाणीति संकल्पश्रुतिरुपपद्यते मायाविनोऽपि मायां करोमीति संकल्पदर्शनात्। अत एवाकुरुतासृजतेत्यादि श्रुतेरपि नानुपपत्तिः। 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।'

'अथ रथान् रथयोगान्पथः सृजत' इति मायिकस्यापि स्रष्टव्यत्वोक्तेरिति सर्वमनाविलमिति भावः।

किञ्चोपादानत्वेन ब्रह्मणः कृतिराहित्यमात्रं सिषाधयिषितं ज्ञानादिराहित्यं वा ? आद्य आह—कृतिमत्त्वेति। द्वितीय आह—अनुकूलेति।

हेतुमप्यन्यतरासिद्ध्या सोपाधिकत्वेन च दूषयति—उपादानत्वमिति। साध्यविकल इति। सिद्धान्तेऽन्तःकरणस्येच्छाद्युपादानत्वात्तदतिरिक्तजीवस्यैव तत्कर्तृत्वादित्यर्थः।

मतेऽसिद्धं जडत्वोपाधिदुष्टं च। यत्त्वाचार्याणामभिन्ननिमित्तोपादानानुमाने सुखादिदृष्टान्तः साध्यविकल इति। तदसत्। अन्तःकरणविशिष्टस्यैव कर्तृत्वात् उपादानत्वाच्च।

यत्तु द्रव्योपादानत्वादकर्त्रिति। तन्न। गुणोपादानस्य तत् कर्तृत्ववद्द्रव्योपादानस्यापि श्रुत्यादिभिः कर्तृत्वांगीकारे बाधकाभावात्। अत एव कर्तृत्वादनुपादानत्वमपि निरस्तं, चेतनस्यानुपादानत्वे घटादौ सत्ताद्यननुभवप्रसङ्गाच्च।

तस्माद्विश्वस्य कार्यस्य ब्रह्मोपादानमव्ययम्।
कर्तृत्वश्रुतितन्मूललिंगाभ्यामिति सुस्थितम्॥

यदि सुखविमुखोऽयं कारणं स्वेच्छया यत्किमपि वदति कामं कीर्तयत्वात्मदग्धः॥

श्रुतिमतनिरतानां न्यायमार्गे स्थितानां नरहरिरयमेकः केवलं कारणं नः॥ २॥

"विकृतिरपि मुरारे त्वय्यलब्धात्मसत्तां
स्फुरतिमरुमरीचौ वारिराशिः पुरीव।
वियति, विविधरूपा व्यस्तमोहप्रकाशे
निरवधिसुखसिन्धौ वेदमूर्धापवादात्॥"

---

इच्छादेः संपिण्डितोभयधर्मत्वस्य निरूपितत्वाज्जीवोऽपि तदुपादानमित्यभिप्रेत्याह--तदसदिति। यत्त्वित्यादिः स्पष्टार्थः। ब्रह्मणो जगदुपादानत्वं तत्कर्तृत्वं चोपसंहरति श्लोकेन—तस्मादिति। अव्ययं निर्विकारं परमाण्वादिकारणत्वस्य युक्त्याभासैरुत्प्रेक्षितत्वात्परमपुरुषार्थिना न तच्छ्रद्धेयं; किन्तु श्रुतितन्मूलयुक्तिसिद्धब्रह्मकारणत्वमेवेत्यभिप्रेत्याह—यदीति। आत्मना ईश्वरेण दग्धो वंचितः। अत एव सुखविमुखः सुखरूपब्रह्मावाप्तेः पराङ्मुखः कश्चित्तार्किकः स्वेच्छयोत्प्रेक्षामात्रेण विश्वकारणं यत्किंचिद्यदि वदति कामं यथेष्टं वदतु प्रेक्षावता तद्भूषणे दूषणे वा न यतितव्यम्। यतः श्रुत्युक्ते ब्रह्मभावरूपपुरुषार्थे निरतानां तदनुगुणन्याययुक्तं पन्थानमास्थितानां नो वैदिकानामस्माकं नरसिंहाकारविग्रहोपलक्षितब्रह्मैव कारणं जगत उपादानं कर्तृ चेत्यर्थः। उपादानकर्त्रोरुपादानस्य च भेदवारणायैकः केवलम् इत्युक्तम्।

भेदाभेदमतेऽपि ब्रह्मणो जगदुपादानकर्तृत्वात् ततो वैषम्याय प्रपंचस्य मिथ्यात्वं प्रतिजानीते--विकृतिरिति। विक्रियमाणं जगदित्यर्थः। अलब्धात्मसत्तेति। स्वतः सत्तारहितेत्यर्थः। वियति पुरीव गन्धर्वनगरवदित्यर्थः। व्यस्तमोहेति। विशेषेणास्तो निवृत्तो

**विकारश्च सर्वो मिथ्यैव तस्य श्रुत्या निषिद्धत्वात्**

द्वैतमिथ्यात्वे-आक्षेपः समाधानं च ।

**ननु श्रुत्या स्वस्वविषयप्रमाणयोग्यतादीनां स्वप्रामाण्योपजीव्यसत्वानां निषेधायोगात् न सकलद्वैतनिषेधसिद्धिरिति चेत्, न, शब्दस्य प्रामाण्ये हि प्रमेयस्याबाधितत्वरूपा योग्यता तन्त्रं सा चात्र सदात्मकब्रह्मस्वरूपमेवेति न तत्सत्तया द्वैतसत्यता। न तु स्वस्य स्वविषयप्रमाणस्य वाऽबाधितत्वं अतिप्रसङ्गात् गौरवाच्च। सदन्यस्यापि शब्दस्यार्थक्रियायोग्यस्वरूपमात्रेण प्रामाण्योपपत्तेश्च। स्वप्न आत्मविषयशब्दानां प्रामाण्यदर्शनाच्च स्वप्नशब्दश्चासन्नेव, उत्थितस्य शुक्तिरजत इव तदसत्वानुभवात्।**

**प्रपञ्चप्रत्यक्षादिकं च निषेधशेषमेवेति न सकलनिषेधे तात्पर्यानुपपत्तिः विपरीतशङ्का चानुपयोगासंभवपराहता। श्रुतिश्चानवकाशा सत्यमेव निषेधं बोधयति श्रुतितात्पर्यगोचरनिषेधश्च सत्यज्ञानानन्दब्रह्मैवेति नार्वाचीनोक्तदोषः मतान्तरे चावान्तरतात्पर्यात् प्रपञ्चनिषेधसिद्धिः।**

---

मोहो यस्मात् प्रकाशात्तस्मिन् अनावृतप्रकाश इत्यर्थः।

मरुमरीचिकोदकादिवदधिष्ठानादतिरिक्तसत्ताशून्यत्वे हेतुमाह—वेदमूर्द्धेति। 'नेह नानास्ति किंचने" त्यादिवेदान्तवाक्यैस्तत्सत्तानिषेधादित्यर्थः। श्लोकार्थं प्रपञ्चयति, विकारश्चेति। श्रुतेस्तद्ग्राहकमानस्याकांक्षायोग्यतादेस्तद्भेदस्य चाबाधितत्वं न तत्र प्रयोजकमिति परिहरति—न शब्दस्येति। न हि योग्यतयैव द्वैतापत्तिरित्याह—सा चेति। शब्दादेरेवाबाधितत्वस्य तन्त्रत्वेऽनाप्तवाक्यतत्प्रमाणयोः परमतेऽबाधितत्वात्तद्वाक्यमपि प्रमाणं स्यादित्यभिप्रेत्याह--अतिप्रसंगादिति। प्रमेयस्याबाधितत्वमपि तन्त्रमित्याशंक्याह—गौरवादिति। सद्विलक्षणत्वे शब्दस्य बाष्पधूमवत्प्रामाण्यानुपपत्तिमाशंक्य वैषम्यमाह--सदन्यस्येति। सत्त्वस्य व्यतिरेकव्यभिचारमप्याह--स्वप्न इति।

तथापि प्र ञ्चसत्ताग्राहिप्रत्यक्षविरोधान्न तस्य निषेध इत्याशङ्क्य तस्य रजतप्रत्यक्षवन्निषेधापेक्षितप्रसक्तिरूपत्वेन तदनुकूलत्वान्न विरोधितेत्याह--प्रपञ्चेति। निषेधकश्रुतिरेव भेदग्राहिप्रत्यक्षशेषार्था किं न स्यादित्यत आह—विपरीतेति। विधिरूपप्रत्यक्षे निषेधवाक्यार्थज्ञानस्य कथमप्यनुपयोगान्निषेधस्यान्यतोऽसिद्धतयाऽनुवादायोगाच्चेति भावः। तर्हि चोदनाभागवद्द्वैतनिषेधश्रुतिरपि कल्पितविषयास्त्वित्याशंक्य तस्याधिकारसिद्धिद्वाराऽद्वैतप्रतिपत्तिशेषत्वात् कल्पितविषयत्वं युक्तं द्वैतनिषेधश्रुतेरनन्यशेषतया स्वार्थपर्यवसायित्वात् तदर्थो निषेधः सत्य एवेत्यभिप्रेत्याह—श्रुतिश्चेति। तर्हि निषेधेनैव द्वैतापत्तिरिति परोक्तं दोषं परिहरति--श्रुतितात्पर्येति। द्वैतनिषेधोऽधिष्ठाना-

वाचारंभणश्रुत्या प्रपञ्चमिथ्यात्वम्

तत्र च "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादि"त्यादिश्रुतिर्घटादिसत्तानिराकरणेनोपादानमृदभेदनिरूपणद्वारा ब्रह्माभेदं निरूपयन्ती मानम्। तत्र हि कथं मृज्ज्ञानात्तद्विकारपरिज्ञानमदर्शनादित्याशङ्क्य न हि घटादिस्वरूपं मृदो भिद्यते किन्तु सैव, अतस्तज्ज्ञानमेव तज्ज्ञानमित्यभिप्रेत्य श्रुतिर्घटादेर्मृद्भेदं निराकरोति "वाचारम्भणमि"त्यादिना। विकारो घटादिः वाचारम्भणं आरभ्यत इत्यारम्भणं वाचा व्यवह्रियमाणघटशरावादि वागालम्बनमेवेति यावत्। एवकारश्च वाक्यशेषे श्रुतोऽनुषज्यते।

ननु घटोऽस्तीति प्रतीयमानः कथं शब्दालम्बनमात्रमिति तत्राह-- नामधेयमिति। अस्तीति व्यवहार एव न त्वस्तित्वमस्तीत्यर्थः। ततः कारणमेव सत्यमित्यभिप्रेत्योपसंहरति -मृत्तिकेति। इतिर्हेतौ प्रकारे वा, तदुक्तं स्कान्दे ब्रह्मदेवसंवादे--

उत्पत्तिश्च विनाशश्च तथैवार्थक्रिया अपि।
नामरूपविशेषश्च सर्वं भ्रान्त्या प्रसिध्यति॥
अतः सर्वविकारश्च वाचा केवलमास्तिकाः।
अस्तीत्यारभ्यते नामधेयमात्रं हि तत्सदा॥
प्रातीतिकेन रूपेण विकारोऽसत्य एव हि।
कारणाकार एवास्य सत्यः साक्षात् सदा सुराः॥ इति।

---

तिरिक्त इति मते कथं तत्सिद्धिरित्यत आह --मतान्तर इति। परमतात्पर्येणाखण्डवस्तुपरतया श्रुत्या न्यायोपोद्बलितावान्तरतात्पर्येण द्वैतनिषेधसिद्धिरित्यर्थः।

एवं सामान्यतः प्रपञ्चसत्तानिषेधे वेदान्तानां प्रामाण्यमुपपाद्य विशेषतस्तद्विषयवाक्यान्युदाहृत्य तेषां स्वाभिमतमर्थं दर्शयति -तत्र चेत्यादिना। मृद्भेदमिति। मृदो भेदेन सत्वमित्यर्थः। वागालम्बनमेवेति। घटशरावाद्यपुनरुक्तव्यवहारमात्रं न तु घटादिस्वरूपमपि सत्यमित्यर्थः। वाक्यशेष इति। मृत्तिकेत्येवेत्यत्रेत्यर्थः। न चानुषङ्ग एवान्याय्य इति वाच्यम्। घटादिसत्त्वनिराकरणपरस्यास्य वाक्यस्य तदाकांक्षत्वादस्य घटादिसत्त्वनिराकरणपरत्वाभावे मृद्ज्ञानात् तद्विकारज्ञानानुपपादनेन यथा सोम्येत्यनेनैकवाक्यत्वायोगाद्वैय्यर्थ्यापत्तिरिति भावः। न त्वस्तित्वमिति। सद्व्यवहारस्याधिष्ठानसत्तयैवोपपत्तेर्न तदतिरिक्तमस्तित्वमस्तीत्यर्थः। इतिर्हेताविति। यस्मात् कार्यस्य कारणमेव सत्वरूपं तस्मात् तज्ज्ञानमेव सर्वज्ञानमित्यर्थः। प्रकारे वेति। कारणाकार एव सत्यो न कार्याकार इत्यर्थः। उक्तार्थे ब्रह्मगीतावचनं संवादयति—तदुक्तमिति।

वाचारम्भणश्रुतेः द्वैताभिप्रायनिरासः

यत्त्वर्वाचीनमतं **वागिन्द्रियजन्यं नामधेयं प्राकृतादिशब्दो विकारः अनित्यं मृत्तिकेत्यादिसंस्कृतनामधेयं सत्यं नित्यमित्यर्थ इति । तदसत् । यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्युपक्रमाननुगुणत्वात् ।**

**न च तत्रापि भाषादिशब्दपरिज्ञाने तत्फलं तच्चाधिकं च सार्वत्रिकव्यवहारादिकं संस्कृतज्ञानात् भवतीत्युच्यत इति वाच्यम् । एकेन मृत्पिण्डेन मृन्मयमित्यादिशब्दविरोधात् । संस्कृततज्ज्ञानतत्फलवाचकशब्दानां तत्राभावाच्च । संस्कृतशब्दाल्लौकिकैर्व्यवहारासंभवात् । भाषापरिज्ञाने सर्वेण व्यवहारसंभवाच्च ।**

**किंचैतल्लोकसिद्धत्वान्न श्रुत्या प्रतिपाद्यम् ।** यत्तु **मृद्ज्ञानेऽपि घटादिसंशयदर्शनात् न त्वदभिमतवाक्यार्थोऽपि संभवतीति ।** तन्न । **स्वरूपपरिज्ञानेऽपि कल्पितभेदवद्विकारसंशयस्योपपत्तेः मृत्तिकेत्यस्य शब्दपरत्वे प्रमाणाभावात् । नामधेयपदस्यानुषङ्गगौरवाच्च ।**

**किञ्च सत्यशब्दोऽपि परमार्थत्व एव रूढः अतः संस्कृतस्यैव परमार्थत्वविधौ भाषादेर्मिथ्यात्वं श्रुत्यभिमतं स्यात् तच्च तवानिष्टम् ।**

---

अस्य परोक्तार्थं दूषयितुमनुवदति—यत्त्विति । परमते प्राकृतशब्दस्यापि सत्वात्ततो वैषम्यमाह—नित्यमित्यर्थ इति । परोक्तार्थपरत्वे उपक्रमे श्रुतस्य मृद्विज्ञानात् तद्विकारस्वरूपपरिज्ञानस्यानुपपादनात्तदेकवाक्यत्वविरोध इति दूषयति—तदसदिति । संस्कृतशब्दपरिज्ञानात् व्यवहारभूयस्त्वमेवोपक्रमार्थ इत्याशंक्याश्रुतकल्पनापातान्मैवमित्याह – न च तत्रापीत्यादिना । फलभूयस्त्वमपि नास्तीत्याह—संस्कृतेति । सस्कृतपरिज्ञाने सार्वत्रिकव्यवहारो भवतीत्यस्यापूर्वत्वाभावादपि न श्रुत्यर्थतेत्याह—किं चेति । यथाश्रुतेऽर्थेऽप्यनुपपत्तिमनूद्य परिहरति—यत्त्वित्यादिना । नामधेयमित्यस्य मृत्तिकेति पदेनाप्यन्वयात् तस्य शब्दपरत्वमित्यत्राह—नामधेयेति । न च तवाप्येवकारानुषंगस्तुल्य इति वाच्यम् वाचैवारम्भणमिति त्वयापि वक्तव्यत्वादितरथा संस्कृतपदानामपि वाचारम्भणत्वाद् विकारत्वप्रसंगादिति शब्दानुकरणरूपत्वे मृदादिपदानामनित्यत्वप्रसंगाच्च । न च मृत्तिकादिपदानां विवक्षितत्वाददोष इनि वाच्यम् । आदिपदाश्रवणात् ।

ननु निपातानामनेकार्थत्वादाद्येनेतिपदेन वाचारंमणेतरपदानि संगृह्यन्त इति चेन्न । प्राकृतभाषाप्रबंधादेरपि तत्तद्व्याकरणादिसापेक्षत्वेन वाङ्मात्रेणानारब्धत्वात् तस्यापि संग्रहापत्तेरिति भावः ।

किञ्च सत्यपदेन नित्याभिधाने लक्षणाप्रसंगान्मुख्यार्थ एव ग्राह्यः । स च तवानिष्ट इत्याह—किं चेति । किं च येनाश्रुतमित्यादिनैकविज्ञानात् सर्वविज्ञानं प्रतिज्ञाय

किञ्चास्मिन् मते कथं नु भगव इत्याक्षेपसमाधानं न स्यादेवेति सर्वमेवासंगतम्। तस्माद्घटादिसत्यत्वमेवैषाऽऽरम्भणश्रुतिर्निराकरोति।

एकमेवाद्वितीयश्रुतेः मिथ्यात्वतात्पर्यम्

निःशेषद्वैतमिथ्यात्वसिद्धये एवमेकमेवाद्वितीयमिति श्रुतिस्तत्र मानं, तत्र ह्येकमिति स्वगतात्एवेनि विजातीयात् अद्वितीयमिति सजातीयाच्च भेदो निराक्रियते तदुक्तं –

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात् सजातीयो विजातीयः शिलादितः॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्य्यते।
ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात्॥

क्रमादिति यथायोग्यमित्यर्थः।

एकमेवेतिश्रुत्यर्थाक्षेपः

अत्र नवीनः "एकशब्दो ह्यनेकार्थः एके मुख्यान्यकेवलाः" इत्यमरोक्तेः। एको गोत्र इत्यत्र एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथमसमानवाचीति कैयटोक्तेश्च। संभवति च ब्रह्मणि जीवादितोऽन्यत्वप्राधान्यप्राथम्यादि निर्देश्यत्वेन च

---

प्रपञ्चब्रह्मणोर्भेदेन कथं नु भगव इत्यादिना तदाक्षेपे तत्समाधानार्थं यथा सोम्यैकेनेत्यादिवचनं तेन च त्वदुक्तार्थेन तत्समाधानायोगात् सर्वमेवासंगतं स्यादित्याह–किञ्चेति। परोक्तार्थस्यानेकदोषदुष्टत्वात् स्वोक्तार्थपरैवेयं श्रुतिरित्युपसंहरति श्लोकेन-तस्मादिति। उत्तरवाक्यपर्यालोचनयाऽप्यारम्भणश्रुतिरुक्ताभिप्रायेत्यभिप्रेत्याह––एवमिति। स्वगतादिति। स्वगतत्वेन प्रतीयमानानंदादेरित्यर्थः। अद्वितीयमिति। सजातीयादिति। अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ सजातीय एव द्वितीयशब्दप्रवृत्तिसिद्धेः। तदुक्तं भाष्ये—अस्य गोर्द्वितीयेन भवितव्यमित्युक्ते सदृशाकार एवोपादीयते नाश्वो न गर्दभ इति। तथा शारीरकभाष्येऽपि अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते गौरेवान्विष्यत इति। ततस्तदुपरक्तनञा सजातीयस्यैव निषेध इति भावः। अद्वितीयपदस्य सजातीयनिषेधपक्षे क्रमादिति कथमुक्तमिति तत्राह-क्रमादिति।

एकादिपदानामर्थान्तरसम्भवान्न स्वगतभेदादिनिराससिद्धिरिति परेणोक्तमनुवदति—अत्रेति। एकशब्दस्यानेकार्थत्वेऽपि प्रकृतेऽर्थान्तरस्यासम्भवात् कैवल्यमेव तदर्थ इत्यत आह—संभवति चेति। प्रथमार्थत्वेनेति। मुख्यार्थत्वेनेत्यर्थः। जघन्येति। बहुव्रीहेर्लक्षणयाऽन्यपदार्थबोधकत्वादिति भावः। अन्यत्वादीनामेकपदार्थत्वेऽपि न ते ग्राह्याः आकांक्षादेरभावादित्यभिप्रेत्य दूषयति—तन्नेति। चित्रत्वस्य यागविशेषणत्वासंभवात् तन्न ग्राह्यमित्यत आह—सम्भवति चेति। यागोद्देशेन प्रकृत्यर्थचित्रत्वविधाने प्रत्ययार्थस्त्री-

नामरूपसमानत्वम् । अतो न तस्य स्वगतभेदनिषेधकत्वम् । अद्वितीयशब्दोऽपि कर्मधारयो बहुव्रीहिर्वा । आद्ये ब्रह्म द्वितीयान्यत्वेऽपि तृतीयं प्रथमं वा स्यात् । नान्त्यः प्रथमार्थत्वेन कर्मधारये संभवति जघन्यबहुव्रीहेरयोगादिति । तन्न । अस्त्वेकशब्दस्यानेकार्थत्वं तथापि शब्दार्थ इत्येव न ते प्रकृते ग्राह्याः, तथासति 'चित्रया यजेते'त्यत्रापि चित्रत्वं ग्राह्यं स्यात् । संभवति च चित्रत्वस्याप्यग्नीषोमीयपशुविशेषणत्वेन यागसाधनत्वम् ।

अथ तत्र स्त्रीत्वचित्रत्वयोर्विधाने वाक्यभेदः स्यादिति तर्हि प्रकृतेऽप्यनेकगुणविधाने स तुल्यः सतोऽपि प्राप्तत्वात् ।

किं च केषाञ्चिन्मानान्तरेण सिद्धत्वेन केषांचित् तद्विरुद्धत्वेन च नान्यत्वादिगुणेषु तात्पर्यं, येनाश्रुतं श्रुतं भवतीत्यादिना अद्वैत एवोपक्रमात् मृदादिदृष्टान्तैस्तस्योपपादनाच्च ।

अथोऽपक्रमेऽपि ब्रह्मणः प्राधान्याद्यभिप्रायेणैव तज्ज्ञानात् सर्वज्ञानमुपचर्यत इति चेत् न, असति बाधकेऽप्युपचारकल्पनेऽति प्रसंगात् कथं न्विति तदाक्षे-

---

त्वमपि विधेयं स्यात् तथा च वाक्यभेदापात इति शंकते--अथेति । सदेव सोम्येत्यनेनैव सद्रूपब्रह्मणः प्राप्तत्वात् तदुद्देशेनान्यत्वादिविधाने वाक्यभेदापातस्तुल्य इति परिहरति--तर्हीति ।

केषाञ्चिदिति । अन्यत्वैकत्वयोः प्रत्यक्षानुमानसिद्धत्वात् साम्यस्य च न तत्समोऽस्तीत्यादिश्रुतिविरुद्धत्वादसहायत्वमपि न तावत् स्वकार्ये सहकारिराहित्यं अदृष्टादेः सत्वात् ।

न च चेतनान्तरसाहाय्याभावः तद् भोक्तृशेषभोग्यसृष्टौ तेषामपि सहकारित्वात् प्राथम्यमपि न तावत् प्रथमकालीनत्वं तस्याग्र आसीदिति पूर्ववाक्य एव सिद्धत्वाज्जीवानामप्यनादितया तदपेक्षया तदनुपपत्तेश्च । नापि गुणोत्कर्षः निर्गुणत्वपराऽनेकश्रुतिविरोधात् । प्राधान्यमपि स्वातन्त्र्यं तच्च यदि स्वेच्छया प्रवर्तमानत्वं तन्न जीवस्यापि तत्सत्वेन तदपेक्षयेश्वरस्य प्राधान्यायोगात् । नाप्यन्यानियम्यत्व तत् ईश्वरस्य सर्वनियन्तृत्वपरवाक्यसामर्थ्यादेव तत्सिद्धेरिति भावः ।

किञ्चोपक्रमविरोधादपि नान्यत्वादिषु तात्पर्यमित्याह—येनेति । येनाश्रुतमित्याद्युपक्रमोऽपि नाद्वैतनिष्ठ इति शंकते—अथेति । मुख्यार्थे बाधकाभावात् तस्याक्षेपादिनोपपादितत्वाच्च नोपचरितार्थपरतेति परिहरति--नासतीति ।

ननु कथं न्विति नाक्षेपः किन्तु प्रश्नमात्रमिति तत्राह---तथापीति । प्राधान्याद्यनुपपादनादिति । यथा सोम्येत्यादिवाक्यस्य शब्दविशेषनित्यानित्यपरतया त्वया व्याख्यातत्वात् मृत्तिकेत्येव सत्यमिति कारणस्यैव सत्यत्वं उपसंहृत्यैवं सोम्य स आदेश इति

पानुपपत्तेश्च। न हि ब्रह्मणः प्राधान्यादौ किञ्चिल्लौकिकं मानं विरुध्यते तथापि मृदादिवाक्यासंगतिरेव। तेन तस्य प्राधान्याद्यनुपपादनात्। समवायस्य च भेदाभेदस्य च निरस्तत्वेन धर्माणां संबन्धाभावादपि न ब्रह्मधर्मत्वम्।

यदप्यद्वैतवाद्यभ्युपगतनिर्धर्मकत्वनिषेधाय संख्यादिकं श्रुतिर्विधत्त इति। तन्न, अद्वैतवादिनो ब्रह्मनिर्धर्मकत्वप्रसिद्धेः श्रुतिमूलत्वात्।

किं चाद्वैतवादिभिरप्यामोक्षं प्राधान्यादिकमभ्युपेयत एवेति तद्विधानं व्यर्थम्। न च तस्य वास्तवत्वं मुक्तिकालीनत्वं वा श्रुत्या प्रतिपाद्यत इति वाच्यम्।

अत्र वास्तवादिपदाभावात् श्रुतेस्तत्र तात्पर्यं च न किञ्चिन्मानं पश्यामः। प्रत्युत रुद्ररोदनादिवन्निष्प्रयोजनत्वात्तत्रातात्पर्यमेव। तस्मादेकमिति भेदनिषेधपरमेव।

यत्त्वद्वितीयमित्यत्र बहुव्रीहिर्जघन्य इति कर्मधारय एवाभ्युपेय इति। तदसत्। अघटो देश इत्यादावपि तदभावप्रसंगात्। न च तत्र विवक्षानुसारात् तथा, तर्हि प्रकृतेऽप्युपक्रमादिलिङ्गैर्द्वैताभावे श्रुतितात्पर्यावगमात् तथास्तु।

किं च तव कर्मधारयासंभवादपि बहुव्रीहिरेव ग्राह्यः, ब्रह्मातिरिक्तचेतनाभ्युपगमे ब्रह्मणि द्वितीयत्वस्य सत्त्वात्।

---

जगत्कारणस्यैव सत्यत्वावधारणाच्चेति भावः।

एकत्वसंख्यादेर्ब्रह्मण्यसंभवादपि न तत्परेत्याह—समवायस्येति।

एकमिति श्रुतिर्नैकत्वादिविधिपरा किन्तु तद्विरोधिनिषेधपरेति परोक्तमनूद्य दूषयति----यदपीत्यादिना। श्रुतिमूलत्वादिति निर्धर्मस्य ब्रह्मणो मानान्तरागोचरतया श्रुतिप्राप्तनिर्धर्मत्वस्य तयैव निषेधे परे विकल्पापात इति भावः।

अद्वैतवादिमतनिरासाय धर्मविधानमित्येतदितोऽप्यनुपपन्नमित्याह—किञ्चेति। धर्मवास्तवत्ववाचकपदाभावेऽपि तस्य श्रुतितात्पर्यगोचरत्वात् वास्तवत्वमित्यत आह—श्रुतेरिति। निष्प्रयोजनत्वादिति। य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति अभेदज्ञानादेव मोक्षश्रवणात् द्वितीयाद्वै भयं भवतीति भेदज्ञानादनर्थश्रवणाच्चेति भावः।

उपक्रमाद्यनुगुणत्वादुक्तदोषाभावाच्चाभेदपरमेवेदमित्याह—तस्मादिति। यत्तूक्तं कर्मधारये संभवति बहुव्रीहिरयुक्त इति तदनूद्यातिप्रसङ्गेन दूषयति----यत्त्वित्यादिना। अघटो देश इत्यत्र घटात्यन्ताभावस्य विवक्षितत्वात् बहुव्रीहिरित्याशंक्याद्वितीयमित्यस्यापि द्वैताभावात्मकब्रह्मणि तात्पर्यात् बहुव्रीहिरावश्यक इति दूषयति---न चेत्यादिना।

परमते जीवसजातीयस्य परस्य तदपेक्षया द्वितीयत्वान्न द्वितीयोऽद्वितीय इति कर्मधारयासंभवादपि बहुव्रीहिरेव युक्त इत्याह---किं चेति। परस्य जीवान्निकर्षाभावान्न

न च धर्मतो निकृष्टस्यैव द्वितीयत्वम्। ब्रह्म च सकलसद्गुणाश्रय इति न द्वितीयमिति वाच्यं सजातीयान्यमात्रे द्वितीयशब्दव्युत्पत्तेः। अन्यथा समे क्वापि द्वितीयशब्दप्रयोगो न स्यात्

ननु सर्वज्ञद्वितीयत्वं निषिध्यत इति चेत्, न, चेतनद्वितीयत्वातिरिक्तस्य सर्वज्ञद्वितीयत्वस्य सिद्ध्यसिद्ध्योस्तदयोगात्। एतेन सम एव द्वितीयशब्दव्युत्पत्तेरद्वितीय इति समाधिकनिषेध एवेति निरस्तम्। सर्वज्ञान्तराभावात् एकशब्देन निर्दोषत्वादिरूपेण प्रपञ्चेन ब्रह्मणः साम्यं विधीयत इति त्वदुक्तिव्याघाताच्च। सामान्यनिषेधे बाधके सत्येव विशेषविषयत्वस्य वक्तव्यत्वाच्च।

ननु द्वितीयमात्रनिषेधो न संभवति द्वितीयाभावस्यैव द्वितीयस्य सत्वादिति चेत्, न, द्वितीयाभावस्याप्यात्ममात्रत्वस्यासकृदुक्तत्वात्। तस्मादेकादिशब्देन स्वगतात् स्वविलक्षणात्सजातीयाच्च यो भेदः स एव प्रतिषिध्यते।

या तु श्रुतिरुदाहृता 'एकोऽद्वितीयो भगवान् तत्सदृशोऽन्यो नास्ति"। या च स्मृतिः "ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः।

अद्वितीयो महाविष्णुः पूर्णत्वात् पुरुषः स्मृतः।
भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ॥" इति।

तत्र श्रुतिरनुकूलैव स्मृतावप्यद्वितीय इति सजातीयमात्रभेदनिषेधो द्रष्टव्यः। भेदाभेदनिषेधे ज्ञानानन्दादीनां ब्रह्मणोऽत्यन्तभेदे ज्ञानानन्दाद्य-

---

द्वितीयत्वमित्यत आह--न चेति। सम इति। द्वितीयं चक्षुरित्यादिप्रयोगो न स्यादित्यर्थः। सर्वज्ञापेक्षया द्वितीयत्वनिषेधेन कर्मधारयोपपत्तिरिति शंकते----नन्विति। सर्वज्ञद्वितीयत्वे सति तन्निषेध एवानुपपन्नः। असति च तस्मिन् सुतरां तदनुपपत्तिरसतो निषेधायोगादित्याह--नेति। प्रतियोगिनोऽसत्वादेव समाधिकनिषेधपरत्वमप्ययुक्तमित्याह---एतेनेति। समाधिकेति। समनिषेधेऽर्थादधिकनिषेध इति भावः। समनिषेधपरत्वाभिधानं स्ववचनविरुद्धं चेत्याह--एकशब्देनेति। चेतनब्रह्मप्रतियोगिकं द्वितीयत्वं जीवनिष्ठं ब्रह्मणि निषिध्यतामित्याशंकायामाह----सामान्येति। सामान्येन श्रुताद्वितीयपदस्य चेतनमात्रप्रतियोगिकद्वितीयत्वनिषेधपरत्वे सम्भवति गौरवेण तद्विशेषप्रतियोगिकद्वितीयत्वनिषेधपरत्वकल्पनायोगादित्यर्थः।

एकमेवेत्यादिवाक्यस्य द्वैतमात्रनिषेधपरत्वमनुपपन्नं द्वैताभावेन सद्वितीयत्वस्यावश्यकत्वादिति शंकते---नन्विति। आरोपितप्रतियोगिकाभावस्याधिष्ठानमात्रताया उपपादितत्वान्न तेन सद्वितीयतेत्याह—न द्वितीयेति। एकमेवेत्यादेर्द्वैतमात्रनिषेधकत्वाभावे परेण स्वग्रन्थे श्रुतिस्मृतिसंवाद उक्तस्तमनूद्यान्यथयति—यत्त्वित्यादिना। अद्वितीय इति सजातीयभेदमात्रनिषेध इति।

भिन्नत्वादिति त्वदुक्तस्मृतिविरोधः आनन्दभिन्नस्य ब्रह्मणो हेयत्वप्रसंगश्च अत्यन्ताभेदे सगुणत्वभंगः

अन्यस्यापि गुणस्यानन्दभिन्नत्वे हेयत्वप्रसंगश्च।

ननु ब्रह्माभिन्ना एवानन्दादयो ब्रह्मधर्मा इति चेत्, न तदभिन्नत्वे तद्वृत्तित्वायोगात्। तद्वृत्तित्वं विना तद्धर्मत्वानुपपत्तेः पारिभाषिकसंबन्धाभ्युपगमेन धर्मत्वस्याधर्मत्व एव पर्यवसानात्।

आत्मा वा इदमेक एवाग्र आसीदिति श्रुतेः मिथ्यत्वे मानता

एवं "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषदि"ति श्रुतिस्तत्र प्रमाणम्। न चाग्र आसीदिति सृष्टेः पूर्वमपि कालसंबन्धप्रतीतेरविद्यादेश्च सत्त्वान्नागृहीतविशेषणान्यायेन च मिषदिति विशेषणमात्रस्य निषेधो न प्रपञ्चस्येति वाच्यम् विशेष्ये बाधाभावेन विशिष्टस्यैव निषेधात् अविद्यादेश्च ब्रह्मातिरेकेण सत्वाभावान्निषेधोपपत्तेश्च।

यत्त्वग्र आसीदिति प्रतीतेः कालोऽपि सृष्टेः पूर्वं वर्तत इति। तन्न। अव्याकृतात्मककालादप्यग्र इत्यादिव्यपदेशोपपत्तेः' तदानीमप्यव्याकृतात्मना

---

न चैवं सर्वोत्तम इत्युक्तिविरोधः सर्वेभ्य आत्मन एव श्रेष्ठतयोत्तमत्वात्तदभेदादेव ब्रह्मणोऽपि तथात्वात् सजातीयभेदनिवृत्तेरेव तदर्थत्वादितरथा "पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपी" त्यादिवचनविरोधादिति भावः।

त्वदुक्तेति। त्वदुदाहृतस्मृतिविरोध इत्यर्थः। आनन्दस्य स्वरूपत्वेऽपि ज्ञानादीनां गुणत्वात् सगुणत्वमित्याशंकायामाह—अन्यस्यापीति।

अभेदेऽपि प्रमेयत्ववद्धर्मधर्मिभावसंभवात् सगुणत्वमिति शंकते—नन्विति। दृष्टान्त एवासम्प्रतिपन्न इत्यभिप्रेत्य दूषयति—तदभिन्नत्व इति। आनन्दादेर्ब्रह्मणश्चाभेदसंबन्धादेव धर्मधर्मिभाव इत्यत आह—पारिभाषिकेति। अधर्मत्व एवेति। घटादेः स्वाभेदे सत्यपि धर्मधर्मिभावाभावादिति भावः। ऐतरेयकश्रुत्याप्यात्मातिरेकस्य निषेधात् सापि तन्मिथ्यात्वे मानमित्याह—एवमिति। सृष्टेः पूर्वकालाविद्यादेरावश्यकत्वान्न तदात्मातिरिक्तवस्तुमात्रनिषेधः शक्यो वक्तुं किन्तु मिषदिति विशेषणतयोक्ताभिव्यक्तिमात्रनिषेधस्तदर्थ इति शंकामनूद्यापवदति—न चेत्यादिना। विशिष्टनिषेधो विशेष्ये बाधे सत्येव हि विशेषणमात्रं विषयीकुर्यादन्यथा क्वापि विशिष्टनिषेधो न स्यात्।

न चात्र विशेष्ये बाधोऽस्तीत्याह—विशेष्य इति। परोक्तबाधं निराकरोति—अविद्यादेरिति। न चाविद्यादेः सत्वाभावमात्रेण निषेधे तस्येदानीमपि संभवादग्र इत्यस्य वैय्यर्थ्यमिति वाच्यं ब्रह्मण एव जगन्निमित्तोपादानत्वोपपादयिषया तदुपपत्तेरिति। भावः।

कालस्याप्यविद्याकार्यत्वमंगीकृत्याह—अव्याकृतेति। सृष्टेः पूर्वमपि कार्यमात्रस्या-

**कार्यानभ्युपगमे इदमग्र आसीदिति निर्देशायोगात्। तस्मान्मुक्तिपूर्वकालस्य सर्वात्मना विनाशाभावात् कालस्य मिथ्यात्वेऽपि इयं श्रुतिरुपपन्ना। वस्तुतस्तु कालोऽविद्या तत्संबन्धो वा न ततोऽतिरिच्यते। अज्ञानादेरपि कलयतीति व्युत्पत्त्या कालशब्दवाच्यत्वोपपत्तेः। तदुक्तं भोजेन-"भाविभवतद्भूतरूपं कलयति जगदेष कालोऽतः" इति। स्कान्देऽपि—"कालो मायात्मसंबन्धः सर्वसाधारणात्मकः" इति मायावच्छिन्न ईश्वरो वा। तदुक्तं सर्वेश्वरेण--"कालः कलयतामहम्" इति। अतीतादिव्यवहारोऽपि सूर्यगत्याद्युपाधिना तेनैव सिद्ध्यति दिगादयस्तु स्वरूपेणोत्पन्नत्वादतिरिच्यन्ते। एवं सजातीयादितो भेदं समासेन निषेधति वाक्यं वाजसनेयानां "नेह नानास्ति किंचन"**

अत्र परमतनिरसनम्

यत्तु **ब्रह्मणि नानात्वं नानेत्यत्र निषिध्यते।**
**यथा द्व्येकेति सूत्रेण द्वित्वैकत्वे विवक्षिते॥ १॥**
**तथेति तद्वचो दुष्टं यतो द्वित्वोपपत्तये।**
**तत्र द्वित्वादिशब्देन लक्ष्यते नात्र लक्षणा॥ २॥**
**नानात्वस्य निषेधेऽपि भेदमात्रस्य युज्यते।**

---

निर्वचनीयसूक्ष्मरूपेणावस्थान इयमेव श्रुतिर्मानमित्याह—तदानीमिति। सृष्टेः पूर्वमव्याकृतकालमादायाग्र इति श्रुतिस्तस्यानन्यत्वान्नान्यदिति श्रुतिश्चोपपन्नेत्याह—तस्मादिति। अङ्गीकारं परित्यजति—वस्तुतस्त्विति। अज्ञानादेरेकरूपत्वात् कथं तस्य कालत्वेऽतीतादिव्यवहार इत्यत आह—अतीतादीति।

एवं तर्हि दिगादिकमप्यविद्यैव स्यादित्यत्राह—दिगादयस्त्विति। स्वरूपेणोत्पन्नत्वादिति। 'दिशः श्रोत्रादे'तस्माज्जायते प्राणो मन इत्यादिश्रुतिभिर्दिगादेरुत्पत्त्यवगमादित्यर्थः। नेह नानेति श्रुतिरपि युगपत्सजातीयादिभेदनिषेध्री तन्मिथ्यात्वे मानमित्याह—श्लोकैः पाठसौकर्यायैवमित्यादिना।

अस्याः पराभिमतमर्थं दूषयितुमनुवदति—यत्त्विति। नानेत्यत्रेति। नेह नानेत्यत्रेत्यर्थः। ननु नानावृक्षसमाकीर्णं नाना मृगसमाकुलमित्यादौ नानापदस्य विजातीयधर्मिष्वेव प्रसिद्धेः कथमत्र धर्मपरत्वं तत्राह—यथेति। द्व्येकेति पदयोरन्यत्र धर्मिपरयोरपि द्व्येकयोर्द्विवचनैकवचन इति सूत्रे यथा द्वित्वैकत्वसंख्यात्मकधर्मपरत्वं तद्वदस्य क्वचिद्धर्मपरत्वोपपत्तिरित्यर्थः। दृष्टान्तवैषम्येण दूषयति—तद्वच इति। द्व्येकशब्दयोः संख्येय परत्वे तस्य बहुत्वात् द्व्येकयोरिति द्विवचनानुपपत्तेस्तदुपपत्तये द्वित्वैकत्वसंख्ये लक्ष्यते। न चात्र किञ्चिदनुपपन्नम् इति न धर्मलक्षणेत्यर्थः। धर्मपरत्वेऽपि किञ्चन नानात्वं नास्तीत्यन्वयेन सकलभेदनिषेधापत्तेर्न त्वदिष्टसिद्धिरित्याह—नानात्वस्येति। नानापदेन

योगात् किञ्चनशब्देनाविशेषेण निषेधनम् ।। ३ ।।
अन्यथा तेऽप्रसक्तस्य प्रतिषेधो भवेद् ध्रुवम् ।
विचित्रेणैव कार्येण तद्भेदस्यानुमेति चेत् ।। ४ ।।
न, यतो मायिनश्चित्रं कार्यं लोके प्रदर्श्यते ।
विश्वामित्रादियोगीशसृष्टिश्च विविधा स्मृता ।। ५ ।।
अनन्तरूपमित्यादि वेदात्तद्भेदधीरिति ।
तत्किं स वेदस्तत्रैव विश्रान्तो वाऽन्यवस्तुनि ।। ६ ।।
आद्ये श्रुतिप्रमेयं तत् कथं वेदोऽपि वारयेत् ।
अन्यथा तत्कथं मानमन्यद्वा निर्विशेषतः ।। ७ ।।
विकल्पो न क्रियावत्स्याद् वस्तुनस्त्वेकरूपतः ।
एकस्मिन्नपि सद्भेदो यदि ते संमतस्तदा ।। ८ ।।
जीवेनाचरितं किन्ते प्रतिकूलं वदाधम ।
हिरण्यरावणादीनां वधो यद्वद् व्यवस्थितः ।। ९ ।।
तद्वत्संसारमुक्तत्वव्यवस्था न भवेत् कुतः ।

---

ब्रह्मनानात्वमात्रपरिग्रहे तस्यासत्वात्परमते तन्निषेधायोग इत्याह—अन्यथेति । अत्र प्रसक्तपदस्य प्रतीत्यर्थत्वं मत्वा शंकते—विचित्रेणेति । एकस्मादेव मायिनो विचित्रकार्यदर्शनान्न तेन ब्रह्मभेदप्रसक्तिरिति दूषयति—न यत इति ।

किञ्च विश्वामित्रसौभर्यादेरेकैकस्यैव विचित्रकार्यस्रष्टृत्वस्य स्मृतिषु प्रसिद्धेर्न विचित्रकार्यं कर्तृत्वभेदनियतमित्याह—विश्वामित्रेति ।

'अचिन्त्यमव्यक्तमनन्तरूपम्' इत्यादिश्रुतित एव ब्रह्म नानात्वप्रसक्तिरिति शंकते—अनन्तेति । किमनन्तरूपमित्यादेर्ब्रह्मनानात्व एव तात्पर्यमुतान्यत्रेति विकल्प्य आद्ये तन्निषेधोऽनुपपन्न इत्याह—तत्किमित्यादिना । श्रुतितात्पर्यसिद्धस्य श्रुत्या निषेधे तयोः परस्परविरोधादुभयोरपि प्रामाण्यं न स्यादित्याह—अन्यथेति । षोडशिग्रहणवद्विकल्पेन विरोधपरिहारमाशंक्याह—विकल्प इति । पृथिव्याद्यन्तर्यामिण औपाधिकभेदाभिप्रायेणानन्तरूपमित्यादिश्रुतिः । नेह नानास्तीति श्रुतिस्तु स्वरूपैक्याभिप्रायेत्यविरोधमाशंक्य तर्ह्येवमेव जीवब्रह्मभेदाभेदश्रुत्योरप्यविरोधापत्तेर्जीवस्यापि ब्रह्मताभ्युपेयतामित्याह—एकस्मिन्निति । श्रुत्यर्थान्यथाकरणेन स्वयं नष्टः परान्नाशयतीत्यभिप्रेत्याह—अधमेति । नन्वेवमपि जीवब्रह्मणोः संसारित्वव्यवस्थार्थमात्यन्तिकभेद आवश्यक इति नेत्याह—हिरण्येति । हिरण्यकशिपुहन्तृत्वं नृसिंहस्यैव रावणहन्तृत्वं रामस्येति यथा व्यवस्थौपाधिकेन तथा जीवब्रह्मणोरपि संसारित्वादिव्यवस्थोपपत्तिरित्यर्थः ।

संसारोऽपि परस्यास्तु गुणः सङ्गरवत्तव ॥१०॥
अज्ञत्वमपि देहादेर्मालिन्यादस्तु भेदवत् ।
जीवानां चेश्वराभेदो नान्योऽतोऽस्तीति वाक्यतः ॥११॥
प्रतीयते ततो जीवब्रह्मणोर्न भवेद्भिदा ।
अतो जीवादिरूपेण परस्यानन्तता भवेत् ॥१२॥
अप्रसक्तनिषेधस्ते ध्रुवं तस्माद्भविष्यति ।
अश्रुतप्रतियोगित्वं कल्पनीयं परात्मनः ॥१३॥
वाक्यभेदोऽपि दुर्वारो निषेधव्यतिरेकतः ।
यच्चोक्तं गुणगुण्यादिभेदोऽत्र प्रतिषिध्यते ॥१४॥
न किञ्च नेति वाक्येनेत्येतत्तेऽत्यन्तदुर्वचम् ।
यतस्त्वया परं ब्रह्मानन्तसद्गुणमिष्यते ॥१५॥
अभेदेऽपि गुणित्वं चेत् पारिभाषिकमेव तत् ।
शरीरं च शरीरी च परमात्मेति तत्तथा ॥१६॥
तस्माद्यत्पञ्चपञ्चेति प्राणादि वियदादि च ।

---

निरवद्यत्वश्रुतिविरोधात्परस्य संसारोऽनुपपन्न इत्याशंक्य तव मते रावणयुद्धादिवत् सोऽपि गुणो भवत्वित्याह—संसारोऽपीति । एवं तर्हि नृसिंहादेरिव जीवस्य सवज्ञत्वं स्यादित्यत आह– अज्ञत्वमिति । यथा श्यामदर्पणादिसंबन्धादवदात्तेऽपि मुखे श्यामत्वादियोग एवमनादिमलिनदेहयोगादेव निरवद्येऽप्यज्ञत्वादि मालिन्यमभिन्ने भेदवदविरुद्धमित्यर्थः। जीवेश्वराभेदे मानाभावादुक्तविधया न तदभेदसिद्धिरित्याशंक्यासिद्ध्या दूषयति—जीवानामिति । अत एकस्मिन् वस्तुतोनानात्वायोगात् कल्पितनानात्वेनैवानन्ततया प्रतीयमानजीवाभेदपरैवानन्तरूपमिति श्रुतिरिति द्वितीयं कल्पं परिशेषयति – अत इति । ततश्च ब्रह्मनानात्वस्याप्रसक्तत्वादुक्तदोषस्तदवस्य इत्याह—अप्रसक्तेति । किं च ब्रह्मनानात्वनिषेधे ब्रह्मणोऽश्रुतप्रतियोगित्वं कल्प्यम् । किञ्चनेत्यस्य पृथङ्निषेधेन वाक्यभेदश्च स्यादित्याह—अश्रुतेति । निषेधव्यतिरेकत इति । निषेधभेदादित्यर्थः ।

ब्रह्मणो ज्ञानानन्दादिगुणेभ्यो भेदनिरासायेयं श्रुतिरिति नवीनोक्तमनूद्य निराकरोति—यच्चेत्यादिना । आदिपदेन शरीरशक्तिभेदो गृह्यते—पारिभाषिकमेवेति । अभेदे ब्रह्मणः स्वात्मानं प्रतीव ज्ञानादिकं प्रत्यपि गुणित्वानुपपत्तेरिति भावः ।—तथेति । पारिभाषिकमित्यर्थः नानाशब्दस्य धर्मपरत्वायोगा "यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठित" इति पूर्ववाक्ये प्रसक्तप्राणादयो वियदादयश्चात्र निषिध्यन्त इत्याह—तस्मादिति । किञ्चनेत्यादियोजनां नवीनोक्तार्थान्तरमपि निराकर्तुमनुवदति—यच्चेति ।

प्रस्तुतं तदनूद्यैव किञ्चनेति निवार्यते ॥१७॥
यच्चावोचद्विनार्थेऽपि नानाशब्दप्रसिद्धितः।
नेह नानेति वाक्येन ब्रह्माव्याप्यं निषिध्यते ॥१८॥

नानेत्यस्य विनार्थत्वाद्विनाभूतं निषिध्यते।
अविनाभूतमस्तीति सत्त्वैवार्थात्तु लभ्यते ॥१९॥

तन्न ब्रह्म विना भूतं खपुष्पसदृशं यतः।
विनाभूतनिषेधेऽपि विश्वसत्ता भवेत्कुतः ॥२०॥

असत्वेऽपि प्रपञ्चस्याविनाभावस्य संभवात्।
कालादौ दैशिकी व्याप्तिः कालिकी वा न सिद्ध्यति ॥२१॥

तस्मात् सर्वस्य जगतोऽधिष्ठाने परमात्मनि।
निषेधान्नेह नानेति मिथ्यात्वं तस्य सिद्ध्यति ॥२२॥

एवमन्यान्यपि वाक्यानि तत्र द्रष्टव्यानि।

मिथ्यात्वे भ्रमज्ञानस्य प्रमाणत्वोपपादनम्

किंचास्ति तावच्छुक्तौ रजतेच्छाजन्या प्रवृत्तिः सा चेष्टज्ञानसाध्या लाघवात्

---

विनञ्भ्यां नानाञौ न सहेति सूत्रे वि नञ् इत्येताभ्यां पृथग्भावरूपे असहार्थे ना नाञ् इत्येतौ प्रत्ययौ भवत इति स्मरणान्नानाशब्दस्य विनार्थत्वे नात्र ब्रह्मणा विनाभूतमव्याप्तं निषिध्यत इत्यर्थः। उक्तार्थे नवीनश्लोकमाह—नानेत्यस्येति। ब्रह्माव्याप्यस्यासत्वात् परमते तन्निषेधोऽनुपपन्न इत्यभिप्रेत्य दूषयति—तन्नेति। अविनाभूतमस्तीत्येतदपि दूषयति—विनाभूतेति। असत्वेऽपीति। अनिर्वचनीयत्वेऽपीत्यर्थः। किञ्च ब्रह्माव्याप्यस्यैव सत्वे परमते कालादेः सत्वं न स्यात् तस्यावृत्तिब्रह्मणा सह दैशिकव्याप्त्यभावात्कालादेः कालसंबन्धाभावेन तत्र वृत्यभावात् कालिकव्याप्त्यसंभवाच्चेत्याह—कालादाविति।

पराभिमतार्थं दूषयित्वा स्वाभिमतार्थमुपसंहरति—तस्मादिति। एतेन ब्रह्मणि प्रपञ्चनिषेधेऽपि न तन्मिथ्यात्वसिद्धिरन्यत्र सत्वोपपत्तेरिति नवीनोक्तं निरस्तम्। यस्मिन् पञ्चपञ्चजना इति पूर्ववाक्ये प्रपञ्चस्य ब्रह्मण्येव प्रतिष्ठितत्वोक्तेर्ब्रह्मणः सर्वोपादानत्वाच्च ततोऽन्यत्र प्रपंचस्य स्थित्यनुपपत्तेस्ततः प्रतिपन्नोपाधौ निषेधप्रतियोगित्वात्प्रपंचस्य मिथ्यात्वसिद्धिरिति भावः। तदुक्तम्—"नान्यत्र कारणात् कार्यं न चेत्तत्र त्वसद्भवेदि"ति। एवं श्रुतितः प्रपञ्चमिथ्यात्वं साधयित्वाऽनुमानेनापि तत्साधयितुं दृष्टान्तस्य शुक्तिरजतस्य मिथ्यात्वं निरूपयितुमुपक्रमते—

किञ्चेति। शुक्तौ रजतभेदाग्रहादेव रजतार्थिनः प्रवृत्तिरित्यख्यातिवाद्येकदेशिनस्तन्मतं दूषयति—सा चेति। गौरवादिति। इष्टग्रहस्यैव प्रवर्तकत्वे संभवति तद्भेदाग्रहा-

न तु भेदाग्रहसाध्या गौरवात् । ज्ञानं च स्वविषये प्रवर्तकमित्युक्तम् । ततो रजतप्रकाशः शुक्तिविषयः शुक्तौ प्रवर्तकत्वात् सम्मतवदिति शुक्तिरजतसंसर्गबुद्धिसिद्धिः ।

ननु भेदाग्रहात् विशिष्टज्ञानस्य लाघवात् कारणत्वमिति-रजतज्ञानस्य शुक्तिविषयत्वमिति । भेदाग्रहस्य प्रतिवन्धकाभावतया प्रवृत्तिं प्रत्यन्यथासिद्धत्वात् इष्टज्ञानस्यैव प्रवर्तकत्वात् । न तु तद्विशिष्टज्ञानस्य, गौरवात् । न च जनकज्ञानसमानकालीनस्य भेदग्रहस्याप्रतिबंधकत्वान्न भेदाग्रहः प्रतिबंधकाभाव इति वाच्यम् । भेदग्रहस्य प्रतिवद्धप्रवृत्तिविषयाभावविषयतया वाधवज्जनकाविरोधित्वेऽपि प्रतिबंधकत्वात् । सत्यप्रवृत्तौ विशिष्टज्ञानमपि विशेषकारणमिति विपरीतसमूहालंबनान्न युगपत्प्रवृत्तिनिवृत्त्यापातः ।

भ्रमे नैयायिकपक्षनिरासः

तच्च शुक्तिसंसृष्टरजतं मिथ्यैव ।

अत्र केचित्-शुक्तौ प्रतीयमान रजतं देशान्तरे सत् अत्र बाधात् असतो-

---

भावस्य प्रवर्तकत्वे गौरवादित्यर्थः । कथमेतावता भ्रांतिसिद्धिरित्यत आह—ज्ञानं चेति । ज्ञानस्य स्वविषय एव प्रवर्तकत्वाभावे पुरस्थितरजतज्ञानात् पृष्ठदेशस्थरजतेऽपि प्रवृत्तिः स्यादित्यादि शाब्दापरोक्ष उक्तम् । ततश्च रजतज्ञानस्य पुरोवर्तिवस्तुविषयत्वस्यावश्यकत्वाद्भ्रान्तिसिद्धिरित्यर्थः । एतेनेष्टज्ञानमेव प्रवर्तकं भेदाग्रहस्तु प्रवृत्तौ प्रतिवन्धकाभावतयैवोपयुज्यत इति वक्ष्यमाणमतमपि निरस्तमिति द्रष्टव्यम् ।

अत्र मणिकारकृतमख्यातिनिराकरणं निरोकरोति—नन्विति । अख्यातिमतेऽपीष्टज्ञानमेव प्रवर्तकं भेदाग्रहस्तु प्रतिवन्धकाभावतयाऽन्यथासिद्धत्वान्न प्रवृत्तौ हेतुरिति तन्मत एव लाघवमित्याह—भेदाग्रहस्येति । भेदाग्रहस्य कारणत्वेऽपि तस्य पृथक्कारणत्वेन ज्ञानकारणताग्राहकमानाविषयत्वान्नोक्तदोष इत्यपि द्रष्टव्यम् ।

ननु भेदग्रहस्य प्रतिबन्धकत्वे हि तदभावः कारणं स्यात्, तच्चायुक्तं इष्टग्रहं विना तद्भेदग्रहासंभवेन तस्य प्रवर्तकज्ञानसहचारित्वादिति नेत्याह—न चेति । भेदग्रहस्य प्रवर्तकाविरोधित्वेऽपि प्रवृत्तिविरोधितया प्रतिवन्धकत्वं सदृष्टन्तमाह—भेदग्रहस्येति । यथा वाधज्ञानं परामर्शाविरुद्धमपि ग्राह्याभावविषयतयाऽनुमितिं प्रतिवध्नाति तथा रजतभेदग्रहोऽपि प्रवृत्तिविषयरजततादात्म्याभावविषयतया प्रवृत्तिं प्रतिवध्नातीति तदभावोऽन्यथासिद्ध इत्यर्थः ।

ननु भेदाग्रहे सतीष्टज्ञानमात्रं प्रवर्तकं अनिष्टज्ञानमात्रं निवर्तकं चेदिमे रङ्गरजते इति विपरीतसमूहालम्बनाद्रंगे रजतभेदाग्रहात्प्रवृत्तिवद्रंगभेदाग्रहान्निवृत्तिरपि स्यादेव रजते रंगभेदाग्रहान्निवृत्तिवद् रजतभेदाग्रहात् प्रवृत्तिरपि स्यात् रंगस्य रजतस्य च

ऽभानादित्याहुः। तन्न, तद्ग्राहकेन्द्रियाभावात् चक्षुरन्वयव्यतिरेकानुविधानाच्चक्षुरेव ग्राहकमिति चेत्; न तस्य तेनासंसृष्टस्य तदग्राहकत्वात् विशिष्टप्रत्यक्षे हि विशेष्येन्द्रियसन्निकर्षवद्विशेषणेन्द्रियसन्निकर्षोऽपि कारणम्। सत्यपि पर्वतेन्द्रियसन्निकर्षादिकारणे तेन विना वह्निविशिष्टप्रत्यक्षानुदयात्। न च सत्यामपि विशिष्टप्रत्यक्षसामग्र्यामनुमितिस्तत्सामग्रीप्राबल्यादिति वाच्यम्। अनुमित्साविरहदशायां प्रत्यक्षसामग्र्या एव बलवत्त्वात्, अन्यथा त्वदभिमतसंशयोत्तरप्रत्यक्षाभावप्रसंगात् सिध्यभावघटितपक्षतायास्तत्रापि सत्त्वात्।

प्रकृतमानातिरिक्तमानाभावघटितायाः पर्वतेऽप्यसत्वात् विशेषणसन्नि-

---

स्वस्माद्भेदग्रहे भ्रान्तिप्रसंगादिति नेत्याह--सत्यप्रवृत्ताविति। प्रवृत्तिनिवृत्त्योरिष्टानिष्टज्ञाने सामान्यकारणे। सत्ययोः प्रवृत्तिनिवृत्योस्तु यत्सामान्यन्यायेन इष्टानिष्टविशिष्टज्ञाने विशेषकारणे। ततश्च विपरीतसमूहालम्बनादापाद्यमाने सत्ये प्रवृत्तिनिवृत्ती विशेषकारणाभावादेव न भवतः। ततश्चोक्तरीत्यैवाख्यातिर्निरसनीयेति भावः।

एवं भ्रान्तिं साधयित्वा तद्विषयं निरूपयितुमुपक्रमते—तच्चेति। भ्रान्तिविषयस्य रजतादेः ख्यातिबाधान्यथानुपपत्त्या देशान्तरे सत्त्वसिद्धेर्न मिथ्यात्वमित्यन्यथाख्यातिवादिमतमनुवदति--अत्र केचिदिति। असत्त्वे ख्यात्यनुपपत्तिवद्देशान्तरस्थत्वेऽपि तदनुपपत्तिस्तुल्येति दूषयति--तन्नेति। ग्राहकाभावोऽसिद्ध इति शङ्कते--चक्षुरन्वयेति। चक्षुषः प्राप्यकारित्वनियमाद्देशान्तरस्थेन प्राप्त्यभावात्तस्य न तद्ग्राहकतेत्याह--न तस्येति।

ननु जन्यविशिष्टप्रत्यक्षे विशेष्येन्द्रियसन्निकर्षो विशेषणज्ञानं च कारणम्। रजतादेश्च भ्रान्तौ विशेषणतया न तत्सन्निकर्षापेक्षेति नेत्याह—विशिष्टेति। कारणान्तरे सत्यपि विशेषणेन्द्रियसन्निकर्षाभावे विशिष्टप्रत्यक्षानुदयादिति व्यतिरेकमाह--सत्यपीति। पर्वते वह्निविशिष्टप्रत्यक्षाभावो न तत्सन्निकर्षविरहात् किन्तु बलवदनुमितिसामग्रीप्रतिबन्धादित्याशंक्य तथासति प्रत्यक्षसामग्र्या एव बलवत्त्वादनुमितिरेव न स्यादिति दूषयति—न चेत्यादिना। अनुमितिसामग्र्या बलवत्त्वे बाधकमाह—अन्यथेति। स्थाणुत्वव्याप्यवक्रकोटरादिमानयमिति त्वदभिमतविशेषदर्शनस्य परामर्शरूपतयाऽनुमितिसामग्रीत्वात् तदनन्तरं स्थाणुत्वानुमितिरेव स्यान्न प्रत्यक्षमित्यर्थः। तत्र पक्षताभावान्नानुमितिरित्याशंक्याह—सिद्ध्यभावेति।

ननु सिद्ध्यभावो न पक्षता किन्तु प्रकृतानुमानातिरिक्तमानाभावः स्थाणुत्वादौ च सन्निकृष्टेन्द्रियस्य सत्वान्न तत्र पक्षतेत्याशंक्य तर्हि विशेषणेन्द्रियसन्निकर्षस्याहेतुत्वे पर्वतादावपि वन्हिसाधकप्रत्यक्षसत्वात् पक्षता न स्यादित्याह—प्रकृतेति।

कर्षातिरिक्तसकलतत्कारणसत्त्वात्। अस्तु विशिष्टप्रमायां स हेतुः भ्रमस्तेन विनापीति चेत्; न, लाघवेन जन्यविशिष्टप्रत्यक्षत्वावच्छेदेनैव तज्जन्यत्वावधारणात्। तदभावेऽनुमितिवत् प्रत्यक्षमेव न स्यात्। यदीन्द्रियं रजतसन्निकृष्टं न स्यात् तर्हि प्रत्यक्षजनकं न स्यात् अन्यथा प्रमामपि जनयेदितीन्द्रियस्य प्रत्यक्षजनकमात्रस्यैव तद्विषयसन्निकृष्टत्वव्याप्त्यवधारणाच्च। अन्यथा सत्यप्रवृत्तावेव विशिष्टज्ञानं हेतुरिति जितमविवेकिना। एतेन दोषबलादसन्निकृष्टमपि भातीति निरस्तम्। क्लृप्तकारणं विना कार्यानुत्पत्तेः।

अन्यथा क्लृप्तकारणं विना दोषात् ज्ञानमिव प्रवृत्तिरेव ततोऽभ्युपेयतां किमलौकिकज्ञानेन पुरोवर्तिनि रजतं जानामीति व्यवहारस्याविवेकादप्युपपत्तेः।

अस्तु तर्हि दोष एव प्रत्यासत्तिरिति। न, प्रमाजनकजातीयस्यैव सन्निकर्षत्वात्। किं चैवमप्रमाया ज्ञानसामग्र्यतिरिक्तकारणाभावेनाप्रामाण्यस्य परतस्त्वमपि न स्यात्; दोषस्य प्रत्यासत्तित्वेनैव जनकतया सामग्रीभेदाभावात्। न च दोषत्वेनापि कारणत्वमिति वाच्यम् दोषान्वयव्यतिरेकयोरन्यथासिद्धत्वेन

---

किञ्च विशेषणसन्निकर्षस्याकारणत्वे वह्न्यनुमित्यनन्तरं वा तत्प्रत्यक्षं स्यादित्यपि द्रष्टव्यम्। विशेषणेन्द्रियसन्निकर्षस्य विशिष्टप्रत्यक्षप्रमाहेतुत्वमङ्गीकृत्य भ्रमस्तेन विनापि सिध्यतीति शंकते—अस्त्विति। लाघवादितर्कानुगृहीतकारणताग्राहकमानेन जन्यविशिष्टप्रत्यक्षमात्रे तद्विषयेन्द्रियसन्निकर्षस्य कारणत्वावधारणादसन्निकृष्टस्य न प्रत्यक्षभ्रमविषयतेत्याह—जन्यविशिष्टेत्यादिना। अविवेकिनेति। अख्यातिवादिनेत्यर्थः। विशेषणसन्निकर्षाभावेऽपि दोषबलाद् भ्रमोत्पत्तिरिति केषाञ्चिदभ्युपगममुक्तन्यायेन निराकरोति—एतेनेति। अलौकिकेति। व्यधिकरणप्रकारकज्ञानेनेत्यर्थः। अलौकिकज्ञानाभावे पुरोवर्तिनि रजतं जानामीत्यादिव्यवहारः कथमित्यत आह—पुरोवर्तिनीति।

देशान्तरस्थरजतादौ दोष एवेन्द्रियप्रत्यासत्तिरिति शंकते—अस्त्विति। प्रत्यासत्तिविधया प्रमाजनकजातीयस्यैव विशेष्यांशे सन्निकर्षत्वदर्शनाद् विशेषणांशेऽपि तस्यैव सन्निकर्षत्वं वाच्यम्। दोषस्तु न तथेति स न सन्निकर्ष इत्याह—न प्रमेति। किञ्च दोषस्य प्रत्यासत्तिविधया भ्रमहेतुत्वे प्रमायामपि प्रत्यासत्तिजन्यत्वेन भ्रान्तेः प्रमाऽप्रमासाधारणकारणमात्रजन्यत्वेन स्वतस्त्वमेव स्यान्न परतस्त्वमित्यपसिद्धान्तापात इत्याह—किञ्चेति। भ्रमस्य दोषत्वेनापि दोषजन्यत्वात् परतस्त्वमित्याशंक्याह—न चेति। अन्यथासिद्धत्वेनेति। प्रत्यासत्तिविधयेत्यर्थः।

न च भ्रमस्य भ्रमत्वानुपपत्त्या दोषत्वेनापि दोषजन्यत्वग्रह इति वाच्यम्। तद्विषयस्य बाधयोग्यत्वेनैव तदुपपत्तेरिति भावः। किञ्च दण्डीत्यादिद्रव्यविशिष्टप्रत्यक्षे

तथा कारणत्वग्राहकाभावात् । द्रव्यविशिष्टप्रत्यक्षस्य विशेषणेन्द्रियसंयोगजन्यत्वनियमाच्च ।

किञ्च दोषोऽपि शुक्तिरजतवैशिष्ट्यांशज्ञान एव कारणं, तस्य तेन विनाऽभावात् । न तु रजतांशज्ञानेऽपि तेन विनापीदंतांशज्ञानवत्तत्सत्वात् तस्योभयांशकारणत्वकल्पनागौरवात् प्रमाणाभावाच्च । यथार्थज्ञानस्य दोषजन्यत्वाभावाच्च ततस्तज्ज्ञानाजनकत्वान्न दोषः प्रत्यासत्तिः ।

रजतस्मृतिसंस्कारयोः प्रत्यासत्तित्वनिरासः

अथ किं प्रत्यासत्यन्तरचिन्तया ? अनुभूतरजतस्यैव भ्रमोदयात् संस्कारः स्मृतिर्वा प्रत्यासत्तिरिति चेत् । न, ज्ञानप्रत्यासत्तेर्निरस्तत्वात् । यद्येन रूपेणानुभूतं तत्रैव तद्विशिष्टज्ञाने तस्य प्रत्यासत्तित्वाच्च । नापीन्द्रियसंबद्धविशेषणता, भूतलेऽभाववच्छुक्तौ रजतस्याभावात् । तत्सत्वे वाऽभावज्ञानस्येव रजतज्ञानस्य प्रमात्वापातात् ।

किञ्च यदि रजतज्ञानविषयो रजतं पुरोवर्तिनि न स्यात् तर्हि रजतार्थी ततः पुरोवर्तिनि न प्रवर्तेत ज्ञानस्य स्वविषय एव प्रवर्तकत्वात् । शुक्तिरपि

---

विशेषणेन्द्रियसंयोगस्यैव हेतुत्वावधारणाद् देशान्तरीयरजतादौ चेन्द्रियासंयोगान्न तद्विशिष्टप्रत्यक्षसिद्धिरित्याह—द्रव्येति ।

किञ्चेदमंशप्रत्यक्षे यथा दोषो न हेतुस्तथाऽन्यत्र रजतांशप्रत्यक्षेऽपि तस्याहेतुत्वाद् भ्रमेऽपि रजतांशप्रत्यक्षे न स हेतुः व्यभिचारात् किन्तु शुक्तिरजततादात्म्यांशज्ञान एव स हेतुः लाघवादित्याह—किञ्चेति । परमते रजतांशज्ञानस्य यथार्थत्वाच्च न दोषजन्यतेत्याह—यथार्थेति । दोषस्य रजतांशज्ञानाहेतुत्वसाधनफलमाह – तत इति ।

दण्डययमासीदित्यादाविव व्यवहितरजतादौ ज्ञानादिरेव प्रत्यासत्तिरिति शंकते—अथेति । शाब्दापरोक्षवादे ज्ञानादेः प्रत्यासत्तित्वनिराकरणान्न तस्य कुत्रापि प्रत्यासत्तितेत्याह—न ज्ञानेति ।

किञ्च यद्यत्र विशिष्यानुभूतं तत्रैव तद्विशिष्टज्ञाने संस्कारादिकं प्रत्यासत्तिरन्यथा यस्मिन्दण्डवति देवदत्ते पूर्वं दण्डो नानुभूतस्तत्रैव समयान्तरे दण्डमात्रस्मृतिमतो दण्डयमित्यादिविशिष्टज्ञानप्रसङ्गात् । ततश्च तद्वैशिष्ट्यस्य पुरोवर्तिनि पूर्वमननुभूतत्वान्न तत्र संस्कारादिकं प्रत्यासत्तिरित्यभिप्रेत्याह—यद्येनेति ।

ननु विशेषणविशेष्यभावसन्निकर्षोऽस्त्वित्याशङ्क्याह—नापीति । अन्यथाख्यातिमतेऽपि रजतज्ञानात् पुरोवर्तिनि प्रवृत्तिर्न स्यात् तन्मते तद्विषयस्य पुरोवर्तित्वाभावादित्याह—किं चेति । रजतभ्रमस्य शुक्तिविषयत्वात् ततः शुक्तौ प्रवृत्तिर्युक्तेति शङ्कते – शुक्तिरपीति । रजतनिरूपितज्ञानांशस्य शुक्तिविषयत्वमयुक्तम् अनुभवविरोधादित्याह—

रजतज्ञानविषय इति चेत् न, रजताकारज्ञानांशस्य तदविषयत्वात्। तदाहुः--न ह्यन्याकारज्ञानमन्यालंबनमिति तथापि ज्ञानमेकमिति चेत् तर्हि रजतारजतगोचर-समूहालम्बनाद्रजतार्थ्यरजते प्रवर्तेत। तस्याप्येकज्ञानत्वात्।

भेदग्रहः प्रतिबन्धकश्चेत् तर्हि तदभावेनैवालं किं भ्रान्त्या। अत एव ज्ञानं यद्विशेष्यकं तत्रैव प्रवर्तकमिति निरस्तं लाघवेन ज्ञानस्य स्वविषय एव प्रवृत्तिज-नकत्वाच्च। तस्मात्कारणाभावात् पुरोदेशे प्रवृत्त्यनुपपत्तेश्च नान्यथाख्यातिः। एवं शुक्तिरजतादिवैशिष्ट्यस्यासतः प्रत्यक्षत्वायोगाच्च नान्यथाख्यातिः। न हि शुक्तौ रजताभाववत्यां तत्तादात्म्यं सद्भवति। तथा सति बाधायोगाच्च। न च रजततादात्म्यं रजतत्वसमवायो वा यौ रजते वर्तेते तावेवात्रापि प्रतीयेते इति नासत्ख्यातिरिति वाच्यम्। शुक्तिधर्मिकरजतरजतत्वप्रतियोगिकयोस्तयोः क्वचिदप्यसत्त्वात्। अभेदानुभवो हि स्वप्रकारीभूतधर्मद्वयाश्रयाभेदं विषयी-करोति धर्मौ चात्रेदंत्वरजतत्वे तदाश्रयौ च शुक्तिरजते। तदुभयप्रतियोगिका-भेदश्च भ्रमविषयो न क्वचिदस्ति। एवं शुक्तिरजतत्वसमवायो विशिष्टज्ञानविषयो न क्वचिदस्ति सत्वे वा प्रकृत एव स स्यादिति न भ्रमः।

प्रकारान्तरेणान्यथाख्यातिसमर्थनम्

यत्त्विदंत्वविशिष्टधर्मिनिरूपितो रजताभेदो रजतत्वसमवायो वा भ्रम-

---

रजतेति। रजतज्ञानस्य पुरोवर्तिविषयेदमाकारज्ञानाभिन्नत्वात् ततः पुरोवर्तिनि प्रवृत्ति-रिति शंकते—तथापीति। अतिप्रसङ्गेन दूषयति--तर्हीति।

रजतारजतसमूहालम्बने रजतादरजते भेदग्रहान्नारजते ततः प्रवृत्तिरित्याशंक्य तर्हि भेदाग्रहस्य प्रवृत्ताववश्यापेक्षितत्वात् तत एव तदुपपत्तौ भ्रान्तिर्न कल्पनीयेत्याह—भेदग्रह इत्यादिना। उक्तातिप्रसङ्गादेव ज्ञानं स्वविशेष्ये प्रवर्तयतीत्येतदप्ययुक्तमित्याह—अत एवेति। दोषान्तरमाह—लाघवेनेति। प्रवर्तकज्ञानकारणाभावाच्च विषयस्य पुरोव-र्तित्वाभावात् तत्र प्रवृत्त्यनुपपत्तेश्चान्यथाख्यातिरयुक्तेत्याह—तस्मादिति।

किञ्च परमते शुक्तिरजततादात्म्यस्यासत्वादसतः प्रत्यक्षत्वायोगान्नान्यथाख्याति-रित्याह—एवमिति। शुक्तावारोप्यमाणस्य रजततादात्म्यस्य रजतत्वसमवायस्य वा परमार्थरजतेऽसत्त्वात्परमते नासतः प्रत्यक्षतेत्याशङ्क्य तथापि पुरोवर्तिधर्मिकस्येतरस्या-सत्त्वात्तद्विषयभ्रमस्यासद्विषयत्वमावश्यकमिति दूषयति – न चेत्यादिना। शुक्तिधर्मिकस्य रजततादात्म्यस्य रजतत्वसमवायस्य चासत्वमुपपादयति—अभेदानुभवो हीत्यादिना।

नन्विदंत्वविशिष्टधर्मिकं रजततादात्म्यादिकं भ्रमविषयः वास्तवरजतमपीदं-त्वविशिष्टमेवेति तद्धर्मिकरजततादात्म्यादेस्तत्र सत्वात् भ्रमो नासद्विषयक इति चोद्यम-

विषयः तौ चान्यत्र वर्तेते। रजतेऽपीदन्त्वस्य सत्त्वादिति। तन्न। किं भ्रमविषयीभूतेदन्त्वविशिष्टधर्मी रजतमेव तर्हि न शुक्तौ प्रवर्तेत तस्या भ्रमाविषयत्वात्। शुक्तिरेव चेत् स एव दोषः।

किञ्च विशिष्टज्ञानं विशिष्टं विषयीकरोति विशिष्टं च तव विशेषणं विशेष्यं तदुभयसंबन्धश्चेति कथं नासत्ख्यातिः?

यदपि विशेष्यावृत्तिप्रकारकं ज्ञानं भ्रम इति सन्मात्रविषयत्वेऽपि भ्रान्तित्वोपपत्तिरिति। तदप्युक्तविधया निरस्तं वैशिष्ट्यभानाभावे तत्प्रकारकत्वानिर्वाहाच्च।

न च विशेषणताविशेषः प्रकारत्वं, तस्यैव द्रव्यगुणादिसाधारणस्य दुर्निरूपत्वात्। एतेन जात्यादिविशिष्टप्रत्यक्षे न क्वापि विशेषणविशेष्यसंबन्धो विषयः अगृहीतासंसर्गधर्मधर्मिविषयकैकज्ञानस्य विशिष्टज्ञानत्वादिति नासत्ख्यातिरिति प्रत्युक्तं तथा सति भेदाग्रहात् प्रवृत्तिरिति अन्यथाख्यातिविलोपप्रसंगात्।

सदुपरक्तासत्प्रतीतिनिरासः

अथ सदुपरक्तमसत्प्रतीयतां तावतैवासत्ख्यातिवैलक्षण्यादिति। न। असतः इन्द्रियसंबन्धाभावात् संविदभिन्नत्वायोगाच्च प्रत्यक्षत्वानुपपत्तेः। असतो निःस्व-

---

नुवदति—यस्त्विति। रजतस्यापीदंत्वविशिष्टत्वेऽपि किं तदेव भ्रमेऽपीदंत्वविशिष्टतया प्रतीयते उत शुक्तिः आद्ये शुक्तौ प्रवृत्तिर्न स्यादिति दूषयति—तन्नेति। द्वितीये असत्ख्यातिप्रसंगस्तदवस्थ इत्याह—शुक्तिरेवेति। परमते विशिष्टज्ञानविषयपर्यालोचनयाप्युक्तदोषो दुर्निवार इत्याह—किञ्चेति। विशेष्यावृत्तिप्रकारकज्ञानस्यैव भ्रमत्वान्न तत्र वैशिष्ट्यभानमिति केन चिदुक्तमनूद्य निराकरोति—यदपीत्यादिना। उक्तविधयेति। विशिष्टप्रत्ययानुपपत्तेरित्यर्थः। किं च भासमानवैशिष्ट्यप्रतियोगिन एव प्रकारत्वाद् वैशिष्ट्यभानाभावे सप्रकारकत्वमेव न स्यादित्याह—वैशिष्ट्येति।

वैशिष्ट्यभानाघटितप्रकारत्वं निराकरोति—न चेति। विशेषः किं जातिरूप उपाधिरूपो वोभयथापि दुर्निरूप इत्यभिप्रेत्याह—तस्येति। विशिष्टप्रमाया अपि विशेषणविशेष्यवैशिष्ट्याविषयत्वात् भ्रमस्यापि न तद्विषयता। न चैवं विशिष्टज्ञानत्वानुपपत्तिस्तस्यान्यथाप्युपपत्तेरित्यन्यथाख्यात्येकदेशिनस्तन्मतं निराकरोति—एतेनेति। अत्र प्रवर्तकज्ञानस्यासंसर्गाग्रहघटिततया अख्यातितो न विशेष इत्याह—तथा सतीति। रजतस्य तद्वैशिष्ट्यस्य चासत्वेऽपि नासत्ख्यातिमतापातःतन्मते भ्रमविषयस्य सर्वस्यासत्वादत्र तदभावादिति शंकते—अथेति। परमते स्वमते चासतः प्रत्यक्षत्वायोगान्न तस्य भ्रमगोचरतेत्याह—नासत इति। असतः सदुपरागोऽप्ययुक्त इत्याह—असत इति। भ्रम-

**रूपत्वेन सदुपरक्तत्वायोगाच्च। एवं समारोप्यस्य देशान्तरे सत्वे प्रमाणाभावादपि न सा। भ्रान्त्या पुरोदेशसत्त्वस्यैव विषयीकरणात् बाधेनापि तत्रासत्वस्यैव प्रतीतेः।**

**न च भ्रमानुपपत्तिस्तत्र मानं प्रमितिपूर्वकत्वादारोपस्येति वाच्यम्। अन्वयव्यतिरेकाभ्यां हि पूर्वदर्शनं भ्रमानुकूलं न तु प्रमैव तद्रूपेणैवानुकूलत्वे गौरवात् मानाभावाच्च।**

पुनरपि पूर्वविषयसत्वमावश्यकमिति शंकापरिहारौ।

अथ **पूर्वदर्शनमपि विषयस्यान्यत्रासत्वे नानुकूलं समानविषयस्यैवानुकूलत्वात्। न च विशेषणज्ञानादिकं भिन्नविषयमपि विशिष्टज्ञानादिजनकमिति वाच्यम्। तत्र हि साक्षात्कारणम् अत्र तु संस्कारः। संस्कारश्च स्वविषय एव कार्यमुत्पादयति। विशेषणस्यापि विशिष्टप्रत्यक्षविषयत्वाच्चेति चेत्। न। व्याप्तिसंस्कारस्य स्वविषयजातीयवह्न्यनुमितिजनकत्वात्**

---

विषयरजतादेर्देशान्तरसत्त्वे बाधकमुक्त्वा साधकमपि नेत्याह—एवमिति। सा अन्यथाख्यातिरित्यर्थः।

किमारोप्यस्य देशान्तरे सत्त्वे भ्रांतिर्मानं, बाधो वा, भ्रान्त्यनुपपत्तिर्वा, बाधानुपपत्तिर्वा? नाद्य इत्याह—भ्रान्त्येति। द्वितीयं दूषयति—बाधेनेति। तत्रेति। पुरोदेश इत्यर्थः। तृतीयं निराकरोति—न चेति। अनुभूतरजतस्यैव रजतभ्रमोदयात् तदनुभवमात्रं भ्रमेऽपेक्ष्यते अनुभवमात्रं च न विषयसत्तामपेक्षत इति दूषयति—अन्वयेति।

पूर्वानुभवोऽपि स्वसमानविषयभ्रमं प्रत्येव हेतुरिति भ्रमविषयस्यान्यत्र सत्त्वसिद्धिरिति शंकते—अथेति।

ननु ज्ञानं स्वसमानविषयज्ञानं प्रत्येव हेतुरिति न नियमः विशेषणज्ञानात् विशिष्टज्ञानस्य धूमज्ञानाद्वह्निज्ञानस्य दर्शनादित्याशंक्य संस्कारद्वारा ज्ञानहेतोः स्मृतिजननवत्स्वसमानविषयज्ञानहेतुत्वं नियतमिति परिहरति—न च विशेषणेत्यादिना। विशिष्टज्ञानहेतोर्विशेषणज्ञानस्यापि तत्समानविषयत्वमस्तीत्याह—विशेषणस्येति। स्वमतेन परिहरति—न व्याप्तीति। लिङ्गदर्शनव्याप्तिसंस्काराभ्यां ह्यनुमितिर्भवति। न तु व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपपरामर्शोऽनुमितिहेतुर्मानाभावात्तस्मिन् सति पक्षताऽभावेनानुमित्ययोगाच्च। तथा हि - व्याप्तिर्धूमस्य वह्निसामानाधिकरण्यविशेषस्ततश्च पर्वतत्वस्य तद्विशिष्टधूमसामानाधिकरण्यविषयपरामर्शे वह्निधूमपर्वतत्वादीनां सामानाधिकरण्यस्फुरणेनानुमितिविषयस्य पर्वतत्ववह्निसामानाधिकरण्यस्य तत्रैव सिद्धत्वान्न पक्षता। अतो व्याप्तिसंस्कारसहितलिङ्गदर्शनमेवानुमतिहेतुस्तदुक्तं टीकाकृता—दृश्यते हि लिङ्गदर्शनसंस्कारयोः संभूय लिङ्गिज्ञानोत्पादनमिति। तथा च सामान्यलक्षणप्रत्यासत्त्यभावात् व्याप्तिसंस्कारजन्यानुमितेः ततो भिन्नविषयत्वान्नोक्त-

तव मते चारोप्यस्मृतिरेव विशेषणज्ञानत्वेन हेतुः सा च रजतस्यात्रैवोत्पत्तावप्युपपन्ना। नापि बाधानुपपत्तिरारोप्यस्य देशान्तरसत्वे प्रमाणम्। बाधविषयो ह्यभावो ध्वंसोऽत्यन्ताभावो वा? उभयथापीह नष्टघटवन्नदेशान्तरसत्वं प्रतियोगिनः।

ननु क्वचित्प्रतियोगिनः सत्त्वमत्यन्ताभावोऽपेक्षते तत्सत्वं च तत्र विरुद्धमिति अन्यत्र तदिति चेत्। न, भूतलस्थघटस्य तत्रैव समयान्तरेऽत्यन्ताभाववद्रजताधिकरणेऽपि तदत्यन्ताभावेऽविरोधात्। घटः स्वात्यन्ताभाववद्देशसंयोगी रजतं च तदात्मकमिति विशेषोऽकिंचित्कर एव घटादेरप्युत्पत्तिपूर्वं मृदादावत्यन्ताभाव इत्युक्तम्।

नन्वत्र प्रतीतिकालेऽपि तदत्यन्ताभावोऽस्ति। अत्र कदापि रजतं नास्तीति प्रतीतेरिति चेत्। तत्किमिदं रजतमिति नास्ति तदभेदानुभवः? स मिथ्यानुभव

---

नियम इत्यर्थः।

किञ्चैवमपि परमते तत्रैवोत्पन्नस्यापि रजतस्य सामान्यलक्षणप्रत्यासत्त्या पूर्वं ज्ञातुं शक्यत्वान्न पूर्वानुभवस्मृतिविषयस्य देशान्तरसत्त्वसिद्धिरित्यभिप्रेत्याह—तव मते चेति। चतुर्थमपवदति—नापीति। इह विनष्टघटवदिति। यथोत्पत्तिदेशे एव विनष्टस्य घटस्य तद्देशीयध्वंसात्यन्ताभावप्रतियोगिनो न देशान्तरसत्वं तद्वद्रजतस्यापि देशान्तरसत्वाभावे [पि] ध्वंसस्य वाऽत्यन्ताभावस्य वा पुरोदेशे संभवाद्बाधोऽन्यथाऽप्युपपन्न इत्यर्थः। अत्यन्ताभावप्रतियोगिनोः सहावस्थानविरोधाद्देशान्तरे प्रतियोगिसत्त्वसिद्धिरिति शङ्कते—नन्विति। सामयिकात्यन्ताभावस्य समयभेदेन प्रतियोगिसामानाधिकरण्यस्य दर्शनान्न विरोध इति परिहरति—न भूतलेति। यद्यत्र संयोगितया वर्तते तस्य तत्र समयान्तरेऽत्यन्ताभावोऽस्तु रजतं तु शुक्तौ न संयोगितया वर्तत इति वैषम्यमाशंक्याह—घट इति। अकिंचित्कर इति संयोगिनीव समवायिन्यपि मानबाधात् सामयिकात्यन्ताभावोपपत्तेरिति भावः। एतच्च प्रागभावखण्डने उपपादितमित्याह—घटादेरपीति।

बाधप्रत्ययेन शुक्तौ त्रैकालिकरजताभावप्रतीतेः रजतस्य तत्रावस्थानायोगेन देशान्तसत्त्वसिद्धिरिति शङ्कते—नन्वत्रेति। शुक्तौ रजतानुभवविरोधान्न तस्य त्रैकालिकाभावसिद्धिरित्याह—तत्किमिति। रजतानुभवस्य मिथ्यानुभवत्वात् त्रैकालिकरजताभावस्तत्र न विरुद्ध इति शङ्कते—स मिथ्येति।

किं मिथ्यानुभवत्वमन्यथाख्यातित्वमुत स्वसमानकालीनस्वसमानाधिकरणात्यन्ताभावप्रतियोगिविषयकानुभवत्वं? आद्ये शुक्तौ त्रैकालिकरजताभावसिद्धौ तत्प्रतियोगिनो देशान्तरसत्वसिद्ध्या तदनुभवस्यान्यथाख्यातिरूपमिथ्यानुभवत्वसिद्धिः। तत्सिद्धौ च त्रैकालिकाभावसिद्धिरिति परस्पराश्रय इत्याह—मिथ्यानुभवत्वमिति।

इति चेत् मिथ्यानुभवत्वं यद्यन्यथाख्यातित्वं तर्ह्यन्योन्याश्रयः। रजतदेशान्तरीयत्वनिश्चयस्यानुभवमिथ्यात्वाधीनत्वात् स्वसमानकालीनस्वसमानाधिकरणात्यंताभावप्रतियोगिविषयानुभवत्वलक्षणमिथ्यानुभवत्वं चैककालीनोभयसाधकमिति न देशान्तरे प्रतियोगिसिद्धिः। तस्माद्रजतभ्रमो न देशान्तरीयविषयः रजतप्रत्यक्षत्वात् रजतज्ञानवत्। विशेष्याभिन्नरजतविषय इति वा साध्यम्। अन्यथा तव रजतज्ञानाच्छुक्तौ प्रवृतिरेव न स्यात् अन्यज्ञानादन्यत्राप्रवृत्तेरित्युक्तम्।

यत्तु शुक्तौ रजतार्थिप्रवृत्तिरिष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्येत्यनुमानं परस्य, तदस्माकं न प्रतिकूलम्।

तस्मात्तवान्यथाख्यातिरन्यथाख्यातिरेव सा।
विदुषोऽपि हि किं कुर्यास्त्वमीशे विषमेक्षणे॥

सत्ख्यातिनिरूपणं निरासश्च

अस्तु तर्हि शुक्त्यभिन्नं रजतं सदेव सदिदं रजतमित्यनुभवात्। न च बाधधीविरोधः सदिदं रजतमित्यनुभवबाधकप्रत्ययाभ्यां सत एव बाध इत्यङ्गीकारे बाधकाभावात् तदुत्पत्तिश्च रजतान्तरवत् मूलकारणाद् दृष्टशुक्तेर्वा। न चैवं सर्वोपलम्भप्रसङ्गः, द्वित्वादिवच्चेतनधर्महेतुकतया व्यवस्थितोपलम्भसंभवात्।

---

द्वितीयेऽभावप्रतियोगिनोः सहावस्थानस्यावश्यकत्वान्न देशान्तरे प्रतियोगिसत्त्वसिद्धिरित्याह— स्वसमानेति। तर्कितेऽर्थे प्रयुङ्क्ते—तस्मादिति। रजतज्ञानवदिति। रजतप्रत्यक्षप्रमावदित्यर्थः। परोक्तभ्रांतिसाधकानुमानं सिद्धान्तिनं प्रति सिद्धसाधनमित्याह — यत्त्वित्यादिना। परस्यान्यथाख्यात्यभ्युपगमोऽज्ञानमूल एवेत्याहश्लोकेन—तस्मादिति। अन्यताख्यातिरेवेति। विदुषोऽपि तवाज्ञानगमकत्वादपख्यातिरेवेत्यर्थः। अयं दोषस्त्वीश्वरानुग्रहाभावादेव ततस्तत्परिहारोऽशक्य इत्यभिप्रेत्याह — कि कुर्या इति।

भ्रान्तिविषयरजतस्य देशान्तरादौ सत्वासंभवेऽपि शुक्तावेव सत्वमस्त्विति सत्ख्यातिम मनुवदति—अस्त्विति। बाधविरोधेन स चानुभवो भ्रम इत्याशंक्य कालभेदेनैकस्य सदसत्वसंभवान्नियामकाभावादुभयमपि मानमेवेत्याह—न चेत्यादिना। शुक्तौ रजतोत्पत्तिकारणाभावात् रजतसत्त्वासंभवमाशंक्याह—तदुत्पत्तिश्चेति। मूलकारणादिति परमाणुभ्यः प्रकृतेः प्रकृतेर्वेत्यर्थः। रजतस्य सत्त्वे घटादितुल्यत्वात् सर्वोपलम्भः स्यादित्यत आह—न चैवमिति। चेतनधर्महेतुकतयेति। कृत्यजनकज्ञानहेतुकतयेत्यर्थः। तच्च ज्ञानं द्वित्वादावपेक्षाबुद्धिः, रजतादाविदमाकारज्ञानमिति घटादितो वैषम्यादिति भावः। उक्तविशेषानभ्युपगमे सिद्धान्तेऽपि घटादिवदनिर्वचनीयत्वाविशेषात् सर्वोपलम्भः स्यादित्याह—अन्यथेति। तर्हि येन दृष्टं रजतं तस्य दोषापगमेऽपि तदुपलम्भः

अन्यथा सिद्धान्तेऽपि स दोषस्तदवस्थः। न चैकस्यापि सर्वदोपलम्भप्रसंगः सर्वदा तदसत्वात्। तदभावोऽपि कालात्कारणनाशाद्वा भवति। कालोऽपि द्रव्यविनाशे हेतुः। कालविशेषे जन्तुविशेषनाशदर्शनात्। तस्मात् सदेव तद्रजतमिति।

तन्न। भ्रमविषयशुक्तिस्तत्काले तद्रजतात्यन्ताभाववती शुक्तित्वात् शुक्त्यन्तरवत्। भ्रमविषयरजतं वा भ्रमविषयशुक्तिनिष्ठात्यन्ताभावप्रतियोगि रजतत्वात् रजतान्तरवत्। विरुद्धयोर्वास्तवाभेदायोगात्। किञ्चासद्रजतमन्वभूवं मिथ्यारजतमभादित्याद्यनुभवात् प्रतीतिकालेऽपि शुक्तेररजतात्मकत्वमुपेयम्।

न च सदनुभवविरोधः, सद्विलक्षणस्यापि सत्तादात्म्यात् मृद्घट इत्यनुभववत्तदुपपत्तेः। नहि सदनुभवोऽधिष्ठानसत्तातिरिक्तत्वमपि तत्सत्ताया विषयीकरोति, तत्कालीनतदभावबुद्धेस्तु न कथञ्चिदप्यन्यथागतिः। प्रतीतरजतस्यैव तदानीमभावप्रतीतेः।

सत एव बाध इत्यभिमाननिराकरणम्

यत्तु सतो बाध इति। तन्न। बाधो हि तव मते ग्राह्याभावप्रमैव मिथ्यात्वनिश्चयाविद्यानिवृत्योरभावात्। स चाभावः किं ज्ञानेनैव जन्यते उतान्यतः? नाद्यः, ज्ञानस्य तदविषयत्वप्रसंगात् स्वविषयनिवर्तकत्वेऽतिप्रसंगात्। न द्वितीयः,

---

स्यात् दोषस्य तदुपलम्भहेतुत्वादित्याशंक्य तदा तस्य नष्टत्वान्नोपलम्भ इत्याह—न चैकस्येति।

ननु कारणाभावात् तन्नाश एवायुक्त इति नेत्याह—तदभावोऽपीति। कालविशेष इति। हेमन्तादिकाले मशकादिनाशदर्शनादित्यर्थः।

भ्रान्तिकालेऽपि शुक्तौ रजतात्यन्ताभावं साधयन् तस्य तदा तत्सत्तां निराकरोति—तन्नेत्यादिना। अत्यन्ताभाववतीत्यन्योन्याभावस्याप्युपलक्षणम्। फलितमाह—विरुद्धयोरिति।

वस्तुतस्तदत्यन्ताभाववतस्तदाश्रयत्वायोगाच्चेत्यपि द्रष्टव्यम्। रजतसत्वे युक्तिबाधमुक्त्वाऽनुभवविरोधमप्याह—किञ्चेति। उक्तं सर्वं प्रथमभावि सदनुभवाबाधितमित्याशंक्य तस्यान्यथासिद्धतया दुर्बलत्वान्न बाधकतेत्याह—न चेत्यादिना।

नेदं रजतमित्यादिबुद्धेरप्यन्यथासिद्धत्वान्न बाधकतेत्याशंक्याह—तत्कालीनेति। देशान्तरीयरजताभावविषयतयाऽन्यथागतिमाशंक्य तद्रजतमभात्तदिदं न तदत्र नेत्येव प्रतीतेर्मैवमित्याह—प्रतीतेति।

सतोऽपि बाधःबाधकाभावादित्युक्तमनूद्य दूषयति—यत्त्वित्यादिना। ग्राह्याभावः किं ध्वंसोऽत्यन्ताभावो वा? आद्येऽपीद वक्तव्यमित्याह—स चेति। ज्ञानेनेत्यत्रापि किं बाधकज्ञानेन भ्रान्तिज्ञानेन वा शुक्तिज्ञानेन वा? आद्ये ग्राह्याभावस्य बाधोत्तरभावितया तद्विषयता न स्यादित्याह—नाद्य इति। द्वितीये दोषमाह—स्वविषयेति। अन्यत इति पक्षं

घटाद्यभावज्ञानस्येव रजताभावज्ञानस्यापि बाधत्वप्रसिद्ध्यनुपपत्तेः। अत्यन्ताभावस्य जन्यत्वाभावाच्च। अत एव शुक्तिज्ञानमेव बाधकमिति निरस्तम् उपादानज्ञानस्य सत्यकार्यनिर्वर्तकत्वेऽतिप्रसङ्गाच्च। रजतस्य बाध्यत्वे बाधायोग्यत्वाभावात् न सत्यत्वमपि।

न च न बाधायोग्यत्वं सत्वम्। किन्तु तत्स्वरूपमिति वाच्यम्। बाधयोग्यस्वरूपे सत्संज्ञाया अप्रतिकूलत्वात्।

एवं पुरुषभेदेनैकस्मिन् भ्रमभेदे एकस्य वस्तुनः पारमार्थिकविरुद्धानेकाकारानुपपत्तिश्च। अन्यत्र क्लृप्तरजतकारणं विना तदनुपपत्तेश्च।

न च मूलकारणमस्तीति वाच्यम्। परमाणुप्रकृत्योर्निरस्तत्वात् तयोर्विजातीयाभिन्नकार्यानुत्पादकत्वाच्च। अविद्या तु तथैव। दोषस्तु नोपादानम्। न च चेतनधर्मजन्यत्वाद्व्यवस्थयोपलंभः घटादेरपि कुलालातिरिक्तप्रत्यक्षाविषयत्वप्रसंगात्। अस्मन्मते त्वनुपलम्भे गतिर्वक्ष्यते।

तस्मान्न भ्रमविषयरजतं सद्भवति रजतसत्वे सति शुक्त्यभिन्नत्वात्।

---

दूषयति—न द्वितीय इति। अत्यन्ताभावपक्षे दोषमाह—अत्यन्तेति। ततश्च रजतस्य स्वसमानकालीनस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन मिथ्यात्वान्न सत्वमिति चकारार्थः। शुक्तिज्ञानेनेति पक्षं दूषयति—अत एवेति। अत्यन्ताभावस्याजन्यत्वादेवेत्यर्थः। ध्वंसजनकत्वेन बाधकत्वे दोषमाह—उपादानेति। किंच वाधायोग्यस्यैव सत्वाद्बाध्यस्य रजतस्य सत्त्वमेवायुक्तमित्याह—रजतस्येति। पदार्थस्वरूपमेव सत्वं तच्च बाधयोग्यत्वेऽप्युपपद्यत इत्याशंक्याह—न चेति।

किञ्चैकस्मिन् रज्जुद्रव्ये पुरुषभेदेन दण्डसर्पमालामूत्रधारादिभ्रमा युगपज्जायन्ते दंण्डादिपरिणामस्य वास्तवत्वेऽधिष्ठानस्य वस्तुतो विरुद्धानेकाकारत्वं स्यात्। तच्चायुक्तमित्याह—एवमिति। सद्रजते क्लृप्तकारणाभावादपि तदनुपपत्तिरित्याह—अन्यत्रेति। परोक्तकारणमपि दूषयति—न च मूलेति। परमाण्वादिकारणत्वे विरुद्धजातीयशुक्त्यादितादात्म्यानुपपत्तिश्चेत्याह—तयोरिति। सिद्धान्ते च कथं तदित्यत्राह—अविद्या त्विति। तथैवेति। विरुद्धयोस्तादात्म्यसंपादिकैव तस्य मिथ्यात्वादित्यर्थः। रजतादेर्दोषोपादानकत्वात् सर्वमेव तदुपादानमित्यत आह—दोषस्त्विति। अनाश्रयत्वादिति शेषः। चेतनधर्मजन्यत्वादुपलम्भव्यवस्थेत्येतदपि दूषयति—न चेति। न च कृत्यजनकज्ञानमेव चेतनधर्मपदेन विवक्षितमिति नोक्तदोष इति वाच्यम् पुत्रमरणादिज्ञानजन्याश्रुपातादेः साधारणत्वादिति भावः। सिद्धान्ते प्रमात्रन्तरसंबन्धाभावादसाधारण्यमिति रजतोत्पत्तिप्रक्रियायां वक्ष्यत इत्याह—अस्मन्मत इति।

तर्किते़ऽर्थेऽनुमानमाह—तस्मादिति। विशेष्यासिद्धिमाशंक्याह— नचेति। चिरन्तन-

**यन्नैवं तन्नैवं** तथा शुक्त्यादीति। **न** चासिद्धिः इदं रजतमित्यनुभवात्। **अन्यथा तस्मिन्** रजतज्ञानात् प्रवृत्त्यनुपपत्तेः

भ्रमस्य सत्ख्यातित्वमतनिराकरणम्

एतेन **भ्रमोऽख्यातिसंवलितयथार्थाख्यातिः पञ्चीकरणप्रक्रियया शुक्तौ रजतसत्वात्। तस्या व्यवहारायोग्यत्वात्** तद्योग्यरजतविवेकाग्रहात् **प्रवृत्तिरिति प्रवृत्तिरयथार्था ज्ञानं यथार्थमेवेति** निरस्तम्। **प्रतीतरजतस्य पुरोवर्तिनि तत्काली-नाभावप्रमादिविरोधात्। शुक्तौ रजतसत्वे सर्वोपलम्भप्रसंगाच्च।**

**न च** सत्यज्ञानमपि **दोषमपेक्षते। घटादावपि तदुपलम्भप्रसङ्गश्च। भौतिकानामपि** पञ्चीकरणे तत्रापि सत्त्वात्। **अननुभूतरजतस्यापि शुक्तौ तद्भानात् प्रवृत्त्यापाताच्च**। प्रवृत्तेरजतविषयत्वे सत्यज्ञानजन्यत्वे **वा अयथार्थत्वानुपपत्तेश्च।**

**न च प्रवृत्त्ययोग्यविषयतयाऽसाधुत्वम् रजतत्वप्रकारकप्रवृत्तेरर्थबाधा-भावात्।**

असद्रजतं भ्रमे भातीति मतनिराकरणम्

यत्त्वसद्रजतं **प्रतीयत इति।** तन्न। **तस्यापरोक्षत्वानुपपत्तेः विस्तरेणैतन्नि-राकरणं वक्ष्यते। किं तद्भ्रमविषयरजतम्? अनिर्वचनीयम्।**

अनिर्वचनीमत्वलक्षणं

स्यादेतत्। **अनिर्वचनीयत्वं न निरुक्तिविरहः इदं रूप्यमिति निरुक्तेः। अत**

---

दासाभिमत भ्रममनूद्य निराकरोति—एतेनेति। यथार्थख्यातित्वे हेतुः पञ्चीकरणेति अख्यातिसंबलितत्वे हेतुः--तस्येति। विज्ञानस्य यथार्थत्वाभावे हेतुमाह--प्रतीतरजतेति। सर्वस्य दोषाभावान्न सर्वोपलम्भ इत्याशंक्याह—न च सत्येति। शुक्तौ पञ्चीकरणप्रक्रियया रजतसत्वेऽतिप्रसङ्गमाह—घटादावपीति। तत्रैव दोषान्तरमाह—अननुभूतेति। तादृश-रजतविषयप्रवृत्तेरयथार्थत्वमप्ययुक्तमित्याह—प्रवृत्तेरिति। व्यवहारायोग्यविषयत्वाद-यथार्थमित्युक्तं निराकरोति—न चेति।

नवीनाभिमतं भ्रान्तिविषयमनूद्य निराकरोति—यत्त्वित्यादिना। असत इन्द्रिया-संसृष्टत्वेन तद्भानस्येन्द्रियजन्यत्वानुपपत्तेश्च। सविकल्पभिन्नत्वायोगाच्च, प्रत्यक्षत्वमनुप-पन्नमित्यर्थः। वक्ष्यत इति। अनन्तरवाद एवेति शेषः। सदसदन्यस्याभावात् पृच्छति---- किं तदिति। उत्तरमाह----अनिर्वचनीयमिति। अनिर्वचनीये लक्षणप्रमाणयोरभावाद् भ्रमविषयस्य न तद्रूपत्वमिति प्रत्यवतिष्ठते--स्यादेतदित्यादिना।

किं निरुक्तिविरहोऽनिर्वचनीयत्वं, तन्निमित्तविरहो वा, सदसद्विलक्षणत्वं वा, सद्विलक्षणत्वे सत्यसद्विलक्षणत्वं वा, सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्वि-लक्षणत्वं वा, सत्वे सत्यसत्वरूपस्यासत्वे सति सत्वरूपस्य वा विशिष्टस्य विरहो वा,

वए न निरुक्तिनिमित्तस्य विरहः तद्विज्ञानं, न हि तेन विना रजतमिति निरुक्तिर्भवति । नापि सदसद्विलक्षणत्वं, प्रत्येकवैलक्षण्यस्यासत्यात्मनि च गतत्वात्विशिष्टवैलक्षण्यस्याप्येकैकात्मनि सत्वात् । नापि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वं, सदसद्रूपत्वेऽप्युपपत्तेः ।

नापि सद्विलक्षणत्वे सत्यसद्विलक्षणत्वे सति सदसद्विलक्षणत्वम् । तव मते सदसदात्माभावेन तद्वलक्षण्यासिद्धेः अत एव सत्वे सत्यसत्वरूपस्यासत्वे सति सत्वरूपस्य वा विशिष्टस्य विरह इति न, केवलसत्वेऽप्युपपत्तेश्च ।

ननु सत्वेनासत्वेन वा विचारासहत्वमनिर्वाच्यत्वम् सतश्च सत्वेनासतोऽसत्वेन च विचारसहत्वादिति चेत् । (न चोभयात्मत्वेनार्थान्तरत्वं तस्य सत्वेऽपि तस्य सत्वेनासत्वेन च विचारासहत्वादिति चेत् । )

अत्र नवीनः सत्वासत्वे ( १ ) सत्ताजातितदभावौ वा ( २ ) अर्थक्रियाहेतुत्वाहेतुत्वे वा । ( ३ ) अबाध्यत्वबाध्यत्वे वा । ( ४ ) प्रामाणिकत्वाप्रामाणिकत्वे वा ? ( ५ ) अशून्यत्वशून्यत्वे वा, ? ( ६ ) ब्रह्मत्वशून्यत्वे वा ? ( ७ ) अबाद्ध्यत्वशून्यत्वे वा ? ( ८ ) प्रामाणिकत्वशून्यत्वे वा ? ( ९ ) पराङ्गीकृतसत्वासत्वे वा ? नाद्यद्वितीयौ शुद्धात्मनि सद्वैलक्षण्यस्य प्रपंचे तदभावस्य चापातात् ।

न तृतीयः त्वन्मते तुच्छस्याबाध्यत्वेन तत्र सद्वैलक्षण्यस्य अनिर्वाच्यस्य च

---

सत्वेनासत्वेन विचारासहत्वं वा? नाद्य इत्याह----अनिर्वचनीयत्वमिति । निरुक्तेः सत्यत्वेन तद्धेतोरप्यावश्यकत्वान्न द्वितीयोऽपीत्याह----अत एवेति । तृतीयं दूषयति----नापीति । एकैकात्मनि सत्वा दति । केवलस्य सतोऽसतश्च सदसदात्मविलक्षणत्वादित्यर्थः । चतुर्थमुभयात्मकमतिव्याप्त्या दूषयति—नापीति ।

पञ्चमं प्रतियोग्यप्रसिद्धयाऽसंभवेन दूषयति—नापीति । प्रतियोग्यप्रसिद्धेरेव न षष्ठोऽपीत्याह—अत एवेति । दोषान्तरमाह----केवलेति । अत्र गुणप्रधानभावेनोभयात्मकवैलक्षण्यनिरासः । तृतीये तु प्राधान्येनोभयात्मकवैलक्षण्यनिरास इति नैतेन पौनरुक्त्यम् । सप्तमं शङ्कते - -नन्विति । अत्र सत्वादिना नार्थान्तरतेत्याह----सतश्चेति । सत्त्वादिना विचारासहत्वं न कुत्रापि इत्यभिप्रेत्य सत्वासत्वे विकल्पयति----सत्वासत्वेत्यादिना । शुद्धात्मनीति । निर्विशेषात्मनि सत्ताजातेरर्थक्रियाहेतुत्वस्य चाभावात् सद्वैलक्षण्यापातः प्रपञ्चे च तदुभयसत्वात् सत्त्वापात इत्यर्थः ।

अबाध्यत्वबाध्यत्वे सत्वासत्वे इत्यत्र तुच्छस्याबाध्यत्वात् सत्वापातः । प्रपञ्चस्य बाध्यत्वादसत्वापात इत्याह---न तृतीय इति । अतः शब्दार्थमाह—अनिर्वाच्यस्येति

बाध्यत्वेन असद्वैलक्षण्यस्य चायोगात्। अत एव न चतुर्थः अनिर्वाच्यस्याप्रामाणिकत्वेन तस्यासद्वैलक्षण्यायोगात्। न पञ्चमः अनिर्वाच्यस्याशून्यत्वेन सद्वैलक्षण्यायोगात्। न षष्ठः ममापि तस्य प्रपञ्च इष्टत्वात्। तयोरविरोधेन सत्वासत्वरूपत्वायोगाच्च। अत एव न सप्तमः तयोरविरोधेन सत्वासत्वात्मत्वानुपपत्तेः। अबाध्यत्वाभावस्यैव लक्षणत्वोपपत्त्या व्यर्थविशेष्यत्वाच्च।

किञ्चात्र शून्यं किं विवक्षितं? निरूपाख्यं निःस्वरूपं वा? नाद्यः असत्त्ख्यातिवादेऽपि रूप्यादेस्तद्वैलक्षण्यस्येष्टत्वात्। न द्वितीयः त्वन्मते रूप्यादेः स्वरूपेण त्रैकालिकनिषेधेन निःस्वरूपत्वात्। अत एव नाष्टमः त्रैकालिकनिषेधप्रतियोगिरूप्यस्यासद्वैलक्षण्यायोगात्। न नवमः मया हि त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वप्रतियोगित्वे सत्वासत्वे इति स्वीकारात्। त्वन्मते वाऽनिर्वाच्यस्य तत्प्रतियोगित्वात्। किञ्च मदनभिमतयोः परस्परप्रतिषेधानात्मकयोः पारिभाषिकयोः सत्वासत्वयोः राहित्यविवक्षायामिष्टापत्तिः। मदभिमतयो राहित्यविवक्षायां मया लाघवादावश्यकत्वाच्च सत्वाभाव एवासत्वमिति स्वीकारात् द्वौ नञौ प्रकृतमर्थं सातिशयं साधयत इति न्यायेनैकतरनिषेधस्यान्यतरविधिरूपत्वान्माता वंध्येतिवद्व्याघातः।

निषेधसमुच्चये शंका समाधानं च

---

इष्टत्वादिति। परमतेऽपि जडस्य सत्प्रपञ्चस्य ब्रह्मशून्याभ्यां विलक्षणत्वस्येष्टत्वादित्यर्थः।

किञ्च सत्वासत्वयोर्भावाभावात्मकतया विरुद्धस्वभावत्वाद् ब्रह्मत्वशून्यत्वयोश्चातथात्वान्नेमे सत्वासत्वे इत्याह —तयोरिति। उक्तदोषमबाध्यत्वशून्यत्वे वेति विकल्पेऽप्यतिदिशति----अत एवेति। किञ्चाबाध्यत्वस्य सत्वरूपत्वे सद्वैलक्षण्यस्यैवानतिप्रसक्ततयाऽनिर्वाच्यलक्षणत्वोपपत्तेस्तत्रासद्विलक्षणपदं व्यर्थमित्याह- --अबाध्यत्वेति।

शून्यपर्यालोचनयाऽपि दोषमाह- -किं चेति। तद्वैलक्षण्यस्येति। अपरोक्षबुद्धिव्यवहारविषयतया निरुपाख्यवैलक्षण्यस्येष्टत्वादित्यर्थः। निःस्वरूपत्वादिति। ततश्च तद्वैलक्षण्यायोगादिति शेषः। शून्यपदार्थविकल्पदूषणेनोत्तरकल्पोऽपि निरस्त इत्याह— अतएवेति। पराभ्युपेतासत्वस्य शुक्तिरूप्यादौ तवापि सत्वान्न तद्वैलक्षण्यसिद्धिरित्याह--- मया हीति।

किञ्च किं परानभिमतयोः सत्वासत्वयोर्वैलक्षण्यं प्रपञ्चे साध्यते तदभिमतयोर्वा आद्ये न पराभिमतसत्वविरोध्यनिर्वाच्यत्वसिद्धिः। द्वितीयेऽसत्वनिषेधे सत्वस्यावश्यकत्वान्नोभयनिषेध इत्याह---किञ्च मदनभिमतयोरित्यादिना।

भावाभावात्मकयोरपि सत्वासत्वयोर्निषेधसमुच्चय उपपद्यते तस्यापरमार्थत्वाद् विरोधस्य च परमार्थप्रतियोगिकत्वादिति शंकते—नन्विति। किमर्थं तर्हि तद्व्युत्पादन-

ननु निषेधसमुच्चयस्यावास्तवत्वान्न विरोधः। सदादिवैलक्षण्योक्तिस्तु तत्तत्प्रतियोगिदुर्निरूपत्वमात्रप्रकटनाय। नहि स्वरूपतो दुर्निरूपस्य किञ्चिदपि रूपं वास्तवमस्तीति चेत्। न। सत्वादिराहित्यस्यावास्तवत्वेऽपि सत्वादेर्दुर्निरूपत्वमात्रेणानिर्वाच्यत्वे पञ्चमप्रकाराविद्यानिवृत्तावनिर्वाच्यत्वनिषेधायोगात् विधिसमुच्चयस्यैवातात्विकत्वान्न विरोध इति सुवचत्वाच्च।

किं च निषेधसमुच्चयस्यातात्विकत्वं नोभयातात्विकत्वेनोभयतात्विकत्ववदुभयातात्विकत्वस्यापि विरुद्धत्वात्। विधिसमुच्चयस्य तात्विकतापातेन प्रतियोगिदुर्निरूपत्वस्यायोगाच्च।

नाप्येकतरातात्विकत्वेन; तत्प्रतियोगिन एकस्य विधेस्तात्विकतापातात्

किञ्च सत्त्वादिना विचारासहत्वमपि न तावत्सत्वाद्यनधिकरणत्वं, असतोऽप्यसत्वानधिकरणत्वात्। ब्रह्मणोऽपि सत्वानधिकरणत्वाच्च।

अथ सत्त्वाद्यत्यन्ताभावाधिकरणत्वम्, निर्द्धर्मकेऽसति ब्रह्मणि चाभावाभावान्नातिव्याप्तिरिति चेत् न, निर्धर्मकत्वेन धर्मवत्त्ववत्सत्ताद्यभावेनापि धर्मवत्वात्। अन्यथा सत्ताद्याश्रयः स्यात्।

अथ सद्रूपत्वाद्यभावः सत्वादिना विचारासहत्वं; न, ब्रह्मणोऽपि सत्वानधिकरणत्वेन सद्रूपत्वायोगात् सामान्यादेरप्यबाध्यत्वेनैव सद्रूपत्वात्। सत्वेन

---

मित्यत आह—सदादीति। सदादिरूपप्रतियोग्यात्मना दुर्निरूपत्वप्रकटनायेत्यर्थः। सदादिरूपेण दुर्निरूपत्वमात्रेणानिर्वाच्यत्वेऽविद्यानिवृत्तौ नानिर्वाच्यत्वक्षय इत्यनिर्वाच्यत्वनिषेधोऽनुपपन्नः स्यादित्याह—न सत्व दीति।

किञ्च प्रपञ्चे सत्त्वासत्त्वसमुच्चयः अवास्तवत्वान्न विरुध्यत इत्यभ्युपेयतां न जघन्यनिषेधसमुच्चय इत्याह—विधीति निषेधसमुच्चयस्यातात्विकत्वमपि किं निषेधद्वयातात्विकत्वप्रयुक्तमुतान्यतरातात्विकत्वप्रयुक्तं? नाद्य इत्याह—किञ्चेति। सत्त्वनिषेस्यासत्त्वनिषेधस्य चातात्विकत्वे सत्वादेस्तात्विकत्वापातेन तेन रूपेण दुर्निरूपत्वमयुक्तमित्याह—विधिसमुच्चयस्येति।

द्वितीयं दूषयति—नापीति। किञ्च सत्वादिना विचारासहत्वमपि किं सत्वाद्यनधिकरणत्वं तदत्यन्ताभावाधिकरणत्वं वा सद्रूपत्वाद्यभावो वा सत्वेन प्रमाणागोचरत्वं वा? नाद्यः, असति ब्रह्मणि चातिव्याप्तेरित्याह—किंचेति। द्वितीयं शंकते—अथेति। एतदप्यसति ब्रह्मणि चातिव्याप्त्या दूषयति—न निद्धर्मकत्वेनेति ब्रह्मणि सत्ताद्यभावाभावे दोषमाह—अन्यथेति। तृतीयं शंकते—अथेति। सत्वाधिकरणस्यैव सद्रूपत्वात् ब्रह्मणः सत्वाधिकरणत्वाभावे सद्रूपत्वायोगात् तत्रातिव्याप्तिः स्यादित्याह—न ब्रह्मणोऽपीति। सत्वाधिकरणस्यैव सद्रूपत्वे कथं सामान्यादेः सत्वमित्यत आह—सामान्यादेरिति।

**प्रमाणागोचरत्वं तदिति चेत्; न, अखण्डात्मनो ब्रह्मणस्तेनाकारेण वेदान्तप्रमाणागोचरत्वात् ।**

अनिर्वचनीयत्वे प्रमाणनिरासः-पू०

**नापि तस्मिन् प्रमाणम् । यत्तु विप्रतिपन्नं सत्त्वरहितत्वे सत्यसत्त्वरहितं बाध्यत्वात् यन्नैवं तन्नैवं यथाऽऽत्मेति व्यतिरेकी; सत्त्वराहित्यं च सत्त्वानधिकरणत्वमिति नोभयात्मनाऽर्थान्तरत्वम् । न चाप्रसिद्धविशेषणत्वं सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी धर्मत्वात् रूपरसवदिति सामान्यतस्तत्सिद्धेः । किञ्च सच्चेन्न बाध्येत; असच्चेन्न प्रतीयेतेति ख्यातिबाधान्यथानुपपत्तिरपि तत्र मानमिति ।**

**तत्र न तावदनुमानं युक्तम् उक्तरीत्या व्याघातात् । ब्रह्मवत्सत्त्वराहित्येऽप्यनिर्वाच्यत्वाभावोपपत्त्याऽर्थान्तरत्वाच्च । विमतं सदसदात्मकं बाध्यत्वात् व्यतिरेकेणात्मवदित्याभाससमत्वाच्च । असदेव रजतमभादिति प्रत्यक्षबाधाच्च ।**

**न चैवं मिथ्यैव रजतमभादिति प्रत्यक्षेणैवानिर्वाच्यत्वसिद्धिः । मिथ्यापदस्यासत्पर्यायत्वात् । विमतमसत् सत्त्वानधिकरणत्वात् नरशृङ्गवदिति सत्प्रतिपक्षत्वाच्च ।**

**न च सत्त्वाभावमात्रेणासदिति धीः त्वन्मतेऽज्ञानेऽपि सत्त्वाभावेनासदिति**

---

चतुर्थमुत्थापयति---सत्त्वेनेति । निर्धर्मकस्य ब्रह्मणः सत्त्वप्रकारकमानागोचरत्वात्तत्रातिव्याप्तिरिति दूषयति—नाखाण्डेति । एवमनिर्वचनीयलक्षणं निरस्य प्रमाणमपि निरस्यति---नापीति ।

अत्र सिद्धान्त्यभिमतानुमानार्थापत्ती अनुवदति--यत्त्वित्यादिना । केवलस्य सत्त्वस्य चासत्त्वस्य च राहित्यं सदसदात्मत्वेऽप्युपपद्यत इत्यर्थान्तरतामाशंक्याह—सत्त्वेति । सत्वनिषेधेऽसत्वस्यावश्यकत्वादसत्वनिषेधे सत्वस्यावश्यकत्वादुभयनिषेधकानुमानं बाधितविषयमित्याह—तत्रेति । प्रपञ्चे सत्त्वादिधर्मराहित्येऽपि ब्रह्मवदनिर्वाच्यत्वाभावोपपत्तेरर्थान्तरता वेत्याह—ब्रह्मवदिति । मिथ्यात्वग्राहकप्रत्यक्षविरोधादसदनुभवः सत्वाभावविषय इत्याशंक्यासत्वस्यैव मिथ्यात्वादविरोध इत्याह—न चैवमिति । असदनुभवस्याप्यन्यथासिद्धिमाशंक्याह—न चेति । सामान्यतो दृष्टानुमानमपि सोपाधिकमित्याह—रूपरसादाविति ।

अर्थापत्तिगतसदादिपदार्थं विकल्पयन् तामपि निराकरोति—अर्थापत्तिरपीत्यादिना । त्वन्मत इति । सिद्धान्ते प्रपञ्चे कल्पितसत्ताजातेरर्थक्रियाकारित्वस्य च विद्यमानत्वेऽपि अबाध्यत्वाभावाद् व्यभिचार इत्यर्थः ।

ननु सच्चेद् व्यवहारदशायां न बाध्येतेति विवक्षितं प्रपञ्चस्यापि व्यवहारदशायामबाध्यत्वान्न व्यभिचार इत्याशंक्य तर्हि नेह नानेति जगतो यदनिर्वचनीयत्वं त्वयो-

धीप्रसङ्गात्। सत्वासत्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी न भवतः परस्परात्यन्ताभावत्वात् घटत्वाघटत्ववदिति सत्प्रतिपक्षत्वाच्च। रूपरसादौ च परस्परप्रतिषेधानात्मत्वमुपाधिः।

अनिर्वाच्यत्वे अर्थापत्तिखण्डनम् पू०

अर्थापत्तिरपि सच्चेन्न बाध्येतेत्यत्र किं सत्? सत्ताजातिमत् [१] अर्थक्रियाकारि वा [२] अबाध्यं वा, [३] अबाध्यत्वावच्छेदकावच्छिन्नं वा, [४] प्रामाणिकं वा? [५] नाद्यद्वितीयौ त्वन्मते प्रपञ्चे व्यभिचारात्। व्यवहारदशायां न बाध्येतेत्यापादने च नेह नानेति बाधेन जगतोऽनिर्वाच्यत्वासिद्धेः। व्यवहारदशायामेव जगति यौक्तिकादिबाधस्य दर्शितत्वाच्च। प्रत्यक्षबाधस्य परोक्षाध्यस्ते, अपरोक्षाध्यस्ते नभोनीलिमादावभावाच्च। व्यवहारदशायां बाध्यस्यापि रूप्यस्याद्वैतवत् पारमार्थिकत्वोपपत्तेश्च। न तृतीयः। यदबाध्यं तदबाध्यमिति साध्यावैशिष्ट्यात्। नापि चतुर्थः तत एव।

न पञ्चमः तत्त्वावेदकश्रुतिसिद्धब्रह्मनिर्विशेषत्वादेर्बाध्यत्वेन व्यभिचारात्। अबाध्ये अविद्यादिसाधकतया स्वतः प्रकाशमाने चिन्मात्रे वैय्यर्थ्येन प्रमणाप्रवृत्तेरप्रामाणिकत्वस्याबाध्यत्वेनैव व्याप्तेश्च। रूप्यादिबाधस्यातत्वावेदकत्वेन तदप्रामाणिकतानापादकत्वाच्च। व्यावहारिकप्रमाणबाधिताद्वैतवत् पारमार्थिकत्वोपपत्तेः।

एवं न बाध्येतेत्यत्र बाधः। किं ज्ञानेन निवृत्तिः प्रतिपन्नोपाधौ त्रैकालिकनिषेधो वा? आद्ये इष्टापत्तिः। द्वितीयेऽ सद्विलक्षणत्वपक्षे बाध्यते चेति विपर्ययापर्य्यवसानात्।

---

च्यते तन्न सिध्येदित्याह--व्यवहारेति। व्यवहारदशायामेव प्रपञ्चे यौक्तिकबाधश्च त्वयैव दर्शित इत्याह-व्यवहारेति।

ननु सत्वे प्रत्यक्षबाधो न स्यादित्यापाद्यत इत्याशंक्य तर्हि यत्र प्रत्यक्षबाधो नास्ति तस्यानिर्वचनीयत्वं न सिध्येदित्याह--प्रत्यक्षेति। व्यवहारदशायां बाध्यत्वमनिर्वचनीयत्वं विनाप्युपपद्यत इत्याह---व्यवहारेति। अबाध्यं सदिति पक्षं दूषयति—न तृतीय इति। तत एवेति। अबाध्यस्यैवाबाध्यतावच्छेदकावच्छिन्नत्वेन साध्यावैशिष्ट्यादित्यर्थः।

प्रामाणिकं सदिति पक्षे न तेनाबाध्यत्वमापादयितुं शक्यते निर्विशेषत्वाद्वितीयत्वादिधर्माणां प्रामाणिकत्वेऽपि बाध्यत्वादित्याह—न पञ्चम इति। वैयर्थ्येनेति। निष्पादितक्रिये कर्मणीति न्यायेन प्रकाशमाने मानवैय्यर्थ्यादित्यर्थः। व्याप्त्यभावमप्याह—अबाध्य इति। अर्थान्तरतामप्याह--रूप्यादीति। सिद्धान्ते रजतादिबाधकस्य प्रत्यक्षादेरतत्वावेदकत्वेन तद्बाधितस्याद्वैतवन्नाप्रामाणिकता सिध्येत्। तत्त्वावेदकासिद्धनिषेधप्रतियोगिन एव प्रामाणिकत्वादित्यर्थः। इष्टापत्तिरिति। परमते रजतस्य ज्ञानादनि-

एवमसच्चेदित्यत्रासत्किं [१] सत्तादिहीनं [२] बाध्यं वा [३] निरुपाख्यं वा [४] निरुपाख्यत्वावच्छेदकावच्छिन्नं वा [५] निः स्वरूपं वा ? नाद्यः, सत्तादिहीनस्याप्यात्मादेः प्रतीतेः। न द्वितीयः विपर्ययेऽपर्य्यवसानात्।

न तृतीयः निरुपाख्यं चेत् न ख्यायेतेति साध्यावैशिष्टयात्। न चतुर्थः निःस्वरूपत्वान्यस्य तस्याभावात्।

न च पञ्चमः पारमार्थिकत्वाकारेण त्रैकालिकनिषेधप्रतियोगित्वस्य निर्द्धर्मके ब्रह्मण्यपि सत्वेनानिर्वाच्यस्य स्वरूपेण तत्प्रतियोगित्वे वाच्ये शशशृङ्गादेरपीतोऽन्यस्य निः स्वरूपत्वस्याभावेन तस्मादसन्न भवतीति विपर्ययापर्यवसानात्।

एवं न प्रतीयेतेत्यत्र प्रतीतिमात्रं निषिध्यते सत्वेन प्रतीतिर्वा प्रत्यक्षप्रतीतिर्वा ? नाद्यः असतोऽभानेऽसद्वैलक्षण्यज्ञानायोगात् तन्निरासानुपपत्तेश्च। द्वितीयेऽपि किं प्रमा निषिध्यते उत भ्रमः ? प्रथम इष्टापत्तिः। न द्वितीयः, उक्तन्यायेनासतः प्रतीतिसिद्धावरूप्यत्वेन वाऽसतोऽपि सत्वेन प्रतीत्युपपत्तेः। न तृतीयः यदसत्तन्न प्रत्यक्षमिति व्याप्तिज्ञानस्य प्रत्यक्षताऽवश्यंभावात् शशशृङ्गाद्यत्यन्ताभावस्याप्रत्यक्षत्वापातेनासतोऽसत्वासिद्धेश्च। सन्मात्राविषयकमपरोक्षज्ञानं अपरोक्षभ्रमो वाऽसद्विषयकः सत्वानधिकरणविषयत्वात् असद्विषयकपरोक्षज्ञानवदित्यनुमानादसतः प्रत्यक्षत्वसिद्धिश्च।

न च सद्रजतमित्यनुभवविरोधः, स किं प्रमा भ्रमो वा ? नाद्यः, तस्या भवतैव निरस्तत्वात्। न द्वितीयः, अरजतस्य रजतात्मनेव असतः सदात्मना तत्संभवात्।

---

वृत्तेरित्यर्थः। विपर्ययापर्यवसानादिति। त्रैकालिकसर्वदेशीयनिषेधप्रतियोगिनोऽसत्त्वेन तद्विलक्षणतानुपपत्तेरित्यर्थः। आत्मादेरिति। सिद्धान्ते सत्ताहीनस्यात्मनः परमते सामान्यादेश्च प्रतीतेरित्यर्थः। विपर्यये इति। बाध्ये शुक्तिरूप्ये तस्माद् बाध्यं न भवतीति विपर्ययापर्यवसानादित्यर्थः।

निःस्वरूपत्वान्यस्येति। निःस्वरूपत्वस्यैव निरुपाख्यतावच्छेदकत्वात् तदवच्छिन्नमसदित्यत्र पञ्चमकल्पे वक्ष्यमाण एव दोष इति भावः। शुक्तिरूप्यादेस्त्रैकालिकसर्वदेशीयनिषेधप्रतियोगित्वेन शशशृङ्गवदसत्वादर्थापत्तेस्तद्वैलक्षण्ये पर्यवसानमयुक्तम्।

न च रजतत्वादेः पारमार्थिकत्वाकारेणैव तादृशनिषेधप्रतियोगित्वादनिर्वाच्यत्वं न स्वरूपेणेति वाच्यम्। अतिप्रसंगादित्याह—पारमार्थिकत्वाकारेणेति। एवमित्यादिः स्पष्टार्थः। अप्रत्यक्षत्वापातेनेति। असतोऽप्रत्यक्षत्वे तदत्यन्ताभावस्याप्यप्रत्यक्षत्वापातेन तस्य सर्वदेशीयत्वाद्यसिद्धौ तत्प्रतियोगित्वरूपासत्वासिद्धेरित्यर्थः। असतोऽप्रत्यक्षत्वे अनुमानविरोधमप्याह—सन्मात्रेति। भ्रमविषयत्वाभिधानं सदनुभवविरुद्धमित्याशंक्याह—न चेति।

**नन्वत्यन्तासतः कथं निषेधप्रतियोगित्वमितिचेत् किमिह कथं ? असत्वस्यात्यन्तिकनिषेधप्रतियोगित्वरूपत्वेन तदप्रतिक्षेपकत्वादिति ।**

अनिर्वचनीयत्वे सिद्धान्तः

**उच्यते । सदन्यत्वे सति असदन्यत्वे सति सदसद्रूपान्यत्वमनिर्वचनीयत्वम् । एतच्च प्रपञ्चस्य सत्त्वासत्वानैकान्तवादिनः प्रति तद्विरुद्धार्थसाधकानुमानविषयनिरूपणमिति नान्यतमस्यापि वैयर्थ्यम् । सन्नाम सत्त्वविशिष्टं ततो निर्विशेषं ब्रह्माप्यनिर्वचनीयं स्यादिति चेत् किमेतावता प्रपञ्चसत्वविरुद्धानुमानस्य ।**

**न चैतत्साध्यं ब्रह्मणीव प्रपञ्चेऽपि सत्वविरोधि न भवेदिति वाच्यम् ।**

प्रपञ्चस्य सत्वं कथमपि न युज्यते इति निरूपणम्

**किं तत् प्रपञ्चस्य सत्वं यत्सदन्यत्वाविरुद्धम् यदि पराभ्युपेता जातिः तर्हि न तावता प्रपञ्चस्य ब्रह्मवत् सत्वं बाधायोग्यान्यत्वेऽपि घटत्वादिजातेरिव पारिभाषिकसत्ताजातेरप्याश्रयत्वोपपत्तेः तस्य ब्रह्मणोऽद्वितीयताऽविरुद्धत्वात् ।**

**अथ मम सत्ताजात्याश्रयत्वमेव बाधायोग्यत्वमिति न, सत्तादेस्तदभावात् ।**

---

सिद्धरूपे क्वचित् किंचित्तादृगेव निषिध्यत इति न्यायेन शंकते—नन्विति । धर्मिग्राहकमानसिद्धत्वादसतो निषेधप्रतियोगित्वस्य नोक्तानुपपत्तिरित्याह—किमिहेति । चित्सुखाचार्योक्तानिर्वचनीयनिरुक्तिमाह—सदन्यत्व इति ।

ननु सदन्यत्वमेव लक्षणमस्त्वसतो निःस्वरूपस्य सद्भेदाश्रयत्वे मानाभावात् सदसदात्मकस्य च विरुद्धत्वेनाप्रामाणिकत्वात् तदितरवैयर्थ्यमिति चेत् सत्यमेवमेव वक्ष्यते । अत्र च प्रयोजनान्तरोद्देशेन विशेषणान्तरोपादानमित्यभिप्रेत्याह—एतच्चेति । अनैकान्तवादिन इति सदसदात्मत्ववादिनः प्रतीत्यर्थः । उक्ताभिप्रायानभिज्ञो लक्षणं मत्वा शंकते—सन्नामेति । अनिर्वचनीयं स्यादिति । असदन्यत्वादेरपि सत्त्वादित्यर्थः । एतस्य लक्षणत्वाभावान्नोक्तदोष इति स्वाभिप्रायं विवृणोति—किमेतावतेति । ब्रह्मवत् प्रपञ्चस्य सत्त्वेऽप्युक्तसाध्योपपत्तेरनुमानस्याप्यर्थान्तरतामाशंक्याह—न चेति ।

बाधायोग्यं सत्तदन्यच्च जगत्ततो न असद्विरोधादिति वक्तुमुक्तसाध्याविरुद्धं सत्वं पृच्छति—किं तदिति । किं सत्ता जातिः सत्वं अर्थक्रियाकारित्वं वा, प्रमाविषयत्वयोग्यत्वं वेति किंशब्दार्थः आद्यस्य बाधयोग्यप्रपञ्चेऽप्युपपत्तेर्न तेन ब्रह्मसमसत्ताकं जगदित्याह—यदीत्यादिना । प्रपञ्चे जातिरूपसत्वेनाप्यद्वैतहानिरित्याशंक्य तस्य प्रपञ्चस्य च बाध्यत्वेन मिथ्यात्वान्मैवमित्याह—तस्येति ।

ननु सत्ताजातिमत्त्वमेव बाधायोग्यत्वं तथा च तद्व्यक्तीनामनेकत्वाज्जगतस्तदन्यत्वं चाविरुद्धम् । न च यावत्सदन्यत्वं साध्यमिति वाच्यम् । तन्मते सत एकत्वेन यावत्पदार्थाभावादित्यभिप्रेत्य शंकते—अथेति ।

अथ सत्ता वाधायोग्यत्वस्य व्याप्या; वाधायोग्यत्वस्य सत्तान्यत्वे सिद्धेऽनुकूलतर्काभावेन सत्ताजातेस्तदव्याप्यत्वात् ।

असत आश्रयत्वमनुपपन्नमिति चेत् न, तुच्छस्यानाश्रयत्वेऽपि प्रपञ्चस्याश्रयत्वोपपत्तेः । तुच्छातिरिक्तं सद्विलक्षणं न प्रतीतमिति चेत् । तर्ह्युपास्यन्तां भवता गुरवः । वक्ष्यते च तत्र प्रमाणम् ।

किं चासत आश्रयत्वमनुपपन्नमिति तदाश्रयस्यासद्विलक्षणत्वमभिप्रेतं उत सत्वं आद्य इष्टापत्तिः ।

अथासद्विलक्षणं सदेव तर्हि सत एवाश्रयत्वमित्यागतम् । तदनुपपन्नं, सत्वविशिष्टस्य सत्वाश्रयत्वे आत्माश्रयात् । सत्तान्तराभ्युपगमेऽनन्ताप्रामाणिकसत्ताकल्पनाप्रसंगात् सत्ताद्वयाभ्युपगमेऽपि तयोरन्योन्यप्रयोजकत्वेऽन्योन्याश्रयः । तथा च सत्ताश्रयत्वे न सत्वं प्रयोजकमिति न त्वदभिमता व्याप्तिः ।

सत्वं बहुधा विकल्प्य खण्डयते

अथार्थक्रियाकारित्वं सत्वं विश्वस्य । सत्यं न ह्येतावता अद्वितीयत्वक्षतिः

---

परमते सामान्यादेरपि बाधायोग्यत्वात् तत्र सत्ताजातेरभावान्न तदाश्रयत्वमेव वाधायोग्यत्वमिति दूषयति—न सत्तेति । वाधायोग्यत्वस्य सत्तात्मकत्वाभावेऽपि तां प्रति व्यापकत्वात्सद्व्यक्तिरनेकेति शंकते—अथेति । रजतत्वादेरिव सत्ताजातेरप्यवाध्यत्वेन व्याप्त्यभावेन वाधकाभावात् त्वन्मते क्वापि सहचारदर्शनाभावाच्च नोक्ता व्याप्तिरित्यभिप्रेत्य दूषयति--वाधायोग्यत्वस्येति ।

तर्काभावोऽसिद्ध इति शंकते—असत इति । वाध्यस्यापि प्रपञ्चस्य तुच्छविलक्षणत्वान्न सत्ताश्रयत्वानुपपत्तिरित्याह—न तुच्छस्येति । तुच्छातिरिक्तं सर्वं सत्वेनैव प्रतीयते न तु सद्विलक्षणत्वेन । ततः कथं तदुभयविलक्षणसिद्धिरिति शंकते—तुच्छातिरिक्तमिति । श्रुतियुक्तिभिस्तत्प्रतिपादननिपुणगुरूपसदनाभावात् तदप्रतीतिस्तवैवातस्त्वया त उपासनीया इत्याह—तर्हीति । गुरवो वा कथं प्रमाणहीनं प्रतिपादयेयुरित्याशंक्य तत्र श्रुत्यादिप्रमाणस्य वक्ष्यमाणत्वान्मैवमित्याह—वक्ष्यत इति । उक्तानुपपत्त्याभासमपि विकल्प्य दूषयति--किं चेत्यादिना । सत एवासद्विलक्षणत्वान्नेष्टापत्तिरिति शङ्कते--अथेति । तस्य द्वितीयकल्प एवान्तर्भाव इत्याह—तर्हीति । सत्त्वविशिष्टस्यैव परमते सच्छब्दार्थत्वात् सत्ताश्रयताप्रयोजकसत्वस्याश्रितसत्वादभेदे आत्माश्रयः भेदे च तयोः परस्पराश्रयताप्रयोजकत्वे परस्पराश्रयः अन्योन्यसत्वाभ्युपगमे चानवस्थेति दूषयति—तदनुपपन्नमित्यादिना ।

द्वितीयमुत्थापयति—अथेति । अस्यापि वाधायोग्यत्वादन्यत्वेन तदाश्रयत्वेन न ब्रह्मवद्वाधायोग्यत्वसिद्धिरिति दूषयति--न ह्येतावतेति । अस्य वाधायोग्यत्वव्याप्यत्वात्

अर्थक्रियाकारित्वं बाधायोग्यत्वनियतमिति चेत् न, नियमग्राहकाभावात्। तुच्छस्य तददर्शनं तु न प्रपञ्चस्य सत्वापादकम्।

अथ प्रमाविषयत्वयोग्यत्वं सत्त्वं विश्वस्य। किं यत्र यद्विद्यते तत्र तत्प्रकारकं ज्ञानं प्रमा अबाधितार्थज्ञानं वा ? आद्यस्तु प्रपञ्चेऽप्यङ्गीक्रियते शास्त्रार्थाद्वैताविरुद्धत्वात्। शुक्तिरूप्यादिज्ञानस्यापि विद्यमानार्थत्वाच्च। द्वितीये त्वबाध्यत्वं सत्त्वमित्यागतं, तच्च, प्रपञ्चे तदन्यत्वसिद्धौ न सिध्यति कुतस्तस्य ब्रह्मतुल्यता।

न च सत्वविशिष्टं सच्छब्दार्थः, सत्वतद्वैशिष्टचयोस्तच्छब्दार्थत्वाभावप्रसङ्गात्।

बाधायोग्यत्वं सत्त्वम्

किन्तु बाधायोग्यत्वस्य सत्त्वस्य बाधायोग्यव्यक्त्याश्रयत्वेनावश्यकं बाधायोग्यम्। ब्रह्म च बाधायोग्यमिति न सदन्यत् ततश्च तस्य श्रुतिसिद्धबाधायोग्यत्वविशिष्टं सच्छब्दार्थ इति वदतोऽपि सम्मतम्। तथा च सद्बुद्धेर्लाघवादेकविषयत्वेन सद्व्यक्तिरेकैवेति न सदन्यत्वे प्रपञ्चस्य सत्यता। सद्बुद्धेः सत्तादात्म्यादेव सदन्यत्वेऽप्युपपत्तेः अन्यत्वाविरुद्धं च तादात्म्यमुक्तमेव।

---

तदाश्रये तद्व्यापकसिद्धिरिति शङ्कते--अर्थक्रियेति। बाधयोग्येपि मायिकगजादावर्थक्रियादर्शनान्नैवं व्याप्तिरित्यभिप्रेत्याह-न नियमेति। तुच्छस्यार्थक्रियावत्वादर्शनात् तदाश्रयस्य सत्वमावश्यकमित्याशंक्य तद्वैलक्षण्यमात्रेण तद्वत्तोपपत्तेर्न सत्वसिद्धिरित्याह--तुच्छस्येति। तृतीयं शङ्कते—अथेति। प्रमापदार्थं विकल्पयन् दूषयति---किमित्यादिना।

ननु द्वितीयप्रपञ्चस्य विद्यमानत्वे कथमद्वैताविरोध इत्याशङ्क्य तस्य शुक्तिरूप्यादिवद्बाध्यत्वेऽपि तदुपपत्तेर्मैवमित्यभिप्रेत्याह--शुक्तीति।

ननु बाधायोग्यत्वस्यैव सत्त्वात्मकत्वेऽपि सत्त्वविशिष्टस्यैव सच्छब्दार्थत्वात् प्रपञ्चस्यापि तदन्यत्वमविरुद्धमिति चोद्यं परिहर्तुमाह ---न च सत्वेति। अभावप्रसङ्गादिति। तत्र सत्वान्तराभावादित्यर्थः।

किं तर्हि सच्छब्दार्थ इति वीक्षायामाह—किन्त्विति। अस्य बाधायोग्यमित्युत्तरेणान्वयः।

ननु बाधायोग्यत्वरूपसत्वविशिष्टमेव बाधायोग्यमिति सत्वविशिष्टमेव सच्छब्दार्थः स्यात्। ततश्च स्ववचनविरोध इति तत्राह----बाधायोग्यत्वस्येति। बाधयोग्यस्वरूपे बाधायोग्यत्वरूपसत्वायोगात् तदाश्रयतया बाधायोग्यस्वरूपमावश्यकमिति तदेव सच्छब्दार्थ इत्यर्थः। तच्च बाधायोग्यं ब्रह्मैवेति न तस्य तदन्यतेत्याह—ब्रह्म चेति। ब्रह्मणो बाधायोग्यत्वं सदेव सोम्येत्यादिश्रुतिसिद्धं परस्यापि संमतं चेत्याह----ततश्चेति। प्रपञ्चस्यापि सद्बुद्धिगोचरत्वात् सच्छब्दार्थत्वं तुल्यमित्याशंक्याह--तथा चेति।

न च प्रपञ्च एव बाधायोग्यः ब्रह्म तत्तादात्म्यादेव सद्बुद्धिविषय इति वाच्यम्। मुक्तिकालेऽपि ब्रह्मणः सद्रूपत्वात् सदनुभवस्यैकविषयत्वे लाघवात् प्रपञ्चस्य श्रुत्या बाधितत्वात्। जडेऽन्यसत्तया सद्बुद्धानस्य शुक्तिरूप्यस्वप्नगजादौ दृष्टत्वाच्च।

प्रकाशात्मनो ब्रह्मणः स्वतः सत्वाभावे प्रकाशस्य कल्पितत्वेन तदधीनसत्वप्रपञ्चस्य सर्वस्यासिद्धिप्रसङ्गाच्च। तस्माद् बाधायोग्यव्यक्तिरेकैवेति तदन्यत्वसिद्धौ न प्रपञ्चे बाधायोग्यत्वसिद्धिः। एतेन ब्रह्मान्यत्वं ममाभीष्टमिति निरस्तम्। बाधायोग्यान्यत्वस्य तवानिष्टत्वात्। असच्च शून्यमभिमतं तच्च निःस्वरूपम्। यत्त्वबाध्यत्वशून्यत्वयोरविरोधेन सत्वासत्वरूपत्वायोगादिति। तदसत्। बाधायोग्ये शून्यत्वाभावात्। शून्यमपि बाधायोग्यमिति चेत् बाधायोग्यं शून्यमस्ति चेत् नाममात्रभेदः। नास्ति चेत् कुत्र तयोः सामानाधिकरण्यम्। भावाभावरूपत्वं नास्तीति चेत् न, प्रकृतसाध्ये शून्यस्यैव व्यावर्त्यत्वात् असच्छून्यमिति हि पर्यायः।

---

ननु सदन्यस्य कथं सत्तादात्म्यमित्याशङ्क्य सत्तानवच्छेदकभेदवत्वमेव तदित्युक्तमित्याह—अन्यत्वेति। वैपरीत्यशंकां निराकरोति— न चेति। तदनुभवस्य प्रपञ्चविषयत्वे तस्यानन्तत्वेनानन्तविषयत्वकल्पनागौरवं चेत्याह—सदनुभवस्येति।

नेह नानास्ति किञ्चन न काचन भिदास्ति वाचारम्भणं विकारो नामधेयमित्यादिना बाधितत्त्वादपि प्रपञ्चो न बाधायोग्य इत्याह – प्रपञ्चस्येति। वियदादिविषयसत्वबुद्धिस्तदन्यसत्ताविषया, जडसद्बुद्धित्वाच्छुक्तिरूप्यवदिति प्रयोगमभिप्रेत्याह—जड इति।

ब्रह्मणःऽस्वतः सत्ताभावे कल्पिततया जडत्वापाताज्जडानां स्वतः परतो वा सिद्धचयोगाज्जगदान्ध्यं स्यादित्याह—प्रकाशात्मन इति। सद्व्यक्तेरेकत्वात् तदन्यत्वसाधने नार्थान्तरतेत्याह—तस्मादिति।

न चैवं सच्चेदित्यत्र यदबाध्यं तदबाध्यमिति साध्यावैशिष्ट्यमिति वाच्यम् बाधायोग्यं चेन्न बाध्येतेत्यत्राप्यापाद्यापादकयोर्भेदादिति भावः। इदानीमसत्यदार्थमाह—असच्चेति। अत्र परोक्तं चोद्यमनूद्यापाकरोति—यत्त्वित्यादिना। बाधायोग्यत्वस्य शून्यत्वस्य च शून्य एव सहावस्थानं दृष्टमिति शंकते—शून्यमपीति। तयोरेकमधिकरणमस्ति नवेति विकल्प्योभयथापि न सहावस्थानसिद्धिरित्याह—बाधायोग्यमिति। सत्वासत्वयोर्भावाभावरूपत्वादनयोश्चातथात्वात् कथं तद्रूपत्वमिति शंकते—भावाभावेति। अत्राबाध्यत्वशून्यत्वयोरेव निषेध्यत्वान्निषेध्ययोर्भावाभावात्मत्वमनपेक्षितमिति परिहरति—न प्रकृतेति। शून्यव्यावृत्त्या कथमसद्वैलक्षण्यसिद्धिरित्याशंक्याह—असच्छून्यमिति।

परोक्तसत्वाभावोऽसत्त्वमिति पक्षस्य निरासः

**यत्तु सत्त्वाभाव एवासत्वं सत्वं च त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वमिति। तन्न। असतोऽवृत्तित्वे प्रमाणाभावात्। न तावत् प्रत्यक्षं प्रमाणं तस्य तत्रासामर्थ्यात्; नाप्यसत्वं लिङ्गम् अवृत्तित्वस्यैव तत्वात्। नापि सत्वानधिकरणत्वम् मम मते घटादौ तव मतेऽसत्वे सत्वाभावात्।**

**न च तत्सत् अभावस्य भावरूपप्रतियोग्यनाधारत्वात्। भावस्यापि स्वाभावाधिकरणत्वं नास्त्येव। परस्परविरहरूपयोर्विरुद्धयोराधाराधेयतानुपपत्तेः।**

**तयोरेकाधिकरणत्वमेव विरुद्धं नाधाराधेयत्वमिति चेत्। न, तयोरेकभूतलाधिकरणत्वदर्शनात्। एककाले नास्तीति चेत् एकदैकस्मिन् भूतले भावाभावयोः सत्वात्।**

**न चाभावावच्छिन्ने प्रतियोगी नास्तीति वाच्यम्। तत्र ह्यवच्छेदकत्वेन**

---

एवं स्वाभिमते सत्वासत्वे निरूप्य परोक्ते ते अनूद्य दूषयति—यत्त्वित्यादिना। अवृत्तित्व इति। त्रिकालसर्वदेशीयनिषेधप्रतियोगित्व इत्यर्थः। किं तत्र प्रत्यक्षं मानमुतानुमानम्? नाद्यः, परोक्षवस्तुष्वसदभावस्य प्रत्यक्षेण ग्रहणायोगादित्याह—न तावदिति। द्वितीये किमसत्वं लिंगं सत्वानधिकरणत्वं वा? नाद्यः सर्वदेशकालावृत्तित्वस्यैव तवासत्त्वरूपत्वात् साध्याविशेषादित्याह—नाप्यसत्वमिति। द्वितीयं निराकरोति—नापीति। सत्वाभावादिति। तत्र मृदादिवर्तिघटादावसति वर्तमानासत्वे च व्यभिचार इत्यर्थः। पराभिमतासत्वमेव सदसद्विलक्षणत्वमिति वक्तुं तस्य तावत्सत्वं निषेधति—न चेति। सत्वाभाव एवासत्वमिति त्वयाभ्युपगमादभावरूपासत्वे प्रतियोगिभावरूपसत्वायोगान्न तत्सदित्यर्थः।

न च सत्वमेवासत्वाभाव इति नोक्तदोष इति वाच्यम्। मया सत्वाभाव एवासत्वमिति स्वीकारादिति स्ववचनविरोधात्।

किं च सत्वस्य सर्वदेशीयसर्वकालीनात्यन्ताभावप्रतियोगित्वरूपासत्वाभावत्वे तस्मिन्निरपेक्षप्रतीतिरपि न स्यादसत्वस्य भावरूपत्वे तदाश्रयेऽसद्व्यवहारस्य परिभाषामात्रत्वप्रसंगाच्च। तस्मात्सत्वमेव भावरूपमिति तदभाव एवासत्वमिति भावः। सत्वस्यासत्वाभावत्वमभ्युपेत्यापि तस्य प्रतियोगिवृत्तित्वं न संभवतीत्याह—भावस्यापीति।

भावाभावयोर्विरोधोऽन्यविषय इति शङ्कते—तयोरिति। प्रतियोगितदभावयोरेव साक्षादाधाराधेयभावो विरुद्धः अन्यस्य तु तत्संसर्गात् तदभावाधारत्वं विरुद्धमिति वक्तुं स्वतो विरोधमाह—तयोरेकेति। भूतलमात्रस्य घटतदभावाधारत्वेऽप्यन्यतरावच्छिन्नप्रदेशस्य नान्यतराधारत्वमिति शंकामपवदति—न चेति। अभावावच्छिन्नभूतलस्य प्रतियोग्यनधिकरणत्वं न भूतलत्वस्वभावप्रयुक्तं तथा सति भूतलमात्रे घटानव-

**विशेषणीभूताभावस्य प्रतियोग्यनाधारत्वं स्वभाव इति तत्प्रयुक्तमेवाधिकरणस्यापि भूतलस्य तदनाधारत्वं; नहि स्वसंसर्गिण्यपि स्वाभावगंधमसहमानः स्वस्मिन् सहते ।**

**अन्यथा घटाभावेऽपि घटःस्यात् । न चाभावेऽप्यभावसत्वादेव न घटः स्ववृत्तित्वानुपपत्तेः । अभावान्तराभावाच्च घटाभावे घटाभावो नास्तीति प्रतीतेश्च ।**

**न चाभावत्वप्रयुक्तं तत् घटाभाववति पट इति विशेषणत्वेनाभावस्यापि अधिकरणत्वात् परमते तमसि खद्योतः स्फुरतीति प्रतीतेरभावस्याप्याधारत्वात् । प्रतियोगिन्यभावसत्वे तेजोऽवयविनि तमोबुद्धिप्रसङ्गः घटेऽपि घटाभावसत्वे तस्मिन् रूपादि नोत्पद्येत उपादानाभाववतः कार्यानाधारत्वात् ।**

**कथं तर्हि घटे घटो नास्तीति बुद्धिः ? अभावे घटो नास्तीति बुद्धिवदिति गृहाण । बाधस्योभयत्र तुल्यत्वात् ।**

---

स्थानप्रसङ्गात् । किन्तु तदनधिकरणत्वस्वभावाभावाधारत्वप्रयुक्तमेवं प्रतियोग्यधिकरणस्याप्यभावानाधारत्वमभावाधिकरणत्वविरोधिप्रतियोग्याधारत्वप्रयुक्तम् । तथा चाभातियोगिनोराधाराधेयभावोऽप्यत्यन्तविरुद्ध इत्यभिप्रेत्याह--तत्र हीति । अधिकरणस्यापीति । अधिकरणयोग्यत्वस्यापीत्यर्थः । अभावविरहात्मनो घटस्याभावाश्रयत्वेऽभावोऽपि स्वविरहात्मघटाश्रयः स्यादित्याह—अन्यथेति । घटाभावस्य घटानधिकरणत्वं घटाभावाश्रयत्वप्रयुक्तं न तु तद्विरहात्मत्वप्रयुक्तमित्याशङ्क्य किं तदाश्रितो घटाभावः स्वयमेव अभावान्तरं वा ? नोभयथापि इति दूषयति—न चेत्यादिना । अभावेऽभावाभ्युपगमोऽनुभवविरुद्धश्चेत्याह---घटाभाव इति ।

घटाभावस्याधिकरणत्वयोग्यताभावादेव न प्रतियोग्यधिकरणत्वमित्याशङ्क्याह--न चेति । परमते तमस आलोकाभावरूपत्वेऽपि खद्योताश्रयत्वस्यानुभवसिद्धत्वादभावोऽपि भावाधार इत्याह--परमत इति । तस्मादभावस्य तद्विरहात्मत्वादेव तदनाधारत्वमेवं भावस्याप्यभावविरहात्मत्वात् तदनाधारत्वमिति भावः । प्रतियोगिन्यभावसत्वे परमतानुरोधेन बाधकान्तरमाह—प्रतियोगिनीति । परमते प्रौढप्रकाशयावत्तेजः संसर्गाभावस्य तमोबुद्ध्यालम्बनस्य तेजोऽवयविन्यपि सत्वात् तत्रापि तमोबुद्धिः स्यादित्यर्थः । उपादानाभाववत इति । यावदुपादानाभाववत इत्यर्थः । अतस्तन्त्वन्तराभाववति न व्यभिचारः । घटे तदभावापलापोऽनुभवविरुद्ध इति शङ्कते—कथ तर्हीति । घटाभावस्य घटनिष्ठत्वांशे भ्रमोऽयमिति सदृष्टान्तमाह--अभाव इति । अभावानधिकरणस्य प्रतियोग्यधिकरणत्वनियमाद् घटे तदभावाभावे घटः स्यादित्यप्ययुक्तम् घटाभावस्य घटाभावानधि-

अत एव **घटे घटाभावानंगीकारे तत्र घटः स्यादेवेति प्रत्युक्तं अभावे व्यभिचारात्। परस्परविरोधे हि न प्रकारान्तरस्थितिरित्येतदुभयाधिकरणत्व-योग्यविषयम्।**

अत्यन्ताभावस्य प्रतियोगिवृत्तित्वनिरासः

**किञ्चात्यन्ताभावस्य प्रतियोगिवृत्तित्वे सत्त्वे तदभावः स्यादिति तदप्य-सत्स्य त् तथा च तस्यापि सर्वदेशीयात्यन्ताभावप्रतियोगित्वेन सत्वशून्यं जगद-सदनिर्वचनीयं वा स्यादिति वृद्धिं गृध्नता मूलमेवोन्मूलितम्। तस्मात् सत्वा-सत्वयोः परस्परविरहरूपत्वे नास्त्येव सत्वमसत्वे नापि त्वदुक्तमसत्वमसत् तदभा-वस्य सत्वस्य स्वस्मिन्नसत्त्वात् चासत्वेन त्वदुक्तलक्षणासत्वात्। ततश्च सत्वासत्वनिर्मुक्तं त्वयैवाभ्युपेतमिति घट्टकुटीप्रभातन्यायः। तथा चासन्नाम न किंचित् तद्ध्यानं च निर्विषयमिति वक्ष्यते।**

असत्पदार्थो निराकृतः शुक्तिरजतस्यासत्वनिराकरणम्

**किं च रजतभ्रमविषयेदमंशो रजताभिन्नः रजतेच्छाजन्यप्रवृत्तिविषयत्वात्**

---

करणत्वेऽपि घटाधिकरणत्वाभावेनोक्तनियमाभावादित्याह—अत एवेति। ननु विरुद्धयो-रेकतरनिषेधेऽपरतरविधानस्यावश्यकत्वाद्घटे तदभावाभावे घटः स्यादेवेत्याशङ्क्याभावे तदभावादयमपि न्यायोऽन्यविषय इत्याह—परस्परेति।

किञ्च तव मते सत्वाभावस्यैवासत्वात्मत्वात् तस्य स्वप्रतियोगिनि सत्वे वृत्तौ तदप्यसत् स्यात्। असत्वाश्रयस्यैवासच्छब्दार्थत्वात्। ततश्च सत्त्वस्य क्वापि वृत्त्ययोगात् सर्वं सत्वशून्यं स्यादिति मदिष्टसिद्धिरित्याह--किञ्चेति। असत्त्वस्य भावनिरूपिततद-भावरूपत्वस्य प्रतियोगिवृत्तित्वायोगात् तव सत्वाभावस्तावत् सिद्ध इत्याह—तस्मादिति। इदानीमसत्वस्यासत्वं निराकुर्वन् तदेवानिर्वचनीयमवश्यमभ्युपेयमित्याह—नापीत्यादिना। स्वस्मिन् असत्वे लक्षणासत्वादिति। सर्वदेशीयात्यन्ताभावप्रतियोगित्वाभावादित्यर्थः। असच्छब्दार्थस्य कस्यचिदभावान्न तत्र कोऽपि धर्मः ततश्च न वाधायोग्यत्वमपीत्यभि-प्रेत्याह—तथा चेति। एवं सामान्येनासत्पदार्थं निराकृत्य शुक्तिरजतस्याप्यसत्वं निरा-करोति- किञ्चेत्यादिना। अप्रयोजकत्वं निराकरोति—अन्यथेति। तत्रेति। भ्रमविषये इदमंशे इत्यर्थः। नन्विदमंश एव प्रवर्तकरजतज्ञानविषय इति नेत्याह—अन्याकारेति। ज्ञाननिरूपकाकारस्यैव ज्ञानविषयत्वादन्यथातिप्रसङ्गादिदमाकारस्य न रजताकारज्ञान-विषयतेत्यर्थः। ज्ञानैक्यमात्रादित्याद्युक्तार्थम्।

संमतवत्। अन्यथेदं रजतमिति ज्ञानात् तत्र न प्रवर्तेत, ज्ञानस्य स्वविषय एव प्रवर्तकत्वात्। अन्याकारज्ञानस्यान्याविषयत्वात् ज्ञानैक्यमात्रात् प्रवृत्तौ रजतारजतसमूहालम्बनादपि रजतार्थ्यरजतेऽपि प्रवर्तेत। भेदग्रहादप्रवृत्तौ सर्वत्र भेदाग्रह एव प्रवर्तकः स्यात् किं भ्रान्त्या।

अस्मन्मते च रजतज्ञानाद्रजत एव प्रवृत्तिः रजतस्य तत्रावृत्तौ प्रत्यक्षत्वानुपपत्तेश्च। तत्रासत इन्द्रियसन्निकर्षाभावेन ऐन्द्रियकप्रत्यक्षायोगात्।

इन्द्रियजन्यप्रत्यक्षमात्रे सन्निकर्षः कारणम्

न चेन्द्रियसन्निकर्षः प्रमायामेव कारणम् लाघवेन जन्यप्रत्यक्षमात्रे इन्द्रियजन्यप्रत्यक्षमात्रे वा तस्य हेतुत्वात्।

अन्यथा सत्यप्रवृत्तावेव ज्ञानं कारणम् अन्यत्र भेदाग्रह इति जितमविवेकिनेत्युक्तम्।

न चालौकिकरजतकल्पनाद्वरमिन्द्रियमसन्निकृष्टमपि गृह्णातीति वाच्यम्। असत्प्रत्यक्षस्याप्यलौकिकत्वात्। इन्द्रियसन्निकर्षस्य जन्यप्रत्यक्षमात्रे कारणत्वग्रहदशायां गौरवाप्रतीतेश्च कारणताग्रहस्य लाघवपुरस्कारेण प्रवृत्तत्वात् क्लृप्तत्यागे च भ्रांतिरेव न स्यात्।

न च चक्षुषा रजतं पश्यामीत्यनुभवादस्य तज्जन्यत्वं; तस्य भ्रमानुकूलत्वेऽपि तथानुभवोपपत्तेः सत्पुत्रेण सुखमनुभवतीतिवत्। किञ्च यदि संप्रयोगं

---

सिद्धान्तेऽपि कथं रजतज्ञानाच्छुक्तौ प्रवृत्तिरित्याशंक्य तदात्मकमायिकरजताभ्युपगमात् तत्रैव ततः प्रवृत्तिरित्याह—अस्मन्मत इति। विपक्षे बाधकान्तरमाह—रजतस्येति। असतोऽपि दोषवशात् प्रत्यक्षत्वमाशंक्य क्लृप्तकारणाभावे तन्मात्रान्न तदुपपत्तिरित्यन्यथाख्यातिनिराससमय एवोक्तमित्याह - तत्रासत इत्यादिना। स्वमतेन शाब्दापरोक्षव्यावृत्यर्थमिन्द्रियजन्यप्रत्यक्षमात्रे वेत्युक्तम्। शुक्त्यभिन्नरजतस्य कुत्राप्यदर्शनात् तत्साधने कल्पनागौरवमित्याशङ्क्यासत्प्रत्यक्षस्यापि कुत्राप्यदर्शनात् तदभ्युपगच्छतस्तवापि तत्तुल्यमित्याह—न चालौकिकेति। किं चेदं गौरवमनुमानात् पूर्वमनुपस्थितत्वान्न तद्बाधकमित्याह—इन्द्रियेति। भ्रान्तिरेव न स्यादिति। तत्कल्पनस्यापि गुरुत्वादित्यर्थः।

ननु रजतभ्रमस्य चक्षुर्जन्यत्वानुभवात् प्रातिभासिकरजते तत्सन्निकर्षायोगादसन्निकृष्टविषयज्ञानस्येन्द्रियजन्यत्वं त्वयाप्यभ्युपेयमिति नेत्याह—न च चक्षुषेति। भ्रमानुकूलत्वेऽपीति। भ्रमकारणेदमाकारवृत्तिहेतुतया तदनुकूलत्वेऽपीत्यर्थः। सत्पुत्रेणेति मानसप्रत्यक्षरूपे साक्षिरूपे वा सुखानुभवे सत्पुत्रस्य कारणत्वाभावेऽपि सुखोत्पादकतया तदभिव्यञ्जकवृत्तिविशेषोत्पादकतया वा तदनुभवानुकूलत्वमात्रेण यथा पुत्रेणेति व्यपदेशस्तथात्रापीत्यर्थः। प्रत्यक्षस्यासन्निकृष्टविषयत्वे सद्विषयत्वेनापि भ्रमोपपत्तेस्तद्विषयस्यासत्वमपि न सिध्येदित्याह—किं चेति। किं च भ्रमविषयरजते रजतत्व-

विनैवासतो भानं तर्हि देशान्तरीयरजतात्मनैव शुक्तिर्भातु किमसत्ख्यात्या।

अपि च रजताकारोऽनुभवोऽप्यसति नोपपद्यते, असतो रजतत्वजातिसमवायतादात्म्ययोरभावात्। तस्यापि तदाश्रयत्वे देशान्तरीयमेव रजतं प्रतीयत इति स्यादिति न त्वदुक्तासत्वं रजतस्य। यद्यसति रजतत्वमारोप्येत तर्हि तस्यैव प्रत्यक्षभ्रमस्य नासद्विषयत्वम्। शुक्तिकायामेव तदारोपोपपत्तेश्च।

न चैवं भ्रमविषयस्यासत्वानुभवबाधः तदनुभवस्य रजतं यन्निष्ठतयाऽनुभूयते तद्देशीयतत्कालीनाभावप्रतियोगित्वमात्रविषयत्वात्। सर्वदेशीयात्यन्ताभावप्रतियोगित्वलक्षणत्वदुक्तासत्वस्यासदभादित्यनुभवितुमशक्यत्वात्।

न हि प्रत्यक्षस्य तद्ग्रहणे सामर्थ्यमस्ति। नापि लिङ्गादिना तदुपस्थितिः तदभावात्। तदनुसंधानं विनाऽसदित्यनुभवाच्च। न चैवं रजतस्य तत्र वृत्तौ तत्काले तत्राभावो न स्यादिति वाच्यम् रजतप्रत्यक्षतदभावानुभवाभ्यामभावस्य प्रतियोगिनि स्वसमानसत्वविरोधिमात्रस्वभावत्वात् अनुभवानुरोधेन

---

संबन्धोऽस्ति न वा? द्वितीये तत्र रजताकारा धीर्न स्यादित्याह--अपि चेति। आद्ये तस्यासत्वहानिरित्याह—तस्यापीति। रजतत्वरहितेऽपि च असति रजतत्वारोपाद्रजताकारा धीरित्याशंक्य तस्यैवारोपस्य सद्रजतत्वविषयत्वाद् भ्रमस्यासद्विषयत्वनियमक्षतिरित्याह—यद्यसतीति। पुरोवर्तिन्येव रजतत्वारोपेऽपि तदाकारधीसंभवादसति तदारोपोऽप्रामाणिकश्चेत्याह--शुक्तिकायामिति।

यदुक्तं भ्रमविषयस्यासद्विलक्षणत्वेऽसदेव रजतमभादित्यनुभवविरोध इति तत्र पराभिमतासत्वानुभवायोगात् प्रतिपन्नोपाधावभावप्रतियोगित्वमात्रविषयोऽयमनुभव इति न विरोध इत्याह – न चैवमित्यादिना। किं रूप्यात्यन्ताभावस्य सर्वदेशकालीनत्वं प्रत्यक्षेण भासते उतानुमानादिना? नाद्यः, प्रत्यक्षस्य व्यवहितदेशकालादिप्रतिभासे सामर्थ्याभावादित्याह – न हीति।

द्वितीयं दूषयति--नापीति। न च बाध्यत्वादिकमेव लिंगमिति वाच्यम्। तस्य शशशृङ्गादिदृष्टान्तेऽभावात्।

न च व्यतिरेकेण घटादिरेव दृष्टान्त इति वाच्यम् तत्राबाध्यत्वस्य दुर्विज्ञेयत्वात्। बाधस्याप्यन्यथाप्युपपत्तेरप्रयोजकत्वाच्चेति भावः। असत्वानुभवस्य लिङ्गाद्यजन्यत्वे हेत्वन्तरमाह—तदनुसन्धानमिति।

ननु पुरोवर्तिनि रजताभ्युपगमे तत्र तदभावस्य विरोधेनासंभवात् कथमसदनुभवस्य तद्विषयत्वमित्याशंक्य सर्वत्राभावस्य स्वसमानसत्ताकप्रतियोगिविरोधित्वदर्शनान् तदधिकरणे प्रतियोगिनि स्वसमानसत्वमेव विरुद्धं न प्रतियोगीति रजताधिष्ठानरूपस्य तदतिरिक्तस्य वा तदभावस्य स्वविषमसत्ताकरजतेन न विरोध इति परिहरति–

**पदार्थस्वभावस्य कल्प्यत्वात् ।**

अनिर्वचनीयरजताभ्युपगमस्यावश्यकता

**असत्प्रत्यक्षं, इन्द्रियं च क्लृप्तकारणं विनैव तज्जनकं, असदपि भावरूपं, तस्य प्रतियोगिनो दुर्निरूपणेनाभावत्वानुपपत्तेर्भावाभावव्यतिरिक्तं वा । असत् इत्यादिकल्पनाया अभावस्य प्रतियोगिसत्वविरोधित्वमात्रस्यानुभवसिद्धस्याभ्युपगम एव वरीयान् ।**

**किञ्च स्वप्ने 'अथ रथान् रथयोगान् पथः सृजत' इति श्रुत्याऽनुभवेन च पदार्थसृष्टिरवश्यमभ्युपेया । अभ्युपेता च केनचित् । अस्ति चोत्थितस्य गजादेरनुभवकालीनाभावानुभवः रजतवत् स्वप्ने मिथ्या गजोऽनुभूतः यन्मया स्वप्ने दृष्टं रथादि तत्कालत्रयेऽपि नास्ति इति शतशोऽनुभवात् । तत्र कथं तव गतिः ।** अत एव **स्वप्नसृष्टिः परमार्थेति** निरस्तम् । **तदा तत्र तदभावाविरोधिपरमार्थत्वस्येष्टत्वात् ।**

**तद्विरोधिनः परमार्थत्वस्यानुभवविरोधेनानुपपतेः । अतः स्वप्ने स्वीकुरु अनिर्वचनीयं सृष्टिं वा परिहर ।**

मिथ्यैव रजतमभादिति प्रत्यक्षस्य अनिर्वचनीयसाधकता

---

न चैवमित्यादिना ।

ननु लाघवादभावस्य प्रतियोगिनैव विरोधः न प्रतियोगिसत्वेन गौरवादित्याशंङ्क्य विषमसत्ताकयोस्तयोः सादेश्यानुभवान्नैवमित्याह--अनुभवेति ।

वस्तुतः परपक्ष एवाप्रामाणिकानेककल्पनं न त्वस्मन्मत इत्याह--असत्प्रत्यक्षमित्यादिना । किञ्च स्वप्नेऽनुभूयमानपदार्थानां सृष्टिश्रवणात्तेषामसत्वमयुक्तं तदभावानां च तदधिकरणे तत्कालीनतयाऽनुभवात् "नतत्र रथा न रथयोगा" इति श्रुतेश्च नाभावस्य प्रतियोगिमात्रविरोधित्वं न वा भ्रमविषयस्यासत्वमित्यभिप्रेत्याह –किञ्चेत्यादिना अनुभवेनेति। स्वप्न एव पटाद्युत्पत्त्यनुभवेनेत्यर्थः । केनचित्, अर्वाचीनेन । तत्र कथं तवेति । अभावाधिकरणे प्रतियोगी न वर्तते त्रिकालसर्वदेशीयाभावप्रतियोगित्वमसत्वमिति च तवाभ्युपगमः । स्वप्नसृष्टिपर्यालोचनायां कथं स्यादित्यर्थः । स्वप्नसृष्टिः परमार्थत्वान्न तदभ्युपगमहानिरित्याशंक्य किन्तत्पारमार्थिकत्वं तत्र तदभावाविरोधि उत विरोधि- आद्ये तत्पारिभाषिकमेवेति नास्मन्मताद्विशेष इत्याह—अत एवेति ।

द्वितीये दोषमाह—तद्विरोधिन इति । अनुभवविरोधेनेति । तदधिकरणे तत्कालीनाभावानुभवविरोधेन । एतच्चोपलक्षणं "न तत्र रथा न रथयोगा" 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वादि'ति श्रुतिसूत्रविरोधेन चेत्यर्थः । यदुक्तं मिथ्यापद-

किञ्च मिथ्यैव रजतमभादिति तस्य मिथ्यात्वमनुसंधीयते । न च तन्मिथ्यात्वं सर्वदेशीयसर्वकालवृत्त्यत्यन्ताभावप्रतियोगित्वं तस्य बाधप्रत्यक्षाविषयत्वादित्युक्तम् । नापि विशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वमात्रं, मिथ्या रजतमभादित्यनुभूतरजतधर्मतया तस्यानुसंधानात् । देशान्तरीयादेस्तदसंभवात् । अतः स्वसमानाधिकरणस्वसमानकालीनात्यन्ताभावप्रतियोगित्वादिकमेव मिथ्यात्वम् ।

न चैतदसति संभवति । तस्याधिकरणाभावात् । साधिकरणत्वे वा तदत्यन्ताभावस्य सर्वदेशीयत्वासंभवात् ।

किञ्चासदत्यन्ताभावस्य स्वस्मिन्नवृत्तेर्न सर्वदेशीयत्वम् । न च तस्य स्वावृत्तित्वासिद्धिः आधाराधेयभावादेर्भिन्ननिष्ठत्वात् ।

अन्यथा दण्डी पुरुष इतिवत्पुरुषी पुरुषः पुरुषे पुरुष इति वा प्रतीयात् । न च प्रतीत्यनुसारेण प्रमेयाभ्युपगमो न तु प्रमेयानुसारात् प्रतीतिकल्पनेति वाच्यम् । सामग्रीसत्वे प्रतीतेरावश्यकत्वात् । पुरुषे पुरुषसंबन्धो नास्तीति चेत् । तर्ह्यसदभावेऽपि न स इति तुल्यम् । अभावेऽभेदसंबन्धोऽस्तीति चेत् अन्यत्रापि तुल्यम् ।

---

स्यासत्यपर्यायत्वान्मिथ्यैव रजतमभादित्यसत्वविषयत्वमिति तद्दूषयितुमाह — किं चेति । अविषयत्वादित्युक्तमिति । ततश्चासत्वाननुभवात्तदनुसंधानानुपपत्तिरिति भावः । मिथ्यात्वानुसंधानस्यान्यथाख्यातिमतेऽपि नोपपत्तिरित्याह — नापीति ।

ननु तन्मते देशान्तरीयरजतादेरेव भ्रमविषयत्वात् तस्यानुभूतत्वमप्यस्तीत्याशंक्य तस्य भ्रमविषयत्वनिरासात् मैवमित्याह -- देशान्तरीयादेरिति ।

परमतेऽनुसन्धीयमानमिथ्यात्वस्य दुर्निरूपत्वात् स्वाभिमतमेव तद्बाधकप्रत्ययसिद्धमनुसन्धानगोचर इत्यभिप्रेत्याह -- अत इति । स्ववैय्यधिकरण्यानधिकरणात्यन्ताभावप्रतियोगित्वादिकमादिपदार्थः । उक्तलक्षणस्यासत्यति व्याप्तिशंकां निराकरोति -- न चैतदिति । सर्वदेशीयत्वासंभवादिति । परैः प्रतियोग्याश्रये तदत्यन्ताभावानभ्युपगमादित्यर्थः ।

प्रसंगात्परोक्तासल्लक्षणमपि दूषयति — किं चेति । किं सर्वदेशीयात्यन्ताभावप्रतियोगित्वमित्यत्र सर्वशब्दो वस्तुमात्रपरः अभावातिरिक्तवस्तुपरो वा स्वव्यतिरिक्तवस्तुपरो वा ? नाद्यः अभावस्य स्ववृत्तित्वायोगेनासंभवादित्याह — असदत्यन्ताभावस्येति । प्रमेयत्वादिवत्स्ववृत्तित्वं किं न स्यादित्याशंक्य दृष्टान्तासंप्रतिपत्त्या दूषयति — न चेति । भेदस्य संबन्धाप्रयोजकत्वेऽतिप्रसंगमाह — अन्यथेति । पुरुषे पुरुषसंबन्धसत्वेऽपि न तत्प्रतीतिः विषयस्य सत्वस्य प्रतीत्यनियतत्वादित्याशंक्य तत्सामग्र्यां सत्यां कदाचित्प्रतीतिः स्यादित्याह — न चेत्यादिना । पुरुषे पुरुषसंबन्ध एव नास्ति मानाभावादतो न तत्प्रतीतिरित्याशंक्याभावेऽपि तुल्यमित्याह — पुरुष इति । अभावे स्वाभेदस्य प्रामाणि-

अत एव नाभेदः क्वचिदपि संबन्ध इति सिद्धान्तः। तर्ह्यभावातिरिक्तसर्वदेशी-यत्वं विवक्षितमिति चेत् तर्हि न तदभावः सत्यं, गौरवात्। किन्त्वस्मदुक्त-मिथ्यावस्त्वन्यदेव, लाघवादभावत्वादिधर्मेतिव्याप्तेश्च।

न च स्वेतरसर्वदेशीयत्वं विवक्षितम् मम मते घटादौ तवात्मनि चातिव्याप्तेः। आत्मनोऽपि तव वृत्तिमत्त्वेऽसतोऽपि पदार्थत्वादिना तत्सुसाध्यम्। अवृत्तित्वे प्रमाणाभावाच्च।

वस्तुत एतदेव युक्तं इदानीं रजतमित्याद्याधेयत्वप्रतीतेः।

सदसद्विलक्षणत्वात् रजतं मिथ्या

किञ्च रजते यावत्सदन्यत्वाभावे सदेव स्यात् रजतं सन्न भवतीति विशिष्टप्रतीतिरपि न भवेत्। तस्या असति बाधके धर्मधर्मिविषयत्वात्। त्वया चावश्यमभ्युपेयम् अन्यथाऽऽत्मनि निर्विशेषत्वादिधर्मापादनायोगात्।

तच्चान्यत्वं न सत् सत्वावच्छिन्नप्रतियोगिकान्योन्याभावस्य प्रतियोगि-

---

कत्वात् स एव संबन्ध इत्याशंक्यात्राप्युक्तातिप्रसङ्गस्तुल्य इत्याह—अभाव इत्यादिना। तर्हि प्रमेयत्वादावभेदः संबन्धो न भवेदित्याशंक्येष्टापत्तिरित्याह—अत एवेति। द्वितीय-कल्पं शङ्कते—तर्हीति। अत्राभावातिरिक्तत्वघटितत्वदुक्तासत्वाभावः सत्वमिति न भवेद्गौरवात्। किन्तु मदुक्तमिथ्यावस्त्वन्यत्वमेव लाघवात्। ततश्च न त्वदिष्टसिद्धि-रिति दूषयति—तर्हीति। किं चाभावत्वस्याभावातिरिक्तसर्वदेशीयात्यन्ताभावप्रति-योगित्वात् तत्रासत्वलक्षणस्यातिव्याप्तिरित्या—अभावत्वादीति। प्रागभावत्वादय आदिपदार्थः।

तृतीयं दूषयति—न चेति। मम मत इति। सिद्धान्ते घटादेर्मिथ्यात्वे तदुपादानेऽपि तदभावस्य सत्वात्तस्य सर्वदेशीयत्वम्। न च तस्य प्रतियोगिवृत्तित्वनिरासेन सर्व-देशीयत्वं नेति वाच्यम्। असदभावस्यापि तदनुपपत्तेस्तुल्यत्वेन तस्य प्रतियोग्यति-रिक्तत्वस्यापि वक्तव्यत्वादिति भावः। आत्मनीति। तस्यावृत्तित्वेन तदत्यन्ताभावस्य स्वेतरसर्वदेशीयत्वादिति भावः। पदार्थत्वादिनेति। तस्य तव मते व्यभिचाराभावादिति भावः। रजतादेरवृत्तित्वे मानाभावादपि वृत्तिमत्त्वमित्याह—अवृत्तित्व इति। प्रत्यक्षतोऽपि तस्य वृत्तिमत्त्वानुभवात् तदेवाभ्युपेयमित्याह—वस्तुत इति। परेणापि सत्वासत्वविनि-र्मुक्तमवश्यमभ्युपेयमिति वक्तुमसत्वेन सम्मतरजतादौ सदन्यत्वधर्ममुपपादयति—किञ्चेति। विशिष्टप्रतीतिः प्रतियोगित्वादिप्रतीतिवत्स्वरूपविषयैवेत्याशंक्याह—तस्या इति। किञ्च निर्विशेषं ब्रह्मेत्यस्य विशेष्यातिरिक्तधर्मविषयत्वमुपपादयता त्वयाऽत्रापि तदवश्य-मभ्युपेयमित्याह—त्वया चेति।

एवं रजतादौ सदन्यत्वं प्रसाध्य तस्य सत्वं निराकरोति—तच्चेति। किं तत्

तावच्छेदकीभूतसत्वानाधारत्वात् । नाप्यसत् । रजतस्य सन्मात्रत्वप्रसंगात् तदभावस्यासत्यभावाच्च ।

अतस्तदेव सत्वासत्वविनिर्मुक्तमित्यनिर्वचनीयपरिहारायासत्पदार्थाभ्युपगन्तुः शान्तिकर्मणि बेतालोदयः ।

अत एव प्रत्येकप्रतियोगिकथावत्सद्भेदा एवासति । ते च सन्तः सत्वस्य तत्र वृत्त्यविरोधादिति निरस्तम् । यद्यभावप्रतियोगिकोऽपि भेदोऽसतो भिन्नस्तर्हि तत्प्रतियोगिको भेदोऽपि ततोऽन्य इत्यनन्तभेदस्वीकारापत्तिः ।

असत्स्वरूपश्चेद् भेदस्यासत्वेनासतोऽभावात्मत्वापत्तिः तब भेदाभेदव्यतिरिक्तरूपान्तराभावात् । असन्न कस्यापि देश इति चेत् । तथा सत्यसत्वधर्म एवासत् स्यात् तथा च सत्ता असत्वविरहरूपेति त्वदभ्युपगमविरोधः ।

किञ्चासत्वस्याप्यदेशत्वेऽसदुक्तिव्याघातः । असत्वं वा कस्य धर्मः । एतेन

---

सत्वावच्छिन्न-प्रतियोगिक सामान्याभावात्मकमुत यावद्विशेषाभावसमुदायात्मकं, आद्ये दोषमाह – सत्वावच्छिन्नेति ।

न चाभावान्यत्वेऽभावत्ववत्सदन्यत्वेऽपि सत्वमविरुद्धमिति वाच्यम् । दृष्टान्तस्यैवासंप्रतिपन्नत्वादन्यत्वस्य प्रतियोगितावच्छेदकावच्छिन्नत्वं तदन्यत्वस्यापि तत्रावश्यकत्वादनवस्थापत्तेश्चेति भावः । तर्हि सदन्यत्वमसदेवेत्याशंक्याह—नापीति । त्वदुक्तासल्लक्षणाभावादपि न तदसदित्याह—तदभावस्येति । फलितमाह—अतस्तदिति । सदन्यत्वं तच्छब्दार्थः वक्ष्यमाणप्रकारेण द्वितीयोऽप्ययुक्त इत्याह –अत एवेति । अविरोधादिति । सत्वस्य प्रतियोगितानवच्छेदकत्वादिति भावः ।

किं सद्भेदा असतो भिन्ना उत अभिन्ना भिन्नाभिन्ना वा ? आद्येऽपि किं भेदप्रतियोगिको भेदोऽसतो भिन्नस्तत्स्वरूपमेव वा ? आद्ये दोषमाह—यदीति ।

न चोत्पत्त्याद्यप्रतिकूलत्वादियमनवस्था न दोषायेति वाच्यम् अप्रामाणिकानन्तकल्पनागौरवस्यैव दोषत्वादन्यथा समवायाद्यानन्त्यकल्पनमपि स्यादिति भावः ।

द्वितीयमनूद्य दूषयति—असदिति । एतेन मध्यमोऽपि कल्पो निरस्तः । तृतीयं निराकरोति—अवेति । नन्वसतो धर्मित्वे भेदाश्रयत्वादिविकल्पः स्यात् । तस्य तदेव नास्ति निःस्वरूपत्वादित्याशंक्यापाकरोति—असन्न कस्यापीत्यादि । । असत्स्यादिति । निर्द्धर्मिकधर्मायोगादिति भावः । ततः किमित्यत आह— तथा चेति । असदतिरिक्तासत्वपदार्थाभावात्तद्विरहात्मत्वमपि सत्ताया न संभवतीत्यर्थः ।

किञ्चैवमसतोऽसत्वं प्रत्यनाश्रयत्वे सत्वानाश्रये सदुक्तिवदसत्वानाश्रयेऽप्यसदुक्तिर्न स्यादसत्वधर्मोऽनवस्थितश्च स्यादित्याह—किं चेति । तदनाश्रितस्यापि तद्धर्मत्वं दृष्टान्त-

ध्वंसप्रतियोगित्वादेर्ध्वस्ताश्रयत्वाभावेऽपि तद्धर्मत्ववदतदाश्रयत्वाभावेऽपीदमपि तदीयमिति निरस्तम् । धर्मस्य तदाश्रितत्वमन्तरेण तदीयत्वतद्धर्मत्वासंभवात् । ध्वंसप्रतियोगित्वस्य ध्वस्तधर्मत्वं मां प्रति साधनीयं त्वया ध्वंसविरहात्मत्वस्य घटादिस्वरूपस्य वा तस्य ध्वंसकालेऽसंभवात् ।

अतीतादिव्यवहारोपपत्तिः

कथं तर्ह्यतीतादिव्यवहारः किमत्र कथं ? अद्वैतब्रह्मवादिनः अव्याकृततामापन्नः प्रतियोगी वा तदाश्रयोऽस्तु । सा च यदि दुर्निरूपा तर्ह्यतीतादिव्यवहारोऽप्यपरमनिर्वचनीयत्वे प्रमाणमस्तु ।

किञ्चासत्सर्वदेशीयसर्वकालीनात्यन्ताभावप्रतियोगीति ज्ञानं भ्रमः प्रमा वा ? आद्ये न तस्य तत्त्वसिद्धिः ।

द्वितीये सत्वापत्तिः प्रामाणिकस्य सत्वात् अर्थसत्तां विना ज्ञानस्य प्रमात्वानुपपत्तेः ।

न च तद्वति तत्प्रकारज्ञानं प्रमा, अस्मन्मते शुक्तिरूप्यस्वप्नरथादिज्ञानस्यापि तत्सत्वात् । तव मतेऽपि घटप्रकारके घटे घटत्वमिति ज्ञाने तदभावाच्च ।

न च तत्र तत्संबन्धोऽस्तीति वाच्यम् तद्विशिष्टस्य तस्याभावात् । तदुपलक्षितस्यातिप्रसक्तत्वात् तदुपहितस्यापि तवमते तत्संबन्धानन्यत्वात् ।

---

बलेनाशंक्य तदसंप्रतिपत्त्या दूषयति—एतेनेत्यादिना । स्वरूपविशेष एव प्रतियोगित्वमिति मतेनाह—घटादीति ।

अतीतत्वादेरतीतादिधर्मत्वाभावे कथं तद्विशिष्टव्यवहार इति चोदयति—कथमिति । ब्रह्मातिरिक्ते सर्वत्र दुर्निरूपत्वस्य ममेष्टत्वाद् व्यवहारदुर्निरूपत्वमपि तदनुकूलमेवेत्यभिप्रेत्याह—किमत्रेति । सूक्ष्मरूपतामापन्नघटादिरेवातीतत्वादिधर्माश्रयस्तद्व्यवहारगोचर इत्याह—अव्याकृततामिति । अव्याकृतता किं कारणस्य धर्म उत तदतिरिक्तस्य कार्यस्य ? आद्ये कार्यस्य न तदापत्तिः। द्वितीयेऽपि सतःकार्यस्य तदाश्रयत्वे स्थित्यवस्थातो न विशेषः । असतश्चाश्रयत्वमेवानुपपन्नमित्याशंक्यातीतादिव्यवहारकार्यकारणभावाद्यनुपपत्त्या भेदाभेदाभ्यां सत्वासत्वाभ्यां च दुर्निरूपकार्यमेव तदाश्रय इति न तदनुपपत्तिरित्यभिप्रेत्याह—सा चेति । असत्प्रतीतेरपि दुर्निरूपत्वान्न परोक्तासत्वसिद्धिरित्याह—किं चेति । द्वितीयेऽपि किं सदर्थविषयज्ञानं प्रमा उत तद्वति तत्प्रकारकज्ञानम् ? आद्ये दोषमाह—द्वितीय इति । द्वितीयस्य बाधितार्थत्वेऽप्युपपत्तेर्न ततस्तद्विषययाथात्म्यसिद्धिरित्यभिप्रेत्याह—न चेति ।

किं चात्र तद्वत्त्वं तदाश्रयत्वं तत्संबन्धवत्त्वं वा तदुपहितसंबन्धवत्त्वं वा ? नाद्यः विशेषणस्य तत्राभावे तद्विशिष्टस्याप्यभावेन उक्तदोषानिस्तारात् । न द्वितीयः । रजतत्वाद्युपलक्षितसमवायस्य सर्वत्र सत्त्वेन शुक्त्यादावपि तज्ज्ञानस्य प्रमात्वापातात् । न

न च घटत्वमिति ज्ञाने घटत्वता प्रकारः अखण्डत्वे तस्यैवोपाधेर्जातिमात्रविलोपप्रसङ्गात्। सखण्डत्वे घटघटितस्य तत्रावृत्तेः। तस्मात् सदर्थज्ञानमेव प्रमा। तस्मात् सर्वदेशीयात्यन्ताभावप्रतियोगित्वमनिर्वचनीय एवास्तोति असत्तुच्छशून्यनिःस्वरूपादिशब्दा निर्विषया एव। तज्ज्ञानमपि शब्दाज्जायमानं निर्विषयमेव। तदुक्तम्-अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हीति; शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति च। न हि परमतेऽतीतादिज्ञानस्य सविषयत्वं संभवति ज्ञानेन तदाऽसतो विषयस्य संबन्धाभावात्।

असद्भिन्नत्वस्यावश्यकता।

यत्तु व्यर्थविशेष्यत्वाभिधानम्। तदसत्। असदन्यत्वादिविशेषणेन विना साध्येऽर्थान्तरत्वस्य दुष्परिहरत्वात् एतच्च साध्यवर्णनमेवेत्युक्तम्। कथं तर्ह्यसतोऽन्योन्याभावप्रतियोगित्वं? न कथंचिदपि। पररीत्या परोबोध्यत इति ग्रन्थे तदुक्तिः। यत्त्वेकतरनिषेधस्येतरविधिनान्तरीयकत्वादित्यसन्त्वनिषेधे जगतः सत्वं स्यादिति तत्तस्यान्यविषयतावर्णनात् परिहृतम्। किञ्चैवं प्रसिद्धपदार्थानामपलापः सुकरः नीरूपत्वेऽस्पर्शित्वप्रसंगः अन्यथा रूपवत् स्यादिति।

अथोभयविलक्षणमनुभूयते तत्किं रजतं न प्रत्यक्षं तस्मान्न साध्यानुपपत्तिः। नापि प्रमाणानुपपत्तिः, प्रतिपन्नं; सदन्यत्वे सत्यसदन्यत्वे सत्युभयात्मकत्वरहितं वाध्यत्वात् यन्नैवं तन्नैवं यथाऽऽत्मा।

---

तृतीयः। उपहितस्य परमते केवलादनन्यत्वेनोक्तातिप्रसंगादित्याह--न च तत्रेत्यादिना।

ननु घटत्वमिति ज्ञाने न घटः प्रकारः येनोक्तदोषः स्यात्, किन्तु घटत्वतैवेत्याशंक्य स किमखण्डो धर्म उत सखण्डः? नाद्यः, उपाधेरप्यखण्डत्वे व्यञ्जकधर्मैरेवानुगतप्रत्ययादेरुपपत्तेर्जातिमात्रविलोपः स्यात्। न द्वितीयः। घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपायास्तस्याः घटादिघटिततया घटत्वाश्रितत्वायोगेनोक्तदोषादित्याह—न च घटत्वमितीत्यादिना। पराभिमतप्रमालक्षणायोगात् सद्रूपब्रह्मज्ञानमेव प्रमा अन्यविषयं त्वप्रमैवेत्याह -तस्मादिति। परोक्तलक्षणस्यासत्यनुपपत्तेरनिर्वचननीयस्यैव तदित्यसन्नाम न किंचिदित्याह—तस्मादिति।

ननु निर्विषयं ज्ञानं शब्दो वा न कुत्रापि दृष्टचर इति नेत्याह—परमत इति।

असच्छब्दादेर्निर्विषयत्वे सद्वैलक्षण्यमात्रस्यानिर्वचनीयलक्षणत्वे कुत्राप्यतिव्याप्त्यभावादसद्वैलक्षण्यपदं व्यर्थमित्युक्तमनुवदति—यत्त्विति। वृद्धानामनिर्वचनीयलक्षणतया न तदभिधानं किन्तु प्रपञ्चमिथ्यात्वानुमानेऽसद्वादिमतेनार्थान्तरतापरिहाराय साध्यतयैवेति सिद्धान्तारंभसमय एवोक्तमित्याह—तदसदिति। असतोऽभावे तद्भेदस्याप्यसंभवात् प्रपञ्चे तत्साधने वाध इत्याशंक्य न तत्साधनार्थमसदन्यत्वविशेषणं किन्तु सत्ववादिनः प्रपञ्चेऽसत्वभ्रमनिरासार्थमेवेत्यभिप्रेत्याह—कथं तर्हीत्यादिना। यदुक्तं द्वौ नञौ प्रकृतमर्थं

न च सिद्धान्ते प्रपञ्चेऽपि साध्यहेतोः सत्वाद्व्यतिरेकित्वहानिरिति वाच्यम् । अनुमानात् पूर्वं तत्र साध्यानिश्चयेन सपक्षत्वाभावात् ।

न चाप्रसिद्धविशेषणता सत्वासत्वे समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदके धर्मत्वात् संमतवदिति तत्सिद्धेः ततः क्वचित् प्रसिद्धस्यात्मनि व्याप्तिग्रहः ।

शुक्तिरजतादेः सत्वाभावेपि नानिर्वचनीयता ब्रह्मवदित्याक्षेपनिरासः ।

यदपि ब्रह्मवत् सत्वधर्मराहित्येऽप्यनिर्वचनीयत्त्वाभावोपपत्त्याऽर्थान्तर-

---

सातिशयं साधयत इति न्यायेनासत्त्वनिषेधे सत्वापत्तिरिति तदनूद्य परिहरति—यस्त्वित्यादिना अन्यत्रिषयतावर्णनादिति । घटतदभावादौ तदभावेन न सर्वत्रायं नियमः। किन्तु यत्रान्यतराधिकरणत्वयोग्यता तत्रैवान्यतरनिषेधेऽन्यतरविधिरित्युपपादनादित्यर्थः । उक्तन्यायस्योभयाधिकरणयोग्यविषयत्वानङ्गीकारे बाधकमाह—किं चेति । रूपवत्वाऽस्पर्शवत्वयोरपि परस्परविरुद्धत्वादन्यतरनिषेधेऽन्यतरविधिरिति रूपवत्त्वनिषेधे स्पर्शराहित्यापातः तन्निषेधे च रूपवत्त्वापातः इति रूपवत्त्वस्पर्शवत्त्वहीनो वायुदिति तपस्वी प्राप्नुयादपह्नवमित्यर्थः । रूपवदस्पर्शवदुभयविलक्षणवायोरनुभूयमानत्वादपन्हवायोग इत्याशंक्य सदसद्विलक्षणशुक्तिरजतस्यानुभूयमानत्वान्न तदपह्नव इत्याह– अथेत्यादिना । साध्यस्याबाधितत्वमुपसंहरति—तस्मादिति । रजतस्योक्तसाध्ये गमकाभावमाशंक्याह—नापीति । सपक्षेऽपि हेतोस्सत्वात् केवलव्यतिरेकित्वायोग इत्याशङ्क्याह – न च सिद्धान्त इति । साध्यानिश्चयेनेति । शुक्तिरजतमिथ्यात्वनिश्चयात्पूर्वं तद्दृष्टान्तेन दृश्यत्वहेतुना प्रपञ्चमिथ्यात्वानिश्चयात् न तस्य सपक्षत्वं हेतोस्तत्र सत्त्वेऽपि पक्षसमत्वान्न व्यभिचारश्चेत्यर्थः सदसदन्यस्याप्रसिद्धत्वेन तद्व्यतिरेकव्याप्तिग्रहायोगात् उक्तानुमानासंभवमाशंक्याह—न चेति । सत्त्वासत्त्वे इति । न चासत्पदार्थाभावेनासत्वस्यैवाभावादाश्रयासिद्धिरिति वाच्यम्, वस्तुतस्तदभावेऽपि असत्पदार्थमङ्गीकुर्वाणं प्रति तद्वैलक्षण्यज्ञानाय तन्निर्देशोपपत्तेः ।

ननु सदसदात्मकस्याप्यसदंशे सत्त्वावच्छिन्नप्रतियोगिकान्योन्याभाववत्त्वात्सदंशे चासत्वावच्छिन्नप्रतियोगिकान्योन्याभाववत्वात्तदात्मकत्वेनाप्येतत्साध्यसंभवान्न पूर्वानुमानसाध्यसिद्धिरिति चेन्न। सत्वासत्वावच्छिन्नप्रतियोगिकान्योन्याभावयोरेकावच्छेदेन सामानाधिकरण्यस्य विवक्षितत्वादुभयात्मके चैकावच्छेदेनोभयान्योन्याभावायोगेन तत्त्वेनार्थान्तरत्वायोगादिति भावः—धर्मत्वादिति । अत्यन्ताभावप्रतियोगिधर्मत्वादित्यर्थः । ततश्च न परमते प्रमेयत्वादौ व्यभिचारः । एवं सामान्येन प्रसिद्धसाध्यव्यतिरेकस्यात्मनि हेत्वभावेन व्याप्तिग्रहसंभवादुक्तानुमानसिद्धिरित्याह—तत इति । रजतस्य सत्वविशिष्टादन्यत्वेऽपि ब्रह्मवत्स्वरूपसत्वमेव किं न स्यादिति

**मिति । तन्न । तद्वदस्य स्वरूपसत्वाभावात् । यत्तु विमतं सदसदात्मकं बाध्यत्वात् व्यतिरेकेणात्मवदित्याभाससाम्यमिति । तन्न । भेदाभेदस्य निरस्तत्वात् ।**

प्रपञ्चस्य सदसद्विलक्षणत्वोपपत्तिः ।

**किञ्च सत्त्वे बाधानुपपत्तिः न चासदात्मत्वाद्बाधः तथापि सतो बाधानुपपत्तेः । असतोऽपि त्रैकालिकनिषेधप्रतियोगित्वस्य ज्ञानबिवर्त्यत्वस्य वा बाध्यत्वस्यासंभवात् । मिथ्यात्वनिश्चयविषयत्वमपि बाध्यत्वं तस्य न संभवति, असतो धर्ममात्रासंभवादित्युक्तम् । सत्वे भ्रमविषयरजतस्योत्पत्याद्यनुपपत्तिश्चोक्तैव । एवमसदात्मत्वे प्रत्यक्षत्वानुपपत्तिः ।**

**न च सदात्मत्वात् प्रत्यक्षत्वम् । न हि सत्त्वमात्रं प्रत्यक्षत्वे प्रयोजकम् । किन्तु रूपादिसंवलितम् । न च सत्वे रूपादिसत्वनियमः, असत्त्वे तु नीरूपत्वादिकं व्यापकमिति तदात्मत्वे नीरूपत्वापत्त्याऽप्रत्यक्षतैव स्यात् ।**

---

चोद्यमनुवदति—यदपीति । बाध्यस्य रजतस्य ब्रह्मवत्सत्वानुपपत्तेः सद्व्यक्तेरेकत्वेऽपि सर्वत्र सदाकारबुद्ध्युपपत्त्या तद्भेदे मानाभावाच्च ब्रह्मैकमेव स्वरूपसन्नान्यदित्यभिप्रेत्याह—तन्नेति । आभासानुमानस्य बाधितविषयत्वान्न तेन साम्यमस्येत्याह—तन्नेति । किमेकावच्छेदेन सत्वासत्वे सिध्यतः । उतावच्छेदकभेदेन ? नाद्यः त्वदभिमतयोर्भावाभावयोस्तदनुपपत्तेः । द्वितीयेऽवच्छिन्नयोर्वस्तुतो भेदे एकस्योभयात्मत्वासिद्धेर्भेदाभेदस्य च विरोधेन निरस्तत्वादित्यर्थः ।

बाधविरोधाच्च न सदसदात्मतेत्याह—किं चेति । असदंशमादाय बाधोपपत्तिमाशंक्याह—न चेति । असतो बाध्यत्वमंगीकृत्य तस्य सत्त्वमनुपपन्नमित्याह—तथापीति । बाधितस्यापि प्रतिपन्नोपाधौ सत्वव्याघातादित्यर्थः । अङ्गीकारं परित्यजति—असतोऽपीति । त्रिविधबाध्यत्वासंभवे हेतुमाह—असत इति । रजतस्य सत्वेऽसत्वे वा यो दोष उक्तः स उभयात्मत्वपक्षेऽपि तुल्य इत्याह—एवमित्यादिना । सदंशमादाय प्रत्यक्षत्वोपपत्तिरित्याशंक्याह—न चेति । नहीति । गगनादेः सत्वेऽप्यप्रत्यक्षत्वादित्यर्थः ।

किं तर्हि प्रत्यक्षत्वप्रयोजकमिति वीक्षायामाह—किं त्विति । संवलितं सत्वमिति शेषः । सत्त्वेनैव रूपादिमत्वमपि साध्यत इत्यत आह—न च सत्वे इति । सतोऽपि गगनादेरूपरहितत्वादित्यर्थः । नीरूपत्वेऽपि मानाभावादप्रत्यक्षत्वमपि नेत्याशंक्याह—असत्व इति । असत्पदार्थवादिमते शशशृंगादावसत्वस्यैव नीरूपत्वप्रयोजकत्वाद्रजतस्यापि तथात्वे तदापातेनाप्रत्यक्षता स्यादित्यर्थः ।

विमतं रूपादिहीनं सद्विलक्षणत्वाद् गगनारविन्दवदित्यनुमानादनिर्वचनीयरजतस्याप्यप्रत्यक्षत्वापात इत्याशंक्याश्रयविकलो दृष्टान्त इति दूषयति—न चेत्यादिना ।

न च सद्वैलक्षण्येऽपि नीरूपत्वं व्यापकम्। अस्मन्मतेऽसतोऽभावात्। सद्विलक्षणानामेव रूपवत्त्वात् असदपि रूपवच्चेन्नाममात्रभेद एव। एतेन सदसद्वैलक्षण्यमिव सदसदात्मकत्वमेवावास्तवं किं न स्यादिति तदुक्तं प्रत्युक्तम्। तत्र सामानाधिकरण्यस्यावास्तवत्वं यदि शून्यत्वं तदा कथं सदसदात्मकं भवेत्।

यद्यनिर्वचनीयत्वम् तर्हि त्वमपि सुहृदेव तस्मान्नाभाससाम्यम्। नाप्यसदेव रजतमभादिति प्रत्यक्षबाधः तस्य सद्विलक्षणरजतविषयतयाऽनुकूलत्वात् त्वदुक्तासत्वस्य प्रत्यक्षाविषयत्वात्।

प्रपञ्चस्यासत्त्वशङ्कानिरासः।

यत्तु विमतमसत्सत्त्वानधिकरणत्वात् नरशृंगवदिति प्रतिपक्षानुमानं तदसत् सदन्यत्वसाधने सिद्धसाधनात् तदितरासत्त्वस्य प्रत्यक्षत्वायोगात् अस्मदभिमतब्रह्मणि त्वदभिमतसत्वे चानैकान्त्यात्। शुक्तिरजतमात्रस्य पक्षत्वे घटादावपि

---

पृथिव्यादौ हेतोर्व्यभिचारश्चेत्याह—सद्विलक्षणानामिति। असत्त्वमपि नीरूपत्वं प्रत्ययप्रयोजकमित्याशंक्याह—असदपीति। निषेधसमुच्चयवद्विधिसमुच्चय एवावास्तवः किं न स्यादिति परोक्तमसत्वेऽपरोक्षत्वाद्ययोगेनैव निरस्तमित्याह—एतेनेति।

किञ्च सदसदात्मत्वस्यावास्तवत्वं किं शून्यत्वमनिर्वचनीयत्वं वा? नाद्यः सन्मात्रत्वेऽसन्मात्रत्वे वा तदुपपत्तेः सदसदात्मत्वासिद्धेरित्याह—तत्रेति।

द्वितीये सदसद्विलक्षणस्यैवानिर्वचनीयत्वान्मदिष्टसिद्धिरित्याह—यद्यनिर्वचनीयत्वमिति। सदसदात्मत्वासंभवसाधनफलमाह—तस्मादिति। परोक्तं प्रत्यक्षबाधमपि परिहरति—नापीति।

न चैवं ब्रह्मण्यपि सत्वधर्माभावादसत्वधीःस्यादिति वाच्यं तत्राबाध्यरूपसदन्यत्वस्यासद्विषयस्याभावादिति भावः। सर्वदेशकालीनात्यन्ताभावप्रतियोगित्वरूपमेव तद्विषयः किं न स्यादित्याशंक्य सर्वदेशादेः प्रत्यक्षत्वायोग्यत्वान्मैवमित्याह—त्वदुक्तेति।

परोक्तं प्रतिपक्षानुमानमप्यनूद्य निराकरोति—यत्त्वित्यादिना। किमत्रास्मदभिमतं सदन्यत्वरूपमसत्वं साध्यमुत त्वदभिमतं सर्वदेशादिगतात्यन्ताभावप्रतियोगित्वरूपं? आद्ये दोषमाह—सदन्यत्वेति। द्वितीये रजतस्यासत्वेन प्रत्यक्षत्वानुपपत्तिर्बाधिकेत्याह—तदितरेति। सत्वानधिकरणत्वादिति हेतोर्मतद्वयेऽपि व्यभिचारमाह—अस्मदित्यादिना।

न च परमते सत्त्वेऽपि सत्वमस्तीति वाच्यम्, स्वस्य स्ववृत्तित्वासंभवात् प्रमेयत्वादेरपि स्ववृत्तित्वस्यासंप्रतिपत्तेः सत्वान्तराभ्युपगमे चाप्रामाणिकसत्वानवस्थाप्रसंगादिति भावः। पक्षपर्यालोचनयाऽपि प्रतिपक्षानुमानं दुष्टमित्याह—शुक्तीति।

व्यभिचारः तस्यापि पक्षत्वे बाधः। अस्मन्मते दृष्टान्तस्यासिद्धिश्च। किं च शुक्तौ प्रतीयमानं रजतं सत्त्वविशिष्टं अभावप्रतियोगित्वात् प्रत्यक्षत्वाद्वा संभतवत्।

असत्त्वे तस्यात्यन्ताभावादेरयोगात्। न हि निःस्वरूपेणाभावस्य कश्चित् संबन्धः संभवति। संबंधाश्रयत्वेऽसदुक्तेः परिभाषामात्रत्वात्। सत्त्वविशिष्टमपि सदन्यद्भवतीति नासद्बुद्ध्या बाधधिया वा विरोधः। अत एव सद्रजतमिति धीरुपपद्यते।

ख्यातिबाधान्यथानुपपत्त्याऽनिर्वचनीयत्वम्।

यत्तु सत्त्वासत्त्वपक्षकप्रतिपक्षानुमानं तन्मृतहननमिवोपेक्ष्यते। एवं ख्यातिबाधान्यथानुपपत्तिरप्युक्तसाध्ये प्रमाणम्। सच्चेन्न बाध्येत असच्चेन्नापरोक्षं प्रतीयात् सच्च बाधायोग्यम्। यात्वत्रापाद्यापादकयोरभेदकथा, सा तदज्ञानविजृंभिता। बाधायोग्यं चेन्न बाधविषयः स्यादिति तयोर्भेदात्।

अथवा यदि तात्त्विकप्रमाणगम्यं तर्हि न बाध्येतेति सत्त्वनियतधर्मेण

---

किं च सिद्धान्ते नरशृंगपदार्थानभ्युपगमादाश्रयविकलो दृष्टान्त इत्याह—अस्मन्मत इति। परकीयानुमानस्य तर्कोऽपोद्बलितानुभावेन बाधमाह—किं चेति। अत्र रजतान्तरे यादृशं सत्त्ववैशिष्ट्यं तादृशमेव साध्यं न परमार्थं नापि शून्यं ततो न बाधः न वाऽर्थान्तरतेति भावः।

विपक्षे हेतूच्छित्तिरेव बाधिकेत्याह—असत्त्व इति। शुक्तिरूप्ये सत्त्ववैशिष्ट्यमसत्त्वानुभवेन बाधानुभवेन च विरुद्धमित्याशंक्याधिष्ठानसत्तासंसर्गिण्यपि तस्मिन् सदन्यत्वस्य बाध्यत्वस्य चाभवद्धर्यविषयस्य संभवान्न विरोध इत्याह—सत्त्वविशिष्टमपीति। विपक्षे सदाकारधीरप्यनुपपन्नेत्यभिप्रेत्याह—अत एवेति। सत्त्वासत्त्वे समानाधिकरणात्यन्ताभावप्रतियोगिनी न भवत इत्यप्यनुमानमसाधु। पक्षैकदेशस्यासत्त्वस्य दुर्निरूपत्वेनासिद्धेः। सत्त्वासत्त्वयोरुक्तविधया परस्परविरहरूपत्वासंभवेन हेतोरप्यसिद्धत्वादित्यभिप्रेत्याह—यत्त्वित्यादिना। रजतस्य सदादिवैलक्षण्येऽर्थापत्तिरपि मानमित्याह—एवमिति।

यदुक्तं सच्चेन्न बाध्येतेत्यत्र सत्पदार्थो दुर्निरूप इति तत्राह—सच्चेति। न चैतदप्यापाद्यापादकयोरभेदाभिधानेन दूषितमित्यत आह—या त्वत्रेति। बाधयोग्यत्वस्य तत्फलबाधस्य च भिन्नत्वेनैतदभावयोरपि भेदाद्बाधयोग्यत्वाभावेन बाधाभावस्यापादयितुं शक्यत्वात् परस्याभेदप्रयुक्तदोषाभिधानं तद्भेदाज्ञानविलसितमित्यर्थः।

सच्चेन्न बाध्येतेत्यस्याभिप्रायान्तरमाह—अथवेति। ननु तात्त्विकता प्रमाणस्याबाधितार्थत्वमित्यापादके व्यर्थविशेष्यतेति चेत् न, तात्त्विकत्वस्य प्रमाणविशेषणत्वेनोपात्ततया व्यर्थविशेष्यताभावादिति भावः। यदुक्तं तत्त्वावेदकश्रुतिसिद्धब्रह्मनिर्विशेष-

बाधाभाव आपाद्यते। तत्त्वावेदकप्रमाणगम्यं च ब्रह्मैकमेवेति न नवीनोक्तेर्निर्विशेषत्वादौ व्यभिचारः।

यत्तु स्वयंप्रकाशे ब्रह्मणि वैयर्थ्यान्न वेदान्ता मानमिति तस्याप्रामाणिकत्वादप्रामाणिकत्वस्याप्यबाध्यत्वेन व्याप्तिरिति तदतितुच्छम्। न हि ब्रह्मस्वरूपप्रकाशाय वेदान्ता मानं किन्त्वविद्यानिवृत्तये स्वयं प्रकाशस्यापि वृत्तिविषयत्वाविरोध इत्यसकृदावेदितम्।

यत्तु रूप्यादिबाधप्रमाणस्यातत्त्वावेदकत्वान्न तेन रूप्यादेरप्रामाणिकत्वसिद्धिः। अन्यथा ब्रह्मणोऽप्यतत्त्वावेदकप्रमाणबाध्यत्वान्मिथ्यात्वापत्तिरिति। तन्न। आरोपितस्याभावोऽधिष्ठानं ब्रह्म तदन्योवोभयमपि परमार्थ एवेति बाधस्य तदंशे तत्त्वावेदकत्वात्। न हि रजताभावांशे तस्य बाधोऽस्ति अबाधितार्थकत्वमेव ज्ञानस्य तत्त्वावेदकत्वम्। घटादिप्रत्यक्षाणामपि चैतन्यांशे तत्त्वावेदित्वात्। घटः सन्निति तत्सत्तास्फुरणात् तत्सत्तायास्तदधिष्ठानात्मत्वात्।

---

त्वादेर्बाध्यत्वेन व्यभिचारादिति तत्राह—तत्त्वावेदकेति। श्रुतेरखण्डार्थत्वान्निर्विशेषत्वादिधर्माणां न तदर्थतेति भावः। अप्रामाणिकत्वस्यैवाबाध्यत्वेन व्याप्तिरिति परोक्तमनूद्य दूषयति—यत्त्वित्यादिना। किं वेदान्तानां ब्रह्मप्रकाशात्मकचैतन्याहेतुत्वाद्वैयर्थ्यमुत फलमात्राभावादाद्यस्त्वंगीक्रियत इत्याह—न हीति। प्रमाणमात्रस्य चैतन्याभिव्यञ्जकजडप्रकाशातिरिक्तचित्प्रकाशजनकत्वाभावादिति भावः।

द्वितीयस्त्वयुक्तः स्वरूपप्रकाशस्याविद्यातत्कार्यबंधाविरुद्धतया तन्निवर्तकवृत्तिसाक्षात्कारजनकतया वेदान्तानां सफलत्वाद् ब्रह्मणि प्रामाण्योपपत्तेरित्याह-किन्त्विति।

ननु स्वप्रकाशब्रह्मणः कथं वेदान्तजन्यवृत्तिविषयत्वमित्याशंक्य वृत्तेरिच्छादिवज्जडत्वान्न विरोध इत्यभिप्रेत्याह—स्वयंप्रकाशस्येति।

रूपस्य ब्रह्मवत्प्रामाणिकत्वेपि अबाध्यत्वोपपत्तिरित्युक्तमनूद्यापवदति—यत्त्वित्यादिना। तत्त्वमस्यादिवाक्यस्य तत्त्वावेदकत्वं न वेदत्वेन स्वर्गकामादिवाक्ये तदभावात्।

किन्तु विषयस्याबाध्यत्वेनैव। प्रत्यक्षादेरपि न स्वरूपेण तत्त्वावेदकत्वं, किन्तु विषयस्याबाध्यत्वेन। ततश्च श्रुतिर्वा प्रत्यक्षादिकं वा यदंशे विषयाबाधः तत् तत्र तत्त्वावेदकमेवेति व्यवस्था। एवं च रजतादिनिषेधगोचरप्रत्यक्षादिकमपि नातत्त्वावेदकमेव तद्विषये बाधाभावात्।

अद्वैतनिषेधकमानं तु श्रुतिबाधितविषयत्वादतत्वावेदकमेवेत्यभिप्रेत्याह—आरोपितस्येत्यादिना। निषेधप्रत्ययवद्विधिप्रत्ययानामप्यधिष्ठानांशे तत्त्वावेदकत्वमेवेत्याह—घटादीति। घटः सन्निति।

किं च घटाद्यवच्छिन्नचैतन्यविषयाज्ञाननिवृत्तिरज्ञानविषयविषयकवृत्तिसाध्या, अज्ञाननिवृत्तित्वात् मूलाज्ञाननिवृत्तिवत् ।

अन्यविषयज्ञानादन्याज्ञाननिवृत्त्ययोगात् । ननु यत्राविद्याविक्षेपं जनयति, तद्विषयज्ञानादेव निवर्तते विक्षेपश्च शुक्त्यादौ । न चैवं मृदादिज्ञानादपि मूलाज्ञाननिवृत्तिप्रसंगः तस्य सिद्धान्तेऽपि समाधेयत्वात् । घटावच्छिन्नस्यापि ब्रह्मत्वात् न त्वनवच्छिन्नानन्दाकारता तस्य नास्तीति वाच्यम् तथापि समानविषयत्वात् वेदान्तजन्याखण्डसाक्षात्कारेऽपि तदभावात् । न हि तत्रानवच्छिन्नत्वमानन्दत्वं वा प्रकारः कश्चिदस्ति अखण्डविषयत्वात् ।

न चानात्माविषयकत्वमपि तत्रापेक्षितम् । घटाद्यज्ञानस्यापि ततोऽनिवृत्तिप्रसङ्गात् । अत एव वेदान्तजन्यज्ञानमेव तन्निवर्तकमिति निरस्तम् ।

---

नन्वत्र घटे सत्तासंबन्धमात्रं भाति, न चैतन्यमित्यत आह—तत्सत्ताया इति । ऐन्द्रियकवृत्तेरवच्छिन्नचैतन्यविषयत्वेऽनुमानमप्याह—किञ्चेति । अनवच्छिन्नब्रह्मविषयाज्ञाननिवृत्तौ सिद्धसाधनतावारणाय घटाद्यवच्छिन्नेत्युक्तम्' । अज्ञानविषयविषयेति । तत्र चैतन्यस्यैवाज्ञानविषयत्वात् तन्निवर्तकवृत्तेरपि तद्विषयत्वसिद्धिरिति भावः ।

विपक्षेऽतिप्रसंगो बाधक इत्यभिप्रेत्याह—अन्यविषयेति । अज्ञाननिवर्तकवृत्तेस्तत्समानविषयत्वाभावेऽपि नातिप्रसङ्ग इत्येकदेशी शंकते—ननु यत्रेति ।

ननु रजतादिविक्षेपस्य चैतन्यनिष्ठत्वादत्रापि वृत्तेश्चैतन्यविषयत्वसिद्धिरित्याशंक्येदं रजतमिति प्रतीतेः शुक्तीदमंशस्यापि तदाश्रयत्वान्मैवमित्याह—विक्षेप इति ।

नन्वेवं मृदादेरपि मूलाज्ञानजन्यघटादिविक्षेपाश्रयत्वान्मृदादिज्ञानेन मूलाज्ञाननिवृत्तिः स्यादित्याशंक्याज्ञानस्य समानविषयज्ञाननिवर्त्यत्वमतेऽपि मृदाद्याकारवृत्तेश्चिद्विषयत्वादयं दोषस्तुल्य इत्याह—न चैवमिति । मृदाद्याकारवृत्तौ चिद्विषयत्वेऽपि अनवच्छिन्नानन्दाकारत्वाभावान्न मूलाज्ञाननिवर्तकतेत्याशंक्य तथापि समानविषयत्वस्यातिप्रसंगस्तुल्य इत्याह—न चानवच्छिन्नेति । किञ्च किं वस्तुतोऽनवच्छिन्नाकारब्रह्मज्ञानं मूलाज्ञाननिवर्तकं तत्वेन ब्रह्मविषयत्वं वा ? आद्ये पूर्वोक्तातिप्रसंग एवेत्यभिप्रेत्य द्वितीये वेदान्तानां तादृशज्ञानजनकत्वेऽखण्डार्थत्वक्षतिरित्यभिप्रेत्याह—वेदान्तेति ।

नन्वनात्माविषयकं वेदान्तजन्यं वा ज्ञानं समानविषयकं वा ज्ञानं तन्निवर्तकं ततो नातिप्रसंग इत्याशंक्य तर्हि घटज्ञानादिना तदवच्छिन्नचैतन्याज्ञाननिवृतिर्न स्यादित्याह—न चानात्मेति । वेदान्तजन्यं ज्ञानं निवर्तकमित्यत्र दोषान्तरमाह—करणेति । अनात्माविषयकत्वं वेदान्तजन्यत्वं वा मूलाज्ञाननिवर्तकस्यैवापेक्षितमतो नोक्तदोष इत्याशंक्य तर्हि विक्षेपाश्रयज्ञानमविद्यानिवर्तकमिति मतेऽपि मूलाज्ञाननिवर्तकज्ञाने तदपेक्षेति

**करणविशेषजन्यत्वस्याप्रयोजकत्वात्। मत्पक्षेऽपि तथात्वोपपत्तेश्च। तस्मात्तदज्ञानतत्कार्याविषयकं विक्षेपाश्रयविषयकं प्रत्यक्षमविद्यानिवर्तकम्। एतदेवाखण्डाकारत्वम्। तथा च घटादिज्ञानं मतद्वयेऽपि नैवमिति न ततोऽविद्यानिवृत्तिः। तर्ह्यनुत्पादितभ्रमाज्ञानं न निवर्तेतेति चेत् न तत्रापि तद्योग्यतायाः सत्वात्।**

ज्ञानेनाज्ञाननिवृत्तौ विशेषविचारः

**नन्वेवमेकज्ञानात् तद्विषयनिखिलाज्ञाननिवृत्तिप्रसंगः। न चाज्ञानयौगपद्यमसिद्धम्। पूर्वाज्ञाननिवृत्तौ कालान्तरे भ्रमानुदयप्रसंगात्। न च तदाऽवस्थोत्पद्यते। कार्यस्य रजतादिवदज्ञानत्वायोगात्। तर्हि तवापि तत्र निखिलाज्ञाननिवृत्तिप्रसंग इति चेत् न, यदावृणोति तस्यैव निवृत्तेः। आवरणं तु स्वभावादेकमेव करोतीति चेत् तर्हि ज्ञानमप्येकं निवर्तयतु स्वभावात्।**

---

नातिप्रसङ्ग इत्याह—मत्पक्षे गीति।

नन्‍ु विक्षेपाश्रयज्ञानस्य तद्धेत्वविद्यानिवर्तकत्वे शुक्तिं न जानामीति ज्ञानादिदं रजतमिति ज्ञानाच्चाविद्यानिवृत्तिः स्यात् तथा गगनं नीरूपमिति परोक्षज्ञानात् तदविद्यापि निवर्तेतेत्याशंक्याह—तस्मादिति। तदज्ञानपदेन तन्निवर्त्यतयाऽभिप्रेताज्ञानमुच्यते।

नन्वखण्डाकारब्रह्मज्ञानस्य मूलाज्ञाननिवर्तकत्वं प्रसिद्धिविरुद्धमित्याशंक्याह—एतदेवेति। निवर्त्याज्ञानतत्कार्याविषयत्वमेवेत्यर्थः। फलितमाह—तथाचेति। घटादिज्ञानस्य मूलाज्ञानकार्यविषयत्वान्न ततो मूलाज्ञाननिवृत्तिरित्यर्थः।

ननु दोषाभावे विक्षेपं विना शुक्त्यादिज्ञानात्तदज्ञानं निवर्तते तत्कथं विक्षेपाश्रयज्ञानं निवर्तकमिति शंकते—तर्हीति। अनुत्पन्नेऽपि विक्षेपे शुक्त्यादेस्तदाश्रयत्वयोग्यत्वान्न दोष इत्याह—न तत्रापीति।

शुक्त्यवच्छिन्नचैतन्याज्ञानस्य शुक्तिमात्रज्ञाननिवर्त्यत्वे प्रकारान्तरेणातिप्रसङ्गं शङ्कते—नन्विति। शुक्तिज्ञानात्पूर्वमेकस्यैवाज्ञानस्य तत्र सत्वान्नोक्तातिप्रसङ्ग इत्यत आह—न चेति। कालान्तरोत्पन्नमवस्थाज्ञानान्तरं भ्रमान्तरहेतुस्ततो नाज्ञानयौगपद्यमित्याशंक्याह—न च तदेति। अज्ञानत्वायोगादिति। अनादिज्ञाननिवर्त्यस्यैवाज्ञानत्वादित्यर्थः। समानविषयज्ञाननिवर्त्यमज्ञानमिति पक्षेऽप्ययं दोषस्तुल्य इति शङ्कते—तर्हीति। आवारकाज्ञानस्यैव ज्ञानसमानविषयत्वात्तदेव तेन निवर्त्यते नान्यदिति परिहरति—न यदिति। तर्ह्यज्ञानत्वाविशेषात् सर्वमेव युगपदावारकं किं न स्यादित्यत आह—आवरणमिति। विक्षेपाश्रयज्ञानमज्ञाननिवर्तकमिति मतेऽप्येकस्य ज्ञानस्यैकाज्ञाननिवर्तकत्वस्वभाव इति न सर्वनिवृत्तिरित्याह—तर्हीति।

न चैवं शुक्तिविषयधाराज्ञानेनानेकाज्ञाननाशात् पुनः कालान्तरे भ्रान्त्यसंभव इति वाच्यं ज्ञानसमसंख्याकाज्ञाननाशेऽप्यज्ञानान्तरात्तदुपपत्तेरिति भावः।

ननु साक्षात्कारोत्पत्तिसमयेऽवस्थाज्ञानान्यपि कानिचित् सन्ति न वा? आद्ये एकज्ञानस्यैकाज्ञाननिवर्तकत्वस्वाभाव्ये तेषां निवृत्तिर्न स्यादित्याह—अथैवमिति।

अथैवं ब्रह्मसाक्षात्कारात् घटाद्यज्ञानानिवृत्तिप्रसंगः, न चेष्टापत्तिः। अज्ञानस्य ज्ञाननिवर्त्यत्वनियमात् तदानीमज्ञानान्तरं नास्ति इति चेत् न तदा नियमेन तदभावे प्रमाणाभावात् उत्पन्नरजतभ्रमस्य तद्बाधकं विनैव ब्रह्मसाक्षात्कारोदयस्थले सत्वादिति। मैवं। घटाद्यज्ञानानि ह्यनादिभूतान्यपि जीवत्वादिवन्मूलाज्ञानाधीनानि तद्धर्मा वा ततस्तन्निवर्तकज्ञानमेव जीवत्वादिवत्तान्यपि निवर्तयतीत्यन्यैव तत्र सामग्री। स्वतन्त्राज्ञाननिवर्तकं त्वेकमेव निवर्तयति। तथापि तत्र सर्वेषां युगपदावारकत्वं कल्प्यम्। अन्यथा तन्निवृत्त्ययोगादिति।

उच्यते। अस्तु विक्षेपाश्रयविषयज्ञानत्वं तज्जनकाविद्यानिवृत्तौ प्रयोजकं, तथापि विक्षेपश्चैतन्ये स्वतस्तदुपाधावपि कथञ्चिदिति विनिगमकाभावादुभयविषयत्वमपि वृत्तेरावश्यकम्।

न च चैतन्यस्य चाक्षुषत्वानुपपत्त्या वृत्तेस्तद्विषयत्वं नेति विशेषोऽस्तीति वाच्यम्। किं जनकसन्निकर्षानाश्रयत्वात्तदनुपपत्तिः नीरूपत्वाद्वा ? नाद्यः अनिर्वचनीयसंयोगादेः संभवात्। न द्वितीयः रूपादेरपि तदभावप्रसंगात्। द्रव्यस्य रूपं प्रत्यक्षे कारणमिति चेत्, न, त्वदभिमताहंकारस्यापि प्रत्यक्षत्वात्। अनात्मद्रव्य-

---

द्वितीयमनूद्य निराकरोति—तदानीमित्यादिना। सद्भावेऽपि प्रमाणं नेत्याशंक्याह—उत्पन्नेति। ब्रह्मसाक्षात्कारस्य मूलाज्ञाननिवृत्त्यपेक्षयाऽवस्थाज्ञाननिवर्तकत्वात् ज्ञानेन साक्षान्निवृत्तिरेकस्यैवेत्यभिप्रेत्य परिहरति—मैवमिति। स्वतन्त्रघटाद्यज्ञानानामन्योन्याधीनत्वाभावात् स्वतन्त्रेति भावः। एवं तर्हि केषांचिदवस्थाज्ञानानां साक्षाद् ज्ञाननिवर्त्यत्वं केषांचित्तु मूलाज्ञाननिवृत्तिसहितज्ञाननिवर्त्यतेति द्वैविध्यकल्पनागौरवमित्याशंक्याज्ञानस्य समानविषयज्ञाननिवर्त्यत्ववादिमतेऽपि शुक्त्यादिज्ञाननिवर्त्यत्ववादिमतेऽपि शुक्त्यादिज्ञाननिवर्त्यानां केषाञ्चिदज्ञानानां क्रमेणावारकत्वं ब्रह्मज्ञाननिवर्त्यानां केषाञ्चिदज्ञानानां क्रमेणावरकत्वं ब्रह्मज्ञाननिवर्त्यानां तु युगपदिति द्वैविध्यकल्पनं तुल्यमेव। ब्रह्मज्ञाननिवर्त्याज्ञानानां युगपदनावारकत्वे तत्समानविषयत्वायोगेन निवृत्त्ययोगादित्यभिप्रेत्याह—तथापीति। ततश्च विक्षेपाश्रयज्ञानस्यैव तद्द्वैत्वविद्यानिवर्तकत्वात् घटादिवृत्तीनां चिद्विषयत्वाभावो न तदंशे तत्वावेदकत्वमिति भावः।

विक्षेपाश्रयज्ञानस्याविद्यानिवर्तकत्वमतमभ्युपेत्य तस्य चिद्विषयत्वमप्यावश्यकं सद्रूपचैतन्यस्यैव विक्षेपाधिष्ठानतया स्वतस्तदाश्रयत्वात् शुक्त्यादेश्चैतदवच्छेदकतयाऽऽश्रयत्वोपचारादिति सिद्धान्तयति—उच्यते इति। चैतन्यस्याधिष्ठानतयाऽपि चाक्षुषवृत्तेस्तद्विषयत्वानुपपत्तेः शुक्त्यादिविषयकं ज्ञानमेवाविद्यानिवर्तकमित्याशंक्याह—न च चैतन्यस्येति। तत्रोक्तानुपपत्तिबीजं विकल्पयन् हेतुमाह—किमित्यादिना। संयोगादेरित्यादिपदेन संयुक्ततादात्म्यं गृह्यते—तदभावप्रसंगादिति। रूपादे रूपरहितत्वेनाचाक्षुषत्वापातादित्यर्थः। द्रव्यप्रत्यक्षमात्रे रूपस्य प्रयोजकत्वान्न रूपादौ तदभावप्रसङ्ग इति शंकते—द्रव्यस्येति। किं द्रव्यमात्रप्रत्यक्षे रूपं हेतुरनात्मद्रव्यप्रत्यक्षे वा ? न सर्वथापीत्याह—नत्वदभिमतेत्यादिना। ममापीष्टमिति। शुक्त्याद्यवच्छिन्नचैतन्यस्यात्मत्वेन

प्रत्यक्षे तु रूपं कारणमिति नु ममापीष्टम् । न च द्रव्यविषयकचाक्षुषप्रत्यक्षे रूपं कारणमिति वाच्यम् इष्टत्वात् ।

न च चाक्षुषप्रत्यक्षविषयद्रव्यस्य रूपवत्त्वनियमः अप्रयोजकत्वात् । रूपादिमत्त्वेन विनापि तदुपपत्तेः अनुभवस्य तुल्यत्वात् । न चैवं गगनादेरपि चाक्षुषत्वापत्तिः तवापि नीरूपद्रव्यस्य प्रत्यक्षत्वे गगनादेरपि तत्किं न स्यात् ।

न च चैतन्यस्यापि वृत्तिविषयत्वे दृश्यत्वापत्तिः प्रकाशविषयत्वस्यैव तत्त्वात् तदभावश्च दृश्यत्वहेतौ वक्ष्यते ।

किञ्च विक्षेपाश्रयविषयत्वस्यैव प्रयोजकत्वे इदमाकारवृत्त्यापि शुक्त्यज्ञाननिवृत्तिप्रसङ्गः । इदमंशस्य विक्षेपाश्रयत्वात् । दोषस्य तु लाघवावश्यकत्वाभ्यां विशेषज्ञानप्रतिबन्धकत्वमेव; अत आवारकमज्ञानमावृतज्ञानादेव निवर्तते । चरमसाक्षात्कारकाले घटाद्यावारकमज्ञानं चैतन्यमात्रविषयमेवेति तदभिव्यक्तप्रकाशेन निवर्तते । अनावारकाज्ञानमस्ति चेत् त्वदुक्तरीत्यैव ।

---

रूपाभावेऽपि तत्प्रत्यक्षत्वोपपत्तेरित्यर्थः—इष्टत्वादिति । घटतदवच्छिन्नचैतन्यवृत्तेरेकत्वेन तस्या रूपजन्यत्वादिति भावः ।

ननु रूपं न चाक्षुषज्ञानहेतुः किन्तु द्रव्यस्य चाक्षुषज्ञानविषयत्वव्यापकं ततश्च नीरूपचैतन्यस्य न चक्षुर्जन्यधीगोचरतेति नेत्याह—न च चाक्षुषेति । रूपरहितस्यापि रूपादेश्चाक्षुषानुभवात्तेन विनाऽपि तत्र तदुपपत्तिः । द्रव्यस्य तु रूपाभावे चक्षुषाननुभवात् तस्य तेन विना कथं चाक्षुषत्वमित्यत आह—अनुभवस्येति । चक्षुर्व्यापारे सति रूपवदेव सन् घट इति सद्रूपचैतन्यस्यारूपस्याप्यनुभवादित्यर्थः । नीरूपद्रव्यस्य चाक्षुषत्वेऽतिप्रसंगमाशंक्याहंकारप्रत्यक्षत्वप्रतिबन्द्या परिहरति—न चैवमित्यादिना । चैतन्यस्यैन्द्रियकवृत्तिविषयत्वे दृश्यत्वेन मिथ्यात्वापात इत्याशंक्य चित्प्रकाशविषयत्वस्यैव तत्त्वान्नैवमित्याह—न च चैतन्यस्येति । चैतन्यस्य व्यवहारविषयत्वाच्चिद्विषयत्वमप्यस्तीत्याशंक्य तस्यान्यथोपपत्तेर्न चिद्विषयत्वमिति प्रपञ्चमिथ्यात्वानुमाने वक्ष्यत इत्याह—तदभावश्चेति । अभ्युपगमं परित्यजति—किं चेति । इदमाकारवृत्तेर्दोषेण प्रतिबन्धान्नाविद्यानिवर्तकत्वमित्याशंक्याह—दोषस्येति । तस्मादज्ञानसमानविषयज्ञानमेव तन्निवर्तकमित्याह—अत इति । एवं तर्ह्यवच्छिन्नचैतन्यावारकाज्ञानानां कथमनवच्छिन्नचैतन्यसाक्षात्कारान्निवृत्तिरित्यत आह—चरमेति । एवमपि तत्कालीनानामनावारकाज्ञानानां कथं निवृत्तिरित्याशंक्य साक्षात्कारानन्तरमज्ञानकार्याभावे तत्कल्पकाभावात्तदुत्पत्तिकालेऽनावारकमज्ञानमेव नास्ति तदङ्गीकारेऽपि तस्य मूलाज्ञानधर्मत्वात्तन्निवर्तकेनैव निवृत्तिस्त्वदुक्तविधयैवापाद्यत इत्याह—अनावारकेति । ज्ञानस्याविद्यासमानविषयत्वं तन्निवर्तकत्वे प्रयोजकमित्युक्तं, स प्रति तत्रात्मसाक्षात्कारत्वमेव सामान्य-

केचित्त्वात्मसाक्षात्कारस्यात्मप्रत्यक्षत्वेन लाघवादविद्यानिवृत्तौ हेतुत्वमिति अन्यत्रापि तथा। घटाद्यविद्यानिवृत्तौ तु घटादिवृत्तिरपि हेतुरिति नातिप्रसङ्ग इत्याहुः । तस्मात्प्रत्यक्षादिप्रमाणमप्यात्मविषयं तदंशे तत्त्वविषयतया वेदान्तवत्तत्त्वावेदकं च।

बाधश्च प्रतिपन्नोपाधौ त्रैकालिकनिषेध एव, असद्विलक्षणपक्षे च विपर्ययपर्यवसाने काऽनुपपत्तिः । सदसतोरेतादृशात्यन्ताभावाप्रतियोगित्वस्योक्तत्वात्। असच्च निःस्वरूपम्।

यत्तु यदसत्तन्न प्रत्यक्षमिति न व्याप्तिः। अस्यैव प्रत्यक्षत्वादिति। तन्न। तस्याप्युक्तविधया प्रत्यक्षत्वायोगात् अस्मन्मते ज्ञानाभासत्वाच्च।

---

प्रयोजकं, ततश्चात्रापि चाक्षुषादिवृत्ते श्चैतन्यविषयत्व सिद्धिरिति मतान्तरमाह— केचित्त्विति।

नन्वेवं पटवृत्तेरप्यात्मविषयत्वात् ततो घटावच्छिन्नचैतन्यगताज्ञानस्यापि निवृत्तिः स्यादित्याशंक्य विशेषहेत्वभावान्मैवमित्याह—घटादीति । प्रत्यक्षादिवृत्तीनामात्मविषयत्वसाधनफलमाह- तस्मादिति। ततश्च रजतनिषेधवोधस्यापि निषेधांशे तत्त्वावेदकत्वात्तत्प्रतियोगिरजतादिकमप्रामाणिकमेवेति चशब्दार्थः।

एवं सच्चेन्न बाध्येतेत्यत्र सच्छब्दार्थमुक्त्का निषिध्यमानवाधमप्याह—बाधश्चेति यत्तक्तं प्रतिपन्नोपाधौ निषेधप्रतियोगिनः सर्वदेशकालीनाभावप्रतियोगित्वेनासत्वादसद्विलक्षणे रजते बाध्यते चेति विपर्ययपर्यवसानासंभव इति। तन्न। असतस्त्रैकालिकनिषेधप्रतियोगित्वनिरासान् तद्विलक्षणपक्ष एव तत्संभवादित्याह—असद्विलक्षणेति। असच्चेन्न प्रत्यक्षं स्यादित्यत्र परारीत्या असच्छब्दार्थमाह—असच्चेति।

ननु प्रतिपन्नोपाधौ स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वमेव निःस्वरूपत्वं तच्च रजतस्याप्यस्तीति तदपि निःस्वरूपमेवेति चेन्न। शशशृंगादेः प्रतिपन्नोपाध्यभावेनोक्तनिषेधप्रतियोगित्वाभावात् तस्य निःस्वरूपत्वे शृंगलक्षणायोगादभावरूपात्यन्ताभावप्रतियोगिनो भावस्वरूपत्वनियमेन लक्ष्यलक्षणयोर्व्याघाताच्च।

न च शशशृंगादेर्यदसत्वं तदेव रजतस्यापीति वाच्यम्। न हि शशशृंगं नाम किंचिदस्ति यस्यासत्वं धर्मः स्यात्। असच्छब्दस्य निर्विषयत्वे सच्चेन्न वाध्येतेति कथमिति चेन्न। रजते शून्यवादिनस्तदभ्युपगतासद्वैलक्षण्यवोधजननार्थत्वादस्येत्युक्तत्वादिति भावः।

यदुक्तं यदसत्तन्न प्रत्यक्षमिति व्याप्तिज्ञानस्य प्रत्यक्षतावश्यंभावादसतः प्रत्यक्षत्वमुपपन्नमिति तदनूद्य हेत्वसिद्ध्या दूषयति – यत्त्विति। उक्तविधयेति। इन्द्रियसंप्रयोगाजन्यत्वात् संविदभिन्नविषत्वात् साक्षात्करोमीत्यननुभवाच्चेति शाब्दापरोक्षे उक्तरीत्येत्यर्थः। व्याप्तिविषयवृत्तेः क्लृप्तकारणाजन्यत्वात् ज्ञानत्वमेव नास्ति कुतोऽपरोक्षत्वमित्यभिप्रेत्याह– अस्मन्मत इति।

असतः प्रत्यक्षत्वशङ्का तन्निराकृतिश्च

**यत्तु रजतज्ञानस्यासद्विषयत्वे सन्मात्राविषयत्वं लिङ्गम्। तदप्यस्मन्मते घटादिज्ञाने व्यभिचारि परोक्षज्ञानत्वोपाधिक च। यत्त्वसतोऽप्रत्यक्षत्वे शशशृङ्गाद्यभावस्याप्रत्यक्षतापत्तेस्तस्यासत्त्वमेव न सिद्ध्येदिति। तन्न। इष्टत्वात्। सत्यसति च तदनुपपत्तेरुक्तत्वात्। तस्य योग्यानुपलब्ध्यभावात् प्रत्यक्षत्वानुपपत्तेश्च। न तावत् प्रतियोगितद्व्याप्येतरसकलतदुपलम्भकसमवधानकालीनानुपलब्धिस्तस्यास्ति। असद्व्याप्यस्याभावात्। तस्य निरधिकरणत्वात्। अन्यथा तस्य त्वदुक्तात्यन्ताभावानुपपत्तेः। असदुपलम्भकदोषे सति तदनुपलम्भायोगाच्च। नाप्यसतो भूतलादिषु सत्वमनुपलम्भविरोधि, इन्द्रियसन्निकर्षरूपादेरभावेनानुपलम्भोपपत्तेः।**

प्रातिभासिकस्यासद्विलक्षणत्वे दूषणं समाधानं च

**एतेनासद्विलक्षणत्वे बाधो न स्यात्। सद्विलक्षणत्वे चाप्रत्यक्षतापत्तिरिति वैपरीत्यं किं न स्यात्। न चाबाध्यत्वेऽप्रत्यक्षत्वे च सत्वमसत्वमेव लाघवात् प्रयोजकमिति वाच्यम्। तर्हि सत्वासत्वे एव प्रत्यक्षत्वबाध्यत्वप्रयोजके लाघवादिति**

---

अपरोक्षभ्रमोऽसद्विषयकः सत्वानधिकरणविषयत्वादसद्विषयपरोक्षज्ञानवदिति प्रत्यक्षज्ञानस्यासद्विषयत्वसाधकतयोक्तमनुमानं दूषयति—यत्त्वित्यादिना। असतोऽप्रत्यक्षत्वे परोक्तबाधकमनूद्य निराकरोति—यत्त्वसत इति। असत्वासिद्धेरिष्टत्वे हेतुमाह—सतीति। सहकार्यभावादपि नासदभावस्य प्रत्यक्षतेत्याह—तस्येति। किमसदनुपलब्धेः प्रतियोगितद्व्याप्येतरसकलतदुपलम्भकसमवधानकालीनत्वं योग्यता किं वाऽभावाधिकरणे प्रतियोगिसत्वस्य स्वविरोधित्वम्।

नाद्यः असद्व्याप्याप्रसिद्ध्या तदितरस्यासंभवादित्याह—न तावदिति। देशतः कालतो वा समानाधिकरणयोरेव व्याप्यव्यापकभावः। असतश्च निरधिकरणत्वान्न तद्व्याप्यं किंचिदित्याह—तस्येति। असतः क्वचिद्देशे काले वा वृत्तौ तदभावस्य सर्वदेशीयत्वाद्यनुपपत्तिरित्याह—अन्यथेति।

किञ्च प्रतियोगितद्व्याप्येतरासदुपलम्भकदोषे सति तदुपलम्भावश्यकतया तदनुपलब्धेरयोगात्तस्यास्तत्समवधानकालीनत्वमेवासंभवीत्याह—असदुपलम्भकेति।

द्वितीयं निराकरोति—नापीति। रजतस्यानिर्वचनीयत्वेऽपि ख्यातिबाधयोरनुपपत्तिरिति चोद्यमनूद्यापवदति—एतेनेति। अस्य निरस्तमित्युत्तरेणान्वयः। असद्विलक्षणत्वादेःगौरवेणाबाध्यत्वाद्यप्रयोजकत्वान्न तेन तदापादनमित्याशंक्याह—न चेति। सत्वासत्वयोरबाध्यत्वाप्रत्यक्षत्वप्रयोजकत्वे तद्विलक्षणत्वयोर्बाध्यत्वप्रत्यक्षत्वप्रयोजकताकल्पने गौरवाल्लाघवात् सत्वमेव प्रत्यक्षत्वे प्रयोजकमसत्वमेव बाध्यत्व इति रजतस्य

तदापत्तेः। अन्यथा प्रत्यक्षवाधौ न स्यातामिति निरस्तम्। प्रत्यक्षवाधान्यथानुपपत्तिप्रमेयत्वात्सदसद्विलक्षणत्वस्य। असतो वाधस्याप्यनुपपत्तेः। सत्त्वस्य प्रत्यक्षत्वाप्रयोजकत्वाच्च। "नासद्रूपा न सद्रूपा माया नैवोभयात्मिका। अनिर्वाच्यतया ज्ञेये"त्यादिस्मृतिरपि तत्र प्रमाणमिति सिद्धमनिर्वचनीयत्वम्।

अनिर्वचनीयत्वे निर्वचनान्तरम्

अथवा सदन्यत्वमनिर्वचनीयत्वं साध्यम्। एतदेवानिर्वचनीयशब्दार्थः। एतच्च मिथ्यात्वानिर्वचनीयत्वयोर्भेदमाश्रित्य। अतो न सत्पदार्थनिरूपणे गौरवम्। न चासत्यतिव्याप्तिरर्थान्तरता वा निर्विषयत्वादसच्छब्दस्य। प्रपञ्चव्यतिरिक्ते सत्प्रतियोगिनोरन्योन्याभावस्वरूपभेदयोरसत्वात्। विमतं सदन्यत् वाध्यत्वात् यन्नैवं तन्नैवं यथा सत् सदभेदश्चानुमानात् प्रागेव सति प्रसिद्धः। रजते प्रत्यक्षसिद्धस्य हेतोर्व्यतिरेकश्चेति न व्याप्तिग्रहानुपपत्तिः। अर्थापत्तिरपि प्रमाणम् अन्यथा वाधानुपपत्तेः प्रत्यक्षत्वानुपपत्तेश्च।

न तावत्संविदिव स्वप्रकाशं रजतं, ज्ञेयत्वे तु संविदभिन्नत्वं विना नापरोक्षं

---

सदसदात्मकत्वापात इत्याह—तदीति। प्रत्यक्षत्वस्यासद्वैलक्षण्येन वाध्यत्वस्य च सद्वैलक्षण्येन व्याप्तत्वात् तदनुपपत्त्या तत्सिद्धिः सत्वस्य प्रत्यक्षत्वेनासत्वस्य त्वबाध्यत्वेनाव्याप्तत्वान्न तयोस्तत्प्रयोजकत्वमिति सदसद्विलक्षणस्यैव प्रत्यक्षत्वाद्युपपत्तिरित्याह—प्रत्यक्षेत्यादिना। सदसद्विलक्षणे वस्तुनि नारदवचनमपि मानमित्याह—नासद्रूपेति।

एवमाचार्योक्तलक्षणस्यानिर्वचनीयानुमानसाध्यपरतामभिधाय स्वयं तत्स्वरूपमप्याह—अथवेति।

ननु मिथ्यात्वानिर्वचनीयत्वयोरभेदाद्बाधयोग्यत्वस्य मिथ्यात्वपदार्थत्वाद् वाधायोग्यत्वरूपसत्यपदार्थान्यत्वे नानिर्वचनीयनिरूपणे गौरवमित्याशंक्य मिथ्यात्वानिर्वचनीयत्वयोर्भेदान्नैवमित्याह—एतच्चेति। असतोऽपि सदन्यत्वात् तत्र लक्षणस्यातिव्याप्तिः शुक्तिरजतादेरसत्वेऽपि सदन्यत्वसंभवात् तदनुमानस्यार्थान्तरता चेत्याशंक्योक्तलक्षणाश्रयासत्यपदार्थस्यैवासंभवान्नैवमित्याह—न चेत्यादिना। भेदस्य धर्मत्वे स्वरूपत्वे वा निर्द्धर्मके निःस्वरूपे बाऽसति न तदन्यत्वमित्याह—प्रपचेति। रजतादेरुक्तानिर्वचनीयत्वेऽनुमानमाह—विमतमिति। साध्याप्रसिद्ध्या तदभावस्याप्यप्रसिद्धस्य हेतुत्वाभावेन व्याप्तिग्रहायोगान्न व्यतिरेकित्वमित्याशंक्याह – सदभेदश्चेति। केवलव्यतिरेकिणमनंगीकुर्वाणं प्रत्याह –अर्थापत्तिरिति।

प्रत्यक्षत्वस्यान्यथोपपत्तिं निराकरोति – न तावदिति। किं रजतस्य स्वप्रकाश-

**संविदभेदश्च न वास्तवो जडाजडयोरिति कल्पितः। कल्पना च सद्विलक्षणस्यैति।**

**न चैवं संविद्रजतयोस्तादात्म्यमात्रसंबन्धः कल्पितोऽस्तु दूरस्थवनस्पत्योरिव। किं स्वरूपकल्पनयेति वाच्यम् वनस्पतिस्वरूपद्वयवच्छुक्तिरजतयोः स्वरूपेणासंकराप्रतीते.।**

मिथ्यात्वमेव निर्वचनीयत्वं

**अथवा मिथ्यात्वमेवानिर्वचनीयत्वं तदाहुर्मिथ्याशब्दो द्व्यर्थः अपह्नववचनोऽनिर्वचनीयतावचनश्चेति।**

**ननु मिथ्यात्वमत्यन्ताभावप्रतियोगित्वं स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा स्वाधिकरणतावच्छेदेन स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वं वा न भवति घटादेरपीदृशत्वात्।**

**नापि स्वसमानकालीनस्वाश्रयवृत्त्यत्यन्ताभावप्रतियोगित्वं प्रतियोगिदेशे प्रतियोगिकाले तदनुपपत्तेः अन्यथा भावाभावयोर्विरोधो दत्तजलाञ्जलिः स्यात्।**

---

त्वात् प्रत्यक्षत्वमुत संविद्विषयत्वेन तत्रनाद्यः तस्य जडतया स्वप्रकाशत्वायोगादनभ्युपगमाच्च। न द्वितीयः रजतस्य संवित्संबन्धं विना तद्विषयत्वायोगात्। आध्यासिकतादात्म्यं विना संबन्धान्तरस्य दुर्निरूपत्वात्। सतोऽसतश्चाध्यासायोगाददनिर्वचनीयत्वसिद्धिरित्यर्थः। तर्हि दूरस्थवनस्पत्योरिव संविद्रजतयोस्तादात्म्यमात्रं कल्पितं न रजतमित्यत आह – न चैवमिति। असंकराप्रतीतेरिति। बाधकज्ञानानन्तरमिति शेषः। एतच्चोपलक्षणं त्रैकालिकनिषेधप्रतीतेश्चेत्यपि द्रष्टव्यम्। इदानीं मिथ्यात्वानिर्वचनीयत्वयोरभेदमाश्रित्य मिथ्यात्वमेवानिर्वचनीयलक्षणमित्याह— अथवेति। तयोरभेदे टीकाकृत्संमतिमाह— तदाहुरिति। मिथ्यात्वस्यैव दुर्निरूपत्वान्न तदनिर्वचनीयत्वमिति चोदयति—नन्विति। किमत्यन्ताभावप्रतियोगित्वं मिथ्यात्वम् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं वा, स्वाधिकरणतावच्छेदेन स्वाधिकरणवृत्त्यन्त्यंताभावप्रतियोगित्वं वा स्वसमानकालीनस्वाश्रयवृत्त्यत्यन्ताभावप्रतियोगित्वं वा प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा बाध्यत्वं वा ज्ञाननिवर्त्यत्वं वा अप्रामाणिकत्वं वाऽविद्याकार्यत्वं वा जडत्वं वेति विकल्पं मनसि निधायाद्यत्रयं निराकरोति – अत्यन्ताभावेत्यादिना। संयोगादिव्यवच्छेदार्थं स्वाधिकरणतावच्छेदेनेत्युक्तम्। संयोगाद्यभावस्य प्रतियोग्यनधिकरणप्रदेशवृत्तित्वान्न तत्रातिव्याप्तिरिति भावः। कल्पत्रय निषेधेऽपि हेतुमाह —घटादेरिति। परमते सत्यस्यापि घटादेः समयभेदेन स्वाधिकरणीभूतभूतलादि-प्रदेशनिष्ठात्यन्ताभावप्रतियोगित्वाभ्युपगमात् सत्यत्वेऽपि तदुपपत्तिरित्यर्थः।

स्वात्यन्ताभावस्य स्वसमानकाले स्वाश्रयदेशवृत्तित्वस्यासंभवितत्वान्न चतुर्थं इत्याह – नापीति। असंभवादेव पञ्चमोऽप्यनुपपन्न इत्याह – अत एवेति। अभावस्य

अत एव प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं तदिति निरस्तम् ।

नन्वभावस्य प्रतियोगिसत्तयैव विरोधो न प्रतियोगिनेति । न, यद्विरहात्मत्वमभावस्य तेनैव तस्य विरोधात् शुक्तौ प्रतियोगिनः सत्वाभावे तस्यास्तदधिकरणत्वाभावाच्च । नापि बाध्यत्वं मिथ्यात्वम् । तद्यदि बाधकज्ञानविषयत्वम् तदा ब्रह्मण्यतिव्याप्तिः ।

अथ, बाधविषयाभावप्रतियोगित्वम् । यदि बाधोऽभावप्रमामात्रं तदा घटादावतिव्याप्तिः । प्रतिपन्नोपाधौ प्रमाविषयाभावप्रतियोगित्वमपि तत्रैव गतम् । न च प्रतिपन्नोपाधिरुपादानं उपादाने प्रतीतिकालीनाभावप्रतियोगित्वमसंभवीत्युक्तम् ।

अथ ज्ञाननिवर्त्यत्वं मिथ्यात्वं मिथ्यात्वस्यैव ज्ञाननिवर्त्यत्वप्रयोजकत्वात् । अन्यथाऽऽत्मनोऽपि ततो निवृत्त्यापत्तेः । प्रपञ्चरूपे मिथ्यात्वप्रतिज्ञाया ज्ञाननिवर्त्यत्वविषयत्वे परमते सत्यस्यैव ज्ञाननिवर्त्यत्वेन सिद्धसाधनाच्च । नाप्यप्रामाणिकत्वं मिथ्यात्वं । प्रमा यदि विद्यमानार्थविषयं ज्ञानं तर्हि भवन्मते शुक्तिरूप्यादिकं नाप्रामाणिकम् । यद्यबाधितार्थज्ञानं तर्हि स एव दोषः । न चाविद्या-

---

स्वाधिकरणे प्रतियोगिसत्वेनैव विरोधो न प्रतियोगिनेति नासंभव इति शंकते—नन्विति भावाभावयोः परस्परविरहात्मत्वप्रयुक्तत्वाद्विरोधस्य नैकत्र तदुभयसंभव इत्याह—न यद्विरहेति ।

किञ्च प्रतियोगिनोऽभावसामानाधिकरण्यमभ्युपेत्य तत्सत्वनिषेधोऽनुपपन्नः सत्वाभावे तस्यैवासंभवादित्याह—शुक्ताविति । षष्ठमपवदति—नापीति । किं बाध्यत्वं बाधकज्ञानविषयत्वं बाधविषयाभावप्रतियोगित्वं वा ? आद्ये ब्रह्मणोऽपि शुक्त्याद्यनुगतसत्तात्मकत्वात् सर्वभ्रमाधिष्ठानत्वाच्च बाधकज्ञानविषयत्वमिति तत्रातिव्याप्तिरित्याह—तद्यदीति ।

द्वितीयमुत्थापयति—अथेति । बाधशब्देन किमभावप्रमोच्यते प्रतिपन्नोपाधावभावप्रमा वोभयथापि परमते घटादावतिव्याप्तिरित्याह—यदीत्यादिना । तत्रैव गतमिति । घटादेः कालभेदेन स्वाश्रयभूतलादौ प्रमीयमानाभावप्रतियोगित्वादित्यर्थः । प्रतिपन्नोपाधिपदेनोपादानस्य विवक्षितत्वान्न घटादावतिव्याप्तिरित्याशंक्यासंभवेन परिहरति—न चेति ।

सप्तममुत्थाप्य तस्य मिथ्यात्वप्रयोज्यत्वान्न स्वयं मिथ्यात्वमित्याह—अथेत्यादिना । मिथ्यात्वस्य ज्ञाननिवर्त्यत्वाप्रयोजकत्वे बाधकमाह—अन्यथेति । तत इति । ज्ञानादित्यर्थः । ज्ञाननिवर्त्यत्वमेव मिथ्यात्वमित्यत्युपगमे सत्यस्यापि प्रपंचस्येश्वरज्ञाननिवर्त्यत्वाभ्युपगमात् सिद्धसाध्यता चेत्याह—प्रपञ्चेति । अष्टममपवदति—नापीति । अप्रामाणिकत्वं नाम किं प्रमाऽविषयत्वमुताप्रमाविषयत्वम् ? आद्ये किं प्रमापदेन विद्यमानार्थमात्रज्ञानं विवक्षितमुताबाधितार्थज्ञानं ? आद्येऽसंभवः इत्याह—यदीति । तद्यदि बाधकज्ञानविषयत्वमित्यादिना बाध्यत्वस्य दुर्निरूपत्वोक्तेस्तत्प्रतियोगिकाबाधितत्वमपि

**कार्यत्वं मिथ्यात्वम्। अविद्यादेस्तदभावात्। नापि जडत्वं प्रपञ्चस्य तत्साधने सिद्ध-साधनादिति। उच्यते।**

मिथ्यात्वनिर्वचने सिद्धान्तः।

**स्वसमानकालीनस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वम्। न च विरोधः शुक्तावनुभवद्वयोपनीतयोरुभयोरपि विद्यमानत्वेनाभावस्य स्वसमान-सत्ताकप्रतियोगिविरोधिस्वभावत्वादिति प्रतियोगिसत्वविरोधितैव। शुक्तौ प्रतियोगिसत्वाभावेऽपि सा तदधिकरणमेव। तत्र तस्य विद्यमानत्वात् तच्च सत्वादन्यदित्युक्तम्। न च संयोगादावतिव्याप्तिः। एकावच्छेदेनैव स्वसमानाधि-करणत्वस्याभावे विवक्षितत्वात्। नवीनोक्ता सत्यतिव्याप्तिर्निरस्तैव। असतो निरधिकरणत्वाच्च।**

**ननु रजतात्यन्ताभावो न परमार्थः ससंबन्धिकपदार्थस्याभावस्य प्रतियोगि-समानस्वभावत्वात् प्रतियोगिनश्च सद्विलक्षणत्वात्। अत एव न व्यावहारिकः**

---

तथेत्याह—तर्हीति। द्वितीये किमसज्ज्ञानमप्रमा बाधितार्थज्ञानं वा? नाद्यः असंभवात्। द्वितीये तूक्त एव दोष इति भावः।

नवममविद्यातत्संबन्धजीवत्वादावव्याप्त्या दूषयति—नचाविद्ये ति। दशमं दूषयति—नापीति। जडत्वं नाम ज्ञानान्यत्वं तत्प्रपञ्चेऽपीष्टमित्यर्थः। आरोप्याभावोऽ-धिष्ठानातिरिक्तमतेन तावल्लक्षणमाह—उच्यत इति।

भावाभावयोरेकत्र विरोधादसंभव इत्युक्तमपवदति—न चेति। यदुक्तं शुक्तौ स्वसत्वाभावे तस्यास्तदधिकरणत्वमेवायुक्तमिति तत्राह—शुक्ताविति।

ननु सत्वमेव विद्यमानत्वमिति कथं सत्वाभावे विद्यमानत्वं रजतस्येति तत्राह तच्चेति। देशकालादिसबन्धित्वमात्रं विद्यमानत्वं सत्वं तु बाधायोग्यत्वमिति तयोर्भेदः साक्षिविवेक एवोक्त इत्यर्थः। परमतेऽसतोऽपि संयोगादेरुक्तलक्षणसत्वात् रजतादेः सत्वे तदुपपत्तिरित्याशंक्य संयोगतदभावयोः प्रदेशभेदेन व्यधिकरणत्वस्यावश्यकत्वान्न तत्र विवक्षितलक्षणमित्याह—न च संयोगेति। तर्हि रजतस्य नवीनाभिमतासत्वेऽपि तदुपपत्तिरित्याशंक्याह—नवीनेति। असति धर्ममात्रासंभवस्योक्तत्वान्न तत्रातिव्याप्ति-रित्यर्थः। पराभितासतो निरधिकरणत्वादभावसमानाधिकरणत्वघटितलक्षणं तत्र नेत्याह—असत इति।

शुक्तावनिर्वचनीयरजताभ्युपगमे तदत्यन्ताभावस्य तत्र दुर्निरूपत्वादसंभव इति चोदयति—नन्विति।

किं शुक्तौ रजतात्यन्ताभावः परमार्थ उत व्यावहारिकः प्रातिभासिको वा? नाद्यः इत्याह—रजतेति। ससम्बन्धीति हेतुगर्भविशेषणं निरूपकस्य सत्वाभावे निरूप्यस्य सत्वमनुपपन्नं वन्ध्यापुत्रपाण्डित्यवदित्यर्थः।

**तस्य कल्पितत्वे च रजतं परमार्थः स्यात् ।**

व्यधिकरणधर्मावच्छिन्नाभावस्वीकारः

**अथ प्रतियोगितावच्छेदकधर्मसमसत्वमेवाभावस्य अन्यथा गवि शशशृंगं नास्तीति शशीयत्वावच्छिन्नशृंगप्रतियोगिकाभावप्रमानुपपत्तेरिति । न, तत्रापि शृंगस्यैव प्रतियोगित्वात् । तस्य च सत्वात् । प्रतियोगिनः सत्वमात्रस्यैव ह्यभावसत्वप्रयोजकत्वं न तु तेनाकारेण सत्वस्य ।**

**किञ्च तादृशी प्रमा न सम्भवति अभावधीसामग्रीविरहात् । प्रतियोगिनि प्रतियोगितावच्छेदकविशिष्टप्रमाया अभावधीकारणत्वात् । निर्धर्मकब्रह्मणोऽपि पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगित्वाच्चेति । मैवं । गवि शशशृङ्गं नास्तीत्यनुभवस्तावत् सर्वानुभवसिद्धः । न च शशशृङ्गस्यासतोऽभाव इत्युक्तम् । न च गोशृङ्गे शशीयत्वाभावविषयोऽयमनुभवः शृङ्गस्यैव प्रतियोगित्वानुभवात् । अनुभवस्य व्याख्यानानर्हत्वात् अतः शशीयत्वावच्छिन्नशृंगप्रतियोगिकोऽयमभावः ।**

**न चाभावधीसामग्रीविरहः । प्रतियोगिनि प्रतियोगितावच्छेदकज्ञानस्यैव ह्यभावधीहेतुत्वं न तु तद्वैशिष्टयज्ञानस्यापि गौरवात् । न चैवं निर्विकल्पकादप्यभावधीप्रसंगः त्वदभिमतनिर्विकल्पकस्यैवासत्वात् ।**

---

द्वितीयं दूषयति—अत एवेति । अभावस्य प्रतियोगिसमानस्वभावत्वात् प्रतियोगिनश्चाव्यावहारिकत्वादित्यर्थः ।

न तृतीयः । रजतप्रतिभासकाले तदभावाप्रतिभासादिति भावः । उत्तरकल्पद्वये दोषान्तरमाह--तस्येति । अभावस्य न प्रतियोगिसमसत्वनियमः येनानिर्वचनीयाभावः परमार्थो न भवेत् किंतु प्रतियोगितावच्छेदकसमानसत्वमेव । ततश्च सद्रजतं नेति प्रतीते रजतभावस्य सत्वावच्छिन्नरजतप्रतियोगिकत्वात् सत्वस्य चाधिष्ठानात्मरूपतया परमार्थत्वाद्रजताभावोऽपि तथेति सिद्धान्ती शंकते—अथेति । लाघवात् प्रतियोगिसमानस्वभावाभ्युपगमे शशीयत्वावच्छिन्नशृङ्गस्यासत्वात् तदभावोऽपि तथेति तत्प्रतीतेः प्रमात्वं न स्यादित्याह--अन्यथेति । शशशृङ्ग नेति प्रतीतिः प्रमेत्यङ्गीकृत्य तत्र प्रतियोगिन्यवच्छेदकधर्मसंसर्गस्यासत्वेऽपि प्रतियोगिनो गवादिषु सत्वात् तदभावसत्वोपपत्तिरिति परिहरति— न तत्र पीति ।

नन्ववच्छेदकधर्मवत्तया प्रतियोगिनोऽसत्वात्कथं तदभावस्य सत्वमित्यत आह— प्रतियोगिन इति ।

अङ्गीकारं परित्यजति—किंचेति । प्रकृते यद्विरहात् सामग्री विरहस्तत्कारणमाह— प्रतियोगिनीति । रजतस्य सत्वविशिष्टतया निषेधप्रतियोगित्वेन मिथ्यात्वेऽतिप्रसङ्गश्चेत्याह—ब्रह्मणोऽपीति । विकल्पासहत्वान्नैतदित्याह—मैवमिति । किं गवि शशशृङ्गं नास्ती-

न च घटघटत्वयोः स्वतन्त्रोपस्थितौ घटघटत्वे न स्त इति धीः स्यात्। न तु घटत्वस्य प्रतियोगिविशेणतया भानमिति वाच्यम्; स्वतन्त्रोपस्थितयोरपि विशेषणविशेष्यभावस्य बहुशो दृष्टत्वात्। तत्र नियामकमेव प्रकृतेऽपि नियामकम्।

अस्तु वा प्रतियोगिनि तदवच्छेदकवैशिष्टचज्ञानं तज्ज्ञानमात्रस्यैव लाघवेनाभावधीहेतुत्वात्।

अन्यथा यस्य कदापि रजतं नास्त्येव तस्यानाप्तवाक्यादरजते मदीयं रजतमिति भ्रमे आप्तवाक्यात् मदीयं रजतमिदं न भवतीति प्रमा न स्यात्।

न च तत्र मदीयत्वस्यैव निषेधः तस्य तत्र सत्वात्। मदीयं रजतं न भवतीति तस्य प्रतियोगिविशेषणत्वानुभवाच्च। अत एव मदीयमिदं रजतं न भवतीति निषेध इति प्रत्युक्तं मदीयत्वाभावाद् वा रजतत्वाभावाद्वा आप्तेनेत्थमुक्तमिति जिज्ञासाभावप्रसङ्गाच्च।

---

त्यनुभव एवापलप्यते किं वा तस्यासत्प्रतियोगिकाभावगोचरताऽस्तीत्यनुभवगोचरत्वमुच्यते उत गोश्रृंगे शशीयत्वाभावगोचरत्वं क्लृप्तकारणाभावात्तत्प्रमात्वानुपपत्तिर्वा? नाद्य इत्याह— गवीति।

द्वितीयस्त्वनुपपन्नः असत्प्रतियोगिकाभावनिरासादित्याह—न चेति। अभावे श्रृङ्गप्रतियोगिकत्वानुभवविरोधान्न तृतीयोऽपीत्याह—न च गोश्रृङ्ग इति। कस्तर्ह्येतदनुभवविषय इत्यत आह—अतइति। चतुर्थं निराकरोति—न चाभावेति। प्रतियोगितदवच्छेदकयोः स्वरूपेणावगतयोस्तद्वैशिष्टचप्रतीतिं विनाऽभावानवमादर्शनात् तद्वैशिष्टचधीरेव नाभावधीहेतुरित्यर्थः। घटघटत्वगोचरनिर्विकल्पके सत्यप्याभावधियोऽनुदयात् तद्वैशिष्टचधीरपि तत्र हेतुरित्याशंक्य तादृशनिर्विकल्पकस्य डुलिदुग्धतुल्यत्वान्मैवमित्याह—न चैवमिति।

अभावबुद्धेः प्रथमं नियमेन प्रतियोगिन्यवच्छेदकवैशिष्टचभानाभावे उभयोरप्यभावप्रतियोगितयैव तद्धीगोचरता स्यात् नान्यतरस्यान्यतरविशेषणतयेत्याशंक्याह—न च घटेति। बहुशो दृष्टत्वादिति। गोवत्सयोः स्वातन्त्र्येणानुभूतयोः स्मृतयोर्वा सवत्सा गौर्धावति सवत्सा गौर्नेति वाऽनुभवदर्शनादित्यर्थः।

इदानीं प्रतियोगिन्यवच्छेदकवैशिष्टचज्ञानमेवाभावप्रमाहेतुः न तु तत्प्रमापि गौरवात्। ततश्च गोश्रृंगे शशीयत्ववैशिष्ट्यस्यासत्वेऽपि तज्ज्ञानस्याहार्यारोपरूपपरोक्षभ्रमस्य संभवाच्छशीयत्वविशिष्टश्रृङ्गाभावप्रमा घटत इत्याह—अस्तुवेति। अवच्छेदकवैशिष्ट्यप्रमाया हेतुत्वे दोषान्तरमाह—अन्यथेति। अरजत इति स्वकीयरंगादावित्यर्थः। त्वदीयं रजतमिदं न भवतीत्याप्तवाक्यं न विशिष्टनिषेधपरं किन्तु विशेषणस्य वा विशेष्यस्य वा निषेधपरमित्याशंक्य क्रमेण दूषयति—न चेत्यादिना। अत एवेति। मदीयत्वस्य प्रतियोगिविशेषणत्वेनैवानुभवादित्यर्थः। विशिष्टाभावप्रतिपत्त्यभावेऽनन्तरभावितज्जिज्ञासापि न स्यादित्याह—मदीयत्वेति।

**किञ्च यत्र विशिष्टाभावतात्पर्यज्ञानं श्रोतुः तत्र तस्यैवावश्यकता। अथवा प्रतियोगितावच्छेदकस्य प्रतियोगिनि वैशिष्टयमात्रमपेक्षितम्। न तु तस्य धर्मत्वमपि घटत्वादिनिषेधाभावप्रसङ्गात् घटत्वताया अपि घटघटितस्वरूपत्वेन तस्मिन्नभावात्। अस्ति च रजतेऽधिष्ठानस्वरूपसत्तावैशिष्ट्यं प्रतियोगिसमानस्वभावम्। रजताभावश्चाधिष्ठान आत्मनि परमार्थ एव प्रतियोगितावच्छेदकसमानस्वभावत्वात्। तस्य च सद्रूपात्मनः परमार्थत्वात्।**

**अन्यथा श्रुतिप्रमितप्रपंचाभाववास्तवत्वानुपपत्तेः अपरमार्थत्वे तस्यापि**

---

विशिष्टाभावे तात्पर्यग्रहणसंभवाच्च तद्धीरावश्यकीत्याह—किं चेति। प्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रमाया अभावधीहेतुत्वेऽप्यधिष्ठानसत्वावच्छिन्नानिर्वचनीयरजताभावप्रमा घटत इत्याह—अथवेति।

ननु प्रतियोगिवृत्तिधर्मस्यैव प्रतियोगितावच्छेदकत्वनियमात् कथमधिष्ठानभूतसत्त्वस्य रजतप्रतियोगितावच्छेदकत्वमित्यत आह—प्रतियोगितेति। मात्रचोऽर्थमाह—नत्विति। गौरवादित्यर्थः।

किञ्च घटत्वं पटे नेति निषेधे किं घटः प्रतियोगितावच्छेदकः घटत्वता वा? आद्ये त्वन्मते तन्निषेधायोग इत्याह—घटत्वादीति। द्वितीयेऽपि घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपघटत्वतायाः सखण्डतया घटादिघटिततया घटत्वधर्मत्वायोगादुक्तदोषापात इत्याह—घटत्वताया इति। रजतेऽधिष्ठानसत्तावैशिष्ट्यस्य बाध्यतया तत्र न तद्वैशिष्ट्यप्रमा संभवतीत्याशंक्याह—अस्ति चेति। अबाधितार्थरूपप्रतियोगितावच्छेदकवैशिष्ट्यज्ञानगतं प्रमात्वं नाभावप्रमायामुपयुज्यते गौरवात् कुत्राप्यसंप्रतिपत्तेश्च। किन्तु तत्संबन्धवति तत्प्रकारकत्वरूपप्रमात्वमेव तत्रोपयुज्यते। तदिहाप्यस्ति। रजते स्वसमानसत्ताकाधिष्ठानसत्ववैशिष्ट्याभ्युपगमेन तज्ज्ञानस्योक्तप्रमात्वसंभवादित्यर्थः। रजताभावज्ञानेऽपि तादृशमेव प्रमात्वं स्यादित्याशंक्य विषयबाधाभावादबाधितार्थरूपप्रमात्वं घटत इत्याह—रजताभावश्चेति।

ननु सत्वविशिष्टरजताधिकरणे कथं तत्कालीनतदभावस्य पारमार्थिकत्वमिति तत्राह—प्रतियोगितेति। रजतस्य तत्र सत्ववैशिष्ट्यस्य चापरमार्थत्वात् वास्तवतदभावाविरोधादिति भावः। अद्वैतमतेऽवच्छेदकसत्वस्य भावरूपस्य कथं परमार्थतेत्यत्राह—तस्य चेति।

अभावस्य प्रतियोगिसमानस्वभावत्वमेव लाघवात् ततस्तस्य वास्तवत्वायोग इत्याशंक्याह—अन्यथेति। कल्पितप्रपञ्चाभावस्य नेह नानेत्यादिश्रुतिप्रमेयतया वास्तवत्वान्नोक्तलाघवावतार इति भावः। उक्तलाघवबलात् प्रपञ्चाभावोऽप्यपरमार्थः किन्न स्यादित्यत आह—अपरमार्थत्व इति।

**निषेधप्रसंगात् । एवं तस्य तस्यापीति निषेधानवस्था गौरवं च प्रामाणिकत्वान्न दोषाय ।**

**ननु व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावो न स्वाधिकरणे प्रतियोगिसत्वविरोधीति चेत् । न, सत्वावच्छिन्नप्रतियोगिकाभावस्य स्वाधिकरणे प्रतियोगिसत्वविरोधित्वात् ।**

**यत्तु निर्धर्मब्रह्मणोऽप्येवमत्यन्ताभावप्रतियोगित्वमिति तथापि तस्याधिकरणाभावात् । तस्मात् प्रदेशभेदेन स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगि शुक्तिरजतं स्वसमानकालीनस्वसमानाधिकरणात्यन्ताभावप्रतियोगि दृश्यत्वात् संयोगादिवत् ।**

**अन्यथा रजतस्य शुक्तौ त्रैकालिकनिषेधानुपपत्तेः प्रपञ्चोऽपि पक्षतुल्य इति न व्यभिचारः न ब्रह्मणि हेतुः । न च प्रदेशवृत्तित्वमुपाधिः । उक्ततर्कात् पक्षे**

---

ननु प्रतियोगितावच्छेदकसमानस्वभावाभावकल्पनमपि गौरवदोषदुष्टमिति नेत्याह--गौरवं चेति । ननु गवि सत्यपि शृङ्गे यथा गवि शशीयत्वावच्छिन्नशृङ्गाभाव एवं शुक्तौ सत्यपि रजते व्यधिकरणसत्वावच्छिन्नतदभावो घटते । ततश्च रजतं न सद्विलक्षणमिति शङ्कते—नन्विति । विशेष्यवति विशिष्टनिषेधस्य विशेष्ये विशेषणाभावप्रयुक्तत्वाद् विद्यमाने रजते सत्वाभावादेव तद्विशिष्टनिषेध इति रजते सद्वैलक्षण्यसिद्धिरित्याह—न सत्वेति ।

नन्वेवं सत्वपरिज्ञाने तदवच्छिन्नतया स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वपरिज्ञानं तज्ज्ञाने च तदन्यत्वरूपसत्वपरिज्ञानमितीतरेतराश्रय इति चेन्न; आत्मस्वरूपाखंडसत्वस्य मिथ्याज्ञानं विनापि ज्ञातुं शक्यत्वादधिष्ठानज्ञानानिवर्त्यत्वलक्षणबाधायोग्यत्वरूपतटस्थलक्षणस्यापि तन्निरपेक्षत्वाच्चेति भावः ।

ब्रह्मणि परोक्तातिप्रसंगमनूद्य स्वसमानाधिकरणेति विशेषणात्तन्निरास इत्याह—यत्त्वित्यादिना । अत एव सत्वावच्छिन्नप्रतियोगिकाभावप्रतियोगित्वमेव मिथ्यात्वलक्षणमस्तु किं स्वसमानाधिकरणेत्यादिनेति—निरस्तम् । तस्य ब्रह्मण्यतिव्याप्तिवारकत्वात् । सत्वावच्छिन्नप्रतियोगिकाभावत्वस्य विशेषणमुक्तत्वाच्च । अत्रायं लक्षणनिष्कर्षः—एकावच्छेदेन स्वसंसृज्यमानाधिकरणे वर्तमानस्वसंसृष्टावच्छिन्नप्रतियोगिकाभावप्रतियोगित्वं मिथ्यात्वमिति । तेन सत्यत्वे संयोगादिवत् प्रदेशवृत्यत्यन्ताभावप्रतियोगित्वेन घटादिवत्सामयिकाभावप्रतियोगित्वेन नृशृङ्गवदसंसृष्टव्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावप्रतियोगित्वेन च न लक्षणपर्यवसानमिति द्रष्टव्यम् । रजतस्योक्तलक्षणवत्वे मानमाह—तस्मादिति । संयोगादिवत्पक्षस्य सत्वेऽपि प्रदेशवृत्यत्यन्ताभावप्रतियोगित्वोपपत्याऽर्थान्तरवारणाय प्रदेशभेदेनेत्यादिविशेषणम् । स्वसमानकालीनेति । स्वसंसृज्यमानाधिकरणे वर्तमानस्वसंसृष्टावच्छिन्नप्रतियोगिकाभावप्रतियोगीत्यर्थः । ततश्च न सामयिकाभावप्रतियोगित्वादिनाऽर्थान्तरत्वशङ्कावकाशः । न ब्रह्मणीति । दृश्यत्वं नाम

साध्यस्य निश्चितत्वात् । अत एव मिथ्यात्वं प्रत्यक्षमित्याहुः ।

आरोपिताभाव अधिष्ठानमेव

अन्ये त्वारोपितस्याभावस्तदधिकरणे तस्मान्न भिद्यते अधिकरणभिन्नसत्ताकप्रतियोगिकाभावस्यैवाधिकरणाद् भेदात् । न चाभावस्याधिकरणाद्भेदे प्रतियोगिनस्तद्भेद एव लाघवात् प्रयोजक इति वाच्यम् । तथात्वे प्रपञ्चाभावस्य ब्रह्मणोऽतिरेके तस्याद्वितीयत्वावधारणबहुश्रुतिविरोधप्रसङ्गात् । श्रुतिर्भावाद्वैतपरेति चेत् न, द्वैतमात्रस्य तत्र निषेधावगमात् । संकोचकाभावाच्च । किं चाभावस्य ब्रह्मणि सत्यत्वे दृश्यत्वहेतोस्तत्र व्यभिचारः । अदृश्यत्वे चास्वप्रकाशस्य तस्याभाव एव । ब्रह्मप्रकाशस्यापि तदविषयत्वेऽसर्वज्ञं ब्रह्म स्यात् ।

ब्रह्मणोऽपि व्यावृत्तत्वे स्वरूपव्याघाताच्च । सप्रतियोगिकाभावस्य

---

दर्शनविषयत्वं दर्शनं च ब्रह्मात्मकमिति न तस्य तद्विषयत्वमिति वक्ष्यत इत्यर्थः । संयोगादावव्याप्यवृत्तित्वमुपाधिमाशंक्यानुकूलेन तर्केणेति न्यायात् तस्यानुपाधित्वमाह न च प्रदेशेति । अत एवेति । यतो रजताभावस्तत्कालीनतया तदधिकरणेऽनुभूयतेऽतो नेदं रजतमिति बाधोऽपि मायामयत्वमेव सूचयतीति तत्प्रत्यक्षत्वं पञ्चादिकाकृत आहुरित्यर्थः ।

अधिष्ठानातिरिक्तारोप्याभावस्तत्र परमार्थ इत्यरुचिं दर्शयन् पक्षान्तरमाह—अन्ये त्विति । अमावस्याधिकरणभिन्नसत्ताकप्रतियोगिकत्वं नाधिकरणाद् भेदे प्रयोजकं किन्तु लाघवादधिकरणभिन्नप्रतियोगिकत्वमेवेत्याशंक्य श्रुतिविरोधान्नोक्तलाघवावतार इत्याह—न चाभावस्येत्यादिना । ब्रह्मातिरिक्ताभावस्य सत्वेऽपि सतो भावान्तरस्याभावात्तत्परश्रुतेर्न विरोध इति शंकते—श्रुतिरिति । एकमेवाद्वितीयमित्यादौ निषिध्यमानद्वैतविशेषणतया भावत्वाश्रवणात् द्वैतमात्रनिषेध एव इत्याह—न द्वैतेति । उक्तलाघवाच्छ्रुतिर्भावद्वैतनिषेधपरतया नीयत इत्याशंक्याह—संकोचकेति । लाघवतर्काच्छ्रुतिसंकेचे ब्रीहीन् प्रोक्षतीत्यादावपि लाघवात् त्रयाणामेव ब्रीहीणां प्रोक्षणादिप्रसङ्गादिति भावः । किञ्चाधिष्ठानातिरिक्ताभावस्य मिथ्यात्वे निषेधानवस्थापातात् सत्वमेव वाच्यं तथा च स किं दृश्यः अदृश्यो वा ।

आद्ये मिथ्यात्वसाधकतया सर्वसंप्रतिपन्नदृश्यत्वहेतोस्तत्र व्यभिचार इत्याह—किं चेति । द्वितीये मानाभावात् स एव न सिद्ध्येदित्याह—अदृश्यत्व इति । ब्रह्मातिरिक्तस्य तददृश्यत्वे तस्य सार्वज्ञ्यमपि न स्यादित्याह—ब्रह्मेति ।

किं च सत्यादिवाक्ये त्रिविधपरिच्छेदरहितस्यैव ब्रह्मत्वेन लक्षितत्वात् तदतिरिक्तवास्तवाभावाभ्युपगमे तद्विरोधश्च स्यादित्याह—ब्रह्मणोऽपीति । अधिष्ठानातिरिक्ताभावस्य पारमार्थिकत्वमप्ययुक्तमित्याह—सप्रतियोगिकेति ।

प्रतियोगिसमानस्वभावत्वनियमाच्च । किं च शुक्तौ प्रतीयमानरजतस्य रजतमिह नास्तीति स्वरूपेण निषेधो दृश्यते। स चाभावो न वास्तवो व्यावहारिको वा अर्थक्रियायोग्यरजताभावस्य तदयोगादित्युक्तम् । ततश्चाधिकरणभिन्नसत्ताकप्रतियोगिकत्वं यस्य स एवाभावोऽधिकरणाद् भिद्यत इत्यारोपितस्याभावः स्वाधिकरणान्न भिद्यते । घटाद्यभावस्तु भूतलाद् भिद्यते घटभूतलयोः सामानाधिकरण्यानुभवाभावेन तद्भेदस्यापि सत्वात् । अत एव घटादौ शुक्तिरजताभावोऽपि भिन्न एव ।

कथमेकप्रतियोगिकाभावद्वयं ? अनुभवबलादेकस्यान्योन्याभावस्य भेदवदत्यन्ताभावस्यापि तदुपपत्तेः ।

ध्वंसस्य द्वैविध्यनिरूपणम्

एवं ध्वंसोऽपि द्विविधः घटादिध्वंसार्थं प्रवृत्तिदर्शनेन तदधिष्ठानादन्यस्य भूतलादिवृत्तेरेकस्य तदधिष्ठानाभिन्नसत्ताकप्रतियोगिकतया तदधिष्ठानात्मनश्चापरस्य प्रमाणसिद्धत्वात् ।

न च प्रतियोगिनो ध्वंकालीनत्वानुपपत्तिः । अधिष्ठाने तत्कालीनत्वस्याव-

---

न चाभावस्य प्रतियोगित्वावच्छेदकसमानस्वभावत्वमेवेति वाच्यम् गौरवाच्छशश्रृङ्गं नास्तीति प्रतीतेस्तदस्तित्वज्ञानवन्निर्विषयत्वाच्चेति भावः ।

कि च रजतनिषेधे न सत्वं प्रतियोगितावच्छेदकं येन तस्य पारमार्थिकता स्यादित्याह—किं चेति । निषेध इति त्रैकालिक इति शेषः । ततः किमित्याशंक्य तस्याधिष्ठानातिरिक्तस्य प्रातिभासिकत्वायोगात् पारमार्थिकत्वं व्यावहारिकत्वं वा वक्तव्यं तदुभयमप्ययुक्तं प्रतियोगिविरहात्मकाभावस्य प्रतियोगिसमानस्वभावत्वादित्याह—स चेति । फलितमाह—ततश्चेति । रजतस्थितिदशायामिदंरजतयोर्भेदस्य सत्वेनाननुभवादिदं रजतमिति सत्तैक्यानुभवाच्च रजतस्य नाधिकरणभिन्नसत्ताकत्वं ततस्तदभावो नाधिकरणाद् भिद्यत इत्याह—इत्यारोपितस्येति । आरोप्याभावस्याधिष्ठानात्मकत्वेऽनुपलब्धिप्रमाणस्य कुत्रोपयोग इत्याशंक्य तद्विषयमाह—घटाद्यभावस्त्विति । सामानाधिकरण्यानुभवाभावेनेत्येतद् घटो भूतलं नेति भेदसत्तानुभवस्याप्युपलक्षणं, एवं तर्हि घटादावपि रजताद्यभावोऽधिकरणाद् भिद्येनेत्याशंक्येष्टापत्तिमाह—अत एवेति ।

नन्वेकस्य प्रतियोगिनोऽधिष्ठानात्मक एकोऽत्यन्ताभावः अपरश्च घटादौ अभावात्मक इत्यत्यन्ताभावद्वयमनुपपन्नमित्याशंक्य घटभेदप्रतियोगिकभेदस्तत्प्रतियोग्यधिकरणात्मकः । पटादौ त्वभावात्मक इत्यनुभवबलाद्यथाऽन्योन्याभावद्वयमेकप्रतियोगिकं, तथात्यन्ताभावद्वयमविरुद्धमित्याह—कथमेकेत्यादिना । आरोपितात्यन्ताभावस्य द्वैविध्यवत्तद्ध्वंसान्योन्याभावयोरपि न्यायसाम्याद् द्वैविध्यमित्याह—एवं ध्वंसोऽपीत्यादिना । स्वष्टार्थोऽयं ग्रन्थः । ध्वंसात्यन्ताभावान्योन्याभावानामभेदस्य विरुद्धत्वात् कथमेकस्याधिष्ठानस्य त्रितयात्मकत्वमित्याशंक्याधिष्ठाने तदात्मकत्वस्य प्रामाणिकत्वात्

श्यकतया तदतिरिक्तध्वंसस्यैव तदसमानकालीनत्वनियमात्। एवमन्योन्याभावोऽपि।

न चैवमभावसांकर्यदोषः क्वचित्तस्य प्रामाणित्वात् क्वचित् तत्रापि तस्येष्टत्वात्।

ननु शुक्त्यवच्छिन्नचैतन्याधिकरणतयैव तदभावप्रतीतेः कथमभावस्य तदात्मत्वं? तस्य भ्रमत्वे वा न तदभावस्य तदात्मत्वं प्रमाणाभावादिति चेत् न; शुक्तौ रजतं नास्तीति निषेधावगमस्य घटाप्यन्ताभावे घटो नास्तीति बुद्धेरिव तदधिकरणत्वांशे भ्रमत्वेऽपि तत्संबन्ध्यभावांशे अभ्रमत्वात्।

न चैवं भावस्याभावशब्दः परिभाषामात्रं नास्तिबुद्धिविषयत्वप्रतियोगिसत्त्वविरोधित्वाभ्यां तस्य परिभाषामात्रत्वानुपपत्तेः। वस्तुतस्तु भूतलादावपि घटाद्यभावश्चैतन्यमे[illegible]त य तद्भेदे प्रमाणाभावात्।

अन्यथा भूतलादौ घटादिसत्वानुपपत्तेः घटकालेऽपि तत्र तदभावस्यावश्यक-

---

सप्रतियोगिकस्वभावाभावेष्वेवोक्तविरोध इत्यभिप्रेत्याह—न चैवमिति।

किं च परैरप्येकस्य घटस्य प्रागभावध्वंसात्यन्ताभावत्यंताभावध्वंसप्रागभावात्मत्वाङ्गीकारान्न दोष इत्याह—क्वचिदिति।

ननु शुक्तौ रजतं नास्तीति बुद्धिः प्रमोत भ्रमः आद्येऽधिष्ठानस्याभावाधारत्वप्रमाविरुद्धं तदभेदाभिधानमित्याह—नन्विति। द्वितीये रजताभावस्यैवासिद्धेर्न तस्याधिष्ठानाभेद इत्याह—भ्रमत्वेवेति। अधिष्ठानातिरिक्ताभावस्य दुर्निरूपत्वेनाभावबुद्धेराधाराधेयभावांशेऽप्रमात्वान्नोक्तदोष इति सदृष्टान्तमाह—न शुक्ताविति।

न च घटाभावोऽपि घटाभावाश्रय इति वाच्यम्। एकप्रतियोगिकात्यन्ताभावद्वयाभावात् स्वस्यापि स्ववृत्तित्वानुपपत्तेश्चेति भावः। अधिष्ठानमात्रस्य परैरप्यभ्युपगमान्न विवाद इत्याशंक्य तदतिरिक्ताभावनिराकरणेन तस्यैवाभावत्वप्रयोजकरूपत्वप्रसाधनान्मैवमित्याह—न चैवमित्यादिना। अधिष्ठानातिरिकेणारोप्याभावस्य दुर्निरूपत्ववद्भूतलादावपि चैतन्यातिरेकेण घटाद्यभावस्य दुर्निरूपत्वात् सर्वत्रैकमेव चैतन्यं घटादिविरहात्मनाऽभावबुद्ध्यालम्बनम्। एवं च नाभावद्वैविध्यमपि कल्पनीयम् अनुपलब्धिप्रमाणांगीकरणं तु अतिरिक्ताभावाभ्युपगमवादेनेत्यभिप्रेत्याह—वस्तुतस्त्विति। प्रमाणभावादिति। घटो नास्तोत्यादिबुद्धेश्चैतन्यरूपाभावविषयत्वेनोपपत्तेरिति भावः।

भूतलादौ घटादिसमानसत्ताकाभावाभ्युपगमे दोषमाह—अन्यथेति। प्रतियोगिकाले तदधिकरणे तदभावाभावाद्घटादिसत्त्वोपपत्तिरित्याशंक्याह—घटकालेऽपीति अयमभिसंधिः—अस्ति हि घटानयनात् पूर्वं भूतले तदभावः स च प्रतियोगिसमवधानकालेऽपि तत्र वक्तव्यः तस्य नित्यत्वान्निष्क्रियत्वाच्च। तत्काले विनाशगमनयोरनुपपत्तेः तत्र तस्य विद्यमानत्वेऽपि तत्संबन्धाभावान्न प्रतियोगिनो विरोध इति चेत्, न

**त्वात्। तस्मात् प्रपञ्चस्यात्यन्ताभावो भेदो निवृत्तिश्चाधिष्ठानचैतन्यमिति स्थि म्।**

---

तत्संबन्धं विना तत्र विद्यमानत्वायोगात् समयान्तरेऽपि तस्य तत्र संबन्धाभावप्रसङ्गाच्च।

न च समयान्तरे संबंधांतरं जायत इति शक्यं वक्तुम्। अभावस्य जन्यधर्मानाश्रयत्वात्। नन्वत्यन्ताभावः समयविशेषमपेक्ष्याधिकरणसंसर्गिस्वभावः न सर्वदेति चेन्न अत्यन्ताभावतदधिकरणस्वरूपयोः समयविशेषानपेक्षत्वात्। तदपेक्षत्वे च कार्यत्वप्रसंगेन तत्तत्स्वरूपत्वानुपपत्तेः। समयविशेषोऽपि यदि प्रतियोगिकालादन्यकालत्वं तदा प्रतियोगिकाले कुत्राप्यत्यन्ताभावो न स्यात्। अन्यश्च विशेषो दुर्निरूपः। अस्तु प्रतियोगिदेशान्यदेश एवात्यन्ताभावसंबध इति। तन्न। घटसंबन्धसंसर्गात्पूर्वं भूतलादेः प्रतियोगिदेशान्यत्वेन तत्कालेऽपि तदन्यत्वानपायात्। अन्यथा तदेवेदमिति प्रत्यभिज्ञाविरोधात् प्रतियोगिदेशान्यत्वस्य प्रतियोगिसन्निधाने विनाशगमनयोरनुपपत्तेश्च। यदप्यभावभूतलयोर्विशिष्टप्रतीतिजननयोग्यत्वं संबन्ध इति। तन्न। घटवत्यपि तत्प्रसङ्गात्।

योग्यताया यावत्स्वरूपं सत्वादभावत्वस्य दुर्निरूपत्वाच्च। किं चात्यन्ताभावस्य प्रतियोगिविरहैकस्वभावत्वे प्रागभाववत्प्रतियोगिकालीनत्वानुपपत्तिः। तदभावस्य घटादेर्जन्यत्वेन प्रागभाववदनित्यत्वप्रसंगश्च। जन्याभावप्रतियोगित्वस्यैवानित्यपदार्थत्वात्। स्वजन्याभावप्रतियोगित्वस्यैव तत्वे गौरवात्। इदमत्र सर्वदा नास्तीति बुद्धेरभावो नास्तीतिवदन्यथैवोपपत्तः।

ननु सिद्धान्तेऽपि ब्रह्मणो घटाद्यभावत्वे घटादेरपि तदभावत्वाज्जन्यत्वाच्च ब्रह्मणोऽप्यनित्यत्वापात इति चेन्न धर्मिसमसत्ताकस्यैवानित्याभावप्रतियोगित्वस्यानित्यपदार्थत्वात्। अन्यथाऽऽरोपितध्वंसप्रतियोगित्वस्य सर्वत्र सुलभतया नित्यपदार्थाभावापातात्। ब्रह्मणि घटादिविरहात्मत्वं न धर्मिसमसत्ताकमिति नोक्तदोषः। तस्माद् भूतलादावतिरिक्ताभावाङ्गीकारे घटादिसत्वायोगाच्चैतन्यमेव तत्राभावबुद्ध्यालंबनम्। एतेन मृदादौ घटाद्यभावबुद्धेः सामयिकाभावविषयत्वसंभवान्न सर्वत्राभावबुद्धेश्चैतन्यविषयतेति निरस्तम्, उक्तन्यायेन तत्रापि चैतन्यातिरिक्ताभावस्य दुर्निरूपत्वात्।

यत्तु भूतलादिकमेव घटाद्यभाव इति। तन्न। तथात्वे तत्र कदापि घटसत्वानुपपत्तेः प्रतियोगिसत्वाविरोधिनोऽभावत्वं पारिभाषिकमेव। नास्तीति बुद्धेरेकविषयत्वेसंभवत्यनन्तविषयत्वकल्पनायोगाच्च। एवं घटादिध्वंसोऽपि चैतन्यमेव अविद्यानिवृत्तिवत् तस्यात्मरूपत्वेऽपि साध्यत्वसंभवात्।

नन्वेवं घटवति घटाभावबुद्धिः प्रमा स्यात् शुक्तिरजतादेरिव घटादेः त्रैकालिकनिषेधो व्यवहारकालेऽपि स्यात्। प्रतिबन्धकवत्यपि कार्यं स्यादिति चेन्न। अतिरिक्ता-

कल्पितस्याभावः अधिठानमेवेति सिद्धान्तपक्षः

**बाधकप्रत्यक्षं मिथ्यात्वे प्रमाणमिति ददतामाचार्याणामधिष्ठानमेव कल्पितात्यन्ताभाव इति मतम्। श्रुतिरपि 'प्रपञ्चोपशमः शिवोऽद्वैतः स्वप्रकाशमानन्दं शून्यमभवत्" 'यत्र त्वस्य सर्वमात्मैवाभूदि'त्याद्या ब्रह्मणः प्रपञ्चाभावात्मत्वं दर्शयति। तथा च स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वम्।**

**भवति हि शुक्तिरजतस्वप्नरथादि स्वाधिकरणानतिरिक्तदेशानधिकरणकस्य स्वाधिष्ठानीभूतस्वात्यन्ताभावात्मकचैतन्यस्य प्रतियोगि। चैतन्यस्य निरधिकरणत्वात्। न चैतत् क्वचित् पराभ्युपगतपदार्थेऽतिव्याप्तम्। नाप्यात्मनि तदधिकरणाप्रसिद्धेः। अत एव न पराभिमतासति। न चैतत् परेषां गुणादिवत् पारिभाषिकं**

---

भाववादेऽप्यस्य चोद्यस्य समाधेयत्वात्। कथं चित्तव तत्समाधानं नास्माकं दंडवारितमिति अधिष्ठानचैतन्यातिरेकेण कस्याप्यभावस्य दुर्निरूपत्वात् स एव सर्वोऽभाव इत्याह्–तस्मादिति।

अधिष्ठानस्यारोपिताभावात्मत्व पूर्वाचार्याणामसंमतमित्याशंक्याह—बाधकेति। "नेदं रजतमिति बाधोऽपि मायामयत्वमेव सूचयति"इत्यत्र पंचपादिकाकृद्भिः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपमिथ्यात्वं बाधकप्रत्यक्षसिद्धमित्युक्तं तदधिष्ठानस्यैवारोपिताभावात्मत्वे घटतेऽतिरिक्ताभावस्य षष्ठप्रमाणगोचरत्वाभ्युपगमादिति भावः। ब्रह्मणः प्रपञ्चाभावात्मकत्वस्य श्रुतत्वादप्येवमेवेत्याह--श्रुतिरपीति। अस्मिन् पक्षे पूर्वोक्तलक्षणायोगात् किं मिथ्यात्वलक्षणमिति वीक्षायामाह—तथाचेति। स्वस्य यदनधिकरणं तदधिकरणं न भववि यस्यात्यन्ताभावस्य तत्प्रतियोगित्वं मिथ्यात्वमित्यर्थः। तत्रात्यन्ताभावप्रतियोगित्वमात्रस्य सत्यत्वेपि संभवात्परं प्रति तत्साधने सिद्धसाधनता स्यात् तन्निराकरणायानधिकरणेत्यत्यन्ताभावविशेषणम्। तथा च ब्रह्मातिरिक्ताभावस्य साधिकरणत्वनियमात् निरधिकरणस्य ब्रह्मणः प्रपञ्चमिथ्यात्वं विना तदभावत्वानुपपत्तेर्न सिद्धसाधनता। एवमपि परमते वियदत्यन्ताभावस्य निरधिकरणगगनादिरूपात्यन्ताभावप्रतियोगित्वेनांशतः सिद्धसाधनता स्यात्। तद्वारणाय स्वानधिकरणेत्युक्तम्। परमते गगनात्यन्ताभावस्य केवलान्वयितया तदनधिकरणाप्रसिद्धेर्न तत्रोक्तलक्षणसंभवः।

अत्र स्वानधिकरणपदेन स्वानधिकरणाधिकरणत्वरहितत्वं विवक्षितं, ततश्च परमते घटाद्यभावस्य घटानधिकरणस्वानधिकरणकत्वेऽपि तदनधिकरणघटाद्यधिकरणकत्वान्न घटादौ सिद्धसाधनतेति।

अत्र नाव्याप्त्यादिदोषशंकेत्याह—भवति हीत्यादिना। अतिव्याप्तमिति। घटादेः सत्यत्वमते स्वानधिकरणदेशवृत्त्यत्यन्ताभावप्रतियोगित्वनियमादिति शेषः। अत एवेति।

**सतो वृत्तिमतः स्वानधिकरणाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वात् सत्यसंभावितधर्मस्यैव मिथ्याशब्दार्थत्वात्।**

**न च सतोऽपि निरधिकरणात्यन्ताभावोऽस्तीति वाच्यम् अभावरूपात्यन्ताभावद्वये प्रमाणाभावात् प्रतीयमानस्तु साधिकरण एव।**

**स्वानधिकरणावृत्तिस्वाभाववृत्तित्वं वा मिथ्यात्वं तस्माच्छुक्तिरजतमेतद्रजतप्रतियोगिककादाचित्कातिरिक्तस्वानधिकरणानधिकरणाभावप्रतियोगि कादाचित्काभावत्वात् घटवत्। शुक्तिरजतात्यन्ताभावः प्रतियोग्यनधिकरणानधिकरणः**

---

असतोऽप्यधिकरणाप्रसिद्धिरेवेत्यर्थः। रूपादिषु परैर्निरूपितं गुणत्वादिकं यथा सत्यमिथ्यावस्तुसाधारणमेवमेतदपीत्याशंक्याह—न चैतदिति। सत्यत्वमते घटादावुक्तधर्माभावेऽपि कथं तस्य मिथ्याशब्दार्थत्वमित्यत आह—सतीति। परमार्थत्वपक्ष इत्यर्थः।

ननु घटादेः सत्यत्वेऽपि निरधिकरणाभावान्तरप्रतियोगित्वेनाप्युक्तलक्षणोपपत्तिरित्याशंक्याह—न च सतोऽपीति। घटादिप्रतियोगिकनिरधिकरणाभावः किं भावान्तरात्मकः उताभावान्तरमेव वा? नाद्यः, निरधिकरणाभावरूपब्रह्मणि घटादेरध्यस्तत्वं विना तस्य तत्प्रतियोगिकाभावताऽयोगादित्यभिप्रेत्य द्वितीये दोषमाह—अभावेति।

न च वक्ष्यमाणानुमानमेव तत्र मानमिति वाच्यम् तस्याधिष्ठानातिरिक्तनिरधिकरणाभावविषयत्वे गौरवेणाप्रयोजकत्वादिति भावः। तर्हि भूतलादौ प्रतीयमानाभावस्यैव निरधिकरणत्वेन घटादावुक्तलक्षणोपपत्तिरित्यत आह—प्रतीयमानस्त्विति।

अधिष्ठानमेवाभाव इति पक्षे लक्षणान्तरमाह—स्वानधिकरणेति। स्वस्यानधिकरणे न वर्तते यः स्वाभावस्तद्वृत्तित्वं मिथ्यात्वमित्यर्थः। अत्र स्वाभाववृत्तित्वमित्युक्ते घटाद्यत्यन्ताभावस्य परमते घटादिरूपस्वाभाववृत्तित्वादंशतः सिद्धसाधनं स्यात् तद्वारणायावृत्तीति। एवमप्याकाशात्यन्ताभावस्याबृत्तिस्वाभावरूपाकाशवृत्तित्वमस्तीति तद्वारणाय स्वानधिकरणेति। आकाशात्यन्ताभावस्यानधिकरणाप्रसिद्धेर्न तत्र संभवः। परमते पृथिवीत्वादिव्यावृत्त्यर्थं द्वितीयं स्वपदं पृथिवीत्वाश्रयस्य घटस्य पृथिवीत्वानधिकरणजलावृत्तित्वात् स्वाभावत्वात् स्वाभावाभावत्वाच्च स्वपदाभावे तद्वृत्तिपृथिवीत्वादावपि प्रसक्तेः।

न च प्रतियोगिनः स्वाभाववृत्तित्वमसंभवीति वाच्यम्। अधिष्ठानताश्रयस्यैवारोपिताभावत्वोपपादनादिति भावः। तत्र तावत् प्रथमोक्तलक्षणमिथ्यात्वे मानमाह—तस्मादिति। ख्यात्यन्तरनिराकरणेन शुक्तौ भावरूपरजतस्य साधितत्वान्नाश्रयासिद्धिः। एतत्पदं पक्षपरम्। रजतपदं तु स्पष्टार्थम्। एतद्रजतप्रतियोगीत्युक्तेर्यः कादाचित्क-

**अभावत्वात् ध्वंसवदिति वा शुक्तिरजतत्वं तद्रजताभाववृत्तित्वसमानाधिकरणं तद्रजतवृत्तित्वात् ज्ञेयत्वादिवत्। द्रव्यत्वादिकं च पक्षतुल्यमिति रजतस्य स्वाभाववृत्तित्वसिद्धौ रजताश्रयस्य तदभावस्य पूर्ववत् तदनधिकरणावृत्तित्वं साध्यम्। अतः शुक्तौ प्रतीयमानं रजतं मिथ्याऽनिर्वचनीयमिति सिद्धम्।**

अज्ञानस्योपादानत्वसमर्थनम्

**तत्रान्वयव्यतिरेकाभ्यामविद्योपादानं; तथाहि--अज्ञानं तावदनादिभावरूपं वर्णितं। तच्च शुक्त्यज्ञाने सति रजतं, नोचेन्नेत्यन्वयव्यतिरेकानुविधायि**

---

संयोगादिः तदतिरिक्तः स्वानधिकरणानधिकरणश्च योऽभावस्तत्प्रतियोगीत्यर्थः। अत्र स्वपदं समभिव्याहृतप्रतियोगिपरम्। अभावप्रतियोगीत्युक्ते घटादिनिष्ठात्यन्ताभावप्रतियोगित्वेनार्थान्तरता स्यात् तन्निवारणाय स्वानधिकरणेत्यादि।

एवमपि स्वसमानाधिकरणध्वंसप्रतियोगित्वेनार्थान्तरता, तद्वारणाय कादाचित्कातिरिक्तेति। घटादौ साध्यवैकल्यपरिहारायैतद्रजतप्रतियोगीति। तथा च घटादेः पक्षीकृतरजतप्रतियोगिककादाचित्कातिरिक्तध्वंसप्रतियोगित्वात् तस्य स्वानधिकरणानधिकरणत्वाच्च तत्र साध्यसिद्धिः। पक्षे तु स्वप्रतियोगिककादाचित्कातिरिक्तस्वानधिकरणानधिकरणश्चाभावो नाधिष्ठानादन्यः संभवीत्यधिष्ठानचैतन्यस्यैव तादृशाभावत्वमादाय तत्प्रतियोगित्वेन साध्यसिद्धिः। परमते गगनादौ सिद्धान्ते चात्मनि व्यभिचारवारणाय हेतौ—कादाचित्केति। प्रागभावव्यावृत्तये भावत्वादिति रजतात्यन्ताभावस्य प्रतियोग्यनधिकरणनिष्ठत्वे निषिद्धेऽर्थात् सोऽधिष्ठानात्मकतया सिद्ध्यति। अधिष्ठानातिरिक्तात्यन्ताभावस्य प्रतियोग्यनधिकरणनिष्ठत्वनियमादित्यभिप्रेत्य पुनः प्रयुङ्क्ते—शुक्तिरजतेति अभावत्वादिति। ध्वंसाप्रतियोग्यभावत्वादित्यर्थः। अतो नात्यन्ताभावाभावरूपे घटे व्यभिचारः।

द्वितीये लक्षणेऽप्याह—शुक्तिरजतत्वमिति। पक्षीकृतरजतत्वाश्रयस्तद्रजतं तदभाववृत्तित्वसामानाधिकरण्यं रजतसत्यत्वेऽपि घटते। तदाश्रयशुक्तेः स्वाभावाभावरूपत्वात् तदर्थं तद्रजतेति। शुक्तिरजतमात्रवृत्तिधर्मस्य शुक्तिरजताभाववृत्तित्वसामानाधिकरण्यं शुक्तिरजतस्य स्वाभाववृत्तित्वमादायैव सिद्ध्यतीति भावः। आपणस्थरजतादौ व्यभिचारवारणाय तदिति विशेषणम्। ज्ञेयत्वस्य शुक्तिरजताभाववृत्तिधर्मिमात्रनिष्ठत्वात्, तद्वृत्तित्वेन समानाधिकरण्यं प्रसिद्धम्। पक्षीकृतरजतत्वाश्रयस्य स्वाभाववृत्तित्वेन तन्निष्ठद्रव्यत्वादेरपि तत्सामानाधिकरण्यमस्तीति न तत्र व्यभिचार इत्यभिप्रेत्याह—द्रव्यत्वादिकं चेति। एवमपि विशिष्टलक्षणासिद्धिमाशंक्याह—इति रजतस्येति। पूर्ववदिति। ध्वंसं दृष्टान्तं कृत्वाऽभावत्वेनेत्यर्थः। मिथ्यात्वस्योपपादनात् तद्रूपानिर्वचनीयत्वमपि सिद्धमित्याह—अत इति।

अनिर्वचनीयरजते तदुचितसामग्रीं निरूपयितुमाह—तत्रेति। उक्तान्वयव्यतिरेकौ नोपादानविषयौ किन्तु तत्वज्ञानस्याध्यासप्रतिबन्धकत्वात् तदभावविषयावित्या-

रजतोपादानम् ।

न च प्रतिबंधकाभावविषयतया तदन्यथासिद्धिःतत्वज्ञानस्य प्रतिबन्धकत्वादिति वाच्यम् । तत्वज्ञानस्य दोषादिघटितरजतसामग्रीकालीनत्वाभावेनाप्रतिबन्धकत्वात् शुक्तिज्ञानकाले नियमेन निवर्तमानरजतस्याज्ञानातिरिक्तोपादानाभावाच्च । रजतं सोपादानं भावकार्यत्वात् संप्रतिपन्नवत् । भावत्व चानिर्वचनीये रजते घटादिसाधारणमस्तीति नासिद्धिः ।

न च सद्विलक्षणत्वादसदिव रजतं सोपादानं न भवतीति वाच्यम् । घटादौ व्यभिचारात् ।

न च सद्विलक्षणत्वे भावकार्यत्वमेव रजतस्य न स्यादिति वाच्यम्, सतः कार्यत्वानुपपत्तेः भावकार्यत्वस्यैव विलोपप्रसङ्गात् सत्वरूपभावत्वस्य ध्वंसेऽपि सत्वात् । सकलपदार्थानुगतसत्तातिरिक्तसत्ताजात्यभावाच्च बाधायोग्यत्वसत्वातिरिक्तजातेः रजतत्वादिवत् कल्पितवृत्तित्वसंभवाच्च । अतः सत्वातिरिक्तमेवा-

---

शंक्याह—न चेत्यादिना । सामग्रीकालीनत्वाभावेनेति । सामग्रीकालीनकार्यानुत्पादस्यैव प्रतिबंधत्वादिति भावः ।

अस्तु तर्हि निमित्तमेवाज्ञानं उपादानं त्वन्यदेवेत्यत आह--शुक्तिज्ञानेति। अज्ञानातिरिक्तस्य शुक्तिज्ञाननिवर्त्यत्वायोगात् तदुपादानकं रजतादिकमपि ततो न निवर्तेताऽतस्तन्निवृत्तियोग्यमज्ञानमेव तदुपादानमित्यर्थः । पारिशेष्याच्चाज्ञानमेवोपादानमित्यभिप्रेत्याह—रजतमिति । परमते ध्वंसे व्यभिचारवारणाय भावेति विशेषणम् । मिथ्यारजतस्य भावत्वमेवासिद्धमित्याशंक्याह—भावत्वं चेति । सत्प्रतिपक्षत्वं निराकरोति न चेति । व्यभिचारादिति । न च घटादेः सत्वमेवेति वाच्यं तस्य निरस्तत्वात् । निरसिष्यमाणत्वाच्चेति भावः ।

विमतं न कार्यं सद्विलक्षणत्वादसद्वत् । ततश्च विशेष्यासिद्धिरित्याशंक्याप्रयोजकत्वेन परिहरति—न च सदिति ।

ननु सत्त्वमेव भावत्वं, तच्च सद्विलक्षणत्वेऽसिद्धमित्याशंक्य तर्हि तद्ध्वंसेऽपि भावत्वसंभवात् तस्यापि सोपादानत्वं स्यादित्यभिप्रेत्याह—सत्वरूपेति । द्रव्यादित्रितयवृत्तिजातिरेव सत्वं, तस्य च ध्वंसानाश्रयत्वान्नोक्तदोष इत्याशंक्याह—सकलेति । किंच मायिकरजतस्यापि पारिभाषिकसत्वाश्रयत्वसंभवान्नासिद्धिरित्याह—बाधेति ।

अस्तु तर्हि बाधायोग्यत्वमेव भावत्वमित्याशंक्य तस्य परमतेऽभावेऽपि सत्वात्तदतिरिक्तमेव किंचिदभावव्यावृत्तं भावत्वं नञर्थानुल्लिखितधीयोग्यत्वादिरूपं परेणापि वक्तव्यं, तद्रजतादावपि तुल्यमित्याह--अत इति । अविद्या नोपादानं सद्विलक्षणत्वान्नर-

भावविलक्षणं भावत्वं घटादेः सोपादानत्वे प्रयोजकम्। तच्च शुक्तिरजतेऽपीति तदपि सोपादानमेव। एवमुपादानत्वेऽपि तदेव भावत्वं प्रयोजकमित्यविद्याप्युपादानमेव। एतेन सद्विलक्षणं कार्यमेव न भवतीत्यसिद्धिरिति निरस्तं सतः कार्यत्वानुपपत्तेः। प्रपञ्चितं चैतद्बहुधा।

यत्तु शुक्तिकारूप्यस्योत्पत्तिविनाशाद्युपगमे शुक्तिकायां रजतमुत्पन्नं नष्टमित्यनुभवप्रसंग इति। तन्न। स्वप्न इव शुक्तिकायां रजतभ्रम उत्पन्न इदानीं विनष्ट इति प्रतीतेरेव विशिष्टविषयिण्याः रजतविषयत्वात्। रजतभ्रमस्य नित्यसाक्षितया रजतविशिष्टत्वाकारेणैव तदुत्पत्तिविनाशयोर्वक्तव्यत्वात्। एतावत्कालमिह रजतं नाभूदिदानीमासीदित्यनुभवोऽपि तदुत्पत्तौ मानम्।

अन्यथा स्वप्ने गजादेरुत्पत्तिविनाशौ न स्याताम्। यत्तु रजतस्य सोपादानत्वे सकर्तृकत्वापत्तिरिति तत्तु तथैव तस्माद्घटादिवद्रजतस्य नञर्थानुल्लिखितधीविषयत्वात् पूर्वोत्तरकोट्युपलम्भाच्च भावत्वं कार्यत्वं च सिद्धमिति न तदसिद्धिः। अस्त्वात्मोपादानमिति चेत् सत्यमधिष्ठानतया स उपादानं अन्यथाभावधर्मि त्वज्ञानमेव।

काचादेरुपादानत्वनिरासः

एतेन काचादिरन्तःकरणं वोपादानमिति निरस्तम्। काचादेरतद्देशत्वात्

---

शृङ्गवदित्याशंक्याप्रयोजकत्वान्नैतदित्यभिप्रेत्याह—एवमिति। उक्तन्यायेन नवीनप्रलापोऽपि निरस्त इत्याह—एतेनेति।

तस्यैव चोद्यान्तरमनुवदति—यत्त्विति। नवीनमते स्वाप्नगजादेरुत्पत्त्यादिमत्त्वेऽपि यथा न स्वरूपेण तदुपलंभः किन्तु स्वप्नभ्रम उत्पन्न इत्यादिरूपेणैवैवमिहापीति परिहरति—तन्नेति। रजतभ्रम उत्पन्न इत्यादिप्रतीति भ्रमस्यैवोत्पत्त्यादिविषयिणी, किं न स्यादित्यत आह—रजतभ्रमस्येति। रजते कादाचित्कत्वानुभवाच्चोत्पत्त्यादिकमप्युपेयमित्याह—एतावत्कालमिति। रजतमुत्पन्नमित्याद्याकारानुभवाभावेन तदुत्पत्त्याद्यपलापे दोषमाह—अन्यथेति। मायिकस्यापि सकर्तृकत्वोपपादनात् तदापादनमिष्टमित्याह—तथैवेति। असिद्धिनिराकरणं निगमयति—तस्मादिति। तथापि पारिशेष्यासिद्धिरिति शङ्कते—अस्त्विति। किमात्मनोऽधिष्ठानतया रजताद्युपादानत्वमुत परिणामितया? आद्यस्त्विष्यत इत्याह—सत्यमिति।

द्वितीयमपवदति—अन्यथेति। धर्मिसमसत्ताकान्यथाभावस्य परिणामत्वादनिर्वचनीये तादृशमेवाज्ञानं परिणामितयोपादानमित्यर्थः।

दोषोऽन्तःकरणं वा परिणामि तदुपादानमस्त्वित्याशंक्याह—एतेनेति। अतद्देशत्वादिति। रजताद्यनाश्रयत्वादित्यर्थः। किञ्चानुगताज्ञानस्योपादानत्वे भ्रममात्रे

व्यावृत्तत्वाच्च । वास्तवत्वे च काचादेर्विपरीतरजतपरिणामायोगात् । अवास्तवत्वे च तद्वद्रजतमप्यविद्योपादानम् । एतेनेदंत्वाकारेणानुगतं शुक्त्यादि दोषयुक्तं रजतोपादानमस्त्विति नवीनोक्तम् निरस्तम् । दोषेदमंशयोः सत्यत्वे तदयोगात् । स्वप्नभ्रमोपादानसाधारणेदंत्वाभावाच्च । एकाज्ञानोपादानत्वे संभवति तदन्योपादानत्वकल्पनायोगाच्च । प्रतिबिंबादिभ्रमेऽप्यज्ञानमस्तीत्युक्तम् । शंखेश्वैत्यानुमानं च न तदज्ञानविरोधीति तत्रापि तत्सुलभम् ।

किं च शंखपीतभ्रमो विशेषादर्शनाजन्यः कादाचित्कभ्रमत्वात् संप्रतिपन्नवत् । अन्याथाऽन्यत्रापि भ्रमे विशेषादर्शनं हेतुर्न स्यात् । तच्च विशेषादर्शनं न पराभिमतश्वैत्यव्याप्यशंखत्ववानयमिति ज्ञानाभावः । तदभिमतप्रत्यक्षविशेषदर्शनस्य सत्वात् । नापि ग्राह्यनिश्चयाभावः तदनुमितेः सत्वात् । नापि ग्राह्यप्रत्यक्षाभावः तद्विशेष्यकग्राह्यप्रत्यक्षाभावश्चेत् यस्य यस्मिन् शंखे कदापि न तत्प्रत्यक्षमस्ति

---

संभवति न व्यावृत्तानां काचकामलादीनां उपादानत्वमित्याह—व्यावृत्तत्वादिति ।

किञ्च काचादिकमपि वास्तवमुतावास्तवं ? आद्ये न अनिर्वचनीयपरिणामित्वमित्याह—वास्तवत्वे चेति । द्वितीये काचादेर्यदुपादानमज्ञानं तस्यैव रजताद्युपादानत्वसंभवान्न काचादेस्तदुचितमित्याह—अवास्तवत्वे चेति । अनुगतस्योपादानत्वं स्यादिति चोद्यमप्युक्तविकल्पासहत्वान्निरस्तमित्याह—एतेनेति ।

किं च स्वप्ने इदमंशस्याप्यप्रस्तत्वान्न तस्य सर्वभ्रमानुगततयोपादानतेत्याह—स्वप्नेति । अज्ञानोपादानत्वे कल्पनालाघवं चेत्याह—एकाज्ञानेति ।

नन्वज्ञानमपि नानुगतं प्रतिबिंबादिभ्रमेषु तत्त्वज्ञाने सति तदयोगादित्याशंक्य तत्राप्यावारकाज्ञानस्य परोक्षज्ञानस्याज्ञानाविरोधित्वस्य चोक्तत्वान्नैवमित्याह—प्रतिबिम्बेत्यादिना ।

किञ्च भावरूपाज्ञानातिरिक्तविशेषादर्शनानिरूपणात् तद्रूपाज्ञानस्य भ्रमहेतुत्वमावश्यकमिति वक्तुं सर्वभ्रमस्य विशेषादर्शनजन्यत्वमुपपादयति—किं चेति । पित्तदोषादेव पीतिमभ्रमोपपत्तेरप्रयोजकत्वमित्यत आह—अन्यथेति ।

अस्तु विशेषादर्शनं पीतिमभ्रमेऽपि हेतुस्ततः किमित्याशंक्य किमत्र श्वैत्यव्याप्यवत्तया प्रत्यक्षनिश्चयाभावो विशेषादर्शनमुत ग्राह्यनिश्चयाभावः श्वैत्यप्रत्यक्षाभावो वा न सर्वथापीत्याह—तच्चेत्यादिना । तदभिमतेति । स्मृत्युपनीतस्य श्वैत्यव्याप्यत्वस्य विशेषणतयेन्द्रियेण भानसंभवादिति भावः ।

तृतीये किं शंखविशेष्यकश्वैत्यप्रत्यक्षस्याभावो विवक्षित उताहो अन्यविशेष्यकस्य ? आद्ये भ्रमगोचरशंखश्वैत्यप्रत्यक्षं विनैव तस्य निष्प्रतियोगिकतत्प्रत्यक्षाभावायोगादपूर्वभ्रमो न स्यादित्याह—तद्विशेष्यकेत्यादिना ।

द्वितीयं दूषयति—अन्येति । घटादौ श्वैत्यदर्शने सत्यपि शंखे पीतिमभ्रमदर्शनान्न तदभावस्तद्धेतुरित्यर्थः । अन्यविशेष्यकविशेषदर्शनाभावस्याहेतुत्वे हेत्वन्तरमाह—

तस्य तद्विषयकप्रत्यक्षाभावासंभवात् न भ्रमः स्यात् अन्यविशेष्यकश्वैत्यप्रत्यक्षाभावस्तु न भ्रमकालनियतः; समानविषययोरेव तयोः कार्यकारणभावाच्च। तस्मादज्ञानमेव विशेषादर्शनहेतुरिति काचादिदोषो रजतानुभवाहितसंस्कारोऽधिष्ठानसामान्यज्ञानादिकं च तत्र निमित्तं तेषु सत्स्वेव रजतादिभ्रमदर्शनात्।

दोषस्य साक्षाद् भ्रमहेतुतानिरासः

ननु दोषस्य मिथ्याज्ञानं प्रत्येव हेतुत्वमस्तु तदन्वयव्यतिरेकयोस्तद्विषयत्वोपपत्तेः। रजतभ्रमस्योत्पत्तिविनाशानुभवेन तज्जन्यत्वसंभवात्। परोक्षस्थले दोषस्य ज्ञानं प्रत्येव हेतुत्वात्। एवं संस्कारोऽपि ज्ञानं प्रत्येव हेतुः ज्ञानसंस्कारस्यार्थजनकत्वाभावाच्च। एवमधिष्ठानसामान्यज्ञानमपि तत्रैव हेतुः चिकीर्षां विना ज्ञानस्यार्थाजनकत्वादिति। मैवं। अपरोक्षभ्रमस्याजन्यत्वेन दोषादेरर्थं प्रत्येव हेतुत्वात्। तथाहि---न तावद्रजतज्ञानमिन्द्रियजन्यं रजतस्येन्द्रियासन्निकृष्टत्वात्। तच्च तस्य तदनन्तरभावित्वात्। न हीन्द्रियसन्निकर्षात् पूर्वं तत्र रजतमस्ति तत्र प्रमाणाभावात्। प्रत्यक्षस्यान्यथापि संभवात्। साक्षिप्रत्यक्षं वा ज्ञानादिविषयं क्लृप्तम्।

---

समानेति। पराभिमतविशेषादर्शनभंगफलमाह—तस्मादिति। हेतुरिति। उपादानमिति यावत्। एवं रजतादेरुपादानमुक्त्वा निमित्तकारणमपि निरूपयति—काचादीति।

अदृष्टादिकमादिपदार्थः।

रजतज्ञानस्यैव दोषाद्यन्वयव्यतिरेकानुविधायित्वात् तदेव तज्जन्यं न रजतमिति शंकते—नन्वित्यादिना। परोक्षभ्रमविषयस्योत्पत्त्यनंगीकाराद्भ्रम एव दोषजन्य इत्यावश्यकमिति सर्वत्र स एव तज्जन्य इत्याह—-परोक्षेति। तन्तुज्ञानस्य पटजनकत्ववदिदमंशज्ञानस्य रजतजनकत्वं किं न स्यादित्यत आह—चिकीर्षामिति। रजतज्ञाने करणानिरूपणेन तस्याजन्यत्वाद्दोषादिकं रजत एव कारणमिति परिहरति--- मैवमिति।

नन्विन्द्रियमेव रजतज्ञाने करणमिति नेत्याह—न तावदिति। किमिन्द्रियं शुक्तिरजतसंनिकर्षमपेक्ष्य तद्ज्ञानं जनयति अनपेक्ष्य वा? आद्येऽपि किं संयोगः सन्निकर्षः संयुक्ततादात्म्यं वा? नाद्य इत्याह—रजतस्येति। असन्निकृष्टत्वमसिद्धमित्याशंक्याह—न हीति। दुष्टेन्द्रियसंयुक्तेदमंशावच्छिन्नचैतन्यस्थाविद्यापरिणामत्वाद् रजतस्येन्द्रियव्यापारात् पूर्वमभावान्न तेन संयोग इत्यर्थः। रजतज्ञानस्य प्रत्यक्षत्वात् प्रत्यक्षस्य च विषयेन्द्रियसन्निकर्षसापेक्षत्वाद्रजतस्य ज्ञानात् पूर्वभावित्वमावश्यकमित्याशंक्य तत्प्रत्यक्षस्य साक्षिरूपत्वेनाजन्यत्वान्मैवमित्यभिप्रेत्याह—प्रत्यक्षस्येति। नित्यसाक्षिमात्रस्य जीवव्यवहारानुकूलत्वमदृष्टमित्याशंक्याह—साक्षीति।

शुक्तिरजतस्य ज्ञातैकसत्ताकत्वम्

अज्ञातस्यापि रजतस्य सत्वे शुक्तिरिव सर्वैरपि गृह्येत पुरुषविशेषोपलम्भनियामकाभावात्। दोषं विना वा शुक्तिरिवानुभूयेत। इन्द्रियसंयुक्तार्थज्ञानस्य दोषाजन्यत्वात् शुक्तिरजतस्येन्द्रियसंयोगहेतुत्वे चार्थक्रियाकारितयाऽतिप्रसंगात्। एतावत्कालमिह रजतं नासीदिदानीं वर्तत इति प्रतीतेः प्रमाणत्वाच्च। नापि संयुक्ततादात्म्याद्रजतग्रहणम्। तस्य द्रव्यग्रहणेऽहेतुत्वात् नापीन्द्रियं सन्निकर्षं विनैव तद्‌ग्रह्णाति। इन्द्रियजन्यप्रत्यक्षमात्रे तत्सन्निकर्षस्यापि हेतुत्वात्। तस्य विषयजन्यत्वनियमाच्चेत्युक्तम्।

न चेन्द्रियान्वयव्यतिरेकाभ्यां रजतज्ञानस्य तज्जन्यत्वम् रजतप्रकाशस्य साक्षिणश्चक्षुर्जन्यवृत्त्यभिव्यंग्यतया तदुपपत्तेः। अत एव चक्षुषा रजतं पश्यामीत्यनुभवाविरोधः।

न चान्यथासिद्धानुभवेन तस्य ज्ञानान्तरं कल्पयितुं शक्यम्। क्लृप्तकारणाभावेन तदयोगाच्च।

अन्यस्यान्याकारवृत्त्यभिव्यक्तसाक्षिभास्यत्वं न युक्तमिति चेत्। तत् किमहंकारस्वप्नगजादेर्वृत्तेर्वा वृत्तिभास्यत्वम्।

---

एवं रजतस्य स्वज्ञानात् पूर्वभावित्वे मानाभावमुक्त्वा तदभ्युपगमे बाधकमाह—अज्ञातस्येति। दोषस्यापि रजतज्ञानहेतुत्वात्तेन विना कथं तस्योपलंभ इत्याशंक्याह—इन्द्रियेति।

किञ्च शुक्त्यादिवद्रजतस्य संयोगहेतुत्वे व्यावहारिकतापत्त्या कटकादिकमपि ततः स्यादित्याह—शुक्तिरजतस्येति। प्रतीतेः प्रागवस्थानकल्पनमनुभवविरुद्धं चेत्याह एतावदिति।

द्वितीयं निरस्यति—नापीति। गुणादेरेव संयुक्ततादात्म्यग्राह्यत्वान्न द्रव्यस्य तद्ग्राह्यतेत्यर्थः। सन्निकर्षमनपेक्ष्येति पक्षं निरस्यति—नापीन्द्रियमिति। रजतज्ञानस्य चक्षुरजन्यत्वे तदन्वयव्यतिरेकविरोधश्चक्षुषा रजतं पश्यामीत्यनुभवविरोधश्चेत्याशंक्य तयोरन्यथासिद्धिमाह—न चेन्द्रियेत्यादिना।

ननु घटादेः स्वाकारवृत्त्यभिव्यक्तसाक्षिभास्यत्वमेव दृष्टं तत्कथं रजतस्येदमाकारवृत्त्यभिव्यक्तसाक्षिभास्यतेति शंकते—अन्यस्येति।

किंचिद् भास्यस्य सर्वस्य स्वाकारवृत्त्यपेक्षया चिद्भास्यत्वनियमादिदमयुक्तमित्युच्यते उत चाक्षुषवृत्त्यभिव्यक्तचिद्भास्यस्यायं नियम इति? तत्र नाद्य इत्याह—तत्किमिति। अहंकारस्वप्नगजादेरनावृतसाक्षिण्यध्यासेन स्वाकारवृत्तेरनुपयोगेन केवलसाक्षिभास्यत्वान्न सर्वत्रोक्तनियम इत्यर्थः।

अथवा चक्षुषा रजतं पश्यामीत्यनुभवः पुत्रेण सुखमनुभवामीत्यनुभव इव पुत्रस्य सुखं प्रति परंपरया चक्षुषोऽपि रजतं प्रति जनकत्वे प्रमाणम् न तु ज्ञानजनकत्वे ज्ञानान्तरस्य तत्कारणस्य चाभावात् ।

अपिच स्वप्ने रजतादीनामपरोक्षभ्रमः सर्वसंप्रतिपन्नः । स च नेन्द्रियजन्यः तत्र तदभावात् । मनसो बहिर्विशेष्येऽसामर्थ्यात् । न च ज्ञानादिकं तत्र प्रत्यासत्तिः, तस्य निरस्तत्वात् ।

अथ रथान् रथयोगानित्यादिना तत्र सृष्ट्यन्तरश्रवणाच्च मनसोऽकरणत्वं चोक्तम् । तथा च स्वप्नेऽध्यस्तानां साक्षिभास्यत्वं क्लृप्तमिति जागरेऽपि चक्षुषा पश्यामीत्यनुभवः स्वप्न इव । तस्माच्छुक्तिरजतज्ञानं नेन्द्रियजन्यं तत्सन्निकर्षाजन्यज्ञानत्वात् स्वप्ने रजतज्ञानवत् । विपक्षे च ज्ञानान्तरादिकल्पनागौरवं आचार्याणामविद्यावृत्त्यभिधानं चाक्षुषत्वाभावपरं एतैरेव क्वचिदध्यस्तज्ञाने नित्यत्वस्योक्तत्वात् ।

---

द्वितीयं दूषयति—वृत्तेर्वेति । इदमाकारायाः घटाद्याकारायाश्च चाक्षुषवृत्तेः स्वाकारवृत्तिमनपेक्ष्यैव स्वमात्राभिव्यक्तचिद्भास्यत्वं दृष्टमितरथाऽनवस्थापातादित्यर्थः चक्षुषा रजतं पश्यामीत्यस्य प्रकारान्तरेणान्यथासिद्धिमाह—अथवेति । पुत्रस्य सुखसाधनसंपादनेन पितरि सुखोत्पादकत्वमात्रेण सुखमनुभवामीत्यनुभवः एवं चक्षुषोऽपि रजताकारेणेदमाकारवृत्तिजननद्वारा रजतोत्पादकत्वाच्चक्षुषा रजतं पश्यामीत्यनुभव इत्यर्थः ।

ननु चक्षुषा घटं पश्यामीत्यत्र घटज्ञानस्य चक्षुर्जन्यत्वमेव विषयः तद्वदत्र किं न स्यादित्याशंक्योक्तरीत्या रजते जन्यज्ञानासंभवान् मैवमित्याह—न त्विति ।

रजतज्ञाने चाक्षुषत्वानुभवस्यान्यथासिद्धत्वं तस्येन्द्रियाजन्यत्वं च स्वप्नदृष्टान्तेनापि साधयितुं स्वप्नगजादेः केवलसाक्षिभास्यत्वमुपपादयति—अपिचेत्यादिना । असद्गजादिविषयमानसं ज्ञानमेव स्वप्न इत्याशंकायामाह--अथरथानिति । असतोऽपरोक्षत्वमप्यनुपपन्नमिति चार्थः । मनसः अप्रमाणत्वात्तस्य स्वप्नधीकरणत्वमप्यसंभवीत्याह-- मनस इति । फलितमाह—तथा चेति । इन्द्रियसंयोगादौ व्यभिचाराभावाय ज्ञानत्वादिति असन्निकृष्टविषयचाक्षुषज्ञानं ज्ञानान्तरम् ।

ननु विवरणाचार्यैरिदमाकारवृत्त्यवच्छिन्नचैतन्यस्थाविद्या रजतज्ञानाभासाकारेण परिणमत इति रजतविषयाविद्यावृत्तेरुक्तत्वात् तद्विरुद्धं रजतस्य स्वाकारवृत्तिमनपेक्ष्य साक्षिभास्यत्वसाधनमित्याशंक्य रजतस्य सुखादिवदनावृत्तसाक्षिण्यध्यासस्य तैरेवोक्तत्वेन रजतगोचराविद्यावृत्तेरुपयोगाभावात् इतीदमाकारवृत्तिनाशादेव तद्विषयसंस्कारवत् रजतविषयसंस्कारस्य यद्वृत्त्यवच्छिन्नचैतन्येन यद्भासत इत्युक्तन्यायेन सिद्धेः । रजतस्य चाक्षुषत्वाभावाभिप्रायेणैवाचार्याणामविद्यावृत्त्यभिधानमित्याह--आचार्याणा-

रजतस्य साक्षिभास्यत्वे आक्षेपः

**नन्वेवमन्धस्य त्वगिन्द्रियोपनीते रूपविशेषवद्रजतादिभ्रमः स्यात्। एवमाकाशे रूपभ्रमो न स्यात् चक्षुषा तत्स्फुरणाभावात्। एवं तिक्तो गुड इति भ्रमोऽपि न स्यादिति। न। जाग्रति रजताद्यारोपे हि सादृश्यप्रत्यक्षमपि दोषतया कारणं नियमेन तदन्वयाद्यनुविधानात्तस्य। तच्च नान्धस्य।**

**न च सादृश्यज्ञाने रजतज्ञाने चोभयत्र चक्षुः कारणम् प्रमाणाभावात्। आकाशेऽपि स्फुरणमस्त्येव।**

**तथा हि न तावदप्रत्यक्षमाकाशं लिङ्गानुसंधानं विनापि तदनुभवात्। ध्वनिर्वायुधर्मो वर्णश्च नित्यद्रव्यमिति निश्चयवतामपीदमाकाशमित्यनुभवात्।**

आकाशस्य प्रत्यक्षत्वे बाधकम्

**नन्वाकाशो न बहिरिन्द्रियग्राह्यः रूपस्पर्शहीनत्वात्। नापि मानसप्रत्यक्षः मनसो बाह्यागोचरत्वात्। तव मते तस्याकरणत्वाच्च। अतः कथं स प्रत्यक्ष इति। न। साक्षिप्रत्यक्षविषयत्वात्।**

**न चेन्द्रियव्यापारेणाकाशस्यानुभवात् तस्य चाक्षुषत्वं, नीरूपस्यापि**

---

मिति। किं चाचार्यैरेवात्मचैतन्यमात्मानात्मसंभेदावभासि स्वरूपेणाजन्यत्वेऽपि विशिष्ट-विषयोपरक्तत्वाकारेण जन्यत इत्यादिनाऽहंकारतद्धर्माणां स्वाकारवृत्तिमनपेक्ष्यानावृत-साक्षिण्यध्यासमात्रेण तद्भास्यत्वस्य निपुणतरमुपपादितत्वात्तन्न्यायस्य रजतादावपि तुल्यत्वात् तेषामुक्त एवाभिप्राय इत्याह—एतैरेवेति।

इन्द्रियस्याधिष्ठानग्रह एवोपक्षयेऽतिप्रसंगंशंकते--नन्वेवमिति। रजतादिमात्रभ्रम इष्ट इत्याशंक्य रूपविशेषवदित्युक्तम्। आरोप्यसजातीयग्राहकेणैवेन्द्रियेणाधिष्ठानग्रहो हेतुरित्याशंक्याह---एवमाकाश इत्यादिना। अधिष्ठानस्फुरणमेवाध्यासोपयोगि। न चान्धा-देरपि रजतादिभ्रमापातः, विशेषकारणाभावादित्याह—न जाग्रतीति। चक्षुषः सादृश्यधी-द्वारा रजतधीहेतुतापि किं न स्यादित्यत आह—न च सादृश्येति।

नन्वेवमाकाशे तलमलिनताद्यध्यासो न स्यादधिष्ठानस्फुरणाभावादित्यत आह—आकाशेऽपीति। आकाशस्य नित्यपरोक्षत्वात् कथं तत्र स्फुरणमित्याशंक्यासिद्धो हेतुरि-त्याह—न तावदिति। आकाशलिङ्गत्वेनाभिमतध्वन्यादेरतद्धर्मत्वभ्रमदशायामपि तत्प्रतीतेर्न तस्य नित्यपरोक्षतेत्याह—ध्वनिरिति। आकाशस्य सर्वेन्द्रियायोग्यत्वात् प्रत्यक्षत्वमनुपपन्नमिति चोदयति—नन्विति। इन्द्रियायोग्यत्वेऽपि शुक्तिरजतादिवत् साक्षिगोचरत्वादाकाशस्फुरणसिद्धिरित्याह—न साक्षीति।

चक्षुष्मतामेवाकाशानुभवदर्शनात् तच्चाक्षुषमिति केचित्; तन्निराकरोति—न चेन्द्रियेत्यादिना। पञ्चीकरणवशेन पञ्चभूतात्मकत्वादाकाशस्य कथं नीरूपत्वमित्यत

**चाक्षुषत्वे वायोरपि चाक्षुषत्वापत्तेः।**

**अत एव पञ्चीकरणे नीरूपत्वमाकाशस्यासिद्धमिति निरस्तम्। नीरूपभागस्याधिक्यात् अनुद्भूतरूपतया वा वायुवदतीन्द्रियत्वात्।**

**यत्तु शुक्लमाकाशमिति। तन्न। अननुभवात् शब्दमात्रगुणतया तस्य स्मृतिसिद्धत्वाच्च। कथं तर्हि तत्प्रत्यक्षस्येन्द्रियव्यापारानुविधानं? न कथञ्चिदिति केचित् इन्द्रियस्यालोकग्रहण एवोपक्षीणत्वात्।**

आकाशस्य आलोकाकारवृत्त्यभिव्यक्तसाक्षिवेद्यता

**अपरे तु महानिशि पिनद्धद्वारकगुहान्तस्थस्येदं नभ इत्याकाशाननुभवादालोके चानुभवादस्ति प्रकाशस्य नभःप्रत्यक्ष उपयोगः। आलोकश्च चक्षुष एव सहकारी। एवं निमीलिताक्षस्यापीदं नभ इत्यननुभवादस्ति चक्षुषस्तत्रोपयोगः। स च न साक्षात् नीरूपद्रव्ये तस्य तदयोगात्। किन्तु सर्वगताकाशेऽपि प्रसृतप्रकाशाकारान्तःकरणवृत्त्यभिव्यक्तसाक्षिभास्यमाकाशम्। रूपहीनस्यापि द्रव्यस्यान्तः करणादिवत्साक्षिभास्यत्वाविरोधात्। अनुभवादन्याकारवृत्त्याऽन्या-**

---

आह—अत एवेति। पञ्चीकृताकाशेऽपि रूपवद्भागस्याल्पत्वान्नीरूपभागस्य बहुत्वाद् वैशेष्यात् तद्वाद इति न्यायेन नीरूपं नभ इत्युच्यत इत्यर्थः। नीरूपभागस्य बहुत्वादेव वायाविव नभस्यपि रूपभागस्यानुद्भूतत्वाच्च नेन्द्रियगम्यतेत्याह—अनुद्भतेति। उद्भूतरूपवदेव नभ इति कस्यचिन्मतमनूद्य दूषयति—यत्त्वित्यादिना। अननुभवादिति। प्रभादिनिष्ठ शौक्ल्यव्यतिरेकेणाकाशे तदननुभवादित्यर्थः। 'शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगमि'-त्यादिस्मृतिविरुद्धं नभस उद्भूतरूपवत्वाभिधानमित्याह—शब्दमन्त्रेति। चक्षुष आकाशग्रहणाहेतुत्वे तस्य कथमनन्यथासिद्धान्वयव्यतिरेकाविति चोदयति—कथं तर्हीति। अनन्यथासिद्धत्वमसिद्धमित्याह—न कथं चिदिति।

आकाशसाधकसाक्ष्यभिव्यञ्जकवृत्त्युत्पादनेन चक्षुषस्तत्रोपयोग इति सिद्धान्तं दर्शयितुं प्रथमं तत्रालोकस्यावश्यापेक्षणीयतामाह—अपरे त्वित्यादिना। आलोकस्योपयोगेऽपि कथं चक्षुषस्तत्रोपयोग इत्यत्राह—आलोकश्चेति। आलोकवच्चक्षुषोऽपि स्वत एवान्वयव्यतिरेकदर्शनात् तदपेक्षेत्याह—एवमिति।

अस्तु तर्ह्याकाशगोचरवृत्तिजननेनैव तत्प्रतिभासोपयोग इति नेत्याह—स चेति। कथं तर्हि चक्षुष आकाशप्रतिभासोपयोग इत्याशंक्याऽऽकाशस्य स्वावच्छेदकरूपवद्द्रव्यगोचरवृत्त्यभिव्यक्तसाक्षिभास्यत्वात् तद्वृत्तेश्च चक्षुर्जन्यत्वादुपयोग इत्यभिप्रेत्याह—किन्त्विति। विमतं चाक्षुषवृत्त्यभिव्यक्तसाक्षिप्रत्यक्षायोग्यं रूपहीनद्रव्यत्वात् वायुवदित्याशंक्याह—रूपहीनेति। घटाद्याकारचाक्षुषवृत्त्यभिव्यक्तसाक्षिणा वृत्तिमदन्तःकरणस्यापि भानात् तत्र व्यभिचार इत्यर्थः। अन्तः करणस्य प्रमातृपक्षनिक्षिप्तत्वाद्भवत्वन्याकारवृत्त्यभिव्यक्तसाक्षिभास्यत्वं, प्रमेयस्य तु पुनस्तदयुक्तमित्याशंक्याह—अनुभवादिति।

धिकरणचैतन्यस्य रजताधिकरणचैतन्यस्यैवाभिव्यक्त्यभ्युपगमे दोषाभावाच्च।

न चातिप्रसङ्गः अनुभवान्वयव्यतिरेकयोरेव नियामकत्वात्। अन्यथा घटाकारवृत्तिव्यक्तचैतन्येन वृत्तेर्भानायोगात्। अत एवाकाशानुगतसत्ताग्रहणे चक्षुष उपयोग इति संप्रदायविदः, तदाधारसत एव तत्सत्तारूपत्वात् सर्वगताकाशाश्रयचैतन्यस्य तेजोऽवच्छिन्नत्वाच्च। वायुश्च न चक्षुरभिव्यक्तसाक्षिप्रकाश्यः गुरुत्वादिवदयोग्यत्वात्।

आकाशस्य साक्षिवेद्यत्वाभावे अन्धानां निमीलिताक्षाणामप्युपनीताकाशे नीलं नभ इति भ्रमः स्यात्। उपनीतनैल्यस्य ग्रहणसंभवाच्च। चक्षुराकाशसंयोगस्यायोग्यसंयोगतया तत्राहेतुत्वात्। न चानुभूयमानारोपोऽयं तथा च

---

शुक्तिरजतादौ स्वाकारवृत्त्यभावेऽपि इदमाकारवृत्त्यभिव्यक्तसाक्षिभास्यत्वदर्शनान्नोक्तदोष इत्यर्थः।

आकाशस्य स्वोपाधिगोचरचाक्षुषवृत्त्यभिव्यक्तसाक्षिभास्यत्वे वायोरपि तथात्वं स्यादित्यत आह—न चेति। चक्षुषः संयुक्तत्वेऽपि चाक्षुषवृत्तेरिव तदभिव्यक्तसाक्षिणाप्यननुभवादेवायोग्यो वायुश्चक्षुर्व्यापारे सत्येवाकाशस्फुरणस्यानुभवसिद्धत्वात्। तत्र चक्षुषः साक्षादुपयोगायोगादुक्तविधया तदुपयोग इत्यर्थः।

किं च सर्वस्य स्वाकारवृत्त्यभिव्यक्तचैतन्येनैव भाननियमे वृत्तिगोचरवृत्त्यन्तरायोगादनंगीकाराच्च तद्भानं न स्यादित्याह—अन्यथेति। आकाशसत्तास्फूर्तिरूपस्य तदधिष्ठानचैतन्यस्यान्याकारचाक्षुषवृत्त्याभिव्यक्तेरुपपादनात् तत्वदीपनकारोक्तमपि युक्तमित्याह—अत एवेति। तेजः संसृष्टचाक्षुषवृत्त्या कथं आकाशाधिष्ठानचैतन्याभिव्यक्तिः, संबन्धाभावादित्यत आह—सर्वगतेति। यथा तेजः संसृष्टचाक्षुषवृत्त्या तदधिष्ठानचैतन्यस्य तदवच्छिन्नत्वादभिव्यक्तिरेवं सर्वगताकाशाधिष्ठानचैतन्यस्यापि तेजोऽवच्छिन्नत्वात् ततोऽभिव्यक्तिरित्यर्थः। तर्हि वायोरपि तेजोऽवच्छिन्नस्वाधिष्ठानचैतन्येन तद्वृत्त्याऽभिव्यक्तेन भानं स्यादित्यत आह—वायुश्चेति चाक्षुषवृत्तौ सत्यामपि वाय्वधिष्ठानचैतन्यस्य कदाप्यननुभवान्न ततोऽभिव्यक्तियोग्यं इत्यभिव्यक्तसाक्षिणं प्रत्ययोग्यत्वान्न ततो भानमित्यर्थः।

उक्तविधया नभसः साक्षिवेद्यत्वाभावे बाधकमाह—आकाशस्येति। नभसो नित्यपरोक्षत्वे तत्र किं नीलभ्रमः स्मर्यमाणारोप उत गृह्यमाणारोपः? आद्ये तस्य चक्षुषाधिष्ठानादिग्रहानपेक्षत्वान्निमीलिताक्षादेरपीतरस्येव तद्भ्रमः स्यादित्यर्थः। स्मृत्युपनीतस्य परोक्षत्वान्नापरोक्षभ्रम इत्याशंक्य परमते स्मृत्युपनीतरजतादेरापरोक्ष्याभ्युपगमान्नैवमित्याह—उपनीतेति। चक्षुरधिष्ठानसंयोगस्यात्र हेतुत्वात् तदभावादेव तदभाव इत्याशंक्य तस्य वाय्वादाविवायोग्यत्वान्न हेतुतेत्याह—चक्षुराकाशेति।

रूपानुभवे चक्षुष उपयोग इति वाच्यम्। रूपवद्द्रव्यान्तरस्याननुभवात्।

न च विचित्ररत्नस्य मेरोर्नीलप्रभा काचित् गगनदेशव्यापिनी विद्यते तद्रूपमनुभूय तत्रारोप्यत इति वाच्यम्। तदुत्प्रेक्षायां प्रमाणाभावात् रात्रावपि तद्ग्रहणप्रसंगाच्च।

अनेकयोजनव्यवहितमेरो रत्नप्रभाया असंभवाच्च। अन्यथाऽतिनिकटगगन-प्रदेशेऽपि सा प्रभाऽनुभूयेत पीतादिप्रभाया अपि निर्मेघे गगनेऽनुभवप्रसङ्गाच्च वियत्यातपत्राकारताया अन्यत्राननुभवाच्च।

किञ्चान्धादेः स्मर्यमाणरूपारोपः किं न स्यात् यदि तत्स्फुरणं तत्र न कारणं नहि सर्वत्रानुभूयमानमेवारोप्यते प्रसिद्धभ्रमापलापप्रसङ्गात्।

स्वपक्षस्यैव सिद्धान्तत्वनिर्णयः

किञ्चारोप्यस्यापरोक्षत्वेऽधिष्ठानापरोक्षत्वं तन्त्रम्। अन्यथा वायावप्यपरोक्ष-नीलभ्रमः स्यात्। तस्मादस्मदुक्तविधया साक्षिवेद्ये गगने नीलिमारोप इति।

---

द्वितीयं निराकरोति—न चानुभूयमानेति। रूपवद्द्रव्यान्तरस्येति। नीलद्रव्यान्तर-स्येत्यर्थः। महामेरौ हरिन्मुपलानां बहुत्वात् तत्प्रभायाः सर्वत्र गगनदेशप्रसरात् तद्गत-नीलरूपं गृह्यमाणं गगनेऽध्यस्यत इति कल्पना तार्किकाणां निर्मूलेति दूषयति—न च विचित्रेत्यादिना। रात्राविति। चन्द्रप्रकाशबहुलायां रात्रावित्यर्थः।

न च तदा चन्द्रप्रकाशप्रतिहता नीलप्रभा न गृह्यन्त इति वाच्यम्। तथात्वे तस्याप्यभिभावकसौरप्रकाशे सति दिवा तद्ग्रहणायोगादिति भावः।

किं च नीलप्रभैव सर्वत्र प्रसरत्युत रत्नान्तरप्रभापि? आद्ये नीलप्रभाया अपि तत्तुल्ययोगक्षेमत्वान्न सर्वत्र प्रसर इत्यभिप्रेत्याह—अनेकेति। विपक्षे बाधकमाह—अन्यथेति।

द्वितीये दोषमाह—पीतादीति। मेघे सतीन्द्रियनिरूपणानेकप्रभा भातीतीष्टापत्ति-वारणाय निर्मेघ इत्युक्तं गृह्यमाणारोपपक्षे भ्रमान्तरमपि न स्यादित्याह—वियतीति।

किञ्च शुक्त्यादौ स्मर्यमाणरजताद्यारोपाभ्युपगमादधिष्ठानापरोक्ष्यस्यानपेक्षि-तत्वेऽन्धादेर्गगने गृह्यमाणनीलरूपारोपाभावेऽपि स्मर्यमाणतदारोपः स्यादेवेत्याह—किञ्चेति।

न चान्धादीनां दोषाभावादेव न तदारोप इति वाच्यम्। दूरस्थतातिरेकेणान्य-त्रापि तदभावात् तस्याश्च सर्वसाधारणत्वादिति भावः। गगनस्योक्तविधया परोक्ष-त्वाभावे चक्षुष्मतोऽपि तत्र नीलत्वभ्रमो न स्यादित्यभिप्रेत्याधिष्ठानापरोक्षस्यापरोक्ष-भ्रमहेतुतां साधयति—किं चारोप्यस्येति। रूपादिहीनगगनस्य कथमपरोक्षत्वमित्यत आह—तस्मादिति। ननु दिक्कालविशेषेषु दिक्कालान्तरभ्रमः प्रत्यक्षोऽनुभूयते, तत्र

एतेन दिगादयोऽपि व्याख्याताः।

तिक्तो गुड इति भ्रमोऽपि रसनेन्द्रियगृहीतेऽपि गुडरसे तिक्तरसाभेदारोपविषयः गुडरसस्तिक्त इत्यनुभवात्।

अन्यथा पित्तोपहतरसनस्य स्मर्यमाणे तिक्तो रस इति भ्रमः स्यात्। तस्मात् सर्वत्राधिष्ठानस्फुरण एवेन्द्रियोपयोगः ततो दोषो रजताद्यर्थ एव कारणम्। एवमत्यन्तमज्ञाते ज्ञाते च भ्रमाभावादधिष्ठानसामान्यज्ञानमपि तत्र कारणम्।

अन्यथाऽधिष्ठानसंप्रयोगाभावेऽपि रजतादिभ्रमप्रसंगात्। न चैवं संप्रयोग एव हेतुः तस्य सर्वभ्रमाव्यापित्वात्। अधिष्ठानसामान्यस्फुरणस्य सर्वत्र सत्त्वात् तत्क्वचिन्नित्यं क्वचिदागन्तुकमित्यन्यदेतत्।

न च रजतस्येदंसंवलितग्रहणतया तत्कालीनतदर्थमेव संप्रयोगापेक्षेति

---

कथमधिष्ठानस्यापरोक्षत्वमित्याशंक्य तत्रापि तदुपाधिगोचरवृत्त्यभिव्यक्तसाक्षिभास्यत्वसंभवान्न विरोध इत्यभिप्रेत्याह—एतेनेति।

नन्वेवं तिक्तो गुड इति भ्रमे रसनेन्द्रियस्य कुत्रोपयोगः गुडस्याधिष्ठानस्य त्वग्ग्राह्यत्वाद्‌रोप्यतिक्तरसस्यैन्द्रियकत्वानभ्युपगमादित्याशंक्य तत्र गुडगतरसस्यैवाधिष्ठानत्वात्तत्सामान्यग्रहे रसनोपयोग इत्यभिप्रेत्याह—तिक्त इति। अत्राप्यधिष्ठानापरोक्ष्यस्यानपेक्षत्वे बाधकमाह—अन्यथेति। इन्द्रियस्य भ्रमहेतुत्वनिराकरणमुपसंहरति—तस्मादिति। स्वतो भ्रमस्याजन्यत्वादेव दोषादिरपि रूप्योत्पत्तावेव हेतुरित्याह—तत इति।

न च चिकीर्षां विना ज्ञानमर्थे न कारणमिति वाच्यम्। कृतिसाध्याऽर्थोत्पत्तावेव तदपेक्षणाच्छुक्तिरूप्यादेश्च कृत्यनपेक्षत्वादिति भावः। अधिष्ठानस्फुरणस्य रजताद्युत्पत्तावहेतुत्वे तद्धेतोः सम्प्रयोगस्यापि तत्रानपेक्ष्यत्वात्तेन विनापि रजताद्युत्पत्त्या तद्विशेषितभ्रमः स्यादित्याह—अन्यथेति। संप्रयोगस्यैवार्थोत्पादकत्वात् तेन विना न रजतादिभ्रम इत्याशंक्य तस्याहंकाराद्यध्यासेऽसंभवादधिष्ठानस्फुरणमेव सर्वत्र हेतुरित्याह—न चैवमित्यादिना। अहकाराद्यधिष्ठानस्य संप्रयोगं विना कथं वा स्फुरणमित्याशङ्क्य तस्यानावृतस्वभावसाक्षिरूपतया नागंतुकं तदितरत्र त्वावरणनिवर्तकवृत्तिसापेक्षत्वादागन्तुकमित्याह—क्वचिदिति।

शुक्तिसंप्रयोगो न रजतोत्पादकज्ञानार्थः किन्त्विदं रजतमिति रजतस्येदमंशसंभिन्नतया ग्रहणत्वं तत्कालेऽपेक्षितेदंवृत्त्यर्थ एवेत्याशंक्य संप्रयोगं विना रजतोत्पत्तौ वाधकस्योक्तत्वात् तस्य तदर्थत्वमावश्यकमित्याह—न च रजतस्येत्यादिना।

ननु शुक्त्यादौ सादृश्यज्ञानार्थ एव संप्रयोगः सादृश्यज्ञानं च न सर्वभ्रमोपयोगीति तदर्थं संप्रयोगोऽपि तथा। ततश्चान्यत्र संप्रयोगाधीनाधिष्ठानज्ञानं सदपि न कारणमित्याशंक्यान्यत्रापि संप्रयोगे सत्येव भ्रमदर्शनान्न तस्य सादृश्यग्रह एवोपयोगः किं त्वधिष्ठान-

वाच्यम् । संप्रयोगस्य रजतोत्पत्तौ परंपरयाप्यनुपयोगे तेन विनापि तदुत्पत्तिप्रसंगस्य दुष्परिहरत्वात् । न हि ज्ञानसामग्रीमपेक्ष्यार्थोत्पत्तिः ।

न च सादृश्यज्ञानार्थमेव तत् । तच्च न सर्वत्रेति वाच्यं, स्फटिकलौहित्यादिभ्रमस्यापि संप्रयोगेण विनाऽभावात् । अतोऽधिष्ठानज्ञानार्थमेव तदिति भ्रमेऽधिष्ठानसामान्यज्ञानमपि कारणम् । अत एव संस्कारोऽपि रजत एव कारणम् अनुभवाहितसंस्कारस्यापि स्वप्नेऽकाराद्यर्थे च कारणत्वात् । ज्ञानातिरिक्ते ध्वंस इवान्यत्रापि तस्य हेतुत्वे दोषाभावाच्च । क्वचिददृष्टमपि दोषः ।

ननु दोषादि रजतादावपि न कारणम् । तेन विनापि समीचीनरजतादेः सत्वात् । न चारोपितरजते तस्य कारणत्वं तस्याप्यारोपितत्वात् । न च प्रातीतिके कारणं सत्वभेदस्याभावादिति । मैवं । अर्थक्रियायोग्यत्वेन विशेषात् । कार्यमात्रे त्रितयस्य कारणत्वाच्च । प्रपञ्चेऽप्यविद्या दोषः । तदाहुः "विद्यत एवात्राप्यग्रहणाविद्यात्मको दोष" इति । पूर्वभ्रमसंस्काराधिष्ठानज्ञानयोः सत्वाच्च । अविद्याया

---

ग्रहद्वारकरजताद्युत्पत्ताविंत्याह—न च सादृश्येत्यादिना । भ्रमविषयस्यैव जन्यत्वात् तत्रैव संस्कारोऽपि हेतुरित्याह--अत एवेति ।

यदुक्तं ज्ञानसंस्कारस्यार्थजनकत्वाभावादिति तत्राह—अनुभवाहितेति । स्वप्नादावागन्तुकज्ञानस्य कारणाभावादनुपयोगाच्चासंभवात् तत्रार्थस्यैवानुभवसंस्कारजन्यत्वं तद्वद्रजतस्यापि तदुपपत्तिरित्यर्थः ।

परमतेऽपि ज्ञानसंस्कारो ज्ञानस्यैव हेतुरिति नियमाभावादर्थहेतुत्वसंभव इत्याह—ज्ञानातिरिक्तध्वंस इति स्वध्वंस इत्यर्थः । औत्पातिकसवितृसुष्यादौ दोषाभावात् कथं तदुत्पत्तिरित्यत आह—क्वचिदिति ।

दोषादिकं रजतादिमात्रे कारणमुतारोपितरजतादौ ? किं वा प्रातीतिकसत्तावतीति विकल्पं मनसि निधाय क्रमेण दूषयति –ननु दोषादिरित्यादिना । सत्वभेदस्येति । अधिष्ठानसत्तातिरिक्तसत्वस्य निराकरणादिति भावः । स्वजात्युचितार्थक्रियां प्रत्ययोग्यत्वमेव कार्यतावच्छेदकमिति परिहरति—मैवमिति ।

वस्तुतस्तु दोषसामान्यज्ञानसंस्कारजन्यत्वे कार्यत्वमेवाच्छेदकं घटादेरपि तज्जन्यत्वादित्याह—कार्यमात्र इति । आगन्तुकग्रहणनिवर्त्यं त्वग्रहणपदार्थः—पूर्वभ्रमेति । संसारस्यानादित्वात् पूर्वानुभवसंस्कारः सर्वत्र सुलभः । वियदाद्यधिष्ठानचिन्मात्रस्यापि मूलाज्ञानाश्रयविषयतया सर्वदा सर्वानुभवसिद्धत्वादधिष्ठानसामान्यज्ञानमपि सुलभमित्यर्थः । अविद्यायाः सर्वत्रोपादानत्वात् कथं तत्र दोषत्वमित्याशंक्य प्रसिद्धदोषतुल्यत्वात् तत्त्वमित्याह—अविद्याया इति । अधिष्ठानविपरीतेति । एतच्चाधिष्ठानविशेषांशप्रतिभासप्रतिबंधकत्वस्याप्युपलक्षणं, अदृष्टस्य सवितृसुष्यादौ दोषत्वेन क्लृप्तत्वात्

अपि काचादिवदधिष्ठानविपरीतकार्यजनकतया दोषत्वात् ।

ननु प्रपञ्चेऽदृष्टमेव दोषः, तस्य क्वचिद्दोषत्वेन जनकत्वस्य दृष्टत्वादिति चेत् । न । लाघवेन प्रपंचस्य दोषजन्यत्वानुमितेरेकविषयत्वे संभवति तत्त्यागात् ।

अथोपादानस्य दोषत्वमदृष्टं तर्हि निमित्तस्य दण्डादेरपि न तद्दृष्टमिति काचादिकमपि न दोषः । कार्यबलात् तत्कल्पनं चेत् प्रकृतेऽपि तुल्यम् । एवमपि काचादेर्व्यभिचारस्य कः परिहारः ज्ञाने यः परिहारः स एव । भ्रान्तिमात्रे प्रत्यक्ष-भ्रममात्रे चाक्षुषभ्रममात्रे वा काचादिः कारणम् ।

भ्रमविषयोत्पत्तौ कारणप्रश्नः

ननु घटादौ क्लृप्तकारणदंडादिकं विना कथं तस्य भ्रमविषयस्योत्पत्तिः' तथात्वे प्रत्यक्षं चेन्द्रियसंयोगं विना किमिति न जायेतेति चेत् । न । जन्य-प्रत्यक्षमात्रे इन्द्रियसंप्रयोगजन्यत्वस्य क्लृप्तत्वात् ।

न च घटादौ तथा । चेष्टादिकं विनापि स्वप्ने तद्दर्शनात् । तत्र च सृष्टिश्रुतेः साऽवश्यिकी शुक्त्यादिदेशीयरजतादिकं विनाऽपरोक्षत्वानुपपत्तेश्च । अतो व्यावहा-

---

तस्यैव प्रपञ्चेऽपि दोषत्वसंभवेनाविद्याया न दोषत्वमिति तटस्थः शंकते—ननु प्रपञ्च इति । रजतादिदृष्टान्तेन प्रपञ्चे दोषजन्यत्वविषयानुमितेर्लाघवादेकदोषविषयत्वादन-न्तादृष्टानां न दोषतया हेतुतेत्याह—न लाघवेनेति ।

अविद्याया दोषत्वे उपादानत्वं न स्यादित्याशंक्य प्रतिबंद्या परिहरति—अथेत्या-दिना । अर्थक्रियायोग्ये प्रपञ्चेऽविद्याया दोषत्वमभ्युपेत्य तदयोग्ये काचादीनां प्रत्येक-मननुगमान्न हेतुतेति चोदयति—एवमपीति । काचादेर्भ्रांतिज्ञानहेतुत्वमतेऽप्यननुगमस्य तुल्यत्वात् तत्राज्ञानव्यक्तिविशेषहेतुत्वमभ्युपेयं तदर्थहेतुत्वेऽपि तुल्यमित्याह—ज्ञान इति । काचादेरेकैकस्य ज्ञानेऽननुगममेव दर्शयति—न हीति । भ्रान्तेरिव तद्विषयस्याप्युत्पत्ति-रनुपपन्नेति चोदयति—ननु घटादाविति । दण्डादिकं घटादिविशेष एव हेतुर्न घटादिमात्र इत्याशंक्य तर्हीन्द्रियसंप्रयोगोऽपि प्रत्यक्षज्ञानविशेषहेतुर्न जन्यप्रत्यक्षमात्र इत्यन्यथा ख्यातिरेव किं न स्यादित्याह—तथात्व इति । इन्द्रियसंप्रयोगस्य जन्यप्रत्यक्षमात्रेऽनुगत-त्वात् तस्य तद्धेतुत्वमावश्यकं दंडादेस्तु हस्तादिनिर्मिते ताम्रादिमये च घटादावननुगमात् तस्य तद्विशेषे हेतुतैवेति परिहरति—न जन्येति । तथापि चेष्टादिरूपपुरुषव्यापारं विना कथं घटाद्युत्पत्तिरित्याशंक्याह—चेष्टादिकमिति । स्वप्ने घटादिसृष्टौ वैदिकैर्न विमतिः कार्या तस्या 'अथ रथान'त्यादिश्रुतिसिद्धत्वादित्याह—तत्र चेति । रजतान्तरकारणा-भावात् प्रातीतिकरजतोत्पत्त्यनभ्युपगमेऽन्यस्य रजतस्य संविदभेदासंभवाद् भ्रमस्यापरोक्ष-त्वानुपपत्तिश्चेत्याह—शुक्त्यादीति । फलितमाह—अत इति ।

**रिकप्रातीतिकयोर्विशेषहेतुर्भिद्यत इति ।**

शुक्तिरजतादेः प्रातीतिकता

**तच्च रजतादिकं स्वसत्ताव्यापकप्रतीतिकत्वात् प्रातीतिकमेव, न तु घटादिवदज्ञातसत्ताकम् मानाभावात् ।**

**ननु कदाचिदुत्पन्नभ्रमस्य कालान्तरे तदेवेदमिति प्रत्यभिज्ञानाद्रजतमप्यज्ञातमस्त्येव उत्तरभ्रमाधिष्ठानज्ञानयोर्विनाशहेत्वोरभावाच्चेति चेत् । न । किं समयान्तरे दोषादिषु सत्सु रजतानुभवः उत तैर्विनापि ? नाद्यः, तदुत्पत्तिकारणस्य नियमेन पूर्वमपेक्षायामुत्पत्तिनियमात् ।**

**अन्यथा तत्पूर्वं तन्नियमानुपपत्तेः । न हि दण्डादिकमपेक्ष्यैव चक्षुर्घटं गृह्णाति । न द्वितीयः तदसिद्धेः । अतः प्रत्यभिज्ञा तज्जातीयविषयैव, कारणविनाशाच्च विनाशः । एतेन 'यत्त्वया दृष्टं तदेव मयापीति प्रत्यभिज्ञापि निरूपिता, तस्य परं प्रत्युपलम्भायोग्यत्वाच्च ।**

**तच्च परस्यापि तदुत्पत्तिकारणे सत्येवोपलम्भात् सिद्धम् । घटादिकं तु**

---

इदानीं कारणविशेषप्रयुक्तं कार्यविशेषमाह—तच्चेति। भ्रमविषयरजतस्यैव बाधाभावे कालान्तरे प्रत्यभिज्ञायमानत्वात् तस्य स्थायित्वेनाज्ञातसत्वमावश्यकमिति चोदयति—नन्विति। पूर्वगृहीतरजतस्य नष्टत्वात् प्रत्यभिज्ञा जातिविषयिणीत्याशंक्य तन्नाशकाभावान्नैवमित्याह—उत्तरेति। विकल्पासहत्वान्नैतदित्याह—न किमिति। रजतानुभव इति । प्रत्यभिज्ञाहेतुधर्म्यनुभव इत्यर्थः । पुष्कलकारणे सत्यनन्तरक्षणे कार्योत्पत्तिनियमाद्रजतद्वयानुपलंभात्पूर्वगृहीतस्य तत्राभाव आवश्यक इत्याह—नाद्य इति। पूर्वरजतप्रतीतिरेव तत्कारणमपेक्ष्य भवत्वित्याशंक्य कुत्रापि ज्ञप्तिसामग्र्या उत्पादकसामग्र्यनपेक्षत्वान्नैवमित्याह—न हीति। तदसिद्धेरिति। दोषादिकं विना कालान्तरे शुक्तिरजतानुभवासिद्धेरित्यर्थः। व्यक्तिभेदस्यावश्यकत्वात् प्रत्यभिज्ञाऽन्यविषयेत्याह—अत इति। पूर्वगृहीतरजतस्य विनाशहेत्वभावात् कथमभाव इत्यत आह—कारणेति। अधिष्ठानसामान्यज्ञाननाशादित्यर्थः। व्यक्त्यैक्यासंभवात् प्रत्यभिज्ञान्तरमपि जातिविषयमित्याह। एतेनेति । सुखादिवदन्यदृष्टरजतस्याऽन्योपलम्भायोग्यत्वादप्येवमेवेत्याह—तस्येति।

अन्यदृष्टरजतस्यान्योपलम्भायोग्यत्वमेव कथमित्याशंक्योक्तरीत्या तत्र रजतान्तरोत्पत्तेरावश्यकत्वात् तस्यैव स्वप्रमातृसंसृष्टत्वान्नान्यप्रमातृगतरजतोपलम्भ इत्यभिप्रेत्याह—तच्चेति। घटादिप्रतीतौ चोत्पादककारणानपेक्षणादन्तः करणोपहितचैतन्येऽनध्यासाच्च तस्य साधारणतेत्याह—घटादिकमिति । मिथ्यारजतादेर्घटादीनां वैषम्याभ्युपगमे सत्यत्वापात इत्याशंक्य परमते सर्वस्य सत्वेऽपि यथा सुखादीनामज्ञातसत्वरा-

नैवमिति तस्य सर्वोपलम्भः। न चैतावता घटादेः पारमार्थिकता पदार्थस्वभाववैचित्र्यस्य परमार्थ इव कल्पितेऽप्यदोषात् अविद्याया विचित्रशक्तित्वात्।

अथवा यदज्ञानोपादानं यत्तत्स्यैवोपलम्भार्हमिति पूर्वोक्तयुक्तेर्निश्चीयते। घटादिकं तु यावदुपलब्धज्ञानसमुदायजमिति सर्वदृश्यम्। सर्वादृष्टानामिव सर्वाज्ञानानामपि मिलित्वा हेतुत्वोपपत्तेः। एकाज्ञानाशे तु प्रपंचान्तरमेव। रजतादेर्दोषविशेषजन्यत्वादविद्याविशेषजन्यत्वाद्वा नार्थक्रिया।

अज्ञाननिवृत्तौ प्रकारनिर्णयः

घटादिकमपि दृष्टिसमसमयमात्रमिति रहस्यम्। तस्मादयं संक्षेपःइन्द्रियाच्छुक्तिकादाविदमाकारवृत्तिर्जायते तस्यां वृत्तौ प्रतिफलितं चैतन्यमिदमंशावच्छिन्नचैतन्यविषयमज्ञानं निवर्तयति। न तु विशेषांशाज्ञानं वृत्तेस्तदाकारत्वाभावात्। अन्याकारवृत्याऽन्याज्ञाननिवृत्तावतिप्रसंगात्। भ्रमांनुपपत्तेश्च विशेषाज्ञानं वर्णितकारणसध्रीचीनं तत्राभिव्यक्ते साक्षिणि रजताद्याकारेण विवर्तते।

---

हित्यमनन्यवेद्यत्वं चेत्यादिवैषम्यं तद्वन्मिथ्यात्वेऽप्यवान्तरभेदोपपत्तिरित्याह—न चैतावतेत्यादिना। अनेकजीववादेऽपि रजतादेरनन्यवेद्यत्वं घटादेस्तु साधारणत्वं साधयति—अथवेत्यादिना। पूर्वोक्तयुक्तेरिति। उत्पादके सत्येवोपलम्भादित्यादियुक्तेरित्यर्थः। एकैकस्यैवाज्ञानस्य वियदादिपरिणामे कथं तेषां संभूयकारित्वमित्याशंक्य प्रतिपुरुषं प्रपञ्चभेदे मानाभावात् परमते पृथिव्यादिहेत्वदृष्टानामिव संभूय कारित्वोपपत्तिरित्याह—सर्वादृष्टानामिति। तर्ह्येकस्य तत्त्वापरोक्षेण तदज्ञाननाशे तत्कार्यप्रपञ्चस्यापि नाशात् सर्वमुक्त्यापात इत्याशंक्याह—एकेति। एकाज्ञाननाशेन तदधीनसाधारणप्रपञ्चनाशेऽपि खण्डपटवत्तदैवेतराज्ञानैः प्रपञ्चान्तरमुत्पद्यते।

न च तेन मुक्तस्यापि बन्धप्रसङ्गः। तदज्ञानमात्रजन्यस्य तद्भोगोपाधेरन्तःकरणस्य नाशादेव तदयोगादिति भावः। शुक्तिरजतादेरर्थक्रियायोग्यत्वे प्रयोजकमाह—रजतादेरिति। अविद्याविशेषेति। अवस्थाज्ञानजन्यत्वादित्यर्थः।

वस्तुतो रजतादेर्घटादेश्च न किञ्चिद् वैषम्यमस्ति। न चैवं सति लौकिकवैदिकव्यवहारानुपपत्तिरिति वाच्यम्। स्वप्नवदेव सर्वस्याप्युपपत्तेः। तथा च श्रुतिः 'त्रय आवसथास्त्रयः स्वप्नाः' इति "ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम्" इत्याद्याः स्मृतयश्चानुगुणा इत्यभिप्रेत्याह—घटादिकमपीति। इयता प्रबन्धेनोपपादितां रजतोदयप्रक्रियां बुद्धिसौकर्याय संक्षेपेणोपपादयति—तस्मादयमिति। विशेषांशाज्ञानमिति। शुक्तित्वविशिष्टावच्छिन्नचैतन्याज्ञानमित्यर्थः। भ्रमानुपपत्तेश्चेति उपादानाभावादित्यर्थः। दोषसामान्यस्फुरणसंस्कारा वर्णितकारणशब्दार्थः। तत्र वृत्तिसंसृष्टे इदमंशे वृत्तिं विनैव प्रकाश्यत इति संबन्धः। वस्त्यभावे कथं तत्प्रकाश इति

**तच्च स्वाकारवृत्तिं विनैवाधिकरणीभूताभिव्यक्तसाक्षिसंबद्धं साक्षिणा प्रकाश्यते। परोक्षभ्रमे तु नार्थध्यासः तत्र प्रमाणाभावात्। अर्थं विना ज्ञानानुपपत्त्यभावात्।**

**किन्तु यथा भट्टवैशेषिकादेरभ्युपगमस्तथैव अस्माकं दुर्निरूपेणापि व्यवहारोपपत्तेः रजतादौ प्रत्यक्षत्वात् दोषाद्युपयोगार्थं चार्थस्वीकारः तच्च रजतं रजतत्वाश्रयम्।**

**अन्यथाऽनुभवविरोधात् रजतार्थिनः प्रवृत्तिविरहप्रसङ्गाच्च पूर्वदृष्टसजातीयस्येत्याचार्योक्तेश्च। स्वप्नरथादौ रथादिशब्दप्रयोगानुपपत्तेश्च। कथं तर्हि रजतत्वेन कंकणादिजनकत्वानुमानं तेन विना वा तदर्थिनः कथं रजते प्रवृत्तिः? रजतत्वस्यायोग्यवृत्तित्वाज्ञानदशायां तत एव तज्ज्ञानात्। तदा तु दोषविशेषाजन्यरजतत्वेन तदनुमानम्। अत एव तस्य दोषाजन्यत्वसंशयविपर्ययदशायां निष्कंपप्रवृत्त्यभावात्।**

---

वीक्षायामुक्तमधिकरणीभूतेति। इदमाकारवृत्त्या प्रमात्रभेदेनाभिव्यक्तेदमंशावच्छिन्नचैतन्येऽध्यस्तं रजतमुत्पत्त्यैव साक्षिसंबद्धं सुखादिवत्तेनैव भासत इत्यर्थः।

नन्वनाप्तवाक्यात् पर्वते धूमभ्रमस्ततो वह्निभ्रमश्च दृश्यते। तत्र पर्वतावच्छिन्नचैतन्यस्याविद्याक्षोभकवृत्तिसंसर्गाभावात् कथमर्थाध्यास इत्याशंक्य परोक्षभ्रमेऽर्थाध्यासाभाव इत्याह—परोक्षेति।

अर्थाभावे कथं ज्ञानमित्यत आह—अर्थंविनेति। अत्यन्तासत्यप्यर्थे परोक्षज्ञानाभ्युपगमात् तस्योपपादितत्वाच्च न विषयेण विना तदनुपपत्तिः। सर्वैरप्याचार्यैरपरोक्षभ्रमानुपपत्त्यैवानिर्वचनीयार्थसाधनात् तेषां परोक्षभ्रमे तदभावः संमतः। अतीतादिविषयपरोक्षप्रमायामपि तत्कालीनार्थाभावस्य तैरेवोपपादनादिति भावः।

तर्हि तत्र का वा ख्यातिरिति वीक्षायां परोक्षभ्रमात्मकबुद्धिवृत्तेरनिर्वचनीयत्वाद् विषयस्य वैशेषिकाद्यभिमतसंसर्गवदसत्त्वात् तदनिर्वचनीयख्यातिरेवेयमित्यभिप्रेत्याह—किन्त्वित्यादिना। किं चास्य ख्यातिविशेषत्वानिर्णयेऽपि नास्माकं क्षतिस्तन्निर्णयस्यासद्विषयत्वप्रतिपत्त्यनुपयोगित्वात् व्यवहारस्य च दुर्निरूपेणापि संभवादित्याह—दुर्निरूपेणापीति। तर्हि परोक्षभ्रमवत्प्रत्यक्षभ्रमेऽप्यसन्नेवार्थः प्रतीयतामित्यत आह—रजतादाविति। शुक्तिरूप्ये रजतत्वं नेति केचित्तान् प्रत्याह—तच्चेति। स्वप्नरथादाविति। रथादिपदानां लोके रथत्वादिविशिष्टे व्युत्पत्तिग्रहणात् स्वप्नरथादौ रथत्वाद्यभावे तत्र व्युत्पत्त्यन्तराभावाद्रथादिपदैस्तत्प्रतीतिर्न स्यादित्यर्थः। प्रवृत्तिविरहप्रसंगादित्युक्तं विवृणोति—कथं तर्हीति। रजतत्वस्य कंककणाद्ययोग्येऽपि सत्वे कथं ततस्तत्साधनत्वानुमानमित्यत आह—रजतत्वस्येति। अयोग्यवृत्तित्वज्ञानदशायां कथं तदनुमानमित्यत आह—तदात्विति।

न च दोषजन्ये तदजन्यत्वमसिद्धमिति वाच्यम्। तथापि तद्भ्रसंभवादिति भावः। दोषविशेषाजन्यत्वविशेषितरजतत्वज्ञानादेव प्रवृत्तिरित्यत्र गमकमाह—अत एवेति।

दोषविशेषाजन्यत्वं च परमते सत्वमिवौत्सर्गिकतर्कोपस्थितं सर्वप्रमाणविषयः तच्च क्वचिद्बाध्यते क्वचिन्नेति विशेषः।

केचित्तु अंकुरावस्थदण्डादेः कदाचिदपि घटाद्यजनकत्वेऽपि दण्डत्वादिना तज्जनकत्वयोग्यतावच्छुक्तिरजतादेरपि तत्वेनैव योग्यतेत्याहुः। रजताभासव्यवहारस्तु ब्राह्मण एव तद्वृत्तिन्यूनतया ब्राह्मणाभासप्रयोगवदर्थक्रियाभावादेवोपपद्यते।

तस्माच्छुक्तिरजतं मिथ्येति सिद्धम्।

प्रपञ्चमिथ्यात्वे अनुमानानि

प्रपंचेऽपि प्रयुज्यते अज्ञातसत्ताकमविद्यातिरिक्तदोषाजन्यं जन्यं वियदाद्येकैकं वा मिथ्या दृश्यत्वात् शुक्तिरूप्यवत् प्रतिज्ञाविषयातिरिक्तस्य जडस्य पक्षसमत्वान्न व्यभिचारः।

न चाप्रयोजकता, सद्भेदे गौरवात् सत एकत्वेऽपि निखिलव्यवहारोपपत्तेः। संविदभेदं विना प्रत्यक्षत्वायोगाच्च।

किं च जगतः सत्वानुपपत्तिरपि विपक्षे बाधिका। तथाहि सत्ता जातिः

---

यत्संशयविपर्ययौ यत्र प्रतिबधकौ तन्निश्चयस्तद्धेतुरिति न्यायाद्दोषाजन्यत्वनिश्चयः प्रवृत्त्युपयोगीत्यर्थः।

दोषाजन्यत्वस्यार्थक्रियागम्यत्वात् प्रथमं कथं निर्णय इत्यत आह—दोषविशेषेति। उत्सर्गापवादयोः सर्वैरप्यभ्युपगमादुत्सर्गतः सर्वत्र प्राप्तिः क्वचिदपवादे सत्यन्यथात्वमित्यर्थः। दोषविशेषाजन्यत्वाज्ञानेऽपि रजतत्वादिनैव शुक्तिरजतादेरपि कंकणादियोग्यत्वात् तद्ग्रहादेव प्रवृत्तिः फलोपधानाभावस्तु कोमलदण्डादिवदुपपद्यत इति मतान्तरमाह—केचित्त्विति। शुक्तिरजतादेरपि रजतान्तरवद्व्यवहारयोग्यत्वे कथं तत्र तदाभासत्वप्रथेत्याशंक्य स्वोचितकार्यानिष्पादकत्वेनैव तदुपपत्तिरिति सदृष्टान्तमाह—रजताभासेति। लक्षणादिभिरुपपादितं रजतमिथ्यात्वं निगमयति—तस्मादिति। यदर्थं रजतमिथ्यात्वं साधितं तन्निर्दिशति—प्रपञ्चेऽपीति। अज्ञातसत्ताकं जन्यमित्येकः पक्षः। अविद्यातिरिक्तदोषाजन्यं जन्यमित्यपरः। वियदाद्येकैकमित्यर्थः। पक्षयोर्ब्रह्मणि बाधवारणाय जन्यपदं अज्ञानादेः पक्षे अनन्तर्भावात् तत्र मिथ्यात्वासिद्धौ हेतुर्व्यभिचारीत्याशंक्याह—प्रतिज्ञेति।

विपक्षे बाधकतर्काभावादप्रयोजकत्वमित्याशंक्य हेत्वसिद्ध्या दूषयति—न चाप्रयोजकतेति। संविदभेदं विनेति। इन्द्रियजन्यत्वप्रयुक्तार्थापरोक्ष्यनिराकरणादर्थस्य स्वप्रकाशचित्तादात्म्यमेषितव्यम् जडाजडयोर्वस्तुतस्तदयोगात् स्वप्रकाशचित्तादात्म्याध्यासादेव जडापरोक्ष्यमिति भावः। अधिष्ठानातिरिक्तजडसत्ताया दुर्निरूपणादपि तन्मिथ्यात्वमित्याह—जगत इति।

किं पराभिमतसत्ताजातिर्जडस्य सत्वमबाध्यत्वं वा स्वसमानाधिकरणस्वसमान-

सत्त्वमित्येतच्छतशो निरस्तम् अबाध्यत्वमिति चेत् किं तद्बाध्यत्वं यदभावः सत्वं, भ्रान्तिविषयत्वं वा बाधकप्रमाविषयत्वं वा प्रमीयमाणात्यन्ताभावप्रतियोगित्वं वा स्वधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं वा स्वोपादानवृत्त्यन्ताभावप्रतियोगित्वं वा स्वविशिष्टप्रमाकाले स्वविशेष्यवृत्त्यत्यन्ताभावप्रतियोगित्वं वा स्वविशिष्टप्रतीतिकाले स्वसमानदेशात्यन्ताभावप्रतियोगित्वं वा असत्वं वा ?

नाद्यद्वितीयौ । शुक्त्यादेरन्यथाख्यातौ रजतादेः स्वासत्वप्रसंगात् । न तृतीयः । जडमात्रे तत्सत्वात् । न चतुर्थः घटादेरपि स्वाधिकरणीभूतभूतलाद्यधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वात् । न पञ्चमः परमते तदप्रसिद्धेः । संयोगादेस्तत्सत्वाच्च । अत एव न षष्ठः । सप्तमेऽपि तस्य परमतेऽसंभवः । असत्वं हि यदि त्रैकालिकसर्वदेशीयात्यन्ताभावप्रतियोगित्वं तदाऽनिर्वचनीयातिरिक्तं तादृशं किञ्चिन्नास्तीत्युक्तम् । तस्मान्न बाध्यत्वाभावः सत्त्वम् ।

प्रकारान्तरेण सत्वनिरुक्तिः

अथ स्वसमानाधिकरणस्वसमानकालीनात्यन्ताभावाप्रतियोगित्वं सत्वं घटकालीनघटाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं च पटादौ प्रसिद्धमिति चेत् तर्हि

---

कालीनात्यन्ताभावाप्रतियोगित्वं वा प्रामाणिकत्वं वा अर्थक्रियाकारित्वं वेत्यभिप्रेत्याद्यं निराकरोति—सत्ताजातिरिति । निरस्तमिति । सामान्यादेरसत्त्वप्रसंगादित्यर्थः । द्वितीयमुत्थापयति—अबाध्यत्वमिति । किमबाध्यत्वमखण्डधर्मः उत बाध्यत्वाभावः ? नाद्यः पदार्थमात्रवृत्त्यखण्डधर्मायोगात्तत्र मानाभावाच्चेत्यभिप्रेत्य द्वितीयं प्रत्याह—किं तदिति । किं शब्दसूचितान्विकल्पानेव दर्शयति—भ्रांतीत्यादिना । शुक्त्यादेरिति । तस्य'इदं रजत'-मित्यादिभ्रमे नेदं रजतमित्यादिबाधज्ञाने चेदमाकारेण विषयत्वादन्यथाख्यातिमते देशान्तरादौ सतो रजतादेस्तदुभयविषयत्वाभ्युपगमाद्बाध्यत्वेन सत्त्वायोगादसत्त्वापात इत्यर्थः । जडमात्र इति । प्रमेयत्वादेरपि प्रमात्वादिरूपेण प्रमीयमाणात्यन्ताभावप्रतियोगित्वादिति भावः । तदप्रसिद्धेरिति ।

परैस्तत्प्रागभावाश्रये तदुपादाते तदत्यन्ताभावानभ्युपगमात् क्वापि तत्प्रतियोगित्वरूपबाध्यत्वासिद्धेस्तदभावात् सत्वासिद्धिरिति भावः । संयोगादावुक्ताभावप्रतियोगित्वमाशंक्य तर्हि तत्र तदभावरूपसत्वायोगादसत्वापात इत्यभिप्रेत्याह—संयोगादेरिति । असंभवादिति । संयोगादेरपि स्वविशिष्टतया प्रमीयमाणप्रदेशे तत्कालेऽत्यन्ताभावाभावादितरथा तस्यासत्वापातादिति भावः ।—नास्तीत्युक्तमिति । असत्वस्य सत्वे तद्धर्मिणोऽपि सत्त्वापातेनोक्तलक्षणासत्त्वायोगात्तस्यासत्त्वे च तदभावरूपसत्वासिद्धिरित्यादियुक्तिभिरसत्वं नाम न किंचिदित्यनिर्वचनीयवाद एवोक्तमित्यर्थः । द्वितीयकल्पनिरासमुपसंहरति—तस्मादिति ।

निरधिकरणात्मादौ सत्त्वं न स्यात्। प्रमेयत्वं घटादिधर्मः तच्च प्रमात्वमिति मते तत्राभावाच्च। तदधिकरणे घटे तदत्यन्ताभावस्य सत्वात्। प्रमात्वं घटे नास्तीत्यबाधितानुभवात्।

न च परंपरासंबन्धविशिष्टप्रमात्वाभावस्तत्र नास्तीति वाच्यं तथापि त्वदुक्तसत्वाभावात्, तवापि घटादेस्तादृशात्यन्ताभावप्रतियोगित्वस्यावश्यकत्वेन तत्सत्वानुपपत्तेश्च। सर्वस्यापि परमते काले स्वाभावसमानाधिकरणत्वेनासंभवाच्च।

न च कालादन्यत्र स्वसमानाधिकरणत्व विवक्षितं कालपरिमाणादेस्तदभावेनासत्वप्रसङ्गात्। नापि प्रामाणिकत्वं सत्वं; यदि प्रमात्वं सदर्थकज्ञानत्वं,

---

तृतीयमुत्थापयति—अथेति। प्रतियोग्यप्रसिद्ध्या तदभावरूपसत्वासिद्धिमाशंक्याह—घटकालीनेति। पटादौ प्रसिद्धमिति। ततश्च घटे तदभावः सत्वं, एवं पटाधिकरणनिष्ठाभावप्रतियोगित्वं घटे प्रसिद्धं तदभावश्च पटे सत्वमिति सर्वत्र सत्त्वसिद्धिरिति भावः। परमते विभुद्रव्याणां निरधिकरणत्वात् प्रतियोग्यप्रसिद्धेः उक्तसत्वासिद्धिरिति दूषयति—तर्हीति। प्रमात्वमेव सर्वत्र स्वरूपसंबन्धेन वर्तमानं प्रमेयत्वमिति न सर्वत्र सत्त्वसिद्धिरित्याह—प्रमेयत्वमिति। प्रमात्वं हि स्वाश्रयप्रमासंबन्धद्वारा घटादौ वर्तते। तत्संबन्धविशिष्टतया न तत्र तदभावः।

किन्तु समवायितयैवेत्याशंक्य तथापि स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वान्न तदभावरूपसत्वमित्याह—न च परंपरेत्यादिना।

न च यद्यत्र येन संबन्धेन वर्तते तत्र तत्संबन्धविशिष्टप्रतियोगिकाभावो विवक्षित इति नोक्तदोष इति वाच्यम्। प्रमात्वस्य स्वाश्रयातिरिक्तसंबन्धस्य घटादावभावात् तदभावस्यापि स्वरूपेणैव घटादावनुभवात्तत्र परंपरासंबन्धेनापि प्रमात्वाभाव आवश्यक इति नोक्तदोषनिस्तार इति भावः।

किञ्च घटवत्यपि भूतले तत्काले तदभावाभावे तदपसरणानन्तरं तदभावप्रमाऽयोगात् तत्कालेऽपि तत्र तदभाव आवश्यकः। ततश्च घटादेरुक्तलक्षणकसत्वायोगादसत्वापात इत्याह—तवापीति।

किञ्च परमते सर्वभावानां स्वसमानकाले स्वाश्रयकालनिष्ठाभावप्रतियोगित्वात् सत्वायोग इत्याह—सर्वस्यापीति।

लक्षणे स्वसमानाधिकरणपदेन कालातिरिक्ताधिकरणस्य विवक्षितत्वान्नोक्तदोष इत्याशंक्य तथात्वे कालमात्रनिष्ठधर्मस्य कालातिरिक्ताधिकरणाभावेन तत्र लक्षणाव्याप्तिरित्याह—न च कालादिति।

चतुर्थमपवदति—नापीति। किं प्रामाणिकत्वं नाम प्रमाविषयत्वं तद्योग्यत्वं वोभयथापि किं प्रमात्वं सदर्थज्ञानत्वं तद्वति तद्विशिष्टज्ञानत्वं वाऽबाधितार्थज्ञानत्वं वा दुष्का-

तर्ह्यात्माश्रयः।

अथ यत्र यद्वर्तते तत्र तज्ज्ञानत्वं तर्हि शुक्तिरजतस्यापि सत्वापत्तिः तादृशं सत्वं च प्रपञ्चस्य न निवार्यते। नाप्यबाधितार्थकज्ञानत्वं बाध्यत्वस्य दुर्निरूपत्वेन तस्य निरस्तत्वात्।

न च निर्दुष्टकरणजन्यं ज्ञानं प्रमा तद्विषयता सत्वं; प्रमाविरहकालेऽसत्त्वप्रसङ्गात्। तदापीश्वरप्रमाऽस्तीति चेत् न; तस्य निर्दुष्टकरणाजन्यत्वात् शुक्तिरूप्यज्ञानस्यापि प्रपञ्चज्ञानवद्दोषाजन्यत्वाच्च।

न च प्रमाविषयत्वयोग्यता सत्वम् तन्निरूपकाभावात्। पदार्थत्वादेरसदन्यत्वस्य वा शुक्तिरूप्यादौ सत्वात्।

न च तदभाववति तद्वैशिष्ट्याविषयं ज्ञानं प्रमा तद्विषयः सत्य इति वाच्यं। पराभिमतासतस्तत्सत्वात्। प्रमेयमिति ज्ञाने तदभावविशिष्टज्ञानासंभवेन प्रतियोग्यभावाच्च एतस्मिन् प्रमाणाभावाच्च। सद्बुद्धेरपि शुक्तिरजतादेरिवोपपत्तेः

---

रणाजन्यत्वं वा तदभाववति तद्वैशिष्ट्याविषयज्ञानत्वं वेत्यभिप्रेत्याद्यमनूद्य निराकरोति—यदीति। आत्माश्रय इति। अर्थसत्वे सिद्ध एव सदर्थविषयज्ञानविषयत्वसिद्धिरित्यर्थः।

द्वितीयमनूद्य निराकरोति—अथेत्यादिना। अबाध्यत्वं सत्वमित्यत्रोक्तविकल्पदूषणानामत्रापि प्रसरान्न तृतीयोऽपीत्याह—नाप्यबाधितेति।

चतुर्थे विकल्पे प्रमाविषयत्वपक्षं प्रथमं निराकरोति—न च निर्दुष्टेत्यादिना। असत्त्वप्रसंगादिति। विषयत्वस्य ज्ञानघटिततया तत्समानकालीनत्वादिति भावः। ईश्वरप्रमाविषयत्वस्य यावद्द्रव्यभावित्वान्नोक्तदोष इत्याशंक्य तस्यनित्यतया निर्दुष्टकरणजन्यत्वाभावान्न प्रमात्वमित्याह—तदापीत्यादिना। निर्दुष्टकरणजन्यपदेन दोषाजन्यत्वस्य विवक्षितत्वादीश्वरज्ञानमपि प्रमैवेत्याशंक्य तर्हि मिथ्यारजतस्यापि नित्यसाक्षिवेद्यत्वादतिप्रसंग इत्याह—शुक्तिरूप्येति।

निर्दुष्टकरणजन्यज्ञानविषयत्वस्य कादाचित्कत्वेऽपि तद्योग्यताया यावद्द्रव्यभावित्वान्नोक्तदोष इति द्वितीयं पक्षमाशंक्य योग्यतावच्छेदकानिरूपणात्प्रमैवासिद्धेत्याह—न च प्रमेति।

सम्भावितावच्छेदकं दूषयति—पदार्थत्वादेरिति।

पञ्चमं निरस्यति—न च तदभाववतीति। असतस्तत्सत्वादिति। नवीनाभिमतबन्ध्यापुत्रादेः स्वाभाववति स्ववैशिष्ट्याविषयज्ञानविषयत्वात् सत्वापात इत्यर्थः। प्रमेयत्वाभावस्य कुत्राप्यभावात्तद्विशिष्टप्रमायां प्रतियोग्यप्रसिद्ध्याऽव्याप्तेश्चेत्याह—प्रमेयमिति। किं च प्रपञ्चज्ञानस्यापि तदभाववति तद्वैशिष्ट्याविषयत्वे न किञ्चिन्मानमस्ति विद्यमानविषयत्वस्य शुक्तिरजतज्ञानवत्तदभाववति तद्विशिष्टविषयत्वेऽप्युपपत्ते-

नाप्यर्थक्रियाकारित्वं सत्वं तदभावकालेऽसत्वप्रसंगात्। परमाणुपरिमाणादेरसत्वप्रसङ्गाच्च। अनिर्वचनीयेनार्थक्रियोपपत्तेश्च।

दृग्दृश्यसंबन्धानुपपत्त्या मिथ्यात्वम्

एवं दृश्यत्वानुपपत्तिश्च। ज्ञानज्ञेययोः संयोगादिसंबन्धाभावात्। स्वरूपसंबन्धोऽस्तीति चेत्। न तावत् तस्य स्वरूपाद्भेदः, निरूपयितुमशक्यत्वात्।

यत्तु संबन्धान्तरमन्तरा विशिष्टप्रतीतिविषयत्वमिति। तन्न। तस्य प्रतीत्यन्तरविषयत्वे तस्यापि प्रतीत्यन्तरापेक्षायामेकमपि न सिद्ध्येत्। स्वस्य स्वविषयत्वं चाद्यापि दुर्निरूपं स्वस्य स्वविषयत्वानुपपत्तेश्च। स्वरूपसंबन्धनिरूपणात् पूर्वं विशिष्टप्रत्ययत्वासिद्धेश्च।

---

रित्यभिप्रेत्याह—एतस्मिन्निति। प्रपञ्चस्य रजततुल्यत्वे कथं सत्वेनानुभव इत्याशंक्य सोऽपि तद्वदेवाधिष्ठानसत्तासंसर्गादुपपद्यत इत्याह—सद्बुद्धेरपीति। पञ्चमं निराकरोति—नाप्यर्थक्रियेति। तदभावकाल इति।

न च तदापि तद्योग्यताऽस्तीति वाच्यम् तथा सति रजतादेरपि सत्वापातात्। किञ्च पारिमाण्डल्यपरममहत्वादेः परैरप्यर्थक्रियायोग्यताया अप्यनभ्युपगमादसत्वापात इत्याह-परमाण्विति। अनिर्वचनीयेनाप्यर्थक्रियोपपादनान्नैतत्सत्वमित्याह—अनिर्वचनीयेति।

हेतूच्छित्तिरपि विपक्षे बाधिकेत्याह—एवमिति। ज्ञानेन घटादेः संबन्धविशेषाभावे कदाचित्कस्यचित् ज्ञेयत्वायोगात् संबन्धविशेषो वाच्यः।

न च ज्ञाने विषयाणामध्यासं विना विशेषसंबन्धसंभवः। तत्र पराभिमतसंबन्धानामसंभवादिति भावः। परमते किं ज्ञानज्ञेययोः संयोगः संबन्ध उत समवायः स्वरूपसंबन्धो वा? नाद्यः ज्ञानस्य गुणत्वात्। न द्वितीयः आत्मगुणस्य ज्ञानस्य घटादौ समवायायोगादित्याह—ज्ञानज्ञेययोरिति। तृतीयं शंकते—स्वरूपेति। स्वरूपसंबन्धः किं भिन्न अभिन्नो वा? नाद्यस्तावद्घटत इत्याह—न तावदिति। संबन्धिभिन्नः स किं जन्य उताजन्यः? आद्ये गुणादिष्वसंभवः तेषां जन्यधर्मानाश्रयत्वान्न द्वितीयः कादाचित्कसंबन्धिद्वयाभावकाले आश्रयाभावेन तत्परतंत्रसंबन्धसत्त्वायोगात्तस्यापि ज्ञेयत्वसिद्धये संबन्धान्तरमित्यनवस्थापाताच्चेति भावः।

परोक्तं तल्लक्षणमपि दूषयितुमनुवदति—यत्त्विति। विशिष्टप्रत्ययः किं तत्संबन्धगोचरज्ञानादतिरिक्त उतानतिरिक्तः?

आद्ये त्वस्य ज्ञेयेन संबन्धार्थं विशिष्टप्रत्ययान्तरमावश्यकमित्यनवस्था मूलक्षयकरी स्यादित्याह—तस्येति। ज्ञाने स्वविषयत्वनिराकरणान्न द्वितीयोऽपीत्याह—स्वस्येति। विशिष्टप्रत्ययविषयत्वमेव संबन्धः। अतो नोक्तानवस्थेत्याशंक्याह—स्वरूपेति। ज्ञानज्ञेययोः संबंधे सिद्धे तद्विषयकविशिष्टप्रत्ययसिद्धिः तत्सिद्धौ च तद्योग्यतारूपसंबन्ध-

अस्तु संबन्धिद्वयमात्रमिति चेत् तर्हि घटज्ञाने विश्वमेव प्रकाशेत अविशेषात्। न च प्रतीयमानघटस्वरूपमेव संबन्धः। प्रतीयमानत्वस्यैवानिरूपणात्।

न च घटस्वरूपं संबन्धः घटज्ञाने घटस्याविषयत्वप्रसङ्गात्। न च घटज्ञाने घटस्वरूपं संबन्धः घटज्ञानत्वस्यैव संबन्धं विना दुर्निरूपत्वात्। तस्माज्ज्ञाप्रयोजको हेतुः। एवं जडत्वादिहेतवोऽपि द्रष्टव्याः।

न च दोषजन्यज्ञानविषयत्वमुपाधिः। दृष्टान्ते तदभावस्योक्तत्वात्। पक्षे तत्सत्वाच्च। नापि बाधितत्वमुपाधिः, पक्षेपि तत्सत्वात्। अत एव न भ्रान्तिविषयत्वमपि। नाप्यर्थक्रियाऽयोग्यत्वम्, अप्रयोजकतया साध्याव्यापकत्वात्। एवमन्येऽप्युपाधयो निराकार्याः।

न च प्रपंचमिथ्यात्वे तद्विषयप्रमाणानामप्रामाण्यापत्तिर्बाधिका। यावद्बाधमर्थक्रियासमर्थवस्तुविषयतया व्यावहारिकप्रामाण्यानपायात्। तत्वावेदकप्रामाण्यस्य ब्रह्मप्रमाणातिरिक्तेऽभावात्। घटादिविषयप्रमाणं तत्त्वावेदकं न भवति जडविषयत्वात् संमतवत्। घटादीनां तत्त्वं विनानुपपत्त्यभावात् निषेधश्रुतिमुख्यार्थत्वाय तस्यैव कल्प्यत्वात्।

---

सिद्धिरिति परस्पराश्रय इत्यर्थः।

अभेदपक्षं शंकते—अस्त्विति। अत्रापि किं घटादिस्वरूपमात्रं संबन्धः उत प्रतीयमानस्वरूपं घटस्वरूपमेव वा? तद्ज्ञाने तत्स्वरूपं वा? न सर्वथापीत्याह—तर्हीत्यादिना। घटज्ञानत्वस्यैवेति घटस्य ज्ञानं घटज्ञानमिति षष्ठ्यर्थसंबन्धाभावे तद्ज्ञानत्वायोगादित्यर्थः। विपक्षे बाधकतर्कनिरूपणफलमाह—तस्मादिति। उक्तसाध्य एवाचेतनत्वपरिच्छिन्नत्वसविशेषत्वादिहेतवः प्रयोक्तव्या इत्याह—एवमिति। अत्र संभावितोपाधिं निराकरोति—न च दोषेत्यादिना। तदभावस्येति। रजतज्ञानस्य साक्षिमात्रतया दोषाजन्यत्वस्येत्यर्थः। प्रपञ्चस्याप्यविद्यादोषजन्यत्वेन तत्रोपाधेः सत्वात् न तस्य साध्यपरिहारहेतुतेत्यभिप्रेत्याह—पक्ष इति। अप्रयोजकतयेति। मिथ्यात्वेऽप्यविद्यातिरिक्तदोषाजन्यत्वतज्जन्यत्वाभ्यामेवार्थक्रियातदभावोपपत्तेरर्थक्रियाऽयोग्यत्वं न मिथ्यात्वव्यापकमित्यर्थः। अविद्यातिरिक्तदोषजन्यत्वावस्थाज्ञानकार्यत्वबाधकज्ञाननिवर्त्यत्वाद्युपाधयोऽप्ययोजकत्वान्निरसनीया इत्याह—एवमिति। उत्तरग्रन्थः स्पष्टार्थः।

प्रपञ्चस्य मिथ्यात्वमुपश्रुत्य तदसहमानोऽर्वाचीनः प्रलपतीत्याह—अत्रेति। व्यभिचारादिति। अद्वैतज्ञानासिद्धेरप्युपलक्षणम्। अनुमानवैयर्थ्यादिति। मिथ्यात्वस्यादृश्यतयाऽनुमितिं प्रत्यविषयत्वादस्य च तद्विषयत्वायोगादित्यर्थः। सिद्धसाधनमिति। प्रपञ्चस्य सत्यत्वेऽप्यसत्यमिथ्यात्वमविरुद्धमित्यर्थः। प्रपञ्चमिथ्यात्वस्यासत्यत्वेऽपि न

मिथ्यात्वमिथ्यात्वनिरूपणम्

अत्र नवीनः नन्विदं मिथ्यात्वं सत्यं मिथ्या वा ? नाद्यः, दृश्यत्वहेतोस्तत्र व्यभिचारात् । तस्यादृश्यत्वेऽनुमानवैयर्थ्यात् । अन्त्ये सिद्धसाधनम् ।

ननु मिथ्यात्वमपि मिथ्यैव । न चैवं प्रपञ्चस्य सत्वापत्तिः धर्मिणो ह्यमिथ्यात्वे धर्ममिथ्यात्वं स्वविरोधिसत्यत्वं गमयेदिति चेत् न धर्मिसत्ताप्रतिकूलस्य मिथ्यात्वस्य मिथ्यात्वे धर्मिणः सत्यत्वात् । धर्मिणो मिथ्यात्वेन धर्मस्य मिथ्यात्वे शुक्तिरजतादिनिष्ठहेतोरपि प्रातिभासिकतापत्त्या मिथ्यात्वमत्यन्तमप्रामाणिकं च स्यात् ।

न च मिथ्यात्वं प्रपञ्चसमसत्ताकमिति वाच्यम् मिथ्यात्वस्य व्यावहारिकत्वेऽप्रतिभासिकस्यानपोदितस्वतः प्रामाण्यप्रत्यक्षादिसिद्धस्य प्रपञ्चस्य पारमार्थिकत्वापत्तेः प्रातिभासिकत्वे च मिथ्यात्वस्य धर्मिणस्तद्विपरीततानियमात् तयोस्तुल्यत्वायोगात् ।

दृश्यत्वहेतोः निर्वचने पूर्वपक्षः

दृश्यत्वमपि वृत्तिव्याप्यत्वं फलव्याप्यत्वं साधारणं वा स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिर्वा ? नाद्यः ब्रह्मणि व्यभिचारात् । न च विपक्षे

---

प्रपञ्चसत्यत्वं द्वैतमात्रस्य मिथ्यात्वसाधकानुमानादिना प्रपञ्चस्यापि मिथ्यात्वसिद्धेरिति सिद्धान्ती शंकते—ननु मिथ्यात्वमित्यादिना । मिथ्यात्वस्यासत्यत्वे तद्धर्मिप्रपञ्चस्य सत्यतावश्यंभावात् मिथ्यात्वं दुःसाधमित्यभिप्रेत्याह—न धर्मीति । धर्ममिथ्यात्वे धर्मिमिथ्यात्वमनुकूलमेव ततश्च मिथ्यात्वस्यासत्यत्वे प्रपञ्चासत्यत्वमनुकूलमेवेत्याशंक्य तर्हि धर्मिणः प्रातिभासिकत्वे च धर्मस्य तथात्वापत्त्या दृश्यत्वस्य वाष्पधूमवन्न प्रमापकता स्यादित्याह—धर्मिण इति ।

ननु मिथ्यात्वं धर्मिसमानसत्ताकमेव । ततश्च तस्य मिथ्यात्वेऽपि न प्रपञ्चसत्यत्वमिति नेत्याह—नचेति । किं प्रपञ्चमिथ्यात्वं व्यावहारिकमुत प्रातिभासिकमाद्येऽध्यस्तधर्माश्रयस्य तद्वैपरीत्यनियमेन प्रातिभासिकत्वानभ्युपगमात्, प्रत्यक्षसिद्धप्रपञ्चस्य पारमार्थिकत्वापातात् मिथ्यात्वस्य धर्मिसमसत्ताकता न सिद्ध्येदित्याह—मिथ्यात्वस्येति । द्वितीयेऽपि न धर्मिणोस्तुल्यसत्ताकतासिद्धिरित्याह—प्रातिभासिकत्व इति।

हेतुरपि दुर्निरूप इत्याह--दृश्यत्वमपीति । साधारणमिति । ज्ञानविषयत्वमात्रमित्यर्थः ।

ननु महाह्रदादेर्विपक्षस्य धूमवत्त्वेऽपि न धूमस्य वह्निव्यभिचारिता तत्कस्य हेतोः तत्र धूमस्य धर्मिसमसत्ताकत्वाभावादेव सद्रूपे ब्रह्मणि वृत्तिव्याप्यत्वस्य कल्पितत्वेन तत्र तस्य न व्यभिचार इत्याशंक्य प्रपंचमिथ्यात्वसिद्धेः पूर्वं दृश्यत्वस्य कल्पितत्वासिद्धेर्मैवमित्याह--न च विपक्ष इति ।

धर्मिसमसत्त्वस्य हेतोर्वृत्तौ व्यभिचारः। अन्यथाऽतिप्रसङ्गात् दृश्यत्वं च व्यावहारिकं न परमार्थब्रह्मसमसत्ताकमिति वाच्यम्। व्यावहारिकादिविभागस्य अद्याप्यसिद्धेः।

किं चैवं पक्षे धर्मिसमसत्त्वसाध्यहेत्वभावे बाधोऽसिद्धिश्चेति स्वप्रकाशत्वानुमानमपि न स्यात्। वृत्तिविषयत्वस्य दृष्टान्तेऽभावाच्च। नापि द्वितीयः फलं हि मद्रीत्या व्यवहारः भवद्रीत्या ज्ञातता वा त्वद्रीत्या वृत्त्यभिव्यक्तविषयाधिष्ठानचैतन्यं वा ? नाद्यः आदानादेर्गगनादावभावात् अभिलापस्य चात्मनि भावात्। न द्वितीयः। तस्य मम घटादौ अतीतादौ चाभावात्।

न तृतीयः। अतीतादावसिद्धेः अविद्यादौ तदभावाच्च। नापि साधारणमिति तृतीयः। उक्तदोषात्।

न चतुर्थः आत्मनोऽपि स्वप्रकाशत्वादिविशिष्टव्यवहारे तदपेक्षानियमात् स्वातिरिक्तसंविदपेक्षा नास्तीति चेत् न।

वृत्त्यन्यसंविदपेक्षायास्तव नित्यातीन्द्रिये मम घटादावप्यभावात्। एतेन व्यवहारे स्वावच्छिन्नसंविदपेक्षत्वं दृश्यत्वमिति निरस्तम्। नाप्यस्वप्रकाशत्वम्

---

किञ्च हेतोः विपक्षे धर्मिसमसत्ताकत्वस्य व्यभिचारप्रतोजकत्वेऽसिद्धिबाधयोः पक्षे हेतुसाध्ययोर्धर्मिसमसत्ताकत्वाभावः प्रयोजको वाच्यः। इतरथा महाह्लदादावपि कल्पितहेतुसाध्ययोस्तव मते संभवात्तत्र तदनुमानेऽसिद्ध्याद्यभावप्रसंगात्। तथा च ब्रह्मण्यनुभूतित्वादिहेतोः स्वप्रकाशत्वसाध्यस्य च धर्मिसमसत्ताकत्वाभावादसिद्धिबाधौ स्यातामित्याह—किं चैवमिति। शुक्तिरजते वृत्तिगोचरत्वानभ्युपगमात् साधनवैकल्यं चेत्याह—वृत्तीति। व्यवहारः फलमिति पक्षे किमुपादानादिर्व्यवहारपदार्थः अभिलापो वा ? आद्ये भागासिद्धिः।

द्वितीये व्यभिचार इत्यभिप्रेत्याह—आदानादेरिति। मम घटादाविति। तथा च मन्मते स्वरूपासिद्धिः भवन्मते तु भागासिद्धिरिति भावः।

अविद्यादाविति। अविद्यान्तः करणप्रत्यक्षतद्धर्माणां केवलसाक्षिभास्यतया वृत्त्यभिव्यक्तचिद्भास्यत्वाभावादित्यर्थः। उक्तदोषादिति। ब्रह्मणि व्यभिचारादिदोषप्रसंगादित्यर्थः। तदपेक्षानियमादिति। स्वातिरिक्तवृत्तिरूपसंविदपेक्षत्वेन तत्र व्यभिचारादित्यर्थः। वृत्तेरसंवित्त्वात्तदतिरिक्तसंविदपेक्षत्वमेव हेतुस्ततश्च नोक्तदोष इति शंकते—स्वातिरिक्तेति। भागासिद्ध्यन्यतरासिद्धिभ्यां दूषयति—न वृत्त्यन्येति। अतीन्द्रियादिव्यवहारे वृत्त्यतिरिक्तसंविदपेक्षाभावादेवान्यदप्ययुक्तमित्याह—एतेनेति। एवं दृश्यत्वहेतुं निराकृत्यान्यानपि सिद्धान्त्यभिमतानस्वप्रकाशजडपरिच्छिन्नत्वहेतून् क्रमेण निराकरोति—

संविद्वेद्यत्वलक्षणस्य तस्य ब्रह्मण्यपि सत्वात् जडत्वमप्यज्ञातृत्वम् अज्ञानत्वं वा अस्वप्रकाशत्वं वा अनात्मत्वं वा पराभिप्रतं वा ? नाद्यः त्वन्मते पक्षैकदेशान्तःकरणस्य ज्ञातृत्वात् शुद्धात्मनोऽप्यज्ञातृत्वाच्च । न द्वितीयः वृत्तिज्ञाने भागासिद्धेः न तृतीयः निरस्तत्वात् ।

चतुर्थेऽपि न तावदात्मत्वं जातिरूपम् । एकत्वात्तस्य । नाप्यहंत्वं तदभावस्याहंकारे सिद्धेः । नापि पराभिप्रतं, मयाऽज्ञातृत्वं जडत्वमित्यङ्गीकारात परिच्छिन्नत्वमपि देशतः कालतः वस्तुतो वा ?, नाद्यद्वितीयौ, देशकालादिष्वसिद्धेः अवकाशरूपदेशस्य कालस्य चापरिच्छिन्नत्वेन धर्मिग्राहिणा आकाशवत्सर्वगतश्च नित्यः सदेव सोम्येदमग्र आसीदित्यादिश्रुत्या च सिद्धत्वात् देशकालं विनाऽऽत्मास्तीत्यस्य व्याहतत्वात् । देशः सर्वत्रास्ति कालः सर्वदास्ति पूर्वः काल इत्याद्यबाधितप्रतीत्या तयोः स्वनिर्वाहकतया प्रमेयत्वादिवत्स्वसंबंधसंभवाच्च। अज्ञानस्य च देशकालोपादानत्वेन सर्वगतब्रह्मावरणत्वेन परिच्छिन्नत्वायोगाच्च । किञ्च कालादिपरिच्छिन्नत्वं न तावदेककालादिमात्रे सत्वं रूप्यादौ ममासिद्धेः । नापि कालान्तरा-

---

नापीत्यादिना । ब्रह्मण्यपि सत्त्वादिति । ब्रह्मणः संविदगोचरत्वे व्यवहारगोचरत्वाद्ययोगादिति भावः । अज्ञानत्वं वेति ज्ञानान्यत्वं वेत्यर्थः। अन्तः करणस्य ज्ञातृत्वादिति । ततश्च भागासिद्धिरिति भावः । शुद्धात्मन इति । ज्ञातृत्वं हि परिणामित्वं शुद्धात्मनस्तदयोगेनाज्ञातृत्वाद् व्यभिचार इत्यर्थः ।

अनात्मत्वं जडत्वमिति कल्पे आत्मत्वस्य दुर्निरूपत्वात् तदभावरूपस्य न हेतुतेत्यभिप्रेत्याह—चतुर्थ इति । अज्ञातृत्वं जडत्वमित्यङ्गीकारादिति । तथा चाद्यपक्षोक्त एव दोष इत्यर्थः । भूतलादिदेशस्य कथमपरिच्छिन्नत्वमित्याशंक्यावकाश एव देशः तस्य कालस्य च धर्मिग्राहकानुमानश्रुतिभ्यामपरिछिन्नत्वमभ्युपेयमित्याह—अवकाशेत्यादिना । अभूदासीदिति सृष्टेः पूर्वमेव कालसद्भावावगमान्न तस्य कालपरिच्छेद इति भावः ।

किं च देशकालसंबन्धस्यैवास्तिपदार्थत्वात्तयोः परिच्छिन्नत्वे आत्मनः सर्वत्र सर्वदास्तिता न स्यादित्याह—देशकालमिति ।

कथं तर्हि देशकालयोर्देशकालान्तराभावाद् देशोऽस्तीत्यादिव्यवहार इत्याशंक्य स्वस्य स्वेनैव संबन्धात् तदुपपत्तिरित्यभिप्रेत्याभेदेऽपि संबन्धमुपपादयति—देशः सर्वत्रेति । देशतः कालतो वा परिच्छिन्नत्वमज्ञाने भागासिद्धं चेत्याह—अज्ञानस्येति । ममासिद्धेरिति । मम मते रूप्यस्यासत्त्वात् । ततश्च साधनवैकल्पमिति भावः ।

कालान्तरादौ कदाप्यसत्वेन स्वकालादावपि सत्त्वाभावसाधने स्वकालादौ कदाचित्सत्वेन कालान्तरादावपि सत्वं किं न स्यात् ।

दावसत्वं स्वकालादावसत्वसाधने प्रमाणविरोधप्रसङ्गेन स्वकालादौ सत्वेन कालान्तरेऽपि सत्वसाधनप्रसङ्गात् ।

न तृतीयः तद्भिन्नत्वं तस्य च तात्विकस्य प्रपञ्चेऽप्यभावात् कल्पितस्यात्मन्यपि भावात् । सत्वं च त्वदभिमतं मिथ्यात्वाभावो वाऽसद्विलक्षणत्वे सत्यनारोपितत्वं वा अस्तित्वप्रकारकप्रमां प्रति कदाचिद्विषयत्वं वा कालसंबन्धित्वं वा अस्मदभिमतासत्वाभावो वा भविष्यति असद्विलक्षणत्वादिना सत्प्रतिपक्षत्वं सन् घट इत्याद्यध्यक्षवाधिताश्च हेतव इति ।

मिथ्यात्वस्य व्यावहारिकत्वम्

उच्यते । वियदादिसमानसत्त्वभावं मित्यात्वं साध्यम् तच्च धर्मिणः सत्यत्वविरुद्धम् ।

न च कल्पितं सप्रपञ्चत्वं ब्रह्मणो यथा निष्प्रपञ्चत्वविरोधि न भवति एवं मिथ्यात्वमपि न सत्यत्वविरोधीति वाच्यम् । तस्य धर्मिसमसत्ताकत्वाभावात् मिथ्यात्वास्य च तथात्वात् अन्यथा धर्मिसमसत्वमिथ्यात्वस्यैवानुपपत्तेः । अत एव घटादेर्घटत्वाद्यघटत्वादिविरोधि ।

घटत्वादिकं सत्यमिति चेत् न, मम तदसिद्धेः कल्पितत्वमपि ममासिद्धि-

---

न च स्वकाले सत्वासिद्धिस्तदा प्रमाणविरोधादसत्वाभावे सत्त्वस्यावश्यकत्वादित्याह—स्वकालादाविति ।

वस्तुतः परिच्छिन्नमिति कल्पं निराकरोति—न तृतीय इति । प्रपञ्चे सत्वस्यानिरूपणात् मिथ्यात्वमेव परिशिष्यत्र इत्याशंक्य हेत्वसिद्धिमाह – सत्वं चेति । अस्मदभिमतेति । सर्वदेशीयसर्वकालीनात्यन्ताभावप्रतियोगित्वरूपासत्वाभाव इत्यर्थः । उक्तदोषाणामाभासत्वं प्रतिजानीते—उच्यत इति । तत्र यदुक्तं मिथ्यात्वं सत्यं मिथ्या वेत्यादि तत्राह—वियदादीति । तावता कथं वियदादौ सत्वाभावसिद्धिरित्यत आह—तच्चेति । धर्माणां हि धर्मिसमसत्ताकत्वमेव धर्मिणि स्वविरुद्धधर्माभावे प्रयोजकं तथैव घटत्वादौ दर्शनात् । न तु सत्यत्वमपि तत्र निदर्शनाभावादिति भावः । प्रपञ्चे मिथ्यात्वस्य कल्पितत्वे तस्य ब्रह्मणि सप्रपञ्चत्ववत्स्वाश्रये न स्वाभावविरोधितेत्याशंक्य दृष्टान्तवैषम्येण परिहरति—न च कल्पितमित्यादिना । धर्मिसमसत्ताकमिथ्यात्वस्य धर्मिपारमार्थिकत्वाविरोधित्वे वाधकमाह—अन्यथेति । धर्मिणः पारमार्थिकत्वे तत्समसत्ताकमिथ्यात्वस्यापि पारमार्थिकत्वं स्यात्तच्च विरुद्धमिति तयोस्तुल्यसत्ताकत्वमुभयोरप्यनिर्वचनीयत्वं विनाऽनुपपन्नमिति भावः धर्मिसमसत्ताकत्वमेव धर्मिणि तद्विरुद्धाभावप्रयोजकमित्यन्यत्राप्युपपादयति—अत एवेति ।

घटत्वादेः सत्यत्वस्यैव लाघवात् अघटत्वादिविरोधितेति शङ्कते – घटत्वादीति । घटत्वादिसत्यत्वस्य मतद्वयासम्मतत्वात् न लाघवावतार इत्यभिप्रेत्याह – न ममेति ।

मिति चेत्। तर्हि उभयाविरुद्धं धर्मिसमसत्त्वमेव धर्मस्य तद्विरुद्धधर्मराहित्य-प्रयोजकम्। अत एव मिथ्यात्वस्य कल्पितत्वे व्यावहारिकत्वप्रातीतिकत्वयोः अन्यतरत्वनियमात् प्रपञ्चः सत्य इति निरस्तम्। धर्मिसमसत्ताकस्य कल्पितस्य व्यावहारिकत्वे प्रपञ्चस्यापि तथात्वनियमात्। स्वप्रकाशत्वं स्वरूपमेव।

अथवा यो यस्य स्वाभाविको धर्मः स तत्र स्वाभावविरोधी, यथा घटस्य घटत्वं मिथ्यात्वं च प्रपञ्चस्य स्वाभाविकमिति न तत्र सत्यत्वम्।

न च कल्पितस्य स्वाभाविकत्वं नास्तीति वाच्यम् कल्पितऽत्वेपि घटत्वादेः स्वाभाविकत्वात्। यत् यद्विषयकसाक्षात्कारनिवृत्त्ययोग्यं तत् तस्य स्वाभाविक-मिति कल्पितमपि घटत्वादिमिथ्यात्वादि च स्वाभाविकमेव।

गगननीलिमापि च तत्साक्षात्कारनिवृत्तियोग्यमेव। तदाकारवृत्त्यभावात् प्रबलप्रतिबन्धाद्वा न निवर्तते।

न चैतद्व्यवस्थायां प्रमाणाभावः, घटत्वादिव्यवस्थितव्यवहारस्यैव

---

घटत्वादेः कल्पितत्वमपि मतद्वयासम्मतमिति चोदयति—कल्पितत्वमिति। तथापि धर्मि-समसत्ताकत्वस्य मतद्वयसंमतत्वात् तदेव प्रयोजकं उभयमतसाधारणमित्याह—तर्हीति। यदप्युक्तं मिथ्यात्वस्य व्यावहारिकादिरूपत्वेन प्रामाणिकप्रपञ्चस्य सत्यत्वापात इति। तदयुक्तं। प्रत्यक्षादिप्रमाणस्य अन्यथोपपत्तेरुक्तत्वात्, वक्ष्यमाणत्वाच्च। साध्यमान-धर्मिसमसत्ताकमिथ्यात्वस्य प्रपञ्चसत्यत्वेऽनुपपत्तेः उभयोरपि व्यावहारिकत्वमावश्यक-मित्यभिप्रेत्योपसंहरति—अत एवेति। नन्वेवमात्मनि स्वप्रकाशत्वादेः धर्मिसमसत्ताऽ-भावात् तस्यास्वप्रकाशत्वादिराहित्यं न सिद्ध्येदिति तत्राह—स्वप्रकाशत्वं चेति। अवेद्यस्वरूपविशेषपरिज्ञानादेव वेद्याद्व्यावृत्तिसिद्धिः। स्वरूपविशेषश्च धर्मं विनाऽपि घटत्वादाविव निरूपित एव। आत्मा स्वप्रकाश इति विशिष्टव्यवहारस्तु घट एव कल्पित घटत्वेन घट इति व्यवहारवत् स्वप्रकाश एव कल्पितधर्मनिमित्त उपपद्यते। एवं ज्ञानानन्दादिव्यवहारोऽपीति भावः। धर्माणां स्वविरोधिव्यावर्तकत्वे प्रयोजकान्तर-माह—अथ वेति।

धर्माणां कल्पितत्वमते रूप्यादिवत् स्वाभाविकत्वमेवानुपपन्नमित्याशङ्क्य कल्पितत्वाविरुद्धं स्वाभाविकत्वमाह—यद्विषयेति। रूप्यादेः शुक्त्यादिसाक्षात्कार-निवर्त्यत्वात् न तत् तस्य स्वाभाविकं घटत्वादिकं तु कल्पितत्वेऽपि न घटाद्याश्रय-ज्ञाननिवर्त्यमिति तस्य स्वाभाविकत्वमेवेत्यर्थः। तर्हि गगननीलिमचन्द्रप्रादेशिकत्वादेः स्वाश्रयसाक्षात्कारानिवर्त्यत्वात् स्वाभाविकत्वं स्यादित्याशङ्क्याह—गगनेति। तदा कारवृत्त्यभावादिति। गगनादिगोचरवृत्त्यभावादित्यर्थः। प्रतिबन्धाद्वेति। दूरस्थतादि-दोषादित्यर्थः।

स्वाश्रयज्ञानानिवर्त्यस्य स्वाभाविकत्वे मानाभावात् परिभाषामात्रमेतदित्याश-ङ्क्य तद्विशिष्ट एव लौकिकवैदिकव्यवहारदृष्टेः मैवमित्याह—न चैतदिति। एवं

**तन्मूलत्वात्। अथ वा यत्र यद्वैशिष्ट्यमबाधितं तत् तत्र स्वाभावविरोधि ननु परमार्थः तस्य घटत्वादौ ममासिद्धेः मिथ्यात्वस्य न प्रपञ्चे बाधः। अस्ति चेत् स एवोपन्यसनीयः। किमनेन साध्यविकल्पपरिश्रमेण व्यर्थेन।**

मिथ्यात्वनिरुक्तिः

**मिथ्यात्वं स्वसत्ताकाले स्वाधिकरणसंबन्ध्यत्यन्ताभावप्रतियोगीति ज्ञानं तु न प्रपञ्चे स्ववैशिष्ट्यविरोधि, मिथ्यात्वस्य प्रपञ्चधर्मत्वाभावेन तज्ज्ञानस्यैवासंभवाच्च।**

**न च शुक्तिरजतवत् तत्प्रातीतिकम्। अनुमेयस्य प्रातीतिकस्याभावात्। धर्मिसमानसत्ताकमिथ्यात्वसाध्यस्य प्रातीतिकत्वायोगाच्च।**

**ततश्च धर्मिसदृक्सत्ताकमिथ्यात्वस्य स्वाधिकरणसंबन्ध्यत्यन्ताभावप्रतियोगित्वज्ञानं प्रपञ्चे तादृशं वैशिष्ट्यं विना न संभवतीति न तद्विरोधः।**

**अविद्यातिरिक्तदोषजन्यत्वं वा तन्त्रमिति वस्तुगतिः। एवं पक्षादेरपि साधकत्वे द्रष्टव्यम्। अत एव प्रपञ्चप्रामाण्यं व्यावहारिकं अद्वैतप्रमाणं तत्त्वावेदक-**

---

चात्मनि स्वप्रकाशत्वादेः स्वाविषयकात्मसाक्षात्कारे सत्यपि अनिवृत्तेः तदपि तस्य स्वाभाविकमिति भावः।

स्वाभावव्यावर्तकत्वे धर्माणां प्रयोजकान्तरमाह—अथ वेति। अत्रापि निर्विशेषात्मनि स्वप्रकाशत्वादेः बाधेऽपि सविशेषात्मन्यबाधात् तत्र तत् स्वाभावविरोधीनि भावः। न प्रपञ्चे बाध इति। ब्रह्मसाक्षात्कारादपि प्रपञ्चेन सह ब्रह्मण्येव बाधात् सति प्रपञ्चे न तत्र बाध इत्यर्थः।

स एवोपन्यसनीय इति। घटादौ सत्त्वानुभवस्य लाघवादिनाऽधिष्ठान विषयत्वोपपादनात् प्रपञ्चे मिथ्यात्वबाधकं नास्तीति भावः।

ननु प्रपञ्चधर्मस्य मिथ्यात्वस्य मिथ्यात्वे तदत्यन्ताभावः प्रपञ्चे वक्तव्य इति न तत्र मिथ्यात्वसंभव इत्याशङ्क्य शुक्तौ रजतात्यन्ताभावस्येव तत्र मिथ्यात्वात्यन्ताभावाधिष्ठानचैतन्यात्मकस्यान्यस्य वा पारमार्थिकत्वात् न मिथ्यात्वप्रतियोगिविरोधितेत्यभिप्रेत्याह—मिथ्यात्वमिति। किञ्च प्रपञ्चे मिथ्यात्ववैशिष्ट्यस्यासत्त्वे तस्य तदधिकरणसंबन्धित्वेन तदभावो दुर्ज्ञेय इत्याह—मिथ्यात्वस्येति। अनुमानप्रमाणगम्यस्य व्यावहारिकत्वनियमादित्यर्थः। मिथ्यात्वानुमानसाध्यपर्यालोचनायामपि न तस्य प्रातिभासिकतेत्याह—धर्मिसमानेति। फलितमाह—ततश्चेति। धर्माणां स्वविरोधिव्यावर्तकत्वे दोषलेशशङ्कारहितं प्रयोजकमाह—अविद्येति। पक्षहेत्वादीनां स्वसाध्यसाधकत्वेऽपि अविद्यातिरिक्तदोषाजन्यत्वमेव मतद्वयसाधारणं प्रयोजकम् न तु सत्त्वं, सपक्षस्य तु निश्चितसाध्यवत्त्वमेव साधारणं तत्प्रयोजकमित्यभिप्रेत्याह—एवमिति।

मिति विभागः ।

**ननु प्रमाणानामपि मिथ्यात्वे कथमयं विभाग इति । न । नहि प्रामाण्यस्य तात्त्विकत्वं स्वरूपाबाधः किन्तु विषयाबाधः तच्चावास्तवस्याप्यद्वैतप्रमाणस्यास्ति । ब्रह्मणोऽबाधितत्वात् ।**

**न च कल्पितात् तत्त्वप्रमितिर्विरुद्धा कल्पितस्यापि शब्दस्य यथार्थविषयशक्तितात्पर्यज्ञाने तदुपपत्तेः अन्यथा सत्यादपि शब्दात् तत्त्वप्रमित्यनुपपत्तेः ।**

**न च यथार्थशक्तिर्वा कथं कल्पितत्वे इति वाच्यम् । कल्पितस्याप्यर्थक्रियानपायात् । पदविशेषत्वेन ह्यर्थविशेषे वृद्धव्यवहारादौ व्युत्पत्तिः । न च तत्र सत्यत्वमपेक्ष्यते तस्य द्रव्यत्वगुणत्वादिवत् अनुपयुक्तत्वात् यथा शक्ति च लक्षणेति क्व तस्य सत्यत्वमुपकरोति ।**

प्रमाणमिथ्यात्वेऽपि विषयसत्त्वोपपत्तिः

**ननु प्रमाणाधीनसत्त्वं प्रमेयं कथं प्रमाणमिथ्यात्वेऽपि सत्यं स्यादिति । तत् किं प्रमाणं प्रमेयमुत्पादयति ? तत्सत्तां प्रकाशयतीति चेत्; न, प्रकाशस्यानुदिता-**

---

द्वैतस्य मिथ्यात्वे तद्ग्राहिप्रत्यक्षादीनां कथं प्रामाण्यमित्यत आह—अत एव व्यावहारिकमिति । व्यवहारसमर्थवस्तुबोधकस्वरूपमित्यर्थः । किमुपनिषदामप्येतादृशमेव प्रामाण्यं नेत्याह—अद्वैतेति । उपनिषदामपि द्वैतमध्यपातित्वेन मिथ्यात्वात् कथं तत्त्वावेदकत्वमिति चोदयति—नन्विति । तत्त्वावेदकत्वं नाम अबाधितार्थबोधकत्वं तच्च मिथ्यात्वेऽपि न विरुध्यते । स्वप्नोपलब्धशब्दानामपि प्रमापकत्वदर्शनादित्यभिप्रेत्य परिहरति—न नहीत्यादिना । ननु कल्पितस्य प्रमापकत्वमनुपपन्नं बाष्पधूमादेस्तददर्शनात् । स्वप्नशब्दाश्च सत्या एवेति वदन्तं नवीनं प्रत्याह—न च कल्पितादिति । किं शब्दस्य प्रमापकत्वे शक्त्यादिसत्त्वं प्रयोजकं सत्यत्वं वा ? उभयमपि वा ? आद्ये न विरोध इत्याह—कल्पितस्यापीति । द्वितीये शक्तितात्पर्याद्यगोचरेऽपि प्रमा स्यात् । न च सा उपपन्नेत्याह—अन्यथेति । न तृतीयः शक्त्यादिमत्त्वे सति सत्त्वाभावापराधेन प्रमाभावादर्शनेन गौरवादिति भावः । शक्त्यादिमत्त्वमेव सत्त्वाभावेऽनुपपन्नमित्याशङ्क्याऽन्यथोपपत्तिमाह—न च यथार्थेति । व्युत्पत्तिसमये सत्त्वेनैव शब्दस्य शक्तिमत्त्वग्रहणात् । तदभावे कथं शक्तिमत्त्वमित्याशङ्क्यासिद्धो हेतुरित्याह—पदविशेषेति । नन्वेवमपि वेदान्तानां सत्त्वाभावे लक्षकत्वानुपपत्तिरिति नेत्याह—यथाशक्तिति । लक्षणायाः शक्यसंबन्धादिमात्रापेक्षत्वादिति भावः ।

मानाधीना मेयसिद्धिरित्यभ्युपगमात् मानस्य सत्त्वाभावे ब्रह्मणोऽपि सत्त्वं न सिद्ध्येदिति चोदयति—नन्विति । किं सिद्धिशब्देनोत्पत्तिर्विवक्षिता, ज्ञप्तिर्वा ? आद्यस्त्वसङ्गत इत्याह—तत्किमिति । द्वितीयमुद्भावयति—तत्सत्तामिति । किमत्र प्रकाशपदेन चित्प्रकाशः कथ्यते ? वृत्तिर्वा ? आद्ये तस्य मानजन्यत्वमयुक्तमित्याह—न प्रकाशस्येति । द्वितीयं शङ्कते—वृत्तीति । वृत्तेर्मिथ्यात्वात् प्रमाणसत्यतां विना नानुपपत्तिरित्याह—

नस्तमितात्ममात्रत्वात् । वृत्तिद्वारा संशयादि निवर्तयतीति चेत् । अस्तु नैतावता प्रमाणसत्यताऽपेक्षिता । दृश्यत्वं च शुक्तिरूप्यप्रपञ्चसाधारणं रजतत्वादिवत् प्रपञ्चसमानसत्ताकमेवेति ततो मिथ्यात्वसिद्धिः ।

प्रमात्मकानुमितौ लिङ्गसत्त्वानपेक्षा

किञ्च लिङ्गस्य सत्त्वं नानुमितिप्रमात्वेऽपेक्षितं, गगनं दिगादिव्यावृत्तं रूपित्वादिति मूढानां प्रमाददर्शनात् । दृश्यत्वमपि प्रकाशविषयत्वम् ।

न च ब्रह्मणि व्यभिचारः । तस्य स्वप्रकाशस्य चैतन्यविषयत्वे प्रमाणाभावात् । ब्रह्म जानामीत्यनुभवस्य वृत्त्यन्वयव्यतिरेकानुविधायिनो वृत्तिविषयताविषयत्वात् । वृत्तेरपि ज्ञानपदार्थत्वात् । न च तद्विषयव्यवहार एव प्रमाणम् । व्यवहारमात्रेहि प्रकाशः प्रकाशत्वेन हेतुः न तु व्यवहर्तव्यविषयप्रकाशत्वेन, गौरवात् । आत्मव्यवहारे व्यवहर्तव्यताऽभिन्नः प्रकाशः अनात्मव्यवहारे तद्विषयप्रकाशश्चहेतुः सामान्ये सामान्यस्य विशेषे विशेषस्य हेतुत्वात् ।

न चैवं अनात्मव्यवहारत्वेन तद्विषयप्रकाशजन्यत्वे जन्यतावच्छेदके गौरवम् । सामान्यकारणत्वग्रहदशायां तदनुपस्थितेः । सिद्धे तस्मिन् यत्सामान्ये

---

अस्त्विति । ननु रजतादिसाधारणदृश्यत्वे व्यावहारिकत्वस्याप्यसंभवात् कथं तस्य मिथ्यात्वसाधकतेति तत्राह—दृश्यत्वं चेति । रजतादिगतस्यापि तस्य रजतत्वादिवदविद्यातिरिक्तदोषाजन्यत्वाद्व्यावहारिकतवैति भावः । प्रातिभासिकलिङ्गस्यापि प्रमापकत्वदर्शनात् सत्त्वमपि प्रमायामकिञ्चित्करमित्याह—किञ्चेति । गगने रूपवत्त्वहेतोरसिद्धत्वात् कथं तस्य प्रमापकत्वमित्यत उक्तं—मूढानामिति । नीरूपत्वाज्ञानदशायां तदुपपत्तिरिति भावः ।

यदप्युक्तं दृश्यत्वपि वृत्तिव्याप्यत्वं वेत्यादि तत्राह—दृश्यत्व पीति ।

ब्रह्मणः चित्प्रकाशविषयत्वे किं ब्रह्म जानामीत्यनुभवो मानं, तद्व्यवहारानुपपत्तिर्वा, तद्विषयाविद्यानिवृत्त्यनुपपत्तिर्वा तत्संस्कारानुपपत्तिर्वा ? तत्राद्यमन्यथयति—ब्रह्मेति । सिद्धान्ते वृत्तेः ज्ञानत्वाभावात् कथं तद्विषयत्वं जानामीत्यनुभवस्येत्यत आह—वृत्तेरपीति । जानामीतिहि ज्ञानपदवाच्यविषयताऽनुभूयते । वृत्तिशबलस्यैव चैतन्यस्य ज्ञानपदवाच्यत्वेन वृत्तेरपि तद्वाच्यत्वात् तद्विषयत्वमात्मन्यविरुद्धमित्यर्थः । द्वितीयमपवदति—न चेति । तत्र हेतुत्वेन साक्षिविवेकोक्तन्यायं स्मारयति—व्यवहारमात्रेहीत्यादिना । व्यवहर्तव्यविषयप्रकाश इति । यथा वार्तिककारादीनां मते दोषाभावे ज्ञानसामान्य सामग्रीत एव प्रमारूपकार्यविशेषः यथा वैशेषिकादिमते अनित्यज्ञानसामग्रीत एव संस्काराभावेऽनुभवरूपकार्यविशेषः । एवं व्यवहारहेतुप्रकाशव्यवहर्तव्ययोर्भेदाभावे व्यवहारसामान्यसामग्रीत एव आत्मव्यवहारविशेषोऽपि युक्तो भवितुम् ।

किञ्चातिप्रसङ्गपरिहाराय हि ज्ञानविषयत्वव्यवहारनियामकं कल्प्यं । आत्मनश्च

**यत्सामान्यंतद्विशेषे तद्विशेष इति न्यायेनादोषत्वात् ।**

स्वस्य स्वविषयत्वानुपपत्तिः

**किञ्च विषयत्वं स्वरूपसंबन्धविशेषः । संबन्धश्च भिन्नयोरेवेत्युक्तम् । ततो न स्वयं स्वविषयः । सर्वजिज्ञासा च न स्वविषयिणीत्युक्तम् ।**

**अस्तु तर्हि सर्वत्र व्यवहारविषयत्वे वृत्तिविषयत्वमेव प्रयोजकं । न इच्छादिव्यवहारे तदभावात् । तत्र चेत् प्रकाशविषयत्वं प्रयोजकं तर्हि सामान्यकारणत्वे बाधकाभावात् अनात्मव्यवहारमात्रे तत्प्रयोजकम् । न चेच्छादिव्यवहारोऽपि प्रकाशमात्रजन्यो न तु तद्विषयप्रकाशजन्य इति वाच्यम् सामान्यकारणमात्रात् इच्छादिविशेषव्यवहारायोगात् । विषयश्च नाभिवदनव्यवहारे हेतुः प्रागभावश्च न कारणमित्युक्तम् । न चादृष्टात्सामग्रीभेदः दृष्टकारणभेदात् तद्भेदे सम्भवति तस्याभेदकत्वात् । अन्यथा कारणविशेषः क्वापि न कल्प्येत ।**

घटादिव्यवहारेवृत्तेर्हेतुतानिरूपणम्

एतेन **इच्छादिव्यवहारेऽस्तु तद्विषयः प्रकाशः कारणं, घटादिव्यवहारे तु**

---

प्रकाशमात्राधीनव्यवहारयोग्यतया तस्य तद्विषयत्वं न कल्प्यम् । अन्यथा परमते घटादीनां जन्यप्रत्यक्षगोचरत्वे तज्जनकसन्निकर्षाश्रयत्वं प्रयोजकमिति तेषामजन्यप्रत्यक्षगोचरता न स्यादिति भावः ।

यद्वा अभेदस्य स्वरूपत्वेऽपि तस्मिन् अभिन्न इति व्यवहारो घट एव घटत्ववत् अभेदाख्यः कश्चिद्धर्मः कल्पितः स एवात्मव्यवहारे विशेषकारणमस्तीति भावः ।

अनात्मव्यवहारत्वेन स्वविषयप्रकाशजन्यत्वकल्पनायां गौरवात् व्यवहारत्वमेव तदवच्छेदकमित्याशङ्क्य तद्विशेषकारणजन्यतावच्छेदके गौरवस्य सर्वत्राभ्युपगमात् न विरोध इत्यभिप्रेत्याह—न चैवमित्यादिना । किञ्च आत्मातिरिक्तप्रकाशानिरूपणात् आत्मनश्च विषयत्वासम्भवात् तद्व्यवहारे न स्वविषयप्रकाशो हेतुरित्यभिप्रेत्याह—किञ्चेति । स्वविषयिणीति । इच्छाविषयस्य ज्ञातत्वेन तद्विषयत्वायोगादित्यर्थः ।

प्रपञ्चेऽपि दृश्यत्वस्यासिद्धिं शंकते—अस्तु तर्हीति । इच्छाज्ञानादिवृत्तीनां वृत्तिविषयत्वं विनाऽपि व्यवहारदर्शनात् तत्र चित्प्रकाशविषयत्वमेव व्यवहारप्रयोजकमिति आत्मव्यवहारमात्रे तत्प्रयोजकमित्याह—नेच्छादीति । आत्मव्यवहार इवेच्छादिव्यवहारेऽपि प्रकाशमात्रमेव हेतुः । न तु तद्विषयः प्रकाशः येनान्यत्रापि तद्विषयत्वं कल्प्येत इत्याशङ्क्येच्छादिविषयविशेषव्यवहारस्य प्रकाशमात्रजन्यत्वेऽतिप्रसङ्गान्नैवमित्यभिप्रेत्याह—न चेच्छादीति । इच्छादिव्यवहारे स्वविषयः स्वप्रागभावः अदृष्टविशेषश्च विशेषहेतुः अतो विशेषव्यवहारोपपत्तिरित्यत आह—विषयश्चेत्यादिना । अदृष्टविशेषादेव कार्यविशेषोपपादने बाधकमाह—अन्यथेति । रूपाद्युपलब्धिरूपकार्यविशेषस्यादृष्टविशेषादेवोपपत्तेः चक्षुरादिविशेषकारणं न कल्प्येतेत्यर्थः । इच्छादौ प्रकाशविषयमन्तरेण व्यवहारानुपपत्तिश्चेत् तत्रैव तत्कल्प्यतां नान्यत्रेत्याशङ्क्याह—एतेनेति । किञ्च

**वृत्तिरेव विशेषकारणमस्त्विति निरस्तम्। तद्विषयप्रकाशस्यानात्मव्यवहारे सामान्यकारणत्वे बाधकाभावात्।**

**किञ्च वृत्तेरपि वृत्तित्वेनैव न हेतुता, अतिप्रसक्तेः। तद्विषयवृत्तिश्चेत् तर्हि क्लृप्तत्वात् विनिगमकाभावात् तद्विषयं चैतन्यमपि व्यवहारहेतुः, तदेव वा, तद्विषयचैतन्यादेव तदुपपत्तेः। वृत्तिश्चैतन्यस्य तद्विषयत्वसंपादिकैवेति न व्यवहारहेतुः।**

साक्षिणा घटव्यवहारनिरासः

**अथैवमज्ञाततया सर्वस्य साक्षिभास्यत्वात् वृत्तिं विनापि घटादेर्व्यवहारः स्यादिति। मैवम्। अज्ञातव्यवहारस्येष्टत्वात् विशेषव्यवहारे अज्ञाततायाः प्रतिबन्धकत्वात्।**

**एवं ब्रह्मणः सर्वज्ञत्वार्थमपि प्रपञ्चस्य प्रकाशविषयत्वमुपेयम्। तस्यान्तःकरणवृत्त्यभावात् अविद्यावृत्तेश्चाज्ञानत्वात् तस्मात् प्रपञ्चः चैतन्यविषयः जडत्वादिच्छावत्। चैतन्यविषयकाविद्यानिवृत्तिरपि स्वविषयवृत्तिप्रतिबिम्बादेवोपपद्यते। तत्संस्कारोऽपि स्वविषयसत्तानिश्चयनाशजन्यो विशिष्टप्रकाशविनाशादेवोपपद्यते।**

---

घटादिव्यवहारे वृत्तिर्वा वृत्तित्वेन हेतुः उत तद्विषयवृत्तित्वेन नाद्य इत्याह – किञ्चेति। द्वितीये वृत्तिप्रतिबिम्बितचित्प्रकाशस्यापि तद्विषयत्वेन व्यवहारहेतुत्वसिद्धिरित्याह—तद्विषयेत्यादिना।

वस्तुतस्तु वृत्तेर्जडतयाऽर्थप्रकाशात्मत्वायोगेन व्यवहारहेतुत्वाभावात् तदभिव्यक्तघटादिविषयचैतन्यमेव तद्व्यवहारहेतुरित्याह––तदेवेति। वृत्तेरप्यन्वयादिना व्यवहारहेतुत्वमावश्यकमित्याशङ्क्यान्यथासिद्धिमाह––वृत्तिरिति। चैतन्यस्य साधारणस्य तत्तद्विषयवृत्त्यवच्छेदादेव तत्तद्विषयतेति वृत्तिश्चिदुपरागसम्पादिकैवेत्यर्थः। घटादिविषयचित्प्रकाश एव व्यवहारहेतुरित्यभ्युपगमेऽतिप्रसंग इति शङ्कते—अथैवमिति। किमत्र व्यवहारमात्रमापाद्यते, उतासाधारणविषयव्यवहारः? आद्यस्त्विष्ट इत्याह—मैवमिति। द्वितीयस्त्वयुक्त इत्याह––विशेषेति।

चिद्रूपब्रह्मणः सर्वज्ञत्वानुपपत्त्यापि प्रपञ्चस्य चिद्विषयत्वसिद्धिरित्याह—एवमिति। अज्ञानत्वादिति। क्लृप्तज्ञानकारणाजन्यत्वेन ज्ञानत्वायोगादित्यर्थः। तत्रैवानुमानमप्याह—तस्मादिति। तृतीयं निराकरोति—चैतन्येति। अविद्यानिवृत्तावपि चित्प्रकाशमात्रमेव हेतुः न तत्समानविषयप्रकाशः। न चातिप्रसङ्गः अविद्यासमानविषयापरोक्षवृत्तेः तत्र सहकारित्वादिति भावः। चतुर्थं दूषयति—तत्संस्कारोऽपीति। सर्वत्र संस्कारस्य स्वविषयसत्तानिश्चयनाशाधीनत्वात् आत्मसंस्कारस्यापि स्वविषयसत्तानिश्चयस्य वृत्त्यादिविशिष्टात्मरूपप्रकाशस्य वृत्त्यादिविनाशे विशिष्टरूपेण विनाशात् तत एव तत्संस्कारोपपत्तिरित्यर्थः।

यत्तु वेदान्तेन जानामीति ब्रह्मणोऽपि ज्ञानविषयत्वमनुभूयत इति, तत्तथैव, वेदान्तजन्यवृत्तिविषयत्वात् ।

विज्ञातारमरे केन विजानीयादिति श्रुतिः ।
स्फुटं साटोपमाह स्म तस्मान्नात्मा स्वगोचरः ॥

दृश्यत्वे प्रकारभेदाः

यत्तु कल्पितभेदात् आत्मापि चैतन्यगोचर इति । तन्न । तत्रापि विषयिणो विषयाभेदात् । न हि कल्पितभेदवान् विषयी विषयो वा चिद्भवति । व्यावृत्ताकारेण तु विषयत्वेऽपि न नः क्षतिः । तस्य तेन रूपेण शास्त्रार्थत्वात् । अतो न व्यभिचारो नवाऽसिद्धिः ।

दृश्यत्वस्य च दृश्यत्वं स्वरूपमेव सत्ताया इव सत्त्वम् । न च सत्त्वं तद्वृत्ति स्ववृत्तित्वानुपपत्तेरित्युक्तम् । न चैवं भागासिद्धिः । तस्यापक्षत्वात् । हेत्वन्तरादेव तन्मिथ्यात्वसिद्धिः । ग्रन्थे तु पररीत्या तत एव तन्मिथ्यात्वसिद्धिरित्युक्तम् ।

अथवा प्रतिपदार्थं दृश्यत्वमन्यदेव दृश्यत्वताक्रान्तं दृश्यत्वं हेतुरिति तत एव तन्मिथ्यात्वसिद्धिः । नापि स्ववृत्तिता ।

अथवा स्वसमानसत्ताकभेदप्रतियोगिचैतन्यजन्यव्यवहारविषयत्वं दृश्य-

---

अत्र नवीनोक्तमनूद्य निराकरोति—यत्त्वित्यादिना। किञ्च येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्यात्मनः स्वव्यतिरिक्तप्रकाशविषयत्वं निराकृत्य 'विज्ञातारमरे केन विजानीयादि'ति स्वविषयत्वस्यापि निराकरणादात्मनो न दृश्यतेत्याह—श्लोकेन विज्ञातारमिति । चैतन्यस्य वस्तुत एकत्वेऽपि चैत्रमैत्रचैतन्ययोः कल्पितभेदेन विषयविषयिभावोऽस्तीति केनचिदुक्तमनुवदति—यत्त्विति । तत्र किंचिन्मात्रं विषयः तत्तादात्म्यविशिष्टं वा ?

आद्ये विषयिणश्चिन्मात्रस्य धर्मिसमसत्ताकभेदाभावान्न विषयत्वमित्यभिप्रेत्याह—तन्नेति । द्वितीये विशिष्टाकारस्याशास्त्रार्थत्वेन मिथ्यात्वान्न व्यभिचार इत्याह—व्यावृत्ताकारेणेति । फलितमाह—अत इति । ननु दृश्यत्वे दृश्यत्वमस्तीति चेत् स्ववृत्तित्वापातः नास्ति चेद्भागासिद्धिः इत्याशङ्क्याह—दृश्यत्वस्य चेति । हेत्वन्तरादिति । जडत्वादिहेतोरित्यर्थः, कथं तर्हि चित्सुखाचार्यैः दृश्यत्वस्यापि तेनैव मिथ्यात्वसिद्धिरित्युक्तम् इत्यत आह—ग्रन्थे त्विति । आचार्योक्तेरभिप्रायान्तरमाह—अथवेति । परस्परव्यावृत्ततत्तद्विषयघटितदृश्यत्वस्यैकत्वासंभवात् तन्नानात्वमावश्यकं, ततश्च दृश्यत्वेऽपि दृश्यत्वान्तरसंभवान् ततः तस्मिन् मिथ्यात्वसिद्धिरित्यर्थः । दृश्यत्वपदस्यार्थान्तरमाह—अथवेति । स्वशब्दः समभिव्याहृतपरः स्वसमानसत्ताको यद्भेदः तत्प्रतियोगि यच्चैतन्यं तज्जन्यव्यवहारविषयत्वमित्यर्थः । ब्रह्मणोऽपि चैतन्यव्यवहारविषयत्वमस्तीति स्वसमानेत्यादिविशेषणम् । न ब्रह्मणि व्यभिचारः न वा भागासिद्धिरित्यपि द्रष्टव्यम् ।

त्वमिति न ब्रह्मणि व्यभिचारः। न चासति व्यभिचारः तस्यैवाभावात्।

स्वसमानसत्ताकवृत्तिविषयत्वं वा। निर्गुणे ब्रह्मणि वृत्तिविषयता च नेवं, शुक्तिरजतादावपि परोक्षवृत्तिविषयत्वमस्तीति न दृष्टान्तः साधनविकलः। अत्त एव न सुखादावसिद्धिः। जडत्वमपि चैतन्यान्यत्वं नाज्ञातृत्वम् ब्रह्मणोऽप्यज्ञातृत्वात्। वृत्तिश्च न चैतन्यम्। अन्तःकरणातिरिक्ताहमितिव्यवहारगोचरान्यत्वं वा जडत्वम्।

परिच्छिन्नत्वनिरुक्तिः

परिच्छिन्नत्वमपि देशतः कालतो वस्तुतश्च। देशपरिच्छेदश्च स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वम्। कालपरिच्छेदश्च ध्वंसप्रतियोगित्वम्, वस्तुपरिच्छेदश्च स्वसमानसत्ताकभेदवत्त्वम् इति न ब्रह्मणि व्यभिचारः। कालाकाशदिशामपि देशकालपरिच्छेदोऽस्त्येव। अपरिच्छेदे प्रमाणाभावात्। परिच्छेदे च जडत्वादिलिङ्गस्य श्रुतेश्च सत्त्वात्। अन्यथाऽऽकाशादेः कार्यत्वानुपपत्तेः उत्पत्तिमतां च कालादिपरिच्छेदो नियतः।

न चाकाशवत्सर्वगतश्च नित्य इति श्रुतिविरोधः। न हीयं श्रुतिः आकाशस्य नित्यत्वं सर्वगतत्वं वा बोधयति। किन्तु लोकप्रसिद्ध्या। तद्दृष्टान्तेन ब्रह्मण एव। अन्यथा वाक्यभेदापत्तेः। श्रुत्यैव सर्वगतत्वप्रतिपादने वत्करणायोगाच्च।

---

तस्यैवाभावादिति। सदसतोः समानसत्ताकत्वायोगाच्चेत्यपि द्रष्टव्यम्।

दृश्यत्वनिरुक्त्यन्तरमाह—स्वसमानेति। नैवमिति। ब्रह्मविषयवृत्तेस्तत्समानसत्ताकत्वाभावादिति भावः। रूप्यादेरिच्छादेश्च वृत्तिविषयत्वाभावात् साधनवैकल्यं भागासिद्धिश्चेत्याशङ्क्याह– शुक्तीत्यादिना। जडत्वहेतुमपि समर्थयते - जडत्वमपीति। अज्ञातृत्वादिति। ज्ञानानाश्रयत्वादित्यर्थः। सिद्धान्तेऽन्तःकरणे भागासिद्धिवारणाय अन्तःकरणातिरिक्तेत्युक्तम्। परिच्छिन्नत्वादित्यत्रापि हेतुत्रयं विवक्षितमित्यभिप्रेत्याह– परिच्छिन्नत्वमपीति। देशपरिच्छिन्नत्वादिकं क्रमेण निर्वक्ति—देशपरिच्छेदश्चेत्यादिना। न च स्वाधिकरणवृत्त्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमिति साध्याविशेष इति शङ्क्यम्। अव्याप्यवृत्तित्वमात्रस्य तेन विवक्षितत्वात्। जडमात्रस्य ब्रह्मण्यव्याप्यवृत्तित्वात्। एतच्च अधिष्ठानातिरिक्तात्यन्ताभाववादिमतेनेति द्रष्टव्यम्। प्रथमद्वितीययोः देशकालादिषु परोक्तामसिद्धिं निराकरोति—कालाकाशेति। श्रुतेश्चेति। पादोऽस्य सर्वाभूतानि, यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुतेरित्यर्थः। अर्थापत्तिमप्याह – अन्यथेति। यदुक्तं आकाशादेर्देशाद्यपरिच्छिन्नत्वं श्रुतिसिद्धमिति। तत्राह—न चाकाशवदिति। आकाशस्य सर्वगतत्वेऽपि तात्पर्यं किं न स्यादित्यत आह—अन्यथेति। वत्क-

ततश्च लौकिकमेव तस्य सर्वगतत्वम् लौकिकं च मानं न ब्रह्मसमानपरिमाणं गृह्णाति यावत्तत्कार्यं तावत्येव ततस्तत्सिद्धेः। सर्वत्र कार्ये प्रमाणाभावात्।

एतेन आकाशादेर्धर्मिग्राहकमानसिद्धं विभुत्वमिति निरस्तम्।

यदपि कालादेरभावे ब्रह्मणोऽप्यस्तित्वासिद्धिरिति। तन्न। किमस्तित्वं सत्ता, वर्तमानत्वं वा? नाद्यः त्वदभिमतासत्यस्यापि इदानीमसदिह रजतं इत्यनुभवेन तत्सत्त्वात्। न द्वितीयः ब्रह्मणो वर्तमानत्वधर्माभावात्। कालदिशोः सत्त्ववर्तमानत्वानुपपत्तेश्च तयोस्तत्संबन्धाभावात् तयोरेकैकत्वात्। स्ववृत्तित्वानुपपत्तेश्च।

अतएवास्तित्वावगमेऽपि न तदपेक्षा। यावदस्तित्वव्यवहारमवकाशादिसत्त्वाच्च। 'सदेव सोम्येदमग्र आसीदि'ति श्रुतिश्च अनभिव्यक्तकालसंबन्धादुपपद्यते। अन्यथा इदं सर्वं सदेवासीदिति कालादेः कारणात्मत्वश्रुतिविरोधात्।

अविद्यैव कालः

वस्तुतस्तु अविद्यादिरेव काल इत्युक्तम्। एतेन देशः सर्वत्रास्ति कालः सर्व

---

रणायोगादिति। अप्रसिद्धस्य दृष्टान्तत्वासंभवेन तदर्थं वत्पदप्रयोगादित्यर्थः। आकाशस्य सर्वगतत्वाभावेनात्र कथं स दृष्टान्त इत्याशङ्क्याह—ततश्चेति। सर्वगतत्वं दृष्टान्तश्रुत्यर्थ इति शेषः। तर्हि लौकिकमानादेवाकाशस्य अपरिच्छिन्नत्वसिद्धिरिति नेत्याह—लौकिकं चेति। तत्कार्यं शब्दादि। शब्दादेः सर्वत्रोपलब्धेः तदाश्रयाकाशादेः सर्वगतत्वमित्याशङ्क्य ब्रह्माण्डबहिः शब्दादिकार्ये मानाभावात् मैवमित्याह—सर्वत्रेति। कार्यस्यासार्वत्रिकत्वादेवान्यदपि परोक्तं निरस्तमित्याह—एतेनेति। देशकाल विना आत्माऽस्तीत्यस्य व्याहतिरित्युक्तमनुवदति—यदपीति। किमस्तित्वमेव देशादिसंबन्धाधीनं उत तदवगमः तत्राद्येऽपीदं वक्तव्यमित्याह—तन्नेति। तत्सत्त्वादिति। देशकालसंबन्धसत्वादसतोऽपि सत्त्वापात इति भावः। धर्माभावादिति। तस्य निर्धर्मकत्वादित्यर्थः। सत्त्वादेः देशकालसंबन्धाधीनत्वे बाधकमाह—कालदिशोरिति। किं कालादेः कालादिना संबन्धः उत स्वेनैव, नाद्य इत्याह—तयोरिति। द्वितीयस्तु न संभवतीत्याह—स्ववृत्तित्वेति।

देशादिसम्बन्धाभावेपि देशादावस्तित्वावगमादेव न द्वितीयोऽपीत्याह—अतएवेति। देशादिसंबन्धं विना कथमस्तीति विशिष्टव्यवहार इत्यत आह—यावदिति। प्रलयावस्थायामपि कालश्रवणात् तस्य नित्यत्वमुक्तमपवदति—सदेवेति। अनभिव्यक्तेति। संस्कारात्मककालसंबन्धादित्यर्थः। पराभिमतकालस्य तदा सत्त्वे बाधकमाह—अन्यथेति, एवं अविद्याव्यतिरिक्तकालमङ्गीकृत्य परिहार उक्तः वस्तुतः स एव नास्ति मानाभावादित्याह—वस्तुत इति। अविद्यासंबन्धेश्वराद्यादिपदेन गृह्यते।

परोक्तानुभवोऽपि न सर्वगतत्वविषयः, प्रत्यक्षस्य तत्रासामर्थ्यात्। अन्यस्य च निरस्तत्वात्। ततश्च सोऽपि आपेक्षिकमहत्त्वविषय इत्याह—एतेनेति! अज्ञानेऽप्युक्ताम-

त्रास्ति इत्यनुभवान्न तयोः अवच्छेद इति प्रत्युक्तम् । तदनुभवमूलप्रमाणाभावात् । ब्रह्माण्डव्यापित्वविषयतया तदुपपत्तेश्च ।

एवमज्ञानस्यापि सर्वगतत्वे प्रमाणं न पश्यामः । विनाशित्वाच्च परिच्छिन्नत्वानुमानम् । न चैवं तस्यानवच्छिन्नब्रह्मावारकत्वानुपपत्तिः विभागप्रक्रियायां निरूपितावरणस्य परिच्छिन्नेनाप्युपपत्तेः ।

सत्त्वनिर्वचनम्

यत्तु सत्त्वं त्वदभिमतमिथ्यात्वाभावो वा असद्विलक्षणत्वे सति अनारोपितत्वं वा अस्तित्वप्रकारकप्रमां प्रति कदाचिद्विषयत्वं वा कालसंबन्धित्वं वा अस्मदभिमतासत्त्वाभावो वेति । तत्राद्यस्तावदयुक्तः तव प्रतियोग्यसंप्रतिपत्तेः । अस्माकं तु अद्वैतश्रुतिविरोधात् प्रपञ्चे न तदभावोऽस्ति श्रुतेरर्थमधिगन्तुं तन्निर्वाहे च प्रभवोऽस्मद्गुरवः नतु तां बाधितुम् ।

द्वितीयेऽपि अनारोपितत्वं नाम भ्रमाविषयत्वं, अनिर्वचनीयत्वाभावः, असत्त्वाभावो वा ? आद्ये शुक्त्यादेरसत्त्वप्रसङ्गः । द्वितीयस्तु दूषितः—न चरमः विशेषणविशेष्यभेदात् । तस्य निरस्तत्वाच्च । न तृतीयः सत्त्वप्रयोजकप्रमाया दुर्निरूपत्वात् । सत्तां विना विद्यमानत्वमात्रेण तदुपपत्तेश्च । न चतुर्थः । काल-

---

सिद्धिं परिहरति—एवमिति । देशकालादेः परिच्छिन्नत्वेन तदुपादानस्य परिच्छिन्नत्वसंभवादिति भावः । संभावनायामपि परिच्छिन्नत्वे किं मानमित्यत आह—विनाशित्वादिति ।

अज्ञानस्य परिच्छिन्नत्वेऽनवच्छिन्नब्रह्मावारकत्वानुपपत्तिरित्युक्तं निराकरोति—नचैवमिति । निरूपितावरणस्येति । अस्ति प्रकाशत इति व्यवहारहेतौ सति नास्तीत्यादिव्यवहारयोग्यत्वादिरूपस्येत्यर्थः ।

परोक्तसत्त्वनिरुक्तिमनूद्य निराकरोति—यत्त्वित्यादिना । किं मिथ्यात्वाभावः सत्त्वमिति त्वन्मतेनोच्यते उत मन्मतेन । नाद्यः, तव मते मिथ्यात्वस्याप्रामाणिकत्वेन तत्प्रतियोगिकाभावासंभवादित्याह—तवेति । द्वितीये तु न प्रपञ्चे सत्त्वसिद्धिरित्याह—अस्माकंत्विति । अद्वैतश्रुतेः मुख्यार्थासंभवात् अन्यपरत्वमित्याशङ्क्य भाष्यकारादिभिः अद्वितीयपरताया उपपादितत्वान्नैवमित्यभिप्रेत्याह—श्रुतेरर्थमिति । शुक्त्यादेरसत्वप्रसङ्ग इति । न चेदमंशज्ञानस्याभ्रमत्वात् नायं दोष इति वाच्यम् । तस्य भ्रमाभिन्नतयापि भ्रमविषयत्वात् विषयभेदेन ज्ञानभेदायोगाच्चेति भावः । दूषित इति । तव मतेऽनिर्वचनीयत्वासिद्धिः अस्मन्मते च तदभावायोगादित्यर्थः । विशेषणविशेष्याभेदादिति । असद्विलक्षणत्वाभावयोरभेदेनान्यतरवैयर्थ्यादित्यर्थः ।

अस्तु तर्हि असद्वैलक्षण्यमात्रमेव सत्त्वमित्याशङ्क्य तस्य मिथ्यात्वेऽपि संभवान्नैवमित्याह—तस्येति । प्रमाया दुर्निरूप्यत्वादिति । तद्वति तत्प्रकारकस्वरूपप्रमाया

संबन्धित्वस्य तवासति अस्माकं शुक्तिरूप्यादौ सत्त्वाच्च। पञ्चमस्तु बहुधा निरस्तः।

प्रपञ्चः सन्असदन्यत्वादिति सत्प्रतिपक्षनिरासः

यत्तु असदन्यत्वेन प्रत्यनुमानं। तन्न। असिद्धेः। नापि प्रत्यक्षबाधः, तदुपदर्शितार्थसत्ताया अनुमानेनानिराकरणात्। नह्यर्थक्रियायोग्यत्वं विद्यमानत्वं वाऽनुमानेन निषिध्यते। बाधायोग्यत्वमपि तद्विषयं नानुमानं बाधते परं तु तदन्यदीयमिति निवेदयति। न च सन् घट आत्मनो भिन्न इत्यनुभवविरोधः तस्यापि विशेष्यमात्रविषयत्वात्। न च कर्मकाण्डप्रामाण्यभंगप्रसंगः। तत्प्रमितसाध्यसाधनभावस्य शब्दान्तरादिप्रमाणसिद्धभेदस्य चाभावे तत्प्रामाण्यायोगादिति वाच्यम्।

न हि प्रपञ्चमिथ्यात्वानुमानं यागादि स्वर्गादिसाधनं न भवति। कर्माणि

---

अनिर्वचनीयेऽपि संभवात् अबाधितार्थरूपायास्तस्याः श्रुतिबाधितेऽसंभवादित्यर्थः। अस्तित्वस्य विद्यमानतापरपर्यायत्वात् अनिर्वचनीयेऽपि तदुपपद्यत इत्याह--सतामिति। सत्वाच्चेति। चशब्देन प्रपञ्चे कालसंबन्धित्वरूपं सत्त्वमद्वैतश्रुत्यविरुद्धत्वादिष्टमिति सूचयति --बहुधा निरस्त इति। असच्छब्दप्रत्यययोः निर्विषयत्वोपपादनात् तदभावो नाम न किञ्चिदित्यर्थः।

असिद्धेरिति। असत्प्रतियोगिकभेदस्यानिरूपणादित्यर्थः। सत्त्वाभावविशिष्टस्यासतो विपक्षस्यासंभवात् तद्व्यावृत्तये हेतावसद्विशेषणं व्यर्थमित्याह--असत्पदेति। किञ्च विमतं सदित्यत्र किं सत्ताधिकरणत्वं साध्यं तद्वैशिष्ट्यं वा? नाद्यः सत्त्वे व्यभिचारात्। न द्वितीयः अधिष्ठानात्मरूपसत्त्ववैशिष्ट्यस्य मायिकेऽपि संभवात् अप्रयोजकत्वाच्चेति भावः। यदप्युक्तं। 'सन् घट' इत्याद्यध्यक्षबाध इति तत्राह—नापीति। किमध्यक्षविषयः सत्त्वमर्थक्रियायोग्यत्वं विद्यमानत्वं वा बाधायोग्यत्वं वा? तत्राद्ययोः मायिकत्वेऽपि संभवात् न विरोध इत्याह--तदुपदर्शितेति। तृतीयेऽपि न विरोधः, सन् घट इति प्रत्यक्षस्य घटतादात्म्यापन्नसति सत्त्ववैशिष्ट्यविषयत्वात् मृद्धट इति प्रत्यक्षे घटतादात्म्यापन्नमृदि मृत्त्वविषयत्ववत्। तच्च सदात्मैवेत्यनुमानादिना निश्चीयत इत्याह---बाधायोग्यत्वमिति। सद्बुद्धिविषयस्यानात्मन आत्मनो भेदानुभवात् आत्मसत्त्वैव न सद्बुद्धिगोचर इत्याशङ्क्याह—न चेति। विशेष्यमात्रेति। घटस्यैवात्मभेदस्तस्य विषयः नतु विशेषणस्य सतोऽपि तदनुभवस्यान्यथाप्युपपत्तेरित्यर्थः। मिथ्यात्वानुमान कर्मकाण्डाप्रामाण्यप्रसङ्गलक्षणबाधकतर्कपराहतमित्यपि न वाच्यमित्याह—न चेति।

किं साध्यसाधनभावादिमात्रं कर्मकाण्डप्रमेयं उत तन्मिथ्यात्वाभावोऽपि? आद्ये न विरोध इत्याह--न हीति। कर्माणि शास्त्राणि वेति--प्रस्थानभेदेनोक्तम्। द्वितीयाध्यायप्रमेयः कर्मभेद इति वार्तिककारीयाः। शास्त्रभेद इति प्राभाकराः तदुभयं न निषिध्यते

शास्त्राणि वा न भिन्नानीति बोधयति। मिथ्यात्वाभावश्च न तद्विषयः तस्मात् दृश्यत्वानुमानं सुस्थम् ।

एवं सन् घट इत्यादिप्रत्यक्षस्यानुपपत्तिरपि मिथ्यात्वे मानम् जडस्य कल्पितत्वं विना लाघवादिनिर्णीतैकप्रकाशात्मकसत्तादात्म्यायोगात् ।

सद्ब्रह्मेति बुद्धेरधिष्ठानविषयत्वनिरासः

यत्त्वत्र नवीनेनोक्तम् । सद्ब्रह्मेतिबुद्धिरपि एवं तदधिष्ठानविषया स्यादिति। तदसाधु। सतः प्रकाशात्मत्वे तस्यैव सतो ब्रह्मत्वात्। अप्रकाशत्वे च चेतने ततः सद्बुद्ध्यनुपपत्तिः दृश्यस्य सत्त्वायोगाच्च। तस्मात् यद् दृश्यं तन्मिथ्या, दर्शनं तु ब्रह्म सत्यमित्यद्वैतं ब्रह्मेति सिद्धम् ।

सिद्धान्तरहस्याम्

शृणुत मतरहस्यं सत्यबोधात्ममोहात् सदिव निखिलमेतत् विश्वमाभाति नूनम्। सुखघनतनुविष्णुः सत्पराको (सत्स्वरूपो)? ऽत्र मानं नरहरिरभिधत्ते नात्र काचिद्भिदेति ।।

तच्च सद्रूपं ब्रह्म ज्ञानानन्दात्मकं सत्यंज्ञानमनन्तं ब्रह्म को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिश्रुतेः। प्रकाशभेदे आनन्दादेः सत्यत्वानुपपत्तेः। आनन्दादिभेदे प्रकाशस्यो-

---

घटादिभेदतुल्यस्य तस्याभ्युपगमादित्यर्थः। द्वितीयस्त्वनुपपन्नः कर्मतत्फलादेः सत्यत्वबोधकपदाभावादित्यभिप्रेत्याह--मिथ्यात्वाभावश्चेति। अनुमाननिरवद्यतामुपसंहरति—तस्मादिति। प्रपञ्चमिथ्यात्वेऽर्थापत्तिरपि मानमित्याह—एवमिति। लाघवादिति। सदेव सोम्येत्यादिना ब्रह्मण एव सत्यतावगमात् सदाकारबुद्धेर्लाघवात् तद्विषयतावगमात् तस्य जडत्वे वेद्यतया सत्यत्वायोगात् स्वप्रकाशताया आवश्यकत्वात् घटादेर्जडस्य तत्तादात्म्यानुभवस्य तत्र तत्कल्पितत्वेन विनाऽनुपपत्तेः तन्मिथ्यात्वमुपेयमित्यर्थः। घटादौ सद्बुद्धेरधिष्ठानविषयत्वे परोक्तातिप्रसङ्गमुद्भाव्य निराचष्टे यत्त्वत्रेत्यादिना। सद्ब्रह्मेति प्रतीयमानं सत् चिद्रूपं जडरूपं वा, आद्ये तस्यैव ब्रह्मत्वेन तन्न तदधिष्ठानमित्याह—तस्येति। द्वितीये तस्य चेतनाधिष्ठानत्वायोगात् तत्संबन्धाच्चेतने सद्बुद्धिरित्यनुपपन्नमित्याह—अप्रकाशत्वे चेति। किञ्च जडस्य कल्पितत्वं विना चित्संबन्धायोगात् तस्य सत्ताप्यनुपपन्नेत्याह—दृश्यस्येति। फलितमाह—तस्मादिति।

दृश्यं सर्वमाविद्यकं दृग्रूपब्रह्मैव सत्यमित्युपपादितं श्लोकेन संगृह्णाति–शृणुतेति। श्रुतेर्निश्वसितवदीश्वरकर्तृकत्वान्नरहरिरभिधत्त इत्युक्तम्। 'नात्र काचन भिदे'त्यनेन 'नात्र काचनभिदाऽस्ति, नैवात्र काचनभिदा' इत्यत्र भिदामिव मन्यमानः शतधा सहस्रधाभिन्नो मृत्योः स मृत्युमाप्नोति 'इति श्रुतिरर्थ'तो गृहीतेति द्रष्टव्या। एवं हेयस्वरूपं निरूप्योपादेयब्रह्मस्वरूपं निरूपयितुमाह—तच्चेति। युक्तितोऽपि ज्ञानानन्दाद्यभेदमाह-

पादेयत्वप्रकाशत्वानुपपत्तेश्च ।

एवमन्येऽपि नित्यत्वादयो ब्रह्मणः स्वरूपमेव। न ततोऽतिरिच्यन्ते । वचनाद्यर्थोऽपि तथा । एवंविधस्यैव वाक्यार्थत्वमुपपादयिष्यामः ।

ब्रह्मणि धर्मसाधकानुमानानि

यत्तु ब्रह्म सर्वज्ञत्वादिगुणकं शङ्खचक्राद्याकारं यः सर्वज्ञः सर्ववित् नारायण एवाग्र आसीत् न ब्रह्मा न च शङ्करः इति श्रुतेः । चतुर्भुजत्वाद्याकारोऽपि आनन्द एव आप्रणखात्सर्व एवानन्द" इति श्रुतेः । गुणा अप्यानन्दा एव ब्रह्मणो हेयगुणानुपपत्तेः । एवं हिरण्यश्मश्रुवाक्यादपि साकारं ब्रह्म : ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवत्, उक्तसत्ताकभावभूतधर्मवद्वा, यावत् स्वस्वरूपमनुवर्तमानधर्मवद्वा स्वज्ञानाबाध्यधर्मवद्वा पदार्थत्वात् घटवत् । ब्रह्म स्वज्ञानाबाध्यप्रकारवत् स्वारोपितव्यावर्तकस्वज्ञानाबाध्यप्रकारवद्वा अधिष्ठानत्वात् शुक्तिवत् । ब्रह्म स्वज्ञानाबाध्य-

---

प्रकाशेति । ज्ञानभिन्नस्य दृश्यतया मिथ्यात्वनियमादित्यर्थः । ज्ञानस्याप्यानन्दादितो भेदे दोषमाह—आनन्दादीति । प्रकाशत्वानुपपत्तेरिति । अनानन्दस्य घटादिवज्जडत्वनियमादिति भावः । न ततोऽतिरिच्यत इति । ध्वंसप्रतियोगित्वाद्यभावात्मकत्वाद्ब्रह्मणः ततो नित्यत्वनिरवयवत्वादि न भिन्नमित्यर्थः । एवमपि विभवत्यर्थो लिङ्गसङ्ख्यादि भिन्नोऽस्तीत्याशङ्क्य सोऽपि गुणादाविव स्वरूपमेवेत्याह--वचनेति । एतादृशं ब्रह्म विमानमित्याशङ्क्य श्रुतिरेव मानं तत्रेत्युत्तरपरिच्छेदे वक्ष्यत इत्याह—एवंविधस्येति । सगुणमेव ब्रह्म श्रुतितात्पर्यगोचर इति नवीनमतं दूषयितुमनुवदति--यत्त्वित्यादिना । साकारमिति । साकारं सशरीरमित्यर्थः अनुमानतोऽपि सविशेषं ब्रह्मेत्याह—ब्रह्मेति । काल्पनिकधर्मस्य सिद्धान्तेप्यभ्युपगमात् तद्व्यावृत्तये धर्मिसत्तासमानसत्ताकेत्युक्तम् । एवमप्यतिरिक्ताभाववादिमते सिद्धसाधनमित्यत आह—उक्तसत्ताकेति । यावत्स्वरूपमित्यादौ स्वपदं समभिव्याहृतपरम् । ततश्च घटादेः न साध्यवैकल्यमिति भावः । आकारवदिति । धर्मवदित्यर्थः । अतिरिक्ताभाववादिसिद्धसाध्यतावारणाय स्वारोपितव्यावर्तकेत्युक्तम् । अभावविशिष्टज्ञानस्य बाधकत्वानभ्युपगमान् तदतिरिक्तधर्मसिद्धिरिति भावः । स्वज्ञानेति । स्वविषयज्ञानेनाबाध्यः प्रकारो यस्य ज्ञानस्य तस्य विशेष्यतयाविषय इत्यर्थः । तत्र शक्तत्वादित्येतावत्युक्ते सामान्यव्याप्तौ विरक्ते व्यभिचारः तन्निवारणाय तत्प्रेप्सुत्वे सतीत्युक्तम् तावन्मात्रं अशक्ते व्यभिचारीति तत्रशक्तत्वादित्युक्तम् । उत्तरानुमाने परदारगमनादिपति व्यभिचारवारणाय तज्जिहासुत्वे सतीत्युक्तम् । वास्तवशरीरीति । न चात्र साध्यवैकल्यं शङ्क्यं चैत्रे सशरीरत्वस्य प्रामाणिकत्वेन वास्तवत्वादित्यभिमानः ।

प्रकाशकज्ञानविशेष्यंसन्दिग्धत्वात् विचार्यत्वात् निर्णेतव्यत्वाच्च स्थाणुवत्। ब्रह्म वेदतात्पर्यगोचरप्रकारवत् वेदविचारविषयत्वात् यदेवं तदेवं यथा कर्मकाण्डार्थोधर्मः।

ईश्वरः सदा वास्तवसमस्तकल्याणगुणः तदा तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् यो यदा यत्प्रेप्सुत्वे सति यत्र शक्तः स तदा तद्वान् यथा चैत्रः, ईश्वरः सदा त्यक्तसमस्तदोषः तज्जिहासुत्वे सति तत्त्यागे शक्तत्वात् यो यदा यज्जिहासुत्वे सति यत्त्यागे शक्तः स तदा त्यक्ततद्दोषः यथा चैत्रः।

ब्रह्म वास्तवशरीरि च वक्तृत्वात् चैत्रवत् विपक्षेऽधिष्ठानत्वसन्दिग्धत्वादिकं न स्यात्। न च निर्गुणवाक्यबाधः। तेषां प्राकृतगुणनिषेधपरत्वात्। सर्वज्ञत्वादिगुणानां मानान्तरेणाप्राप्तानां तेन निषेधायोगाच्च। श्रुतिप्राप्तस्य श्रुत्या निषेधे विकल्पप्रसंगात्। निर्गुणवाक्येऽपि साक्षी चेता इत्यादिद्रष्टृत्वगुणविधानात् न तेन तन्निषेधः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्य इत्यादिगुणानामपि जिज्ञास्यत्वश्रवणाच्च। एष सर्वेश्वर इत्यादिना धर्मानुपन्यस्य तमेतं वेदानुवचनेनेति मुमुक्षोर्ज्ञेयत्वोक्तेश्चेति।

अनुमाननिरासः

तन्न। सर्वज्ञत्वं तावत् श्रुत्या न प्रतिपिपादयिषितम् जगत्कारणत्व सामर्थ्यसिद्धस्य तस्य श्रुत्यप्रतिपाद्यत्वात्। नान्तः प्रज्ञं न बहिः प्रज्ञं इत्यादिश्रुतिविरोधाच्च।

किञ्च ब्रह्म सर्वज्ञं सर्वजिज्ञासुत्वे सति तत्र शक्तत्वात् यो यज्जिज्ञासुत्वे सति यत्र शक्तः स तत्प्रज्ञः चैत्रवदिति त्वदुक्तविधया ब्रह्मसर्वज्ञत्वसिद्धिः। न च मानान्तरसिद्धे श्रुतितात्पर्यम्। सर्वज्ञत्वादेः निष्प्रयोजनत्वाच्च श्रुतेस्तत्र तात्पर्यायोगात्।

---

साक्षीचेता केवलो निर्गुणश्चेत्यादिश्रुतिबाधितविषयाः सर्वे हेतव इत्याशङ्क्य श्रुतेः प्रकृतिकार्यगुणनिषेधपरत्वात् अप्राकृतगुणानामनुमानगोचरत्वान्न विरोध इत्याह— न च निर्गुणेति। गुणसामान्यनिषेधश्रुतेः कथं संकोच इत्याशङ्क्य सङ्कोच आवश्यक इत्याह सर्वज्ञत्वादीति। निषेधायोगे हेतुमाह—श्रुतिप्राप्तस्येति। विकल्पप्रसगादिति। न च वस्तुनि विकल्पसंभव इति भावः। द्रष्टृत्वेति। उदासीनत्वे [सति] द्रष्टृत्वस्य साक्षिपदार्थत्वादिति भावः। गुणविशिष्टब्रह्मणो ज्ञेयत्वश्रवणादपि गुणानां सत्यतेत्याह—सत्यकाम इत्यादिना। गुणादिनिषेधश्रुतेः संकोचकाभावात् तद्विरुद्धत्वमित्यभिप्रेत्याह—तन्नेति।

जगत्कारणेति। जगत्कर्तृत्वेनेश्वरसाधकानुमानेनैव सर्वज्ञत्वादिसिद्धेः अपूर्वताभावान्न तच्छ्रुतिप्रमेयमित्यर्थः। ज्ञानसंबन्धमात्रनिषेधकश्रुतिविरोधादपि न सार्वज्ञ्यं श्रुतितात्पर्यगोचर इत्याह—नान्तः प्रज्ञमिति। कार्यलिङ्गकानुमानान्न सर्वज्ञत्वादिसिद्धिरिति मन्वान प्रत्याह—किञ्चेति। सर्वज्ञत्वादिगुणज्ञानान् प्रयोजनाभावादपि श्रुतेर्न

न च मोक्षार्थं तज्ज्ञानं, तमेव विदित्वाऽमृत्वमेतीति ब्रह्ममात्रज्ञानस्यैव मोक्षोपायत्वात् । न च सगुणं ब्रह्म प्रस्तुत्य तमेवं विद्वानमृत इह भवतीति गुणप्रकारकज्ञानस्य मोक्षहेतुत्वं श्रूयत इति वाच्यम् । तत्रापि पुरुष एवेदं सर्वमिति प्रस्तुतसार्वात्म्यस्यैव एवंशब्दार्थत्वात् । इतरस्य तच्छेषत्वात् सार्वात्म्य च ब्रह्मणः सर्वोपमर्दे भवति इत्यखण्ड एव तत्तात्पर्यम् । अन्यथा प्रस्तुतपृथिव्यादिज्ञानस्यापि मुक्तिहेतुत्वे तमेवेत्यादिशास्त्रबाधप्रसंगात् 'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवे' त्यादिशास्त्रमपि अधिष्ठानात्मन एव ज्ञातव्यतामाह । यस्मिन्नासने चैत्रो वर्तते तदानयेत्यत्रेव तच्छब्दस्याधारमात्रपरत्वात् । अन्यथा एकधैवानुद्रष्टव्यमित्यादिशास्त्रविरोधात् ।

ब्रह्मणः सर्वज्ञत्वाद्यनुवादे फलम्

न चैवं सर्वज्ञत्वानुवादवैफल्यम् । जगत्कारणस्य ज्ञप्तिस्वरूपप्रतिपादनार्थ-

---

तत्परतेत्याह—सर्वज्ञत्वादेरिति । सर्वज्ञत्वादिगुणविशिष्टब्रह्मज्ञानस्य मुक्तिः फलमित्यत आह—न च मोक्षार्थमिति । तमेवेत्येवकारेणात्मव्यतिरिक्तज्ञानस्य मोक्षहेतुत्वव्यावर्तनात् न गुणादिज्ञानं मोक्षहेतुरित्यर्थः । सहस्रशीर्षेत्यादिना सगुणब्रह्मोपक्रम्य तज्ज्ञानस्यापि मुक्तिजनकता श्रूयत इत्यत आह—न च सगुणमिति । पुरुषसार्वात्म्यस्यैव तत्र प्रतिपाद्यत्वात् गुणादिप्रपञ्चसृष्टेस्तदर्थत्वेनाभिधानात् तज्ज्ञानमेवैवंशब्दार्थ इत्याह—तत्रापीति । ब्रह्मणः सर्वात्मत्वे सर्वस्य सप्रकारत्वात् ब्रह्मापि तथेति वेदान्तानामखण्डपरत्वक्षतिरित्याशङ्क्याह – सार्वात्म्यं चेति । जडप्रपञ्चस्य परमार्थत्वे चिद्रूपात्मनो वस्तुतस्तदात्मत्वायोगात् मिथ्याप्रपञ्चस्याधिष्ठानब्रह्ममात्रतया परिशेषात् सर्वात्मत्वं तच्चाखण्डमेवेत्यखण्डपरत्वं वेदान्तानामित्यर्थः ।

एवंशब्दस्य प्रस्तुतमात्रपरत्वे बाधकमाह—अन्यथेति । किञ्च "यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं ' ' विरजःपरआकाशादज आत्मा महान् ध्रुवः । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानं" इत्यादिश्रुतिष्वेवकारेणातिरिक्तस्य मन्तव्यत्वादिनिषेधात् अखण्डात्मबोध एव मुक्त्युपाय इत्याह—यस्मिन्निति । प्राणचक्षुःश्रोत्रत्वङ्मनांसि पञ्च पञ्चजनशब्दार्थः । तमेव मन्य इत्यादौ प्रस्तुतात्मानात्मविशिष्ट एव तच्छब्दार्थ इत्याशङ्क्याह—यस्मिन्नासन इति ।

सर्वज्ञत्वजगत्कारणत्वादेः अन्यतः सिद्धत्वेऽपि तदनुवादमात्रस्य वैफल्यात् श्रुतेस्तत्परत्वमित्याशङ्क्याह – न चैवमिति । सर्वोपादानस्य ब्रह्मणश्चिद्रूपत्वे प्रतिपादिते तस्य सर्वविषयत्वमर्थसिद्धमिति वाक्यस्य न तत्परत्वं य अर्थादर्थो न स चोदनार्थ इति न्यायात् । ततश्चानन्यलभ्यत्वात्, लाघवात्, अद्वितीयश्रुत्यपेक्षितत्वाच्च चैतन्याभेदपरत्वं

त्वात्। जगत्कारणश्रुतेश्च निषेधार्थत्वात्। सर्ववेदान्तप्रत्ययन्यायेन निर्गुणादिवाक्यैकवाक्यत्वात्। अन्यथा वाक्यभेदप्रसंगात्। स च सम्भवत्येकवाक्यत्वे न न्याय्यः। क्वचित्प्रमितब्रह्मोद्देशेनानेकगुणविधाने प्रतिवाक्यं वाक्यभेदप्रसंगः चित्राज्यनयवत्।

न च सर्ववेदान्तैः युगपदेवानेकगुणविशिष्टं क्रयणवद् ब्रह्म प्रतीयत इति वाच्यम्। तद्वदत्र सर्ववेदान्तानां पदैकवाक्यत्वाभावात् वाक्यान्तरे प्रमितस्य होमाधारवत् वाक्यान्तरे उद्देश्यत्वात्। न च ब्रह्मणोऽप्युपासनाशेषत्वात् अपूर्वीयतया तदप्राप्तिः। वाचो धेनुत्वेनेवारोपितगुणेनाप्युपासनोपपत्तेः न च तथापि शब्दस्यो-

---

सर्वज्ञत्वश्रुतेः। जगत्कारणत्वानुवादस्तु निषेधार्थ एव। न च तन्निषेधो न श्रूयत इति वाच्यम्। सर्ववेदान्तानामेकब्रह्मपरतया एकवाक्यत्वात् व्यवहितनिषेधेनाप्यन्वयात्। इतरथा सगुणनिर्गुणवाक्ययोः अन्योन्याकाङ्क्षाऽभावेनैकवाक्यत्वायोगात् वाक्यभेदः स्यात्। स चान्याय्यः। एकवाक्यतासंभवेऽपि वाक्यभेदाभ्युपगमेऽतिप्रसङ्गादित्यर्थः।

किञ्च परमते क्वचित् प्रमितब्रह्मानुवादेन किं तत्र सर्वज्ञत्वादिगुणा विधीयन्ते। किं वा अरुणैकहायनीन्यायेन युगपत् सर्वगुणविशिष्टं ब्रह्म वेदान्तैः प्रमीयत इति तत्राद्यस्तावदयुक्त इत्याह–क्वचिदिति। गुणानां परस्पराकाङ्क्षाविरहात् वैशिष्ट्यायोगात् एकैकगुणविधाने वाक्यपर्यवसानमित्युद्दिश्यानेकविधाने वाक्यभेद इत्यर्थः। तत्र दृष्टान्तमाह—चित्रेति। चित्रया यजेत पशुकामः पञ्चदशान्याज्यानीत्यत्र वाक्यान्तरप्राप्ताग्नीषोमीयपशौ चित्रत्वस्त्रीत्वविधौ वचनान्तरप्राप्तस्तोत्रसाधनत्वेन आज्यपञ्चदशसंख्याविधौ यथा वाक्यभेदस्तद्वदित्यर्थः।

द्वितीयनिराकरोति—न चेत्यादिना। क्रयणस्यारुण्यादेश्च लोकासिद्धतया सत्त्वरूपप्रतिपत्त्यर्थं पृथक् पदसमन्वयानपेक्षणात् तद्वाक्यस्य पदैकवाक्यतया युक्तं आरुण्याद्यनेकसाधनविशिष्टक्रयणकर्तव्यताबोधकत्वं इहतु ब्रह्मणस्तद्गुणादेश्चालौकिकत्वात् वेदान्तानां पृथक् समन्वये न तत्स्वरूपप्रतिपादनपूर्वकं ब्रह्मणि गुणादिसंसर्गप्रतिपादनाय इति वाक्यैकवाक्यत्वम्। ततश्च सत्यादिवाक्यप्राप्तब्रह्मणो गुणवाक्येषूद्देश्यत्वं यथा अग्निहोत्रं जुहोति आघारमघारयतीतिवाक्यप्राप्तयोर्होमाघारयोः दध्ना जुहोति सन्ततमाघारयति इत्यत्रोद्देश्यत्वं तद्वत् ततश्च वाक्यभेदो दुर्वार इत्यर्थः। गुणवाक्येषु उपासनाविध्यङ्गत्वेन ब्रह्मणः प्रतीतेः तेन रूपेण वाक्यान्तरासिद्धत्वात् न तस्योद्देश्यतेत्याशङ्क्य तथा सति न ब्रह्मणि वास्तवगुणसंबन्धसिद्धिरित्याह–न च ब्रह्मण इत्यादिना। उपासनाविधिपरादपि वाक्यात् गुणसंबन्धस्यापि प्रतीतेः तस्याः स्वतः प्रमाणत्वात् तद्विषयोऽभ्युपेय इत्यत आह—न च तथापीति। शाब्दज्ञानस्य तात्पर्यविषय एव स्वतः प्रामाण्य न त्वन्यत्र विषं भुंक्ष्वेत्यादिषु तथा दर्शनात्। मन्त्रादेरपि देवताविग्रहादाववान्तरतात्पर्याभ्युपगमात्। न च तथा अत्र निर्गुणत्वादिश्रुतिविरुद्धेऽवान्तरतात्पर्यसंभव इति भावः।

त्सर्गिकस्वतः प्रामाण्याय गुणानामपि सिद्धिः तात्पर्यविषयीभूतोपासनान्वितकार्ये गुणसत्त्वं विनापि प्रामाण्यस्य सिद्धत्वात् । अन्यथा प्राणसर्वात्मत्वाद्युपासनावाक्यानामप्रामाण्यप्रसंगात् । सर्वज्ञादिवाक्यप्रतिपाद्यब्रह्मण उपासनाशेषत्वाभावाच्च ।

अत एव निर्गुणवाक्ये साक्षित्वादिगुणो न विधीयते केवलो निर्गुणश्चेति श्रुतिविरोधाच्च । न च तेन प्राकृतो गुणो निषिध्यते । आत्मातिरिक्तस्य प्राकृतस्याभावेन प्राकृतनिषेधे निर्गुणत्वस्य सिद्धत्वात् । गुणश्रुतेः संकोचकाभावेन तदुपस्थापितनिखिलगुणेनापि नञोऽन्वितत्वाच्च । ज्ञानात्मकब्रह्मणोऽविद्ययैव सर्वज्ञत्वादिसंभवाच्च । अत एव न सत्यकामादिगुणवत्त्वम् ।

किञ्चावाप्तसकलकामस्य ब्रह्मणः कथं कामना ? कामनाया अनवाप्त-अज्ञातान्यतरविषयत्वात् । सिद्धे क्वचिदपि कामनाया अदर्शनात् । नापि परार्थं कामना । एवमपि सर्वमुक्तौ तदयोगात् । न हि मुक्तानामपि किञ्चिदवाप्तव्यमस्ति आत्मानं चेद्विजानीयादयमस्तीति पुरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ।

---

उपास्यगुणसत्त्वं विनापासनाविधेरप्रामाण्ये दोषमाह—अन्यथेति । यः सर्वज्ञ इत्यत्रोपास्तेरश्रवणात् तच्छेषत्वमप्ययुक्तं ब्रह्मण इत्याह—सर्वज्ञादीति ।

यदुक्तं साक्षाचेतेति द्रष्टृत्वगुणो विधीयत इति तत्राह—अत एवेति । गुणस्यानपेक्षितत्वात् तद्विधौ वाक्यभेदप्रसङ्गाच्चेत्यर्थः । उत्तरपदविरोधाच्च न गुणविधिरित्याह—केवल इति । गुणनिषेधस्यान्यविषयत्वमुक्तमित्याशङ्क्याह—न चेति । अप्राकृतस्येति । सत्त्वादिगुणमयप्रकृत्यनात्मकस्येत्यर्थः । तदुक्तं भगवता—

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥

इति सर्वे गुणमया भावा इति । अप्राकृतगुणमङ्गीकृत्याप्याह—गुणश्रुतेरिति । नञ इति । नञर्थस्य निरासस्येत्यर्थः । सिद्धान्तेऽपि ब्रह्मणि सर्वज्ञत्वाद्यभ्युपगमात् कथं तन्निरास इत्यत्राह—ज्ञानात्मकेति । ज्ञप्तिरूपस्यापि ब्रह्मणः आविद्यकप्रपञ्चसंसर्गात् सर्वज्ञता प्रकाशात्मकस्य सवितुः घटादिसंसर्गात् तत्प्रकाशकत्ववदित्यर्थः ।

अतएवेति । वाक्यभेदादिदोषादेवेत्यर्थः । युक्त्यसहश्च ब्रह्मणि काम इत्याह—किञ्चेति । किं ब्रह्मणः स्वपुरुषार्थविषयः कामः परपुरुषार्थविषयो वा ? नाद्य इत्याह—अवाप्तेति । आप्तसकलपुरुषार्थस्येत्यर्थः । हस्तगतविस्मृतसुवर्णादावाप्तेपि कामनादर्शनात् अज्ञातेत्युक्तम् । द्वितीयं दूषयति—नापीति । कुत्रापि परपुरुषार्थमुद्दिश्यान्यस्मिन् कामनाऽदर्शनादिति भावः ।

ईश्वरे परार्थकामनामङ्गीकृत्यापि दोषमाह—एवमिति । मुक्तावपि विषयभोगकामनामङ्गीकुर्वाणमर्वाचीनं प्रत्याह—आत्मानं चेति । मुक्तेषु कामनाभ्युपगमे मुक्तेरनित्यता

पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः ॥
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।
"आत्मलाभान्न परं विद्यते' इत्यादि—

शास्त्रात् मुक्तस्य कामनाप्रतिषेधात् । "स कामभिर्जायते तत्रतत्र" इति कामस्य संसारहेतुत्वश्रवणाच्च । नहि जीवस्य कामनां विना परस्य सा भवितुमर्हति । तदनिष्टं कामयत आप्तत्वायोगात् । न च सर्वमुक्तिरेव नास्ति । अविद्यावतां ज्ञाने सति तन्नियमात् । अन्यथा स्वस्य मुक्त्यनर्हत्वशङ्कया कोऽपि न प्रवर्तेत । मुक्तौ च परस्य कामनाविलये अनित्यानां हेयतया त्वदभ्युपगमविरोधः । अपहतपाप्मत्वादयस्तु शुद्धबुद्धस्वरूपमेव सत्यकामादिकं तु स्तुतिः । अत एव सोऽन्वेष्टव्य इत्यदि य आत्मेति प्रकृतधर्मिमात्रस्य द्रष्टव्यत्वमाह । एवं तात्पर्यलाघवं स्यात् ।

यत्तु आदित्यवर्णश्रुत्या ब्रह्म रूपवदिति । तदसत् आदित्यवर्णमिति हि स्वप्रकाशत्वं लक्ष्यते । तव मतेऽपि बहुव्रीह्यर्थयोर्लक्ष्यत्वात् "अशब्दमस्पर्शमरूपमव्ययं" इति रूपनिषेधश्रुतिविरोधात् । न च प्राकृतरूपनिषेधः रूपशब्दस्य सामान्यवाचकत्वात् ।

ब्रह्मण आदित्यसमानवर्णत्वनिरासः

---

च स्यादित्याह—सकामभिरिति । मुक्तानां कामनाऽभावेऽपि ईश्वरस्तदर्थंकिञ्चित् कामयत इत्याशङ्क्याह—न हीति । ननु कश्चन नित्यसंसारी तदर्थमीश्वरः सदा कामयत इति नेत्याह—न च सर्वेत । मास्तु तर्हि सर्वमुक्तावीश्वरे कामनेत्यत आह—मुक्तौचेति । अनित्यस्य हेयत्वात् त्यक्तसकलहेयगुण इति त्वदभ्युपगमविरोध इत्यर्थः,स्वमते य आत्मा अपहतपाप्मेत्यादिश्रुत्यर्थमाह—अपहतेति । आरोपितपाप्माद्यभावस्य तद्विपरीताधिष्ठानमात्रत्वादिति भावः । यदुक्तं सोऽन्वेष्टव्य इति गुणानामप्यन्वेष्टव्यत्वं श्रूयत इति तत्राह—अतएवेति । गुणे तात्पर्याभावादित्यर्थः गुणविशिष्टे तात्पर्यकल्पने गौरवं इतरत्र लाघवमित्याह—एवमिति । आदित्यवर्णमिति श्रुतेरादित्यवद्वर्णो यस्येति रूपवत्त्वप्रतीतेः सगुणं ब्रह्मेति परोक्तमनूद्य निराकरोति—यत्त्वित्यादिना । तर्हिलक्षणैव दोष इत्यत आह—तवमतेऽपीति । मतद्वयेऽपिलक्षणायास्तुल्यत्वात् कथं विशेषसिद्धिरित्याशङ्क्य श्रुत्यन्तराविरोधाय स्वप्रकाशत्वलक्षणैवोचितेत्यभिप्रेत्याह—अशब्दमिति । ननु अरूपमिति रूपविशेषस्य निषेधः न रूपमात्रस्येति नेत्याह—न चेति । प्राकृतरूपस्यैव निषेधेऽपि आदित्यवर्णश्रुतेः तद्विरोधो दुर्वार इत्यभिप्रेत्याह—किञ्चेति । सादृश्यस्येति । प्राकृतरूपसादृश्यस्येत्यर्थः । किंच रूपवतः प्राकृतत्वनियमात् अप्राकृतस्यात्मनः तदनुपपन्नमित्याह—अप्राकृतस्येति । रूपनिषेधश्रुतेः युक्त्यनुगृहीतत्वात् संकोचकत्वाभावाच्च नीरूपं ब्रह्मे-

किञ्च आदित्यसमानरूपत्त्वे ब्रह्मणः प्राकृतगुणवत्त्वप्रसंगः । अप्राकृतस्य प्राकृतसाम्यायोगात् । सादृश्यस्यैव प्राकृतत्वात् अप्राकृतस्यात्मनो रूपवत्त्वायोगाच्च । आदित्यवर्णश्रुतेः रूपवैशिष्ट्येऽदृष्टत्वात् । तथा रूपनिषेधश्रुतेः संकोचायोगाच्च । रूपविशेषस्यापि तत्र त्वदुक्तरीतिकानुमानेन विशिष्यानुमानं शक्यतया श्रुतेस्तत्रतात्पर्याभावाच्च । अन्यथा 'सर्वकर्मा सर्वकामः सर्वगन्ध' इति श्रुतिबलात् त्वदभिमतब्रह्मणि अप्राकृतदुर्गन्धादिरपि स्यात् । अगन्धश्रुतेः प्राकृतगन्धविषयत्वात् । उपासनाशेषत्वं तु तवादित्यवर्णश्रुतावपि तुल्यम् । अत एवादित्यवर्णश्रुतेः अनुमानादपि बाधो ग्रन्थे दर्शितः । तस्यास्तत्रादृढत्वात् । एवमशरीरत्वश्रुतिविरोधान्न ब्रह्म शरीरि हिरण्मयशरीरस्योपासनार्थमारोपितत्वात् । सर्वस्यापि शरीरादेः प्रकृतिरूपमायाजन्यत्वाच्च ।

किञ्च मूर्तिमच्चेत् ब्रह्म तदनेकतापत्तिः । लक्ष्मीकलत्रं शङ्खचक्रादिचिह्नं त्वदभिमतमेकम् । तथा उमार्धविग्रहं त्रिलोचनादिलक्षितं शैवाभिमतपरम् । त्वदभिमतमिव तदपि सृष्टिपूर्वकालीनतया च तल्लक्षणतया श्रूयते ते देवा रुद्रमपृच्छन्को भवानिति सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति तस्यैव सृष्टेः प्रथमकालीनत्वश्रवणात् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्'' इति उमार्धविग्रहादि भूतयोनित्वमोक्षोपायत्वादिश्रवणाच्च ।

---

वेत्याह—आदित्येति । अपूर्वत्वाभावादपि आदित्यवर्णश्रुतेः न रूपविशेषे तात्पर्यमित्याह— रूपविशेषस्यति । त्वदुक्तेति । ब्रह्म आदित्यसमानरूपवत् तत्प्रेप्सुत्वे सति तत्र शक्तत्वात् इत्यतेनेत्यर्थः । श्रुतत्वमात्रेणाप्राकृतरूपाभ्युपगमेऽतिप्रसंग इत्याह—अन्यथेति । सर्वगन्ध इत्यस्योपासनाविधिपरत्वात् न सर्वगन्धवत्त्वपरतेत्याशङ्क्याह—उपासनेति । ब्रह्म नीरूपं चेतनत्वात् जीववत् इत्यनुमानबाधिता आदित्यवर्णश्रुतिः इत्याचार्योक्तमपि युक्तमित्याह—अतएवेति । अतःशब्दार्थमाह—तस्या इति । हिरण्यश्मश्रुरित्यादिवाक्यात् ब्रह्मणः सशरीरत्वमित्ययुक्तमिति दूषयति—एवमशरीरत्वेति । अकायमव्रणं अपाणिपादः इत्यादि श्रुतिविरोधादित्यर्थः । शरीरनिषेधश्रुतिः प्राकृतशरीरविषयेत्याशङ्क्याह—सर्वस्येति । शरीरविशेषवतो ब्रह्मत्वे तदेकत्वमपि न सिद्ध्येदित्याह—किञ्चेति । नारायण एवाग्रआसीत् न ब्रह्मा न च शङ्कर इति नारायणस्यैव सृष्टपूर्वकालीनत्वश्रवणात् स एव ब्रह्मेत्याशङ्क्य रुद्रस्यापि तच्छ्रूयत इत्याह—त्वदभिमतमिवेति । सोऽरोदीदिति रोदनश्रवणात् रुद्रो जीवः न ब्रह्मेत्याशङ्क्याह—अतएवेति । अर्थवादस्य तत्परवचनविरोधे स्वार्थे प्रामाण्याभावात् न रुद्ररोदनादि प्रामाणिकमित्यर्थः ।

अत एव रुद्रो जीव इति निरस्तम् ।

श्रीरुद्रस्य ब्रह्मकोटित्वनिस्कर्षः

**नारायणाद्रुद्र इति तु अस्मदभितान्नारायणात् उपाधितः पृथग्भावपरम् । ब्रह्मण्यो देवकीपुत्र इतिवद्वा द्रष्टव्यम् । न च रुद्रादिशब्दा बिष्णोरेव नामानि । वैपरीत्यमेव किं न स्यात् । न च तमोगुणोपाधितया तस्यासर्वज्ञत्वात् नेश्वरता गुणोपाधित्वस्य मूर्तविष्णोरपि तुल्यत्वात् । न च तमोगुणात्तस्य निकर्षः । नहि**

---

रुद्रस्य सृष्टिपूर्वकालीनतया ईश्वरत्वे नारायणाद्रुद्रो जायत इति श्रुत्यनुपपत्ति रित्याशङ्क्याह—नारायणादिति । नारायण एवेदं सर्वं स ब्रह्मा स शिवः सेन्द्रः सोऽग्नः यच्चकिञ्चिज्जगत्यस्मिन् इत्यादिना नारायणस्य सर्वात्मत्वश्रवणात् अद्वितीयब्रह्मैव नारायणशब्दार्थः मूर्तिमतः सर्वात्मत्वायोगात् । तथा च तस्यैव गुणोपाधिकृतभेदादभिव्यक्तिमपेक्ष्य नारायणाद्रुद्र उच्यते । इतरथा सोम इत्युमासहायं प्रस्तुत्य "जनितेन्द्रस्य जनिजोत विष्णोः इति श्रवणात् विष्णोरपि तत उत्पत्तिः स्यात् इति भावः ।

शैवमतेऽप्यविरोधमाह—ब्रह्मण्य इति । नारायणस्य देवक्यामाविर्भावमात्रेण यथादेवकीपुत्र इति श्रुतिः एवं रुद्रस्य लीलया नारायणादाविर्भावपरा श्रुतिरित्यर्थः । तं देवा रुद्रमित्यादिवाक्ये रुद्रादिपदानां विष्णुपरत्वात् नारायण एव ब्रह्मेत्याशङ्क्य नारायणादिपदानां शिवपरत्वात् स एव ब्रह्म किं न स्यात् इत्याह—न च रुद्रादीति । संहारकर्तृरुद्रस्य सर्वत्र तमोगुणोपाधित्वश्रवणात् तस्य न सर्वज्ञतेत्याशङ्क्याह-- न चेति । किमसर्वज्ञत्वं गुणोपाधिकत्वप्रयुक्तं उत तमःप्रयुक्तं ? आद्ये विष्णोरपि तत्प्रसंग इत्याह--गुणोपाधित्वस्येति । द्वितीयं निरस्यति—न चेति । तमसः संहारकार्ये हेतुतया तदुपाधित्वे तद्वशवर्तितया तत्स्वरूपापरिच्छिन्नप्रकाशानावारकत्वात् तस्य सार्वज्ञ्यसिद्धिरित्यर्थः। ननु सत्वात् सञ्जायते ज्ञानं इति ज्ञानस्य सत्त्वगुणाधीनत्वप्रतीतेः कथं तद्रहितस्य सर्वज्ञतेत्याशङ्क्य सत्त्वाभावमङ्गीकृत्याह—न हि गुणेति । ज्ञानस्य सत्यतया सत्त्वानधीनत्वादित्यर्थः। कथं तर्हि जीवानामसर्वज्ञता ईश्वरस्य तु सर्वज्ञतेति व्यवस्थेत्याशङ्क्य जीवानामनादिमाययाऽऽवृतस्वरूपतया मूढत्वात् असर्वज्ञता । ईश्वरस्य मायानियन्तृत्वात् तद्वैपरीत्यमित्यभिप्रेत्याह—किन्त्विति । तमोगुणोपाधिकस्यानावृतस्वरूपत्वादिकं कथमित्याह—तदुभयमिति । समस्तसाक्षि तमसःपरस्तात् मायिनं तु महेश्वरं इत्यादिश्रुतेः तत्सिद्धिरित्यर्थः । उपाधिवैषम्यमात्रेण ज्ञानैश्वर्यादौ न वैषम्यमित्येतत् सदृष्टान्तमाह—न हीति । तर्हि सत्वात् सञ्जायत इत्यस्य कागतिरित्याशङ्क्य जीवानां सत्त्वोद्रेके प्रकाशादिव्यक्तिभूयस्त्वविषयं तदित्याह—जीवानामिति ।

किञ्च 'एवमेषा माये'त्युपक्रम्य स्वयं गुणाभिन्ना प्रकृतिः कार्येष्वपि गुणाभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी इति विष्ण्वादिमूर्तीनां मायामयत्वश्रवणात् न विरोध

गुणप्रयुक्ता सर्वज्ञता किन्तु अनावृतस्वरूपमायावित्वप्रयुक्ता। तदुभयं च तमोगुणकस्यापि। नहि कम्बलं दुकूलं वा परिदधानस्य देवदत्तस्य स्वस्मिन् अन्यत्र वा ज्ञाने विशेषोऽस्ति।

जीवानां तु उपाधिपरतन्त्राणां सत्त्वात् सञ्जायते ज्ञानं इति गुणविशेषाद्विशेषः। श्रुतिरपि ब्रह्मविष्णुशिवरूपिणीति त्वदभिमतमायिकब्रह्मतुल्यमेव शैवाभिमतं ब्रह्म दर्शयति।

तस्मात् ब्रह्मैकत्वमिच्छद्भिः नारायणोऽशरीरः शिवविष्ण्वादिभेदरहितः इत्यभ्युपेयः।

ब्रह्मादिगुणानां मिथ्यात्वम्

किञ्चैते गुणाः शरीरं च किं दृश्यमुतादृश्यम्? तत्राद्ये मिथ्यात्वापातः। द्वितीये तदसिद्धिः प्रमाणाभावात्। न च ब्रह्मवत् गुणा अपि स्वप्रकाशाः। तथापि पुरुषान्तरीयज्ञानाविषयत्वेऽस्माकं तद्व्यवहारानुपपत्तेः। तवमते व्यवहारविषयस्य प्रकाशविषयत्वनियमाच्च।

ज्ञानातिरिक्तकामादिगुणानां स्वप्रकाशत्वानुपपत्तेश्च। प्रकाशस्यैव ज्ञानत्वात्। तेषां च ज्ञानात्मकत्वे ज्ञानेच्छादिपदानां पर्यायता ब्रह्मगुणानामानन्त्यं च न स्यात्। ज्ञानेच्छादीनां कार्यकारणभावाभावप्रसंगश्च। एवं तेषामनानन्दत्वे हेयत्वापत्तिः।

ब्रह्मण आनन्दरूपत्वनिर्णयः

आनन्दत्वं च सर्वविषयज्ञानकर्तृत्वादेर्नास्त्येव। न च तेषामप्यानन्द-

---

इत्याह—श्रुतिरपीति। परमते ब्रह्मैकत्वासिद्धेः स्वाभिमतमेव ब्रह्माभ्युपेयमित्याह—तस्मादिति। युक्तितोऽपि साकारत्वं निराकरोति—किञ्चेति। प्रमाणाभावेऽपि स्वत एव तद्गुणसिद्धिरित्याशङ्क्याह–न चेति। प्रमाणं विना तेषामस्फुरणादिति शेषः। स्वप्रकाशत्वमङ्गीकृत्याह—तथापीति। ब्रह्मगुणाः किं जीवप्रकाशविषयाः उत न? नान्त्यः जीवानां तद्विषयप्रकाशजन्यत्वनियमादित्यर्थः। नाद्यः प्रकाशविषयत्वे दृश्यत्वेन अस्वप्रकाशत्वमिथ्यात्वयोः आपातात् तव मते जीवे जन्यज्ञानस्यैव स्वप्रकाशत्वादिति चार्थः। अङ्गीकारं त्यजति—ज्ञानातिरिक्तेति। प्रकाशस्येति।

व्यवहारानुकूलप्रकाशस्य ज्ञानस्वरूपत्वात् इच्छादीनामपि तथात्वे ज्ञानाद्वैजात्यं न स्यादित्यर्थः। मास्तु वैजात्यमित्यत आह—तेषामिति। आनन्त्यं च न स्यादिति। व्यक्त्यानन्त्यस्य जीवगुणेष्वपि भावादिति भावः। ब्रह्मणि ज्ञानेच्छादीनामेकजातीयत्वे जीवेऽपि तेषां तथात्वं स्यात् ततश्च दोषमाह—ज्ञानेच्छादीनामिति। आनन्दादपि भेदादिना दुर्निरूपा गुणा इत्याह—एवमिति। नास्त्येवेति। मानाभावादिति शेषः। नन्वानन्दत्वं नामेष्टत्वं तच्च सर्वत्रास्तीत्याशङ्क्याह—न च तेषामिति। हेयत्वापातादिति।

हेतुत्वादानन्दत्वम् कार्यस्य प्राकृततयापि हेयत्वापातात्। अन्यथा वयमप्यनन्त कल्याणगुणा भवामः। यत्तु शरीरमप्यानन्द इति तन्न। आनन्दस्य परिमितत्वे वैषयिकानन्दवत् हेय एव स्यात्। ब्रह्मणः पूर्णानन्दत्वमपि न स्यात्। अपरिच्छिन्नत्वे च कथं तस्य शरीरता, मुखनासिकाद्यन्तरवकाशस्याभावे शरीरत्वानुपपत्तेः। तदभावे त्वदभिमतवेदवक्तृत्वं ब्रह्मणो न स्यात्। अस्माकं च वेदस्यापौरुषेयतया वक्तृत्वानपेक्षत्वात्। वियदादिवत् तदुपपत्तेः।

या तु आप्रणखात् सर्व एवानन्द इति श्रुतिः सा इक्षुखण्डः आमूलाग्रं मधुर इतिवत् ज्ञेया। स्वेच्छानिर्मितमायिकशरीरस्यास्माभिरङ्गीकारात्।

एवमानन्दब्रह्मणोर्भेदे 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतिविरोधः अभेदे तु ब्रह्म शरीरमेव स्यात् अशरीरं वा, न शरीरि। न वा तस्यानन्तकल्याणगुणत्वं, कल्याणगुणस्यानन्दस्य ब्रह्ममात्रत्वेन गुणत्वानन्त्ययोरभावात्।

भेदाभेद इति चेत् किमानन्दत्वब्रह्मत्वाकारेणैव तदुभयं किं वा रूपान्तरेणाभेदो रूपान्तरेण भेदश्चेति वा? नाद्यः, अभेदस्य भेदाभावस्वरूपत्वेन विरोधात। अन्यथा तयोः परस्परविरहरूपत्वानुपपत्तेः। अन्यतरस्यासत्त्वे च एक-

---

कार्यानन्दस्य दुःखसम्भिन्नत्वनियमादिति भावः। कार्यस्यापि कल्याणगुणत्वेऽतिप्रसङ्गमाह—अन्यथेति। हेय एव स्यादिति। परिच्छिन्नस्यानित्यत्वनियमादित्यर्थः। शरीरमप्यनवच्छिन्नमित्याशङ्क्याह—मुखनासिकेति। ब्रह्मशरीरस्यालौकिकत्वात् नीरन्ध्रं तदित्याशङ्क्याह—तदभाव इति। त्वन्मतेऽपि ब्रह्मणोऽशरीरतया वेदवक्तृत्वानुपपत्तिरित्यत आह—अस्माकमिति। कथं तर्हि शास्त्रयोनित्वं ब्रह्मण इत्याशङ्क्य शास्त्रस्य तद्विवर्तत्वादित्याह—वियदादिवदिति। शरीरादेरानन्दत्वे परोदाहृतां श्रुतिमन्यथयति—या त्विति। इक्षुदण्डस्य मधुररसात्मत्वाभावेऽपि यथा तत्संबन्धनियमात् सर्वो मधुर इति व्यपदेशः एवं ईश्वरेण मायोपात्तलीलाविग्रहस्य स्वरूपानन्दव्याप्तेः तद्व्यपदेश इत्यर्थः। शरीरस्यानन्दात्मत्वे दोषान्तरं वक्तुं आनन्दब्रह्मणोर्भेदं तावन्निराचष्टे—एवमिति। शरीरात्मकानन्दस्य ब्रह्मणोऽभेदे दोषमाह—अभेदे त्विति। आनन्दरूपशरीरे ब्रह्मणोऽन्तर्भावे शरीरमेव ब्रह्मेति स्यात्। ब्रह्मणि शरीरान्तर्भावे अपरिच्छिन्नब्रह्मातिरेकेण परिच्छिन्नकरचरणाद्यभावात् अशरीरं ब्रह्म स्यात् न तु शरीरित्वं स्वरूपमात्रे शरीरित्वव्यपदेशस्य पारिभाषिकत्वादित्यर्थः। आनन्दब्रह्माभेदे तदात्मकगुणानामनन्तत्वं ब्रह्मगुणत्वं च न स्यादित्याह—न चेति।

आनन्दब्रह्मणोरभेदेऽपि भेदस्यापि सत्त्वात् शरीरित्वाद्युपपत्तिरिति शङ्कते—भेदाभेद इति। विकल्पासहत्वान्नैतदित्याह—किमिति। आद्येऽपि किमुभयोरपि सत्यत्वमुतान्यतरस्यैव? नाद्य इत्याह—अभेदस्येति। द्वितीये दोषमाह—अन्यतरस्येति। भेदस्यासत्त्वेऽत्यन्ताभेदात्

मात्र परिशेषापत्तिः। द्वितीये च आनन्दत्वाकारेण भेदोऽभेदो वा स्यान् तदुभयं चासंगतमित्युक्तम्।

तर्कागोचरब्रह्मणः तर्केण शरीरनिराकरणम्

यत्तु तर्कागोचरत्वादीश्वरस्य न तर्केण तस्य शरीरादिनिराकरणमिति। तन्न। तद्गुणेषु त्वयैव तर्काणामुक्तत्वात्। एतेऽश्रुत्यनुकूलाश्चेत् एतेऽपि निर्गुण-श्रुत्यनुकूला अबाधिता इति न तद्गुणसिद्धिः।

यत्त्वीश्वरस्य विचित्रशक्तित्वात् एकस्यापि शरीरशरीरिभाव इति। तदति-मन्दम्। शक्यकार्यं विना शक्तेरयोगात् तस्मात्प्रकृते परं ब्रह्म निर्गुणश्रुतिविरो-धात् न सगुणम्। यानि तु तच्छिरस्कानि वचनानि तान्यप्रयोजकार्थानि। निर्धर्मके ब्रह्मणि अधिष्ठानत्वादेर्वास्तवस्याभावात्। ब्रह्म सर्वज्ञत्वादिरहितं धर्मित्वात् घट-वदिति सत्प्रतिपक्षत्वाच्च। न च ब्रह्मण्यसाधारणधर्माभावे प्रपञ्चभिन्नतया निर्ण-यासंभवः। सत्यज्ञानानन्दानन्तात्मकतानिर्णयस्यैव पुरुषार्थत्वात्। न हि कल्पि-तस्य भेदोऽधिष्ठानादतिरिच्यत इत्युक्तम्।

---

ब्रह्मणः शरीरित्वाद्यनुपपत्तिः। अभेदस्यासत्त्वे वा अत्यन्तभेदात् तस्यानन्दरूपताऽभावात् हेयत्वादिप्रसङ्ग इत्यर्थः। रूपभेदेन भेदाभेदेऽपि किमानन्दत्वाकारेण ब्रह्मभेदोऽभेदो वा? नाद्यः भेदे ब्रह्म आनन्दो न भवेत्। द्वितीये तस्य तद्गुणकत्वाद्यनुपपत्तिः इत्याह—द्वितीये चेति। "नैषा तर्केण मतिरापनेया" इति श्रवणात् ईश्वरो नोक्ततर्कगोचर इति चोद्यमुद्भाव्य परिहरति—यत्त्वित्यादिना। किमीश्वरः तर्कमात्रस्यागोचरः उत श्रुत्यननु-कूलस्य? आद्ये मीमांसाऽनारम्भः। ब्रह्मणो हेयगुणत्वानुपपत्तेरिति त्वदुक्तिविरोधश्च स्यादित्याह—तद्गुणेष्विति। द्वितीये अस्मदुक्ततर्काणामपि श्रुत्यनुकूलत्वात् तदगोचरता ब्रह्मणो युक्तेत्याह—एत इत्यादिना। कार्यं विनेति। ईश्वराभिन्नशरीरादेः अकार्यत्वान्न तत्र शक्तिरित्यर्थः। युक्त्यनुगृहीतनिर्गुणश्रुतेः बलवत्त्वात् वस्तुतो निर्गुणमेव ब्रह्मेत्युप-संहरति—तस्मादिति। ब्रह्म धर्मिसत्तासमानसत्ताकधर्मवत् इत्यादिपरोक्तानुमानाना-माभासत्वमाह—यानि त्विति। ब्रह्मणि प्रपञ्चाधिष्ठानत्वादिधर्माणां त्वयाऽभ्युपगमात् कथं तन्निषेध इत्याशङ्क्याह—निर्धर्मक इति। प्रतिपक्षपराहतिमप्याह—ब्रह्मेति। न चास्य 'यस्सर्वज्ञ' इत्यादिश्रुतिविरोधः। तस्य वास्तवसर्वज्ञत्वादौ तात्पर्याभावस्योपपादना-दितिभावः। प्रतिपक्षानुमाने बाधकमाशङ्क्य निराकरोति -न चेति। प्रत्यगभिन्नब्रह्मस्वरू-पज्ञानस्यैव पुरुषार्थत्वात् प्रपञ्चभेदज्ञानमनपेक्षितं स्वरूपज्ञानं च प्रपञ्चबाधकं श्रुत्यैवो-त्पाद्यत इत्यभिप्रेत्याह—सत्यज्ञानेति। किञ्चारोप्यप्रपञ्चभेदस्याधिष्ठानब्रह्मस्वरूपत्वात् तज्ज्ञानमेव तज्ज्ञानमिति किमसाधारणधर्मेणेत्याह—नहीति। किञ्च सर्वत्र धर्मो व्यावर्तकः

शब्दादेव ब्रह्मणो निर्धर्मकत्व न तर्कात्

किञ्च धर्म एव व्यावर्तक इति न नियमः, लिङ्गाद्व्यावृत्तिबुद्धौ हि तथा। यदा तु शब्द एव ब्रह्म सत्यज्ञानानन्दात्मकं जडान्यस्वरूपमिति बोधयति तदा किं धर्मेण। यदा प्रपञ्चभेदज्ञानमपेक्षितं तदा स्वप्रकाशत्वादयः सन्त्येव।

किञ्च व्यक्तिरेव स्वस्या इतरव्यावृत्तिबुद्धिहेतुः, धर्मवत् तदाश्रयस्यापि व्यावृत्तस्वरूपत्वात्। धर्मस्त्वनुगतबुद्धिमात्रे हेतुः लिङ्गतया वोपयुज्यते। कथमन्यथा मध्येच्छिन्नरोमादौ इदमिदं न भवतीति बुद्धिः स्यात्। तत्रासाधारणधर्मस्यासंभवात्। न च तत्रेदंत्वमेवासाधारणधर्मः प्रतियोगिन्यपि तत्सत्त्वात्। तस्य परमते केवलान्वयित्वात्।

नाप्येतद्रोमत्वादिकं एतत्त्वरोमत्वयोरन्यत्रापि सत्त्वेन तद्विशिष्टस्यापि तथात्वात्। न च प्रदेशविशेषसंयोगित्वं, प्रतियोगिनस्तत्रानयने तस्मिन्नपि तत्सत्त्वात्। भूप्रदेशे संयोगित्वज्ञानं विनापि इदमिदं न भवतीति प्रतीतेश्च। त्वचा च्छिन्नकेशद्वयस्य भेदग्रहे कस्याप्यसाधारणधर्मस्याग्रहाच्च। न च तत्रापि स्पर्शभेद-

---

उत क्वचित्। नाद्य इत्याह—किञ्चेति। किमसाधारणधर्मज्ञानमात्रं व्यावृत्तिधीहेतुः उत तत्त्वेन ज्ञानं? आद्ये धर्मवानयमिति ज्ञानादपि तस्येतरभेदधीप्रसंगात्। न द्वितीयः धर्मिण इतरभेदग्रहं विना धर्मेऽसाधारणत्वायोगात् इत्यादि वक्ष्यत इति भावः। द्वितीयमङ्गीकरोति—लिङ्गादिति। फलितमाह—यदा त्विति। न च वाक्यमपि किञ्चिदुद्दिश्य किञ्चिद्विधत्त इत्युद्देश्यविधेयतावच्छेदकधर्मसंसर्गमपेक्षत इति वाच्यम्। उद्देश्यविधेयसंसर्गस्यात्रावाक्यार्थत्वात्। अज्ञातसत्यज्ञानानन्दात्मकाखण्डब्रह्मस्वरूपस्य सर्वपदोपलक्ष्यत्वाभ्युपगमात्। न च लक्ष्यतावच्छेदकधर्मं विना लक्ष्यत्वानुपपत्तिरिति वाच्यम्। लक्ष्यबहुत्वे हि तदपेक्षा। इह तु एक एव स्वरूपविशेषो लक्ष्यत इति न धर्मस्योपगम इति भावः। न च श्रुतार्थदार्ढ्याय युक्तेरपेक्षणात् ब्रह्मणो धर्माभावे युक्तितः कथं जडभेदसिद्धिरित्याशङ्क्य विचारदशायां ब्रह्मणि धर्माः सन्तीत्याह—यदेति। धर्म एव व्यावर्तक इति न नियम इत्युक्तं प्रपञ्चयति—किञ्च व्यक्तिरिति। घटादिव्यक्तीनां भेदग्रहात्पूर्वं घटत्वादिधर्माणां नियमेन बुद्धिस्थत्वात् तेषामपि तत्र हेतुत्वमाशङ्क्यान्यथासिद्धिमाह—धर्मवदिति। असाधारणधर्मस्य भेदग्रहहेतुत्वे बाधकमाह—कथमन्यथेत्यादिना।

एकस्मिन् काले देशविशेषस्थत्वमेव रोमयोर्व्यावर्तकधर्म इत्याशङ्क्य परस्परं वेष्टितयोर्भूस्पर्शं विनापि वायुना गच्छतोस्तयोः भेददर्शनादित्याह—भूप्रदेशेति। तत्रापि आलोकावयवविशेषसंसृष्टत्वमसाधारणो धर्म इत्याशङ्क्याह—त्वचेति। त्वचा स्पर्शभेदग्रहात् द्रव्यभेदधीरित्याशङ्क्य स्पर्शे वैजात्याभावात् तत्र व्यक्तिग्रहादेव भेदधीवत्

ग्रहोऽस्तीति वाच्यम् स्पर्शे वैजात्याभावात् तद्भेदग्रहस्याप्यसंभवात्। न च तत्र व्यक्तिविशेषनिष्ठत्वज्ञानं व्यावर्तकं अन्योन्याश्रयात्। अतो व्यभिचारान्नासाधारणधर्मो व्यावर्तकः। किञ्च धर्मोऽप्यसाधारणतया ज्ञायमानो व्यावर्तकः। किं वा यथाकथञ्चित् ज्ञायमान एव? आद्ये ऽसाधारणत्वं यदि एतदन्यावृत्तित्वे सति एतद्वृत्तित्वं तर्ह्यन्योन्याश्रयः। न च यस्य यतो भेदो गृह्यते तन्निष्ठात्यन्ताभावप्रतियोगित्वं तद्वदन्योन्याभावस्यापि स्वरूपेण ग्रहप्रसङ्गात्। अन्यथाऽनवस्थया क्वापि भेदो न गृह्येत। नाप्यसाधारणधर्मस्य स्वरूपेण ज्ञानमेव व्यावर्तकं, प्रमेयत्वादिना ज्ञातेऽपि स्थाण्वादौ पुरुषाद्व्यावृत्तिबुद्धिप्रसंगात्। न च घटत्वतादिना रूपेण तज्ज्ञानं भेदकं घट इति प्रत्यक्षमात्रात् घटः पटो न भवतीति बुद्ध्यभावप्रसंगात्। घटत्वता च तव नाखण्डधर्मः घटेतरावृत्तित्वे सति सकलघटवृत्तित्वं चेत् तज्ज्ञानेऽन्योन्याश्रयः। एवमसाधारणस्याप्यसाधारणधर्माभ्युपगमेऽप्रामाणिकानन्तधर्मकल्पनादोषाच्च।

एतेन विशिष्टज्ञानं भेदधीहेतुः निर्विकल्पकात् तदभावादिति धर्मज्ञानमपि

---

द्रव्येऽपि तदुपपत्तिरित्याह--न च तत्रापीति। स्पर्शे व्यक्तिविशेषाश्रितत्वज्ञानाद्भेदधीरित्याशङ्क्य स्पर्शविशेषाश्रयत्वस्यैव व्यक्तौ विशेषत्वात् व्यक्तौ तद्ग्रहे च व्यक्तौ विशेषग्रह इति परस्पराश्रयः स्यादित्याह – न च तत्रेति। विकल्पासहत्वादपि नासाधारणधर्मज्ञानं भेदधीहेतुरित्याह—किञ्चेति। अथवा घटत्वाद्याकारेण ज्ञायमानइत्यपि तृतीयो विकल्पो द्रष्टव्यः। अन्योन्याश्रय इति। एतस्य तदन्यत्वग्रहं विना इतरस्यैतदन्यत्वासिद्धेःतदसिद्धौ एतदन्यावृत्तित्वस्य दुर्ग्रहत्वादित्यर्थः।

यस्य यद्वस्तुतो भेदो गृह्यते तत्र व्याप्यवृत्त्यत्यन्ताभावप्रतियोगित्वं व्यावर्तकधर्मस्यासाधारणत्वं ततो न संयोगादेरसाधारणत्वं इत्याशङ्क्याह—न च यस्येति। किं धर्मस्यैतादृशात्यन्ताभावप्रतियोगित्वग्रहे तत्स्वरूपग्रहमात्रं हेतुः उतासाधारणधर्मान्तरविशिष्टतया तद्ग्रहः? आद्ये आह--तद्वदिति। स्वरूपेणेति। धर्मिस्वरूपग्रहणमात्रेणेत्यर्थः। अतिप्रसंगपरिहारयोरुभयत्र तुल्यत्वादिति भावः। द्वितीये धर्मान्तरस्याप्यत्यन्ताभावप्रतियोगित्वरूपासाधारणत्वग्रहार्थमसाधारणधर्मान्तरग्रहापेक्षेत्यनवस्थापत्तौ कस्याप्यसाधारणधर्मस्याग्रहात् भेदधीर्न स्यादित्याह—अन्यथेति। यथाकथञ्चिदिति पक्षं दूषयति—नापीति। पुरुषात् स्तंभादौ व्यावृत्तिबुद्धिप्रसंगादिति द्रष्टव्यम्। तृतीयं दूषयति—न च घटत्वतेति। किञ्च घटत्वता चेति द्वितीयमनूद्य दूषयति—घटेतरेत्यादिना। सर्वत्रासाधारणधर्मस्यैव व्यावर्तकत्वे दोषान्तरमाह—एवमिति। प्रमेयत्वादावसाधारणधर्मासंभवश्चेति चार्थः। असाधारणधर्मग्रहस्य हेतुत्वनिरासेनान्यदपि चोद्यं निरस्तमित्याह—एतेनेति। त्वदभिमतेति। संसर्गागोचरधर्मधर्मि-मात्रगोचरनि-

तत्र हेतुरिति प्रत्युक्तम् । विशिष्टज्ञानमात्रस्य तदयोगात् । त्वदभिमते निर्विकल्पकज्ञाने प्रमाणाभावाच्च ।

विशेषदर्शनात् संशयनिवृत्तिविचारः

ननु विशेषदर्शनं संशयनिवर्तकम् । तच्च निर्णयप्रकारीभूतधर्मव्याप्यवत्त्वज्ञानम् । व्यक्तिज्ञानमात्रं च संशयेऽप्यस्तीति चेत् । न, यद्विषयः संशयः तद्विषयसत्तानिश्चयरूपज्ञानान्निवर्तते, न तु तद्व्याप्यवत्तानिश्चयेन तस्य ततो भिन्नविषयत्वात् । तेन रूपेण तस्य गुरुशरीरतया तत्राहेतुत्वाच्च । ततश्च संशयो यदि प्रकारवैशिष्ट्यविषयः तर्हि प्रकारविशिष्टविषयान्निश्चयान्निवर्तते, यस्तु प्रातिपदिकमात्रविषयः स तन्निश्चयादेव निवर्तते । प्रातिपदिकमात्रसंशयश्च आनन्ददीपिकायां वक्ष्यते ।

नापि तात्पर्यावच्छेदकतयाऽसाधारणधर्मोऽभ्युपगन्तव्यः धर्मं विनापि द्वैताभावस्वभावानन्दप्रकाशे श्रुतितात्पर्यमिति तन्निर्णयसंभवात् । तात्पर्यविषयव्यक्तेरेकत्वेनावच्छेदकधर्मानपेक्षत्वाच्च । सत्यादिपदापर्यायत्वमखण्डार्थवादे वक्ष्यते । तस्मान्नासाधारणधर्मज्ञानं भेदज्ञानं भेदज्ञाने वा कारणम् ।

न चैवं लोके संशयाद्यनुपपत्तिः भेदग्रहे तदयोगादिति वाच्यम् । तत्र दोषादिप्रतिबन्धेन भेदाग्रहात् । प्रतिबन्धाभावदशायां तु व्यक्तिज्ञानादेव भेद-

---

विकल्पके न मानमस्ति विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वादेर्निराकरणादित्यर्थः । ब्रह्मणि ज्ञानसंशयनिवृत्त्यनुपपत्त्या धर्मोऽभ्युपेय इति शङ्कते—नन्विति । स्वरूपज्ञानमेव संशयनिवर्तकविशेषदर्शनमित्याशङ्क्याह—व्यक्तीति । व्यक्तिज्ञानमात्रस्य संशयानिवर्तकत्वेऽपि तद्विशेषस्तन्निवर्तक इति समाधत्ते—न यद्विषय इति । न च सत्तानिश्चय एवोक्तविशेषदर्शनं विना नेति वाच्यम् । संशयप्रयोजकदोषापगमे विशेषांश इव व्यक्त्यंशे सत्तानिश्चयसंभवात् ब्रह्मणि विचारादिना विपरीतवासनादिनानादोषापगये वेदान्तैरेव सत्तानिश्चयोदयात् संशयादिनिवृत्तिसिद्धिरिति भावः । सत्तानिश्चयोऽपि स्थाण्वादौ सप्रकारक एव संशयविरोधी दृष्ट इत्याशङ्क्याह—ततश्चेति । प्रातिपदिकार्थमात्रविषय इति चतुर्थे वक्ष्यत इत्याह—प्रातिपदिकेति । एवमपि वेदान्ततात्पर्यविषयतावच्छेदको ब्रह्मणि धर्मोऽभ्युपेय इत्याशङ्क्याह—नापीति । किमन्यस्य तात्पर्यविषयत्वाभावाय तदवच्छेदकापेक्षा, उत तदनुगमनाय ? नाद्यः इतरव्यावृत्तस्वरूपविशेषतात्पर्यनिर्णयादेव तत्सिद्धेरित्यभिप्रेत्याह—धर्मं विनेति । द्वितीयं निराकरोति—तात्पर्येति । अद्वैतवादे सत्यज्ञानादिपदानां पर्यायतापत्तेः सहप्रयोगानुपपत्तिरित्याशङ्क्याह—सत्यादीति । व्यक्तिग्रहादेव भेदग्रहे लोके धर्मिग्रहादेव भेदस्यापि ग्रहे संशयाद्यनुपपत्तिरित्याशङ्क्य सति दोषे भेदाग्रहान्नैवमित्याह—न चैवमित्यादिना । शुक्त्यादावसाधारण-

ज्ञानम् । क्वचिदसाधारणज्ञानं तु सामग्रीसद्भावमात्रादिति ।

एतेन परस्य कथं भेदव्युत्पादनं अनुमानाद्धि तद्भवति तच्च निर्धर्मकेऽनुपपन्नमिति निरस्तम् । व्युत्पादनदशायां धर्मधर्मिभावस्य सत्त्वादित्युक्तत्वात् । पक्षे हि अबाधितो हेतुः स्वव्यापकं बोधयति । चेतनत्वादिकं च तथा । तदद्वैतश्रुतिबाधितमितिचेत् सिद्धं नः समीहितम् । तदनन्तरं व्यावर्त्याभावाच्च न व्यावर्तनीयम् । तत्प्रामाण्याज्ञानदशायां तु न किञ्चिद्बाधकम् । भ्रमाधिष्ठानत्वं च तद्धेत्वज्ञानविषयत्वादेवोपपद्यते, न तु विशेषमपेक्षते । तस्मात् त्वदुक्ता हेत्वाभासा एव ।

ब्रह्मणः कल्याणगुणानुमाननिरासः

यत्तु कल्याणगुणानुमानं तन्न; तेषामागन्तुकत्वे हेयत्वात् । अनादित्वे च न तर्हि तस्मिन् प्रेप्सा, नित्यप्राप्तत्वात् । अस्मन्मते जीवानां ब्रह्मप्रेप्सा तु प्राप्तत्वाज्ञानात् अप्राप्तत्वभ्रमाच्च कण्ठगतचामीकवत् घटते । ईश्वरस्यापि तथात्वे गतं तर्हीश्वरत्वं, ईश्वरस्यापीच्छया गुणप्राप्तौ सदा पूर्णानन्दत्वश्रुतिविरोधः । प्राप्ते कामनाऽयोगात् प्राप्तगुणप्राप्तौ शक्त्ययोगाच्च । प्रेप्सया व्याप्त्रभावं गच्छति मायाविनि व्यभिचारश्च । न तस्य तद्भावः परमार्थः ।

किञ्च प्रेप्सितस्य गुणस्य तत्काले अभावात् सदा तत्प्रेप्सायां तस्य निर्गुण-

---

धर्मग्रहपुरस्सरं भेदग्रहो दृष्ट इत्याशङ्क्य तत्रार्थे सामग्रीत इत्याह--क्वचिदिति । व्युत्थितं प्रति ब्रह्मणो जडभेदव्युत्पादनाय ब्रह्मण्यसाधारणो धर्मोऽभ्युपेयः अनुमानातिरिक्तमानेन तद्व्युत्पादनायोगात् तस्य च लिङ्गापेक्षत्वात् इत्यत्राह—एतेनेति । ब्रह्मणि धर्माणां कल्पितत्वात् कथं व्युत्पादनदशायां सत्त्वमित्याशङ्क्य प्रतिवादिदृष्ट्या बाधितत्वात् तथोक्तमित्यभिप्रेत्याह—पक्षे हीति । प्रतिवादिपक्षेहीत्यर्थः । प्रतिवादिनोऽपि श्रुत्या बाधितं ब्रह्मणो धर्मित्वमित्याशङ्क्य तर्हि तस्य व्युत्थितत्वाभावात् न व्युत्पाद्यत इत्याह—तदद्वैतेत्यादिना । निर्विशेषब्रह्मणः कथं भ्रमाधिष्ठानत्वं सविशेषस्यैव तद्दर्शनादित्याशङ्क्य सर्वत्राज्ञातं ब्रह्मैव तदधिष्ठानमित्यभिप्रेत्याह—भ्रमाधिष्ठानत्वं चेति । ब्रह्मणि वास्तवधर्माभावेऽनुपपत्त्यभावप्रतिपादनफलमाह—तस्मादिति । हेयत्वादिति । आगन्तुकभावानामनित्यत्वनियमात् आगन्तुकानन्दादेः दुःखादिसंभिन्नत्वाच्चेत्यर्थः । न तर्हीति । ततश्च विशेषणासिद्धो हेतुरिति भावः । त्वन्मते यथा नित्यप्राप्तेऽपि ब्रह्मणि जीवानां प्रेप्सा तद्वदीश्वरस्यापि प्राप्तगुणेषु प्रेप्सेत्याशङ्क्य वैषम्यमाह—अस्मन्मत इति । ईश्वरस्याप्यज्ञानादीप्सेत्याशङ्क्याह--ईश्वरस्येति । विशेष्यासिद्धिमप्याह—प्राप्तगुणेति । किञ्च सदा तद्वानिति सामान्यव्याप्तौ किं पारमार्थिकतद्वत्ताविवक्षिता उत तद्वत्तामात्रं ? आद्ये दोषमाह—प्रेप्सयेति । द्वितीये वास्तवत्वं विनाऽपीति वक्ष्यमाणं दूषणं द्रष्टव्यम् । विरुद्धश्च हेतुरित्याह—किञ्चेति । दोषत्यागानुमानेऽपि हेतुः विशेषणासिद्धत्वा दाभास

त्वापत्तिः। वास्तवत्वं विनापि मायाविवत् प्रेप्साद्युपपत्तेश्च। ब्रह्मणः प्रेप्सायां प्रमाणाभावाच्च। अतएव तज्जिहासुत्वे सतीति हेतुरप्यसाधुः। जिहासा हि प्राप्ते भविष्यति वाऽनिष्टे भवेत्। न च ब्रह्मणि तस्य तद्भावः। सर्वदा हीने तच्छक्त्यसंभवाच्च। न हि कल्पान्तरीयेऽस्माकं त्यागशक्तिरस्ति। जिहासादिकाले सर्पादित्यागाभावेन सदा जिहासायां तस्य सदा हेयगुणप्रसंगाच्च। जिहासायां मानाभावाच्च।

सर्वेषां हेतूनां साक्षी चेता केवलो निर्गुणश्चेति श्रुतिबाधः। न च तत्र गुणत्रयराहित्यं प्रतिपाद्यते। त्वदभिमतब्रह्मणः सत्त्वगुणकतया तद्राहित्याभावात्। तथाहि-श्रीभागवते—

सत्वं रजस्तम इति प्रकृतेर्गणास्तैः युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञा" इति सत्वोपाधिकमेव व्यावृत्तं हरिं दर्शयति। अविवक्षितगुणोपाधिना तु ब्रह्मरुद्राद्यभिन्नं पर इति वैदिकं ब्रह्म दर्शयति। निर्गुण इति गुणमात्रस्य निषेधाच्च। साक्षीतिश्रुत्या उदासीनचैतन्यमात्रस्याभिधानाच्च। न चैवं ब्रह्मणो गुणप्रतिपादकपुराणादीनामप्रामाण्यप्रसंगः। श्रुतिमूलानां तेषां यथाश्रुत्युपपत्तेः श्रुतिश्चोपासनापरा वस्तुतत्त्वपरा चेति न गुणपरा। गुणानामन्यतो लब्धत्वात्। तस्मात् सत्यज्ञानानन्तानन्दात्मकं निर्गुणमुदासीनं ब्रह्म वेदान्तार्थ

---

इत्याह—अत एवेति। तस्यानिष्टस्य तद्भावः ब्रह्मणि प्राप्तत्वं भविष्यत्त्वं वा नेत्यर्थः। विशेष्यासिद्धिमप्याह—सर्वदेति। अस्यापि विरुद्धत्वमाह—जिहासेति। सर्वसाधारणदोषमाह—सर्वेषामिति। निर्गुणत्वश्रुतिः सत्त्वादिनिषेधपरा न गुणमात्रनिषेधपरा इत्याशङ्क्याह—न चेति। मूर्तिमान् हरिरेव ब्रह्मेति मते तस्य सत्त्वगुणोपाधिकत्वेन पुराणादिषु प्रसिद्धेः तन्निषेधोऽशक्य इत्याह—त्वदभिमतेति। इह संसारदशायां वस्तुतः परः पुरुषः गुणोपाधिरहितः पूर्णः परमात्मा अस्य जगतः स्थित्युत्पत्तिलयार्थं सत्त्वादि गुणयुक्तो यथाक्रमं हरिरित्यादिनामधेयानि धत्त इत्यर्थः। ब्रह्मणि सत्त्वादिगुणनिषेधे तस्य त्वदभिमतब्रह्मादिभेदोऽपि न स्यादित्याह—अविवक्षितेति। गुणनिषेधकश्रुतेः संकोचाभावादपि न गुणत्रयस्यैव निषेध इत्याह—निर्गुण इति। यच्चोक्तं साक्षीति द्रष्टृत्वविधानात्संकोच इति तत्राह—साक्षीति। ननु यो वाऽनन्तस्य गुणाननन्ताननुक्रमिष्येत् स तु बालबुद्धिः इत्यादिपुराणवचनेषु ब्रह्मणोऽनन्तगुणवत्त्वमवगम्यते। तदनभ्युपगमे च तेषामप्रामाण्यमिति, नेत्याह—न चैवमिति। तर्हि श्रुतित एव गुणवत्त्वं नेत्याह—श्रुतिरिति। अन्यतोऽनुमानतो लब्धत्वात् अप्रयोजकत्वाच्चेति द्रष्टव्यम्। तत्पदार्थपरिशोधनमुपसहरति—तस्मादिति। निरूपितं परिच्छेदार्थं संक्षिप्य दर्शयति श्लो-

इति सिद्धम् । ( श्लो ) सत्यज्ञानसुखस्वरूपममृतं शुद्धाद्वितीयं परं वेदान्तैकविनिश्चयं हरिहरश्रुत्यादिसंशब्दितम् । ब्रह्माम्नायवचोविचारविदितं यद्रूपमन्यादृशं तद्देव्याविभवः परं मरुपयस्तुल्यो दुरूहो हरेः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवज्जगन्नाथाश्रमश्रीचरण-
शिष्यश्रीनृसिंहाश्रमकृतौ अद्वैतदीपिकायां औपनिषद-
दीपिकाख्यः तृतीयः परिच्छेदः

---

केन----सत्यज्ञानेति । अमृतं नित्यं सत्यज्ञानादिरूपमेव ब्रह्म । हरेर्ब्रह्मणोऽन्यादृशं गुणादियुक्तं यद्रूपं तत् देव्या मायायाः परं केवलं दुरूहोऽनिर्वचनीयो विभवो विलास इति वेदान्तवचोविचारेण विदितमिति योजना ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवन्नृसिंहाश्रमपूज्यपादशिष्यश्रीनारायणाश्रम-
विरचिते अद्वैतदीपिकाविवरणे औपनिषददीपिकाख्यः तृतीयः
परिच्छेदः ग्रन्थसंख्या मू २५२४
टीका—४१५१



# सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्याभिनवप्रकाशनानि





मूल्यम्

६५.०